श्रीवेदपुरुषो विजयते।

हरिः ॐ तत्सत्।

प्रत्यक्षगोचरं ब्रह्म साक्षाद् यस्य रविर्गुरुः॥
कायेन मनसा वाचा याज्ञवल्क्यं नमाम्यहम्॥ १॥
पीतोद्गीर्णो विधुर्देवैरेको वै शुक्लकृष्णयोः॥
याज्ञवल्क्ये च यजुषि न्यायोऽयमतिदिश्यताम्॥ २॥
भासेनेव विधिः सोमं शुक्लं कृष्णं तथा यजुः॥
भाष्येण समलंचक्रुर्विद्यारण्यमुनीश्वराः॥ ३॥
तत्र कृष्णयजुर्भाष्यं यदि सर्वत्र दृश्यते॥
इन्दुवद् राहुणा शुक्लं कालेन कवलीकृतम्॥ ४॥
तदुद्दिधीर्षया शास्त्री पिता मे वेङ्कटाचलः॥
व्यवसायात्मिकां बुद्धिं चक्रे सूर्यमुपासितुम्॥ ५॥
लेभे वेङ्कटरामं मां सूनुं तस्य प्रसादतः॥
वात्सल्यादाह मां— पुत्र याज्ञवल्क्यांशशाल्यसि॥ ६॥
तद् गच्छ, भारते शुक्लयजुर्भाष्यं गवेषय॥
शुभास्ते सन्तु पन्थानो ममाशीर्वचनाद्—इति॥ ७॥
अहं प्रोत्साहितस्त्वेवं ग्रामं ग्राममितस्ततः॥
अहो शुक्लयजुः काण्वमन्त्रभाष्यमवाप्तवान्॥ ८॥
जिज्ञासूनां हितायाद्य तदेवैकं प्रचार्यते॥
आशासे लप्स्यते चान्यच्चिरं कालेन गच्छता॥ ९॥
श्रीवेङ्कटाचलगुरोः पादपद्मयुगं स्मरन्॥
आशिषः प्रार्थयेऽत्रातिप्रसङ्गेन बुधेभ्यलम्॥ १०॥

निवेदकः
कालहस्ति-भूपालसभाप्रधान-पण्डित
श्रीवेङ्कटरामशास्त्री।
वाराणसी।

श्रीगणेशाय नमः ।

# शुक्लयजुर्वेदकाण्वसंहिता ।

## श्रीसायणाचार्यविरचितभाष्यसंवलिता ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ॥
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
यत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ॥
आदिशत् सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायाऽतिसंग्रहात् ॥
कृपालुः सायणाचार्यो वेदार्थं व्याकरोत् खलु ॥ ४ ॥
ऋग्यजुःसामवेदा ये व्याख्यातास्तेषु तद्यजुः ॥
कृष्णं शुक्लमिति द्वेधा तत् कृष्णं तैत्तिरीयकम् ॥ ५ ॥
वैशम्पायनशिष्येण याज्ञवल्क्येन यद् यजुः ॥
अधीत्य वान्तमाचार्यकोपमीतेन योगिना ॥ ६ ॥
गुरुः शिष्यमुवाचेत्थं क्रुद्धः केनाऽपि हेतुना ॥
मत्यर्पय मदीया त्वं विद्यामित्यर्थयत् स च ॥ ७ ॥
योगसामर्थ्यतो विद्यां मूर्तां कृत्वाऽवमत्तदा ॥
गृह्णीत तद्यजुर्वान्तमित्यन्यान् गुरुरब्रवीत् ॥ ८ ॥
अन्ये तित्तिरयो भूत्वा किञ्चित् तान्यप्यऽभक्षयन् ॥
प्रवर्तितः खण्डशस्तैर्न सम्यग् बुध्यते नृभिः ॥ ९ ॥
आध्वर्यवं क्वचिद्धौत्रं क्वचिदित्यऽव्यवस्थया ॥
बुद्धिमालिन्यहेतुत्वाद् यजुः कृष्णमितीर्यते ॥ १० ॥
याज्ञवल्क्यस्ततः सूर्यमाराध्याऽस्मादधीतवान् ॥
व्यवस्थितप्रकरणं यजुः शुक्लं तदीर्यते ॥ ११ ॥

पौराणकीं कथामेतां वेदव्याख्यान आदरात् ॥
आदिशन्मयमाचार्याः श्रुतावपि मया श्रुतम् ॥ १२ ॥
काण्ववेदगते विद्या वंशब्राह्मण ईर्यते ॥
यजूंषि शुक्लान्यादित्यान्मुनिः प्रापेत्यपि स्फुटम् ॥ १३ ॥

अथ वंशः पौतिमाषीपुत्रः कात्यायनीपुत्राद् इत्यारभ्य, परमेष्ठी ब्रह्मणो ब्रह्मस्वयम्भु ब्रह्मणे नम इत्येतदन्तं काण्ववेदस्यान्तिमं वंशब्राह्मणम् । 'पौतिमाषीपुत्रः' कश्चिद्वेदसंप्रदायप्रवर्तको मुनिर्मनुष्याणां गुरुः । स च कात्यायनीपुत्राद् वेदमधीतवान् । परमेष्ठीशब्देन सत्यलोकवर्ती चतुर्मुखोऽभिधीयते ॥ ब्रह्मशब्देनात्र, प्रज्ञानं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म, माया तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् * इत्यादिवेदवाक्यप्रसिद्धः परमेश्वरो विवक्षितः । तस्य च इतरेषामिवोत्पत्त्यर्थं वेदाऽध्ययनादिव्यवहाराय वा पारतन्त्र्यं, तद् स्वयम्भूशब्देन निवार्यते । तथाच श्वेताश्वतरा आमनन्ति— न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते * पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च * न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् * स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाऽधिपः * । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य इति । नमःशब्देन चाऽस्य ब्राह्मणस्य गुरुपरम्पराविषयनमस्कारं मत्यङ्गमन्त्रत्वं द्योत्यते । सा च गुरुनमस्काररूपा गुरुसेवा वेदाध्ययनतदर्थविचारतदनुष्ठानानां साफल्याय संपद्यते । तथाच स्मृतिः— गुरुमुख्याः क्रियाः सर्वा भुक्तिमुक्तिफलप्रदाः * तस्मात् सेव्यो गुरुर्नित्यं मुक्त्यर्थं सुसमाहितैरिति * । ईदृशे चाऽस्मिन् वंशब्राह्मणे वाक्यमेवमाम्नायते—आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्त इति । आदित्येनाध्यापितत्वादादित्यान्युच्यन्ते । वाज इत्यन्नस्य नामधेयम् । अन्नं वै वाज इति श्रुतेः । वाजस्य सनिः=दानं यस्य महर्षेरस्ति सोऽयं वाजसनिः । तस्य पुत्रो वाजसनेयस्तस्य याज्ञवल्क्य इति नामधेयम् । तेन याज्ञवल्क्येनैतानि शुक्लयजूंषि महर्षिभ्यः पञ्चदशभ्य आख्यायन्ते समन्तादुपदिश्यन्ते । एवं सति याज्ञवल्क्येन प्रवर्तिताः शुक्लयजुर्विषयाः शाखाः पञ्चदश संपद्यन्ते । तच्छाखाऽध्यायिनश्चरणव्यूहादिग्रन्थे काण्वादिभिः पञ्चदशभिर्नामभिरित्थं व्यवह्रियन्ते— काण्वाः ॥ १ ॥

माध्यन्दिनाः ॥२॥ शापेयाः ॥३॥ स्तापायनीयाः ॥४॥ कापालाः ॥५॥ पौण्ड्रवत्साः ॥६॥ आवटिकाः ॥७॥ परमावटिकाः ॥८॥ पाराशर्याः ॥९॥ वैधेयाः ॥१०॥ वैनेयाः ॥११॥ औधेयाः ॥१२॥ गालवाः ॥१३॥ वैजवाः ॥१४॥ कात्यायनीयाश्चेति ॥१५॥ इति पञ्चदश नामानि। तत्र काण्वाभिधेन महर्षिणा लब्धो यजुर्वेदविशेषः काण्वः। तथा च स्मर्यते—युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवेति। यद्यप्ययं वेदः स्वयम्भूपरमेष्ठ्यादिपरम्परया प्राप्तः आदित्यशिष्येण याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टस्तथापि महता तपसा तुष्टस्येश्वरस्याऽनुग्रहात् काण्वसम्बन्धितयैव लोके प्रख्याप्यते। तमेतं काण्ववेदमधीयते विदन्ति वेति व्युत्पत्त्या काण्वशिष्यप्रशिष्यादिपरम्परायां वर्तमानाः सर्वेऽपि काण्वा इत्युच्यन्ते। एवं ज्ञात्वा काण्वादिषु द्रष्टव्यम्। तत्रेदं काण्ववेदाख्यं शुक्लं यजुः पूर्वं न व्याख्यातं, किन्तु तैत्तिरीयाख्यं कृष्णं यजुरेव व्याख्यातम्। तस्मादिदानीं काण्वशाखा व्याख्यायते। यद्यप्यनयोः शाखयोराध्वर्यव एव प्रयोगः प्रतिपाद्यते। तथापि मन्त्रपाठविशेषैः प्रयोगविशेषैर्महान् भेदः। स चानुष्ठातृभेदेन व्यवस्थितविषयत्वान्न विकल्प्यते। अतएव, स्वाध्यायोऽध्येतव्य इति स्वकीयशाखाध्ययनम् अनुष्ठानविशेषाय विहितम्।

अत्रैतच्चिन्तनीयम्। किमेतद् स्वविधिप्रयुक्तं माणवकाध्ययनम्? उताऽध्ययनविधिप्रयुक्तम्? इति। तत्र प्राभाकरो मन्यते— स्वाध्यायोऽध्येतव्य इत्यर्थविधिरष्टवर्षमुपनीतं माणवकमध्ययने प्रवर्तयितुं न प्रभवति। अनधीतवेदस्य तद्विधिवाक्यपाठाभावाद्, वाक्यार्थज्ञानं व्याकरणादिषडङ्गाध्ययनरहितस्य दूरापेतम्। बालक्रीडासु निरन्तरमासक्तस्यानुष्ठाने प्रवृत्तिराशङ्कितुमप्यशक्या। तस्मान्नायं विधिः प्रवर्तकः। ननु पित्राचार्यादिभिः शिक्षितो माणवकः क्रीडाभ्य उपरतः पित्रादिमुखादेव यथोक्तवाक्यार्थमवगत्याध्ययने प्रवर्तिष्यत इति चेन्न। एवं तर्हि पित्राचार्यादिकर्तृकाऽध्यापनप्रयुक्तं माणवकाऽध्ययनं, न त्वध्ययनविधिप्रयुक्तमित्येतादृशमस्मदीयमेव मतं भवताऽप्यङ्गीकर्तव्यम्। अध्यापनस्य तु विधिरेवमाम्नायते—अष्टवर्षं ब्राह्मणमुपनयीतेति। ननु पूर्वोक्ताध्ययनविधाविवैतस्मिन्नध्यापनविधावपि योग्योऽधिकारी साक्षान्न श्रूयते। ततोऽध्ययनसिद्धौ तत्प्रयुक्तिरप्यध्ययनस्य दुर्लभेति चेद्। मैवम्। उपनयीतेत्येतेनात्मनेपदेनाचार्यत्वकामस्याऽधिकारिणः प्रतीयमानत्वात्। संमाननो-

रसञ्जनाचार्यकरणेत्यादिना सूत्रेणाऽऽचार्यकरणविवक्षायां, नयतिधातोरात्मनेपदं विहितम् । एवमप्युपनयन एवाधिकारिसिद्धिर्न त्वध्यापन इति चेत् । नैवम् । उपनयीत तमध्यापयीतेत्युपनयनाध्यापनयोरेकप्रयोगत्वावगमात् । अयमेवाऽर्थो मनुना स्मर्यते— उपनीय गुरुः शिष्यं वेदमध्यापयेत्तु यः ॥ सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते इति । आचार्यत्वकामेन पित्रादिनाऽनुष्ठेयम् अध्यापनं माणवककर्तृकाध्ययनव्यतिरेकेण न सिद्ध्यति । पाचयति याजयतीत्यादौ सर्वत्र धात्वर्थव्यतिरेकेण णिच्प्रत्ययार्थादर्शनात् । अतः पित्रादिभिरनुष्ठेयमध्यापनं माणवकाध्ययनस्य प्रयोजकम् । एवं तर्हि, स्वाध्यायोऽध्येतव्य इत्यस्य विधेः का गतिरिति चेत् । ब्रह्मयज्ञाध्ययनमनेन विधीयत इति ब्रूमः । अत एव, तैत्तिरीयब्रह्मयज्ञे वक्ष्यमाणः प्राच्यां दिशि ग्रामादित्यारभ्य तस्मिन्नेव प्रकरणे स्वाध्यायस्य महिमानम्— अपहतपाप्मा स्वाध्याय इत्यादिना बहुधा प्रपञ्च्य तस्मादेवमामनन्ति तस्मात् स्वाध्यायोऽध्येतव्यः, यं यं क्रतुमधीते तेन तेनास्येष्टं भवतीति । तस्मादध्यापनविधिप्रयुक्तं माणवकाऽध्ययनमित्येवं प्रभाकरमतम् ॥

अत्रोच्यते । नित्यस्य ग्रहणाध्ययनस्य काम्येनाध्यापनेन प्रयोज्यत्वं न संभवति । ग्रहणाध्ययनस्य नित्यत्वप्रकरणे प्रत्यवायस्मरणादवगन्तव्यम् । तथा च स्मर्यते योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ॥ स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय इति । अध्यापनं तु कुटुम्बपोषणाय गुरुदक्षिणाकामेनानुष्ठीयत इति तस्य काम्यत्वम् । एतदपि स्मर्यते—षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ॥ याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह इति । यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहेषु षट्सु कर्मसु यजनाध्ययनदानानि त्रीण्यदृष्टार्थानि । याजनादीनि तु त्रीणि जीवनार्थानि, न त्वदृष्टार्थानि । यस्तु गुरुदक्षिणामनपेक्ष्य माणवकान् अध्यापयति तस्याध्यापनं विद्यादानरूपत्वाददृष्टार्थमस्तु । न चैतावता एतस्य नित्यत्वं सिद्ध्यति । दानस्य धनवस्त्रादिना संपादयितुं शक्यत्वात् । इत्थमनित्यमध्यापनं यदा पित्रादयो नानुतिष्ठन्ति तदा ह्यनित्यमध्यापनप्रयुक्तं माणवकस्याध्ययनं न निष्पद्येत । तस्मान्नित्यं ग्रहणाध्ययनं स्वविधिप्रयुक्तमेवेत्यवगन्तव्यम् । ननु स्वाध्यायोऽध्येतव्य इत्यस्य वेदब्रह्मयज्ञविषयत्वाद्ग्रहणाध्ययनस्वविधिर्न लभ्यते इति चेत् । बाढम् । अत एव प्रकाशात्माचार्यैर्विवरणग्रन्थे तमध्यापयीतेत्यस्य माणवकाध्ययनविधिपरत्वम् उक्तम् । अत्राऽध्यापयीतेति पदे, धात्वर्थो, णिच्प्रत्ययार्थो, विधायकविभक्त्यर्थश्चेति त्रयोऽर्थाः प्रतिपाद्यन्ते ।

तेषु णिच्प्रत्ययार्थस्य जीवनकामनैयैव प्राप्तत्वान्नाऽसौ विधेयः। अतः प्राप्तं तमनूद्य धात्वर्थोऽप्राप्तोऽस्मिन् वाक्ये विधीयते। यथा, अग्निहोत्रं जुहोतीति होमं विधाय, दध्ना तु जुहोतीति वाक्ये प्राप्तहोमाऽनुवादेनाऽप्राप्तो दधिगुणो विहितस्तद्वत्। तस्मान्माणवककर्तृकाध्ययनविधिपरमेतद्वाक्यम्। तच्च तदर्थवाचकत्वं प्रोऽष्टवर्षो ब्राह्मणमुपगच्छेत, सोऽधीयीतेत्येवं परिणेतव्यम्। किञ्च सर्वासु स्मृतिषु ब्रह्मचारिप्रकरणेऽध्ययनविधेर्दृष्टत्वात्तन्मूलभूतासु श्रुतिषु विद्यते एवाध्ययनविधिरित्यनुमीयते। तस्माद् स्वविधिप्रयुक्तमध्ययनम्। तत्र माणवकस्याप्रबुद्धत्वेऽपि पित्रादिशिक्षया तदनुष्ठानं सिद्ध्यति। यथा वेदाध्ययनात् प्रागेव पित्रादिशिक्षया सन्ध्यावन्दनसमिदाहरणाद्यनुष्ठानसिद्धिस्तद्वत्।

तस्मात् स्वाध्यायोऽध्येतव्य इत्ययमेव विधिः कण्वशिष्यान् स्वशाखाविशेषाऽध्ययने प्रवर्तयतीति सिद्धम्।

इदमपरञ्चिन्त्यते। किमेतदध्ययनमदृष्टार्थमुत दृष्टार्थमिति?।

तत्र दृष्टाऽर्थेष्वाहारनिद्रादिषु वैदिकविध्यदर्शनाद् वेदेन विहितस्याऽध्ययनस्य सन्ध्यावन्दनादिवददृष्टार्थत्वं युक्तम्। स्वर्गकामो ज्योतिष्टोमेन यजेतेत्यादिष्विवैतत्कामोऽधीयीतेत्येवमदृष्टाध्ययफलविशेषो न श्रूयत इति चेत्। न हि अध्ययनत्वसाम्येन ब्रह्मयज्ञाध्ययने श्रूयमाणं घृतकुल्यादिफलमत्रातिदिश्यताम्। ब्रह्मयज्ञप्रकरणे ह्येवं श्रूयते। यदृचोऽधीते पयसः कुल्या अस्य पितॄन् स्वधा अभिवहन्ति, यद्यजूंषि घृतकुल्या, यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कुल्येति। तदेतद्ब्रह्मयज्ञफलं ग्रहणाध्ययनेऽतिदेष्टव्यम्। न चादृष्टचरोऽतिदेश इति वाच्यम्। जैमिनीययोः सप्तमाष्टमाध्याययोरतिदेशस्यैव बहुधा विस्तृतत्वात्। तत्र कर्माङ्गानामेवातिदेशो निरूपितः, घृतकुल्यादिवाक्यं न तु कर्माङ्गावबोधकं, किं तु फलकथनेन स्तावकोऽर्थवादः ईदृशस्यातिदेशो न क्वापि दृष्ट इति चेत्। मैवम्। वैयासिके गुणोपसंहारपादे, हानौ तूपायनशब्दशेषत्वादिति सूत्रे तस्य दृष्टत्वात्। तथाहि। कौषीतकिनो ब्रह्मविदा परित्यक्तयोः सुकृतदुष्कृतयोरितरेतरैरनुकूलैः प्रतिकूलैश्च स्वीकारमिष्टमामनन्ति, न त्वितरस्वीकारम्। तदीयं च वाक्यमेतत्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति। तत्र भगवान् बादरायणः कौषीतकिशाखायां श्रुतस्येतरस्वीकारस्याथर्वणशाखायामुपसंहारं निर्णीतवान्। सोऽयं फलवाक्यरूपस्याऽर्थवादस्यातिदेशः। तद्वद् घृतकुल्यादिकमति-

दिश्यताम् । अथवा विश्वजिन्न्यायेन स्वर्गो ग्रहणाध्ययनफलत्वेन कल्पनीयः । तथाहि, विश्वजिता यजेतेति यागविधिरेवाम्नातो न तत्र फलविशेषः । तथा सत्यधिकार्यभावादननुष्ठाने प्राप्ते तत्समाधानं भगवान् जैमिनिरसूत्रयत्— स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादिति । अस्यार्थः । अधिकारहेतुत्वेन योऽयं फलविशेषोऽपेक्षितः सोऽयं स्वर्गोऽत्र भवेत् । कुतः ? । फलकामिनः सर्वान् पुरुषान् प्रति स्वर्गाख्यफलस्य साधारणत्वादिति । स्वर्गो नाम सुखाऽतिशयः । तथाच, दुःखेन यन्न संभिन्नं न च ग्रस्तमनन्तरम् *अभिलाषोपनीतं च सुखं स्वर्गपदाभिधेयमिति । अतोऽत्रापि तेनैव न्यायेन माणवकाध्ययनस्य स्वर्गः फलमित्यदृष्टार्थमध्ययनमिति प्राप्ते ब्रूमः । दृष्टफलसम्भवे सत्यऽदृष्टकल्पनमन्याय्यम् । अन्यथा, व्रीहीनवहन्तीत्यत्रापि तण्डुलनिष्पत्तिलक्षणं दृष्टफलं बहुप्रयाससाध्यत्वादुपेक्ष्य सकृन्मुसलप्रहाररूपं प्रयासरहितमवघातम् अदृष्टार्थं पुरुषोऽनुतिष्ठेत् । तथा सति शास्त्रीयतण्डुलाभावेन पुरोडाशासिद्धौ यागविधयो बाध्येरन् । तस्माद् दृष्टफलसम्भवे तदेवादरणीयम् । सम्भवति ह्यध्ययनस्याऽक्षरप्राप्तिरूपं दृष्टफलम् । नन्वक्षरप्राप्तिरूपं दृष्टफलं गुरुपूर्वकाध्ययनव्यतिरेकेण लिखितपाठेनापि लभ्यते । आयुर्वेदादिमन्त्रपाठेषु तथा दर्शनात् । तथा सति किमनेनाध्ययनविधिनेति चेत् । उच्यते । नियमादृष्टार्थोऽयमध्ययनविधिः । यथा तण्डुलनिष्पत्तिरूपस्य दृष्टफलस्य विक्रियनखविदलनादिनापि सिद्धौ नियमादृष्टार्थोऽवघातविधिस्तद्वत् । तस्मादक्षरप्राप्तिः प्रत्यक्षोऽध्ययनविधिरिति सिद्धम् ॥

तदिदं शांकरदर्शनाऽनुसारिणं मतम् असहमानौ भट्टगुरू मन्येते । भवत्वध्ययनस्याक्षरप्राप्तिः फलं तथापि भवतामपि विधिर्न पर्यवस्यति । किन्तु प्राप्तैरक्षरैर्योऽयमर्थाऽवबोधस्तस्मिन् विधिः पर्यवस्यति । अर्थावबोधेनानुष्ठाने निष्पन्ने सति पुरुषार्थस्याग्निहोत्रादिफलस्य स्वर्गस्य सिद्धेः । अक्षरप्राप्तिमात्रेण तु न अग्निहोत्राद्यनुष्ठानफलं सिद्ध्यति । तस्मात् फलादर्थावबोधेऽध्ययनविधेः पर्यवसानमवगन्तव्यम् । यद्यपि विहितस्वाध्यायाध्ययनमात्रादिदानीन्तनेषु सर्वेष्वध्यापकेषु अर्थावबोधो न दृष्टस्तथापि निगमनिरुक्तव्याकरणाद्यङ्गपरिशीलनवत्सु दृष्टः पदार्थावबोधः । व्याकरणादिपरिशीलनमात्रेणार्थप्रतीतिमात्रे सत्यपि तन्निर्णयो न लभ्यते । अक्ताः शर्करा उपदधातीत्यादिवाक्येषु केन द्रव्येणाऽक्ता इत्यादेः संदेहस्याऽनपगमादिति चेत् । एवं तर्हि निर्णायकं

मीमांसाशास्त्रमनेनाध्ययनविधिनार्थनिर्णयाय स्वीक्रियताम्। यथाऽवघातविधि-स्तण्डुलनिष्पत्तिफलसिध्यर्थोऽवघातस्यार्थेच स्वीकरोति तद्वत्। तस्मात्फलवद-र्थोऽवबोधे पर्यवस्यत्ययमध्ययनविधिर्न त्वऽक्षरमाप्तिमात्र इति प्राप्ते ब्रूमः—

किमयमर्थाऽवबोधः स्वयमेव पुरुषार्थस्य स्वर्गहेतुःउताऽग्निहोत्राद्यनुष्ठानद्वा-रेण। नाद्यः। अनुष्ठानवैयर्थ्यप्रसङ्गात्।द्वितीये तु यथार्थावबोधस्यानुष्ठानहेतोः परम्परया पुरुषार्थहेतुत्वम्, एवमर्थावबोधहेतुभूताया अक्षरप्राप्तेरपि परम्पर-या पुरुषार्थहेतुत्वाद्विधिरक्षरप्राप्तौ पर्यवस्यतु। किञ्चानुष्ठानद्वारस्वर्गफलोपेते-ऽर्थावबोधे विधिपर्यवसानं वदतः कृत्स्नवेदाध्ययनं न सिद्ध्येत्।राजसूयाऽश्व-मेधादावनधिकारिणो ब्राह्मणस्य तत्फलत्वपर्यन्तार्थावबोधासंभवात्। अक्षरप्रा-प्तिफलवादिनस्तु कृत्स्नवेदाध्ययनं सिद्ध्यति। अक्षरप्राप्तेर्ब्रह्मयज्ञे जपहेतुत्वात्। तत्र ब्राह्मणोऽपि राजसूयाऽश्वमेधादिवेदविभागे भागोक्तब्रह्मयज्ञजपं करोत्येव। विधेरर्थावबोधपर्यन्तत्वाऽभावे कथमर्थावबोधसिद्धिरिति चेत्। काव्यनाटका-दिग्रन्थेषु वैदिकविधिमन्तरेण यथा अर्थावबोधस्तद्वद्भविष्यति। विध्यर्थाभावे-ऽर्थावबोधप्रयुक्तमदृष्टं किं चिदपि न सिद्ध्यतीति चेत्। मैवम्। अर्थावबोधस्या-ऽध्ययनविधिप्रयुक्त्यभावेपि विध्यन्तरप्रयुक्तत्वेन तस्यादृष्टस्य सिद्धेः। विध्यन्तरं चैवमाम्नायते— ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति, यो-ऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मेति च। तस्मादध्ययनविधिः पाठमात्रपर्यवसायी। अर्थावबोधस्तु विध्यन्तरप्रयुक्त इति सिद्धम्॥

अथेदानीं विहितार्थावबोधसिद्धये काण्ववेदो व्याख्यायते। कण्वसंबन्धश्च वेदस्य पूर्वमेव प्रसिद्धः प्रदर्शितः। कण्वसंबन्धिशाखाया वेदत्वं चाऽलौकिक-पुरुषार्थोपायवेदनहेतुत्वादवगन्तव्यम्। तथाचोक्तं— प्रत्यक्षेणाऽनुमित्या वा यस्तूपायो न बुद्ध्यते * एतं विदन्ति वेदेन तस्माद् वेदस्य वेदतेति। तस्मिंश्च वेदे द्वौ काण्डौ—कर्मकाण्डो, ब्रह्मकाण्डश्च। बृहदारण्यकाऽऽख्यो ग्रन्थो ब्रह्म-काण्डस्तद्व्यतिरिक्तं शतपथब्राह्मणं संहिता चेत्यनयोर्ग्रन्थयोः कर्मकाण्डत्वम्। तत्रोभयत्राधानाग्निहोत्रदर्शपूर्णमासादिकर्मण एव प्रतिपाद्यत्वात्। बृहदा-रण्यके तु तृतीयाद्यध्यायेषु ब्रह्म प्रतिपाद्यते। अतः कर्माणि वेदस्य विषय-स्तदवबोधः प्रयोजनं, बोधार्थी चाधिकारी। तत्र प्रयोजनं विषयेण जन्य-ते। तयोर्जन्यजनकभावः संबन्धः। प्रयोजनाधिकारिणोरर्थ्यमानार्थित्व-संबन्धः। अधिकारिविषययोस्तु प्रयोजनद्वारेणोपकार्योपकारकत्वसंबन्धः।

इत्थं विषयप्रयोजनाधिकारिसंबन्धरूपस्याऽनुबन्धचतुष्टयस्य विद्यमानत्वात् तदीयप्रामाण्यस्य जैमिनिना प्रथमपादे प्रपञ्चितत्वाच्च वेदो व्याख्यातुं योग्यः ।

तस्मिंश्च वेदे कर्मकाण्डः प्रथममाम्नातः । यद्यपि ब्रह्मणोऽभ्यर्हितत्वाद् ब्रह्मकाण्डस्यैव प्राथम्यमुचितम् । तथापि कर्मभिः साध्यां चित्तशुद्धिमन्तरेण पुरुषस्य ब्रह्मकाण्डेऽधिकाराभावादधिकारहेतुकर्मप्रतिपादकः काण्डः प्रथमं समाम्नातः । कर्माणि च चतुर्विधानि । नित्यं, नैमित्तिकं, काम्यं, निषिद्धं चेति । तत्र नित्यनैमित्तिकयोरननुष्ठानान्निषिद्धसेवनाच्च प्रत्यवाय उत्पद्यते । तथाच याज्ञवल्क्यः स्मरति–विहितस्याऽननुष्ठानान्निन्दितस्य च सेवनात् * अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छतीति । तेन च प्रत्यवायेन बुद्धिमान्द्ये सति नित्याऽनित्यवस्तुविवेकवैराग्यादीनाम् अनुदयात् ब्रह्मविविदिषा पुरुषस्य न जायते। तस्माद् विविदिषाहेतुत्वं नित्यनैमित्तिककर्मणां बृहदारण्यके समामनन्ति– तमेतं वेदाऽनुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति । तदनुष्ठानेन तमोगुणरूपे चित्तमालिन्ये अपगते सति सत्त्वगुणरूपस्य नैर्मल्यस्योदयाद् विवेकवैराग्यादिसंपत्तौ सत्यां परमपुरुषार्थरूपे ब्रह्मतत्त्ववेदनेऽभिरुचिर्जायते । कारीर्या वृष्टिकामो यजेत, चित्रया पशुकाम इत्यादीनि तु काम्यकर्माणि परमपुरुषार्थसाधनाऽभावेऽपि स्वाभाविककामग्रस्तानां पुरुषाणां वैदिकमार्गे फलसंवादेन श्रद्धामुत्पादयितुमेवाम्नायन्ते। तस्मात् तानि वेदे प्रासङ्गिकानि । परमतात्पर्यं तु वेदस्य नित्यकर्मस्वेव । तस्मात् कर्मकाण्डगतयोः संहिताशतपथग्रन्थयोः प्राधान्येन नित्यकर्माण्याम्नातानि ॥

तत्र शतपथब्राह्मणस्य मन्त्रव्याख्यानरूपत्वाद् व्याख्येयमन्त्रप्रतिपादकः संहिताग्रन्थः पूर्वभावित्वात् प्रथमो भवति । तस्मिंश्च संहिताग्रन्थे चत्वारिंशदध्यायाः। तेषु प्रथमद्वितीययोरध्याययोर्दर्शपूर्णमासौ । तृतीयेऽन्वाधानाग्निहोत्राग्न्युपस्थानचातुर्मास्यानि । चतुर्थपञ्चमषष्ठसप्तमाष्टमनवमेषु षट्स्वऽग्निष्टोमः। दशमे वाजपेयः। एकादशे राजसूयः। द्वादशमारभ्य विंशान्तेषु नवस्वग्निचयनम् । एकविंशद्वाविंशत्रयोविंशेषु त्रिषु सौत्रामणी । चतुर्विंशपञ्चविंशषड्विंशसप्तविंशेषु चतुर्ष्वश्वमेधः। अष्टाविंशमारभ्य त्रयस्त्रिंशान्तेषु षट्सु तत्र तत्र विप्रकीर्णा लिङ्गविनियोज्या अनारभ्याधीता मन्त्राः । चतुस्त्रिंशपञ्चत्रिंशयोः पुरुषमेधः । षट्त्रिंशे शान्तिः । सप्तत्रिंशाष्टत्रिंशैकोनचत्वारिंशेषु प्रवर्ग्यः । चत्वारिंशे च ब्रह्मविद्या ॥

ननु संहिताया आदौ कर्मान्तरं परित्यज्य दर्शपूर्णमासेष्टिरेव कुतः प्रतिपाद्यत इति चेत् । प्रकृतित्वान्निरपेक्षत्वाच्चेति ब्रूमः ॥
प्रकर्षेणाऽङ्गोपदेशो यत्र क्रियते सा प्रकृतिः । कृत्स्नाऽङ्गविषयत्वमुपदेशस्य प्रकर्षः । विकृतिषु तु विशेषाङ्गमात्रस्योपदेशः क्रियते । अङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते । अत उपदेशस्य प्रकर्षाभावः । प्रकृतिस्त्रिविधा । अग्निहोत्रमिष्टिः, सोमश्चेति । त्रिष्वप्येतेष्वन्यनैरपेक्ष्येण स्वाङ्गजातं सर्वमुपदिष्टम् । तत्र सोमयागस्य स्वरूपेणान्यनैरपेक्ष्येऽप्यङ्गेषु दीक्षणीयादिषु दर्शपौर्णमासेष्टिमपेक्षत्वाद् न पूर्वभावित्वं युक्तम् । इष्टेस्तु सोमयागनैरपेक्ष्यात् सोमात् प्राचीनत्वं युक्तम् । यद्यप्यग्निहोत्रस्य स्वरूपाङ्गेषु नास्त्यन्यापेक्षा, तथाप्यग्निसिद्ध्यपेक्षत्वाद् आहवनीयाद्यग्नीनां च पवमानेष्टिसाध्यत्वात् पवमानेष्टीनां च दर्शपूर्णमासविकृतित्वात् परम्परयाग्निहोत्रस्य दर्शपूर्णमासापेक्षास्तीति प्रथमभावित्वं युक्तम् । दर्शपूर्णमासयोरग्निसाध्यत्वादग्निसाधकमाधानं प्रथमतो वक्तव्यमिति चेद् मैवम् । नाधानमात्रेणाऽग्नयः सिद्ध्यन्ति । किन्तु पवमानेष्टिभिरपि । ताश्चेष्टयो दर्शपूर्णमासविकृतित्वात् साक्षादेव दर्शपूर्णमासावपेक्षन्ते । दर्शपूर्णमासौ त्वऽग्निद्वारा पवमानेष्टिसापेक्षावपि न साक्षात् पवमानेष्टीरपेक्षेते । अतो निरपेक्षत्वाद् दर्शपूर्णमासेष्टिरेव प्रथमं वक्तव्या । ऋग्वेदसामवेदयोरादौ दर्शपूर्णमासेष्टिर्नाम्नातेति चेत् । बाढम् । यजुर्वेदमपेक्ष्य दर्शपूर्णमासयोरादित्वमुक्तम् । कर्मकाण्डविषये यजुर्वेदस्यैव प्राधान्यात् । आनुपूर्व्या कर्मणां स्वरूपं यजुर्वेदे समाम्नातम् । तत्र तत्र विशेषापेक्षायामपेक्षिता याज्यापुरोनुवाक्यादय ऋग्वेदे समाम्नायन्ते । स्तोत्रादीनि तु सामवेदे । तथा सति भित्तिस्थानीयो यजुर्वेदः । चित्रस्थानीयावितरौ । तस्मात् कर्मसु यजुर्वेदस्य प्राधान्यम् । तस्मिंश्च दर्शपूर्णमासेष्टिरादौ समाम्नाता । तस्यां चेष्टौ, इषे त्वादयो मन्त्राः । तेषां च मन्त्राणां सामान्यलक्षणं न्यायविस्तराभिधे ग्रन्थे द्वितीयाऽध्याये प्रथमपादे द्वाभ्यामधिकरणाभ्यामित्थं विचारितम्—

अहे बुध्निय मन्त्रं मे इति मन्त्रस्य लक्षणम् ।
नास्त्यस्ति वाऽस्य नास्त्येतदव्याप्त्यादेरवारणात् ॥
याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जत, इति ॥

आधानप्रकरण इदमाम्नायते- अहे बुध्निय मन्त्रं मे गोपायेति । तत्र मन्त्रस्य

लक्षणं नास्ति कुतः ? अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात् । विहितार्थस्याभिधायको मन्त्र इत्युक्ते, वसन्ताय कपिञ्जलानालभत इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः । मननहेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिरिति चेन्नैवम् । याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात् । तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्व गमयति । उरु प्रथा उरु प्रथस्व इत्यादयोऽनुष्ठानस्मारकाः । अग्निमीळे पुरोहितमित्यादयः स्तुतिरूपाः । इषे त्वेत्यादयः शाखाछेदनादिस्मारकाः । अग्न आयाहि वीतय इत्यादय आमन्त्रणोपेताः । एवमन्येऽप्युदाहार्याः । ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति । यस्य लक्षणमुच्यते । तस्मात् समाख्यान मन्त्रलक्षणम् ॥

ऋगादिलक्षण पूर्वोत्तरपक्षावाह । न ऋक्सामयजुषां लक्षण कुर्यात् । लक्ष्मसाङ्कर्यादिति शङ्क्यते । पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसङ्करः ॥ । इदमाम्नायते, अहे बुध्निय मन्त्र मे गोपाय यमृषयस्त्रैविदा विदुः ऋचः सामानि यजूꣳषि इति । त्रीन् वेदान् विदन्तीति त्रिविदः । त्रिविदां सम्बन्धिनोऽध्येतारस्त्रैविदाः । ते च य मन्त्रभागमृगादिरूपेण त्रिविध वदन्ति त गोपायेति योजना । त्रिविधानाम् ऋक्सामयजुषां व्यवस्थित लक्षण नास्ति । कुतः ? । साङ्कर्यस्य दुष्परिहरत्वात् । अध्यापकप्रसिद्धेरृग्वेदादिषु पठितो मन्त्र ऋगादिरूप इति हि वक्तव्यम् । तच्च सङ्कीर्णम् । तथाहि । अग्नये मथ्यमानायानुब्रूꣳहि, हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूꣳहि इत्यादीनि यजूꣳष्यृग्वेदे समाम्नातानि । देवो वः सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरित्ययं मन्त्रो यजुर्वेदे सम्प्रतिपन्नयजुषा मध्ये पठितः । न च तस्य यजुष्ट्वमस्ति । ऋग्रूपत्वेन तद्ब्राह्मणे व्यवहृतत्वात् । सावित्र्यर्चेति हि ब्राह्मणम् । एतत् साम गायन्नास्त इति हि प्रतिज्ञाय, हाउ इत्यादिक साम यजुर्वेदे गीतम् । अक्षितमस्यऽच्युतमसि प्राण सꣳशितमसि इति त्रीणि यजूꣳषि सामवेदे समाम्नायन्ते । तस्मान्नाऽस्ति लक्षणमिति चेन्न । पादादीनामसङ्कीर्णलक्षणत्वात् । पादेनार्द्धर्चेनोपेता वृत्तबद्धा मन्त्राः ऋचः । गीतिरूपा मन्त्राः सामानि । वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूꣳषि इति व्यवस्थित लक्षणम् ॥

प्रथमा यायस्य द्वितीयपादे मन्त्रेष्वन्यद्विचारितम् ।

मन्त्रा उरु प्रथस्वेति-किमदृष्टैकहेतवः ।

यागे कृतपुरोडाशप्रथनादेश्च भासकाः ॥

ब्राह्मणेनाऽपि तज्ज्ञानान्मन्त्राः पुण्यैकहेतवः ।
न तज्ज्ञानस्य दृष्टत्वाद् दृष्टं वरमदृष्टत, इति ॥

उरु प्रथस्वेत्ययं कश्चिन्मन्त्रः । तस्याऽयमर्थः—भोः पुरोडाश त्वमुरु विपुलता यथा भवति तथा कपालेषु प्रसरेति हीदृशा मन्त्रा यागप्रयोगेषूच्चार्यमाणा अदृष्टमेव जनयन्ति,न त्वर्थप्रकाशनाय तदुच्चारणम् । पुरोडाशप्रथनलक्षणार्थस्य ब्राह्मणवाक्येनापि भासमानत्वात् । उरु प्रथस्वेति पुरोडाशं प्रथयतीति हि ब्राह्मणवाक्यमिति चेन्नैतद्युक्तम् । अर्थप्रसायनस्य दृष्टप्रयोजनस्य सम्भवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात् । तस्माद् दृष्टमर्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम् । ब्राह्मणवाक्येनाप्यर्थानुस्मरणसम्भवे मन्त्रेणैवानुस्मरणीयमिति यो नियमस्तस्यादृष्टं प्रयोजनमस्तु । ननु मन्त्राणामनुष्ठेयार्थस्मारकत्वं क्वचिद् व्यभिचरितम् । तथाहि । दिवो वा विष्ण उत वा पृथिव्यामहो वा विष्णवुत वाऽन्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसुभिरा प्रयच्छ दक्षिणादोत सव्यादित्यस्मिन् मन्त्रे धनमाशास्त इत्ययमर्थः प्रतीयते । अनुष्ठेयार्थस्तु शकटविशेषस्थापनाया-ऽऽधारभूतकाष्ठस्थापनं, तत्तु ब्राह्मणेन विधीयते । दिवो वा विष्ण उत वा पृथिव्या इत्याशीरेतयर्चा दक्षिणस्य हविर्धानस्य मेढीं निहन्तीति । नाऽयं दोषः । अस्याधिकरणस्य लिङ्गविनियोगविषयत्वात् । उदाहृतस्तु मन्त्रः श्रुत्या विनियुज्यते । य एतेऽर्थस्मरणाय प्रयोक्तव्या मन्त्राः सन्ति तेषु सर्वेष्वृष्यादिकं वेदितव्यम् । अत एव छन्दोगा ऋष्याद्यवेदने बाधमभिधाय तद्वेदनविधिमामनन्ति । यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्छति गर्तं वा पद्यत इत्यादिरवेदने बाधः । तस्मादेतानि मन्त्रे विद्यादिति वेदनविधिः । तथा कात्यायनाऽऽचार्योऽप्याह । एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित् तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यत इति । अस्यास्तु मन्त्रब्राह्मणात्मिकायाः काण्वशाखायाः सर्वस्या अपि स्वयम्भुब्रह्मारभ्य पौतिमाष्यपर्यन्ताः संप्रदायप्रवर्तका ऋषयस्त्रिषु वंशब्राह्मणेषु मन्त्रविशेषेषु स्पष्टमाम्नाताः । काण्डविशेषेषु मन्त्रविशेषेषु चाऽपेक्षितास्तत्तदृषिविशेषा ब्राह्मणगताख्यायिकाभिरनुक्रमणिकादिग्रन्थैश्चावगन्तव्याः । तदज्ञानेऽपि वंशोक्तानामृषीणामवगतत्वाद-ऽवेदनप्रयुक्तो बाधो नास्ति । ऋषिविशेषाणामपि विज्ञाने फलाधिक्यमस्ति । अत

एव वीर्यवत्तरं भवतीति कात्यायनवाक्यं पूर्वमुदाहृतम् । छन्दस्तु मन्त्राणाम् इषे त्वादीनामनियताक्षरत्वान्नास्त्येव । ये तु यजुषामपि छन्द इच्छन्ति । तैः कात्यायनोक्तसर्वानुक्रमणिकायां पञ्चमाऽध्यायमभ्यस्य तद्द्वारेण तत्तन्मन्त्रच्छन्दोऽनुसन्धेयम् । देवता तु मन्त्रप्रतिपाद्या । सा च मन्त्रलिङ्गादवगन्तव्या । येषु मन्त्रेष्वग्नीन्द्रादयश्चेतनाः प्रतिपाद्यन्ते तेष्वग्न्यादीनां देवतात्वं विस्पष्टम् । येषु तु मन्त्रेषु पलाशशाखाबर्हिर्जुह्वादयोऽचेतनाः प्रतिपाद्यन्ते तेष्वपि शाखादिशब्दाभिधेयास्तत्तद्द्रव्याभिमानिनश्चेतना देवता अवगन्तव्याः । अत एव भगवान् बादरायणो, मृदब्रवीदापोऽब्रुवन्नित्यादिष्वचेतनद्रव्येषु चेतनोचितव्यापारमुपपादयितुम्, अभिमानिव्यपदेशस्त्विति सूत्रयामास । एवञ्च सति, इषे त्वादीना मन्त्राणाम् ऋषिच्छन्दोदेवता यथोक्तनीत्या सुबोधाः। तस्माद्ग्रन्थबाहुल्यभीरुभिरस्माभिः प्रतिमन्त्रं नोदाह्रियन्ते । विनियोगज्ञानाय तु प्रतिमन्त्रं कात्यायनसूत्रवाक्यमुदाह्रियते । मन्त्रार्थज्ञानाय काण्वसम्बन्धिब्राह्मणं तत्र तत्र यथासम्भवमुदाहरामः । तदर्थावबोधदार्ढ्याय शाखान्तरविषयमप्यापस्तम्बसूत्रं, बौधायनसूत्रं, तैत्तिरीयब्राह्मणं च क्वचित्क्वचिदुदाहरामः ॥ दर्शयागं चिकीर्षुरमावास्यायां प्रातर्नित्याग्निहोत्रं कृत्वा ततो दर्शयागार्थं, ममाग्ने वर्च इत्यादिभिर्मन्त्रैर्वेदिषु समिदाधानरूपमन्वाधानं कृत्वा वत्सापाकरणं कुर्यात् । किमिदं वत्सापाकरणमिति चेत् । सन्ति दर्शयागे त्रीणि प्रधानहवींषि, आग्नेयोऽष्टाकपालः, ऐन्द्रं दधि, ऐन्द्रं पयः इति । तत्र प्रतिपदि दधि होतुं तस्य दध्नः सम्पादनायाऽमावस्यायां रात्रौ गावो दोग्धव्याः । तद्दोहनार्थं प्रातः काले लौकिकदोहनादूर्ध्वं स्वमातृभिः सह सञ्चरन्तो वत्सा मातृभ्योऽपाकरणीयाः । तदिदं वत्सापाकरणम् । एतच्च कण्वो महर्षिः स्वकीये ब्राह्मणे विधातुम् इदं वाक्यं पठति–"स वै पर्णशाखया वत्सानपाकरोति इति । तदेतदुपपादयितुम् अर्थवादे गायत्रीकृतं सोमाहरणमभिधाय तदाहरणवेलायां पक्षिरूपाया गायत्र्याः पक्षविशेषः सोमवल्ल्याः पर्णं च भूमावपतत् । तयोरन्यतरत् पर्णनामकः पलाशवृक्षोऽभूत् । अतः सोमसम्बन्धाद् गायत्रीसम्बन्धाच्च पलाशवृक्षः प्रशस्य इत्यभिधीयते । तं विधिमेवमुपसंहरति । पर्ण मुचिच्छेद गायत्र्या वा सोमस्य वा राज्ञस्तत् पतित्वा पर्णोऽभवत् । तस्मात् पर्णो नाम यत् तत्र किञ्चित् सोमस्य त्यक्तं, तस्मात् पर्णशाखया वत्सानपाकरोतीति ।

गायत्र्याः सोमाहरणं, कद्रूश्च वै सुपर्णी चेत्यादौ तैत्तिरीयब्राह्मणगतानुवाके,

सोमो वै राजा गन्धर्वेष्वासीदित्यादौ बह्वृचब्राह्मणे च प्रपञ्चितम् । पलाशवृक्षस्य सोमसम्बन्धिपर्णादुत्पन्नत्वेन वृक्षजातिषु ब्राह्मणवृक्षतया प्रशस्तत्वात् तदीयशाखया वत्सापाकरणं तित्तिरिः स्वकीयब्राह्मणेऽपि स्पष्टमित्थमुवाच । तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्याहरत् । तस्य पर्णमच्छिद्यत । तत्पर्णोऽभवत् । तत्पर्णस्य पर्णत्वं ब्रह्म वै पर्णम् । यत् पर्णशाखया वत्सानपाकरोति । ब्रह्मणैवैनानपाकरोति इति । नचाऽत्र सोमवल्ल्याः पत्रमात्रस्य कथं वृक्षस्य सम्पत्तिरिति विस्मेतव्यम् । विधातुरीश्वरस्याऽचिन्त्यशक्तित्वात् । अन्यथा बीजाद् वृक्ष इत्यत्रापि, क्व बीजं, कुत्र वा वृक्ष इत्ययं विस्मयः केन वार्येत । सर्वत्र पर्णेभ्यो वृक्षः प्रसज्ज्येतेत्ययमतिप्रसङ्गोऽपीश्वरसङ्कल्पाभावेन परिहर्तव्यः । स च सङ्कल्पः कार्यैकसमधिगम्यः । तस्माद्वेदार्थे कुतर्केर्न चोदनीयम् । तस्याः पर्णवृक्षशाखायाश्छेदनेन प्रथममन्त्रं कात्यायनः स्वकीयसूत्र इत्थं विनियुङ्क्ते— पर्णशाखां छिनत्ति शामीलीं वेषे त्वेत्यूर्जे त्वेति वा छिनद्मीति वोभयोः साकाङ्क्षत्वात् । सन्नमयामीति वोत्तर इति ॥

अस्याऽयमर्थः ॥ पलाशशाखा शमीशाखा चाऽत्र विकल्पिता । तच्छेदने, इषे त्वेत्यूर्जे त्वेति नैतौ मन्त्रौ विकल्पितौ । तयोरुभयोः क्रियापदाकाङ्क्षत्वादर्थावबोधाय छिनद्मीति पदमध्याहर्तव्यम् । सोऽयमेकः पक्षः । इषे त्वेति छेदनाऽर्थो मन्त्रः । ऊर्जे त्वेति सन्नमनाऽर्थो मन्त्रः । सन्नमनमृजूकरणम् । तदिदं पक्षान्तरमिति । अत्र बौधायन उभयोर्वाक्ययोरेकमन्त्रत्वमाश्रित्य तं मन्त्रं छेदने विनियुङ्क्ते— तामाच्छिनत्तीषे त्वोर्जे त्वेति । आपस्तम्बस्तु तदभिसन्धाय मन्त्रभेदपक्षमपि कञ्चिदाश्रित्य विनियोगभेदमाह— सन्नपतः पलाशशाखां शमीशाखां वाहरति । इषेत्वोर्जे त्वेति तामाच्छिनत्त्यपि वेषे त्वेत्याच्छिनत्त्यूर्जे त्वेति संनमयत्यनुमार्ष्टि वेति । सन्नपतः सान्नायनामक दधिरूप हविः कुर्वत इत्यर्थः ॥ काण्वशिष्यास्तु मन्त्रभेदं विनियोगभेदं चाश्रित्येत्थमामनन्ति । तामाच्छिनत्तीषे त्वेति वृष्ट्यै तदाह यदिषे त्वेत्यूर्जे त्वेत्यनुमार्ष्टि यद्वृष्ट्या ऊर्ग्रसो जायते तस्मा उ एतदाह तस्मादाहोर्जे त्वेतीति ॥ अस्यायमर्थः ॥ तां पर्णशाखाम्, इषे त्वेति मन्त्रेणाध्वर्युः साकल्येन छिन्द्यात् । छेदकालेऽध्वर्युः— इषे त्वेति यद् वाक्यमाह तद्वाक्यं वृष्टिसिद्ध्यर्थम् । अधिकेनादरेण सेव्ते, ऊर्जे त्वेतिमन्त्रेण तां शाखामनुमृज्यात् । अनुमार्जनमानुलोम्येन तस्यां संलग्नधूल्याद्यपनयनम् । यदि प्रभूताया वृष्टेः सकाशाद् व्रीहियवाद्यभिवृद्धिहेतुरूर्जशब्दाऽभिधेयः

श्रीगणेशाय नम ।

हरि ॐ

अथ मंडलं दक्षिणमक्षिहृदयं चाधिष्ठितं येन शुक्लानियजूंषि
भगवान् याज्ञवल्क्योयतःप्रापतंविवस्वन्तंवयीमयमर्चिष्मंतमभि
ध्यायकाण्वीये वाजसनेयके यजुर्वेदाम्नायेसर्वेसखिलेसशुक्रियेऽ
ऋषिदैवतछंदांस्यनुक्रमिष्यामोयजुषामनियताक्षरत्वादेकेषांछंदो
नविद्यतेद्रष्टार ऋषयः स्मर्त्तारः परमेष्ठ्यादयोदेवतामंत्रांतर्भूता
अग्न्यादिकाहविर्भाजःस्तुतिभाजोवाऽनःशाखोखाशम्योपवेषक
पालेध्मोलूखलादयश्चप्रतिमाभूताश्छंदांसिगायत्र्यादीन्येतान्य-
विदित्वायोधीतेनुब्रूतेजपतिजुहोतियजतेयाजयतेतस्यब्रह्मनिर्वी
र्ययातयामंभवत्यथांतराश्वगर्त्तंवापद्यतेस्थाणुंवर्च्छतिप्रमीयतेवापा-
पीयान्भवत्यथ विज्ञायैतानियोधीतेतस्य वीर्यवदथ योर्थवित्तस्य
वीर्यवत्तरंभवतिजपित्वाहुत्वेष्ट्वातत्फलेनयुज्यते॥इषेत्वेत्यादिनमऽ
उक्तिविधेमेत्यंतंविवस्वानपश्यत्ततः प्रतिकर्मविभागेनब्राह्मणानु
सारेणऋषयोवेदितव्याःपरमेष्ठीप्राजापत्योदर्शपूर्णमासमंत्राणा
मृषिर्देवावाप्राजापत्याः ॥ इषेत्वाशाखानुष्टुब्विनियोगःकल्पका
रोक्तःऽथमृजेत्वायायवोयायव्यंदेवोव ऽऐंद्रंयजमानस्य शाखाव-
सोर्यापव्यंधौमातरिश्वनऽउग्रायसोर्यापव्यंदेवस्त्वापयःकामधुक्
मद्नःसाविद्यायुश्रीणिगव्यानींद्रस्यंद्रंविष्णोयप्योग्नऽइदमाग्नेय-
कस्त्वाप्राजापत्यंकर्मणेस्फ्यशूर्पंप्रत्युष्टंरक्षःसंउरुन्तरक्षोघ्नः स
यंग्रधूरसिधूर्वधानांविष्णुस्त्वाऽनउरुविष्णाअपहतःरक्षोयछंतां
हविष्यादेयस्यत्वामायिद्रःसर्वत्रांऽग्नयेलिंगोक्ते भूतायत्वाद्दषिः
स्यःमृगोऽदःत्वांगृहा.पृथिव्यास्त्वाहव्यंपवित्रेलिंगोक्तेःसवितुर्देवी
प्रोक्षिताआपान्यग्नयेलिंगोक्तेदैव्यायपात्राणिजमोस्यदित्याःकृ-
ष्णाजिनमयभूत-गक्षस्समंत्रियायोलूखलंअग्नेर्हविर्धानमसीदमाम
देवस्यहृदयिंद्रतंवांगायिपञ्चरत्नांकुर्वकृष्टायान्ययरूःशूर्पंप्रति
गाहविःपरापूतमपहतःरक्षसेवायुर्देवोवस्तंहत्वापृष्टिकपर्या
ऽग्नभादंयजमाननेयमुरमसिपर्णांकपालान्यग्नेत्राग्नेयंधि
षणामिदायंदिवःनाम्नाधिषणापलंधान्यमसि धण्णाःहविर्मही

नामाज्यं॑त्वंदो॑सिवेदथंघं॒संचपामिहवि॑ःसमाप॒ऽआपंजनयत्यैत्वेद॒
हवि॑रिषेत्वाज्यंधमो॑सिपण्णां॑पुरोळाशो॒॑तारित॒शाचसो॑त्रितायत्रया
णांत्रितो॑ऽधितएकतः क्रमेणादद इंद्रस्यस्फ्यः पृथिव्यै पृथिविवेदि॑र्ब्र
जंपुरीपंवर्पतुवेदि॑र्विधानसाविदमपारुमररोआसुरेद्रप्सस्ते वेदि॑
गा॑यत्रेण त्रीणि वैष्णवानि॑सुक्मात्रयाणां॑वेदि॑ःपुराघश॒सोपश्य
चांद्रमसीं॑त्रिष्टुभं क्षिपतआभिचारिकं॑मनिशित॒स्रुचो॑ऽनिशिता
स्कंदित्यै विष्णोर्यो॑क्त्रमूर्जे त्रयाणमाज्यं॒संवितुरापं तेजोसि-
धामाज्यं(यस्तेमागाश्चत्रिष्टुप्)॥ १ ॥

ॐ इ॒षेत्वो॒।र्जेत्वा॑वा॒यव॑स्थ॥दे॒वोवः॑सवि॒ताप्रार्प॑यतु श्रेष्ठ॑तमाय॒

---

समीचीनजलात्मको रसो जायते, तदा प्राणिनामुपकारो भवति । तदर्थमेवा-ऽध्वर्युरेतदाह । किमाहेत्याशङ्क्य, तस्मादाहोर्जे त्वेति वाक्येन तदेव स्पष्टीक्रियते इति ॥ काण्वाभिमत एव मन्त्रभेदपक्षो जैमिनीयैरपि द्वितीयाध्याये प्रथमपादे इत्थं निर्णीतः—

इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे ।
असत्यर्थास्मारकत्वादेकाऽदृष्टस्य कल्पनात् ॥
छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे ।
अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदत, इति ॥

इषे त्वोर्जे त्वेत्यत्र क्रियापदाभावेनोरुप्रथस्वेतिमन्त्रवदर्थस्मारकत्वाभावा-दृदृष्टार्थे सत्येकादृष्टस्य कल्पने लाघवादेक एव मन्त्र इति चेन्मैवम् । काण्व-ब्राह्मणे, छिनत्त्यनुमार्ष्टि इति विनियोगभेदश्रवणात्तदनुसारेणेषे त्वा छिनद्मि ऊर्जे त्वाऽनुमार्ज्मीति क्रियापदेऽध्याहृते सत्यर्थद्वयस्मारकत्वाद्भिन्नौ मन्त्रौ ॥ अथानयोरर्थोऽभिधीयते । इषु इच्छाया धातुः । इष्यत इति व्युत्पत्त्या किबन्तेन षकारान्तेनेषुशब्देन वृष्टिरभिधीयते । व्रीहियवादिधान्यनिष्पत्तिहेतुत्वेन सर्वे प्राणिनो वृष्टिमिच्छन्ति । हे पलाशशाखे इष्यमाणायै वृष्टयै त्वामाच्छिनद्मि । ऊर्ज बलप्राणनयोरिति धातुः । वृष्टिगतो बलात्मको रसः सर्वान् मनुष्यपश्वादीन् बलयति पानादिना दृढशरीरान् करोति । यद्वा, प्राणयति प्रकर्षेण चेष्टयतीति व्युत्पत्तिद्वयेन रस ऊर्जशब्देनाभिधीयते । हे पलाशशाखे! ऊर्जे रसाय त्वाम-ऽनुमार्ज्मि । इषुशब्दगत इकारो धातुस्वरेण प्रातिपदिकस्वरेण वा उदात्तः ।

चतुर्थ्येकवचनस्य, अनुदात्तौ सुप्पिताविस्यनुदात्तत्वे प्राप्ते, तदपवादत्वेन, सावेकाचस्तृतीयादिर्विभक्तिरित्युदात्तत्वं, तस्मिन्नित्यनुदात्तं पदमेकवर्जमिति पूर्व इकारोऽनुदात्तः । यद्यप्येकशब्देन द्वयोरुदात्तयोरन्यतरौ यः कोऽपि वक्तुं शक्यते । तथापि, सति शिष्टस्वरो बलीयानिति न्यायेन विभक्तिगत उदात्त एव प्रबलः । तथा सति अनुदात्तादिकमुदात्तान्तमिदं सम्पन्नम् । त्वाशब्दस्य प्रातिपदिकस्वरेण यद्यपि उदात्तः प्राप्तस्तथाप्यनुदात्तं सर्वमपादादावित्यस्य सूत्रस्याऽनुवृत्तौ सत्यां, त्वामौ द्वितीयाया इति त्वादेशविधानादयं शब्दोऽनुदात्तः । संहितायामुदात्तादनुदात्तस्य स्वरित इति त्वाशब्दस्य स्वरितत्वम् । ऊर्जे त्वेत्यत्रापि यथोक्तरीत्या स्वर ऊह्नेयः । मन्त्रद्वयस्य संहितायामूर्जं इत्युकारस्य, स्वरितात् संहितायामनुदात्तानामिति प्रचयाभिधायामेकश्रुत्यं प्राप्तम् । तदपवादत्वेनोदात्तस्वरितपरस्य सन्नतर इत्यत्यन्तनीचोऽनुदात्तो भवति । एवमुत्तरेष्वपि मन्त्रेषु स्वरप्रक्रियोहनीया । उक्तमन्त्रद्वयपाठेनाध्वर्युरिष्यमाणमन्नं बलकरमाज्यक्षीरादिरसं च यजमाने सम्पादयत्येव । तदाह तित्तिरिः । इषे त्वोर्जे त्वेत्याह । इषमेवोर्जं यजमाने दधातीति । न चाऽत्र प्रत्यक्षविरोध आशङ्कनीयः । अर्थवादस्य प्रशंसारूपगुणत्वाङ्गीकारात् । भूतार्थवादत्वाऽङ्गीकारे यदाकदाचिदन्नरसयोर्यत् सम्पादनं तदेतन्मन्त्रफलमित्यवगन्तव्यम् ॥

उत्तरमन्त्रस्य विनियोगमाह कात्यायनः ॥ मातृभिर्वत्सान् संसृज्य वत्सं शाखयोपस्पृशति वायवस्थोपायव स्थेति चैक इति ॥ कण्वोऽप्याह ॥ स वत्समुपस्पृशति । वायवस्थेति ॥ एतावानेव कण्वाऽभिमतो मन्त्रः । उपायवस्थेत्ययम् उत्तरभागस्तित्तिरेरभिमतः । तस्मादेक इत्यन्यदीयमतत्वेन कात्यायन उदाजहार । तित्तिर्यभिमतं विनियोगमाह बौधायनः ॥ तथा वत्सानपाकरोति वायव स्थोपायव स्थेति इति ॥ तत्रोत्तरभाग कण्वो निराचकार । उपायव स्थेत्युहैक आहुस्तदु नाद्रियेतेति । वा गतिगन्धनयोरिति धातुः । यान्ति गच्छन्तीति वायवो गन्तारः । हे वत्सा यूयं वायवः स्थ, मातृभ्यः सकाशाद् अन्यत्र गन्तारो भवत । सह मातृभिर्गमने सति सायं दोहो न लभ्यत इत्यभिप्रायः । अथवा, वायुसादृश्याद् वत्सानां वायुत्वम् । यथा वायुः पादप्रक्षाल्मननिष्ठीवनादिभिरुपहता भूमिं शोषयित्वा पुनाति, एवं वत्सा अप्यनुमेहनेनमूत्रगोमयादिदानेन भूमिं पुनन्ति तस्माद् वायुसादृश्यम् ॥ सोऽप-

कर्मणे ॥ १ ॥ आप्यायध्व । मघ्न्या इंद्रायभागंप्रजावतीरनमीवा

अभिप्रायः कण्ठेन प्रदर्शितः । वायव स्थेत्ययं वायु वायुर्वोऽयं पवत इत्यादिवाक्येनाम्नातः । अथवा मनुष्याणामिव पशूनां स्वनिवासाय गृहनिर्माणसामर्थ्याभावान्निरावरणेऽन्तरिक्षे सञ्चरणादन्तरिक्षमेव पशूनां देवता । तस्य चान्तरिक्षस्य वायुरधिपतिः। स च वायुरेतान् पशून् स्वकीयावयवानिव पालयतीति पशूनां वायुरूपत्वम् । तथाविधपालनाय पशून् वायवे समर्पयितुं वायुरूपत्वमापाद्य, वायव स्थेति मन्त्रः प्रवर्तते। सोऽयमभिप्रायस्तित्तिरिणाम्नातः। वायव स्थेत्याह । वायुर्वा अन्तरिक्षस्याध्यक्षः। अन्तरिक्षदेवत्याः खलु वै पशवः । पशवो वायव एवैतान् परिददातीति । तेन वायुरूपत्वमुच्यते । अथ वा तृणभक्षणायाऽऽहेति । तत्र तत्रारण्ये चरित्वा सायङ्काले वायुवद्वेगेन यजमानगृहे समागमनाय पशून् प्रकर्षेणाकारयितुं वायुरूपत्वमुच्यते । अयमभिप्रायस्तित्तिरिणैवाम्नातः । प्र वा एनानेतदाकरोति, यदाह वायव स्थेति च ॥

कात्यायनः॥ देवो व इति मातॄणामेकां व्याकृत्यैन्द्रं भवति। महेन्द्रं वेति। अत्र पूर्वमन्त्रविनियोगसूत्रवाक्याच्छाखयोपस्पृशतीति पदद्वयमनुवर्तते । ततोऽयमर्थः संपद्यते । वत्सानां मातरो या गावः सन्ति तासां मध्ये गामेकां व्याकृत्य पृथक्कृत्य, देवो व इति मन्त्रेण शाखयोपस्पृशेत् । तथा सति गोसंबन्धिदधिरूपं हविरैन्द्रं महेन्द्रं वा भवति । एतदेवाभिप्रेत्यापस्तम्ब आह, इन्द्रं निगमेषूपलक्षयेदिन्द्रयाजिनो महेन्द्रयाजिन इति । तत्रोभयविषयजमानविवेकं तित्तिरिर्दर्शयति । नागतश्रीर्महेन्द्रं यजेत । त्रयो वै गतश्रियः शुश्रुवा ग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति ॥

मन्त्रपाठस्तु॥ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे। आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्माः । मा वस्तेन ईशत॰ माघशंसो ध्रुवा अस्मिन् गोपतौ स्यात वह्वीरिति॥ द्योतनार्थस्य दीव्यतिधातोर्देव इति रूपम्। षू प्रेरण इति धातोः सवितेति । सोऽयं सविता देवः स्वव्यापारे प्रेरकः परमेश्वरः, हे गावो! युष्मान् प्रार्पयतु प्रभूततृणपयसोपेतमरण्यदेशं गमयतु। किमर्थं श्रेष्ठतमाय कर्मणे। कर्म हि चतुर्विधम्, अप्रशस्तं प्रशस्तं श्रेष्ठं श्रेष्ठतमं चेति।लोकविरुद्धं वधबन्धचौर्यादिकमप्रशस्तं, लौकिकैः श्लाघनीयं बन्धुवर्गपोषणादिकं प्रशस्तं, स्मृतिभिः श्लाघनीयं वापीकूपतडागादिकं श्रेष्ठं, वेदैः श्लाघनीयं यज्ञरूपं

ऽअयक्ष्माः ॥ मा वस्तेनऽईशत माघशंसः ॥ २ ॥ ध्रुवाऽअस्मिन् गोपतौ स्यात बह्वीः ॥ यजमानस्य पशून्पाहि वसोः पवित्रमसि ॥ ३ ॥

---

कर्म श्रेष्ठतममिति तद्विवेकः ॥ १ ॥ हे अघ्न्याः गावः । गोवधस्योपपातकरूपत्वाद्धन्तुमयोग्या अघ्न्या इत्युच्यन्ते । तथाविधा यूयमिन्द्राय भागम् इन्द्रदेवतामुद्दिश्य संपादयिष्यमाणदधिहेतुभूतं क्षीरम्, आप्यायध्वं समन्ताद्वर्धयध्वम् । सर्वास्वपि गोषु प्रभूतं कुरुत । स्फायी प्यायी वृद्धाविति धातुः । वो युष्मानपहर्तुं स्तेनश्चोरो मेशत, ईश्वरः=समर्थो मा भूत् । कीदृशीर्युष्मान् । प्रजावतीर्बह्वपत्याः । अनमीवाः, अम रोग इति धातुः, क्रिमिदुष्टत्वादिस्वल्परोगरहिताः । अयक्ष्माः क्षयव्याध्यादिमहारोगरहिताः । अघशंसः । अघेन तीव्रपापेन भक्षणादिना, शंसो घातको व्याघ्रादिरपि मा हिंसको भूत् ॥२॥ किञ्च, यूयं गोपतौ गवां युष्माकं पत्यावस्मिन् यजमाने ध्रुवाः शाश्वतिकाः, बह्वीः=बहुविधाः स्यात भवत ॥ नन्वध्यापकाः श्रेष्ठतमाय कर्मण इत्येतावत एव प्रथमकाण्डिकां समापयन्ति । आप्यायध्वमित्यादिना तु द्वितीयां काण्डिकाम् आरभन्ते । तयोर्भिन्नखण्डकयोरेकमन्त्रत्वेन व्याख्यानमयुक्तमिति चेत् । नाऽयं दोषः । माणवकानामाध्ययनसौकर्याय खण्डिकाविच्छेदस्य "बुद्धिमद्भिरध्यापकैः कल्पितत्वात् । यथा बह्वृचानां तत्र तत्र सूक्तमध्येऽपि वर्गविच्छेदः कल्पितः । यथा वा तैत्तिरीयकाणां वाक्यमध्येऽपि पञ्चाशत्पदसंख्यया विच्छेद आवृत्तिः सौकर्याय कल्प्यते । तद्वदत्राऽप्यवगन्तव्यम् । कण्वस्त्वेतस्य मन्त्रस्य विनियोगं मन्त्रभागानां व्याख्यानं च विवक्षित्वेत्थं पठति ॥ अथ धेनुमुपस्पृशति, देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण इति ॥ सोऽयं विनियोगः । सविता वै देवानां प्रसविता । सवितृप्रसूता यज्ञं संभरानिति प्रथमभागव्याख्यानम् ॥ श्रेष्ठतमाय कर्मण इति यज्ञो वै श्रेष्ठतमं कर्म यज्ञाय हितस्तस्मादाह श्रेष्ठतमाय कर्मण इति द्वितीयभागव्याख्यानम् ॥ आप्यायध्वमघ्न्या इन्द्राय भागमिति । स यथैवाद इन्द्राय भागमिति तृतीयभागव्याख्यानम् ॥ प्रजावतीरनमीवा अयक्ष्मा इति ॥ नाऽत्र तिरोहितमिवाऽस्तीति चतुर्थभागव्याख्यानम् ॥ मा व स्तेन ईशत माऽघशंस इति । पापः कश्चनुपः । ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरित्युपनपक्रामिण्यः । अस्मिन् यजमाने

द्यौरसि । पृथिव्यसिमातरिश्वनोघर्मोसि ॥ विश्वधाः पर-

मेण धाम्ना दृᳪहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ॥ १ ॥ इत्याद्येतद्यजुः समाप्यते, तथापि एतावदेव ग्राह्यम् ॥

बुद्धयः स्यातेत्येवैतदाहेति षष्ठभागव्याख्यानम् ॥ कात्यायनः ॥ यजमानस्य पशून् पाहीत्यग्न्यगारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहतीति ॥ हे पलाशशाखे त्वमुन्नतप्रदेशे स्थित्वा प्रतीक्षमाणा सती यजमानस्य पशूनरण्ये सञ्चरतश्चोर-व्याघ्रादिभयात् पाहि रक्ष । यद्यप्यचेतना शाखा तथापि तदभिमानिनीं देवतामुद्दिश्यैवमभिधातुं शक्यते । यथा शास्त्रज्ञा अचेतनेऽपि शालग्रामे शास्त्र-दृष्ट्या विष्णुसन्निधिमभिप्रेत्य तं विष्णुं सम्बोधनाऽऽवाहनादीन् षोडशोपचाराननुतिष्ठन्ति, तद्वदनया शाखादेवतया रक्षितत्वादेव गावो निरुपद्रवाः सत्यः सायङ्काले पुनः समागच्छन्ति । सोऽयमर्थस्तित्तिरिणा समाम्नातः ॥ यजमानस्य पशून् पाहीत्याह, पशूनां गोपीथाय । तस्मात् सायं पशव उप-समावर्तन्त इति ॥ कण्वेनाऽपि विनियोगपुरःसरं मन्त्राऽभिप्राय आम्नायते ॥ अथाऽऽहवनीयागारस्य, गार्हपत्यागारस्य वा पूर्वार्ध उपगूहति । यजमानस्य पशून् पाहीति । ब्रह्मणैवैतद्यजमानस्य पशून् गुप्त्यै परिददातीति ॥ एतद्ब्रह्मणैव एतेन मन्त्रेणैव, रक्षार्थं शाखाभिमानिदेवतायै समर्पयतीत्यर्थः ॥ कात्यायनः ॥ वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ त्रिवृद्वेति ॥ असीति मन्त्र-पाठस्य शेषः । हे दर्भमय पवित्र, वसोरिन्द्रदेवताया निवासहेतोः पयसः शोधकं पवित्रमसि । अनेन मन्त्रेण पवित्रं कृत्वा पर्णशाखायां बध्नीयात् । द्वौ कुशौ कुशत्रयं वा पवित्रमित्युच्यते । तदेतद्विस्पष्टं तित्तिरिणा समाम्नातम् ॥ त्रिवृत्पलाशशाखायां दर्भमयं भवति । त्रिवृद्वै प्राणाः । त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति । सौम्यः पर्णः सयोनित्वाय । साक्षात्पवित्रं दर्भा इति ॥ आपस्तम्बोऽपि विस्पष्टमेतदवोचत् ॥ त्रिवृद्दर्भमयं पवित्रं कृत्वा वसूनां पवित्र-मसीति शाखायाᳪ शिथिलमासजति मूले मूलान्यग्रेऽग्राणि, न ग्रन्थिं करोतीति ॥ काण्वेन तु मन्त्र एवं व्याख्यातः । तस्या एव पवित्रं करोति, वसोः पवित्रमसीत्येतावतैव, यज्ञो वै वसुर्यज्ञस्य पवित्रमसीत्येवैतदाहेति ॥ तस्या एव पलाशशाखाया एव सम्बन्धि एतावतैव पदत्रयरूपेण मन्त्रेणैव यज्ञशब्देन तदीयहविर्द्रव्यरूपं क्षीरं लक्ष्यत इत्यवगन्तव्यम् ॥ ३ ॥ इति श्रीसायणाचार्य-विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहितायां प्रथमेऽध्याये प्रथमोऽनुवाकः १

प्रथमेऽनुवाके पलाशशाखाप्रयुक्ता मन्त्रा उक्ताः । द्वितीये दोहन

मेणधाम्नां ॥ १ ॥ दृꣳहस्व माह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ॥ वसो: प्र-

---

प्रयुक्तां मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ द्यौरसीति स्थाल्यादानमिति। यस्यां स्थाल्यां दुग्ध क्षीरं प्रक्षिप्यते तस्याः स्वीकारार्थोऽयं मन्त्रः॥ तत्पाठस्तु ॥ द्यौरसि पृथिव्यसीति ॥ हे स्थालि मृज्जलाभ्यां निष्पन्ना त्वं जलहेतुवृष्टिप्रदद्युलोकरूपाऽसि। द्युसंबन्धाच्चद्रूपत्वमस्या उपवर्ण्यते। तथा पृथिव्याः सकाशादुद्धृतया मृदा निष्पन्नत्वात् पृथिवीरूपा त्वम्। इममेवाभिप्रायं तित्तिरिर्विस्पष्टयति। द्यौरसि पृथिव्यसीत्याह। दिवश्च ह्येषा पृथिव्याश्च संभृता यदुखेत्येवमाहेति ॥ कात्यायनः ॥ मातरिश्वन इत्यधिश्रयतीति ॥ तमेव विनियोगमापस्तम्बः स्पष्टीचकार–गार्हपत्यादुदीचोऽङ्गारान्निरूह्य मातरिश्वनो घर्मोऽसीति तेषु कुम्भीमधिश्रयतीति ॥ तत्पाठस्तु॥ मातरिश्वनो घर्मोऽसि विश्वधाः परमेण धाम्ना दृꣳहस्व माह्वार्मा ते यज्ञपतिर्ह्वार्षीद् इति॥ मातर्यन्तरिक्षे श्वसिति नि श्वासचेष्टां करोतीति मातरिश्वा वायुः। घृ क्षरणदीप्त्योरिति धातुः। घर्मो दीपकः। अन्तरिक्षलोकः संचारस्थानप्रदानेन वायोर्दीपकोऽभिव्यञ्जको भवति। हे कुम्भ तवोदरेऽप्यन्तरिक्षरूपस्यावकाशस्य वायुसंचारस्य सद्भावात् त्वमपि वायोरभिव्यञ्जकोऽसि। एतदेवाभिप्रेत्य तित्तिरिराह॥ मातरिश्वनो घर्मोऽसीत्याह। अन्तरिक्षं वै मातरिश्वनो घर्मः। एषा लोकानां विधृत्या इति ॥ पूर्वमन्त्रे द्यौरसि पृथिव्यसीति लोकद्वयरूपत्वं कुम्भस्योक्तम्। अत्र तु मातरिश्वनो घर्मोऽसीत्यन्तरिक्षलोकत्वमुच्यते। तस्मादेषां त्रयाणां लोकानां स्वात्मनि विशेषेण धारणाय कुम्भः शक्नोतीत्यर्थः। किंच, परमेण धाम्ना उत्तमेन बहुक्षीरधारणसामर्थ्यरूपेण तेजसा विश्वधाः सर्वजगद्धारकवृष्टिरूपोऽयं कुम्भः। अनेन कुम्भेन घृत क्षीरमिन्द्रोद्देशेन हुतं सदादित्यद्वारेण वृष्टिः संपद्यते। तथाच स्मर्यते। अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते * आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति। वृष्टिरूपेण विश्वधारकत्वं तित्तिरिणा समाम्नातम्॥ विश्वधा असि परमेण धाम्नेत्याह। वृष्टिर्वै विश्वधाया वृष्टिमेवावरुन्ध इति॥ १ ॥ हे कुम्भ दृꣳहस्व त्वस्थितस्य क्षीरस्य गलन वारयितुं दृढो भव। अन्यथा भाजनस्य तव छिद्रेण क्षीरं गलेत्। दृह दृहि-वृद्धाविति धातुर्यद्यपि वृद्ध्यर्थस्तथापि दार्ढ्ये सति भङ्गाभावेन चिरमवस्थानाद्, दार्ढ्यं नाम कालवृद्धिरेव भवति। किंच, तथा, हे कुम्भ, मा ह्वाः, कुटिलो मा भव। हृ कौटिल्ये

वित्र॑मसि॒शत॒धा॑रं॒वसोः॑प॒वित्र॑मसि॒स॒हस्र॑धारं ॥ २ ॥ दे॒वस्त्वा॑ । स॒वि॒तापु॑नातु॒वसोः॑प॒वित्रे॑णश॒तधा॑रेण ॥ सु॒प्वा॒काम॑धुक्षः ॥ ३ ॥ सा॒वि॒श्वायुः॑ । सा॒वि॒श्वक॑र्मा॒सा॒वि॒श्वधा॑याः ॥ इन्द्र॑स्यत्वाभा॒गऽ

---

इति धातुः । यदि कुम्भः कुटिलो भवेत् तदानीमप्राङ्मुखे तिर्यङ्मुखे वा सति तत्र स्थितं क्षीरं गलेत् । अतः क्षीरधारणाय दार्ढ्यमकौटिल्यं चोच्यते । तदाह तित्तिरिः ॥ दृꣳहस्व मा ह्वारित्याह । धृत्या इति ॥ किञ्च, ते यज्ञपतिस्त्वत्सम्बन्धी यजमानो मा ह्वार्षीत् । कुटिलो मा भूत् । त्वन्निष्ठस्य क्षीरस्याऽस्कन्देनेन अनुष्ठानाऽविघ्न एव यजमानस्याऽकौटिल्यम् । तच्च त्वदीयेन दार्ढ्येन कौटिल्याभावेन च भविष्यति॥ कात्यायनः ॥ वसोः पवित्रमिति पवित्रमस्यां करोत्युदगग्रेति । अस्यां कुम्भ्यां स्थापनीयस्य पवित्रस्य प्रागग्रत्वं सामान्यतः प्राप्तमिति सिद्धवत्कृत्वोदगग्रत्वविकल्प उच्यते । तच्च प्रागग्रत्वं बौधायनो दर्शयति ॥ तस्यां प्राचीनाग्रꣳ शाखापवित्रं निदधातीति ॥

आपस्तम्बस्तु सायंदोहप्रातर्दोहभेदेन प्रागग्रत्वोदगग्रत्वयोर्व्यवस्थामभिप्रेत्याह ॥ तस्यां प्रागग्रꣳ शाखापवित्रमत्याधायादुदगग्रं प्रातरिति । एवमेवाभिप्रायं तित्तिरिर्विशदयति ॥ प्राचसायमधिनिदधाति तिर्यक्प्रातरिति ॥ पाठस्तु ॥ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारमिति ॥ हे शाखापवित्र वसोरिन्द्रदेवताया निवासहेतोः पयसः पवित्रं शोधकमसि । पवित्रेण व्यवधाने सति क्षीरेण सह कुम्भ्यां पततां तृणपर्णादीनां प्रतिरुद्ध्यमानत्वात् पवित्रस्य क्षीरशोधकत्वम् । नच क्षीरमप्येवं प्रतिरुद्ध्यत इति शङ्कनीयम् । सूक्ष्मैः पवित्रच्छिद्रैः कुम्भ्यां पतन्तीनां क्षीरधाराणां शतसहस्रसंख्याकानां सद्भावाबोधकत्वमादर्तुं, वसोः पवित्रमिति द्विरुक्तिः ॥ २ ॥ कात्यायनः ॥ देवस्त्वेत्यासिच्यमाने जपतीति ॥ पाठस्तु ॥ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वेति ॥ दोहनादूर्ध्वं कुम्भ्यां सिच्यमान हे क्षीर! त्वां प्रेरको देवः पूर्वोक्तरीत्या शतधारेण वसोः पवित्रेण पुनातु शोधयतु । सुप्वेति पवित्रविशेषणम् । सुष्ठु पुनातीति सुपूः । तस्य तृतीया सुप्वा ॥ कात्यायनः ॥ कामधुक्ष इति प्रश्न इति ॥ एकस्यां गवि दुग्धायां दोग्धारं प्रत्यध्वर्युः पृच्छेत् । हे दोग्धः ! विद्यमानानां गवां मध्ये कां गामधुक्षो दुग्धवानसि ॥ ३ ॥

कात्यायनः ॥ प्रोक्ते, सा विश्वायुरित्याहेति ॥ पूर्वोक्ते प्रश्ने मध्ये प्रोक्ते सति

सोमेनातनच्मि विष्णो हव्यꣳरक्षस्व ॥ ४ ॥

सा विश्वायुरिति मन्त्रेणोत्तरं दोग्धा ब्रूयात् । तस्य मन्त्रस्याऽयमर्थः । या गौर्मया दुग्धा त्वया च पृष्टा सा गौर्विश्वायुः-शब्देनाभिधीयते । विश्वमायुर्यस्या इति विग्रहः । यजमानस्य संपूर्णमायुः प्रयच्छतीत्यर्थः ॥ कात्यायनः ॥ एवमितरे उत्तराभ्यामिति ॥ यथा सा गौः प्रथमा पृष्टा एवमितरे द्वितीयतृतीये गावौ तत्तद्दोहनादूर्ध्वं कामधुक्ष इति मन्त्रेण प्रष्टव्ये । दोग्धा पुरुषोऽप्युत्तराभ्या, सा विश्वकर्मा, सा विश्वधाया इति मन्त्राभ्यां क्रमेणोत्तरं ब्रूयात् । या द्वितीया गौस्त्वया पृष्टा सा विश्वकर्मेत्युत्तरम् । क्षीरदधिनवनीताज्यैः साध्यानि विश्वानि सर्वाणि कर्माणि यस्या गोः सन्ति सा गौर्विश्वकर्मा । या तृतीया गौस्त्वया पृष्टा सा विश्वधाया इति तत्प्रश्नस्योत्तरम् । डुधाञ् धारणपोषणयोरिति धातुः । क्षीरदध्यादिहविर्भुज इन्द्रादिदेवान् विश्वान् सर्वान् दधाति पुष्णातीति विश्वधायाः । यद्वा, धेट् पान इति धातुः । विश्वान् सर्वान् इन्द्रादीन् हव्यं क्षीररूपं धापयति पाययतीति विश्वधायाः ॥ कात्यायनः ॥ उद्वास्यातनक्ति प्राग्घुतशेषेणेन्द्रस्य त्वेतीति ॥ क्वथितं क्षीरमग्नेः साकाशाद् बहिरुद्वास्य मन्दोष्णे क्षीरे सायकालीनाग्निहोत्रानन्तरवर्तिना यवागूशेषेण दधिनिष्पत्त्यर्थमातञ्चनं कुर्यात् । यवागूशेषस्यातञ्चनसाधनत्वमापस्तम्बः स्पष्टमाह ॥ अमावास्याया राज्याः स्वयं यजमानो यवाग्वाग्निहोत्रं जुहोति । अग्निहोत्रोच्छेषेण आतञ्चनार्थं निदधातीति ॥ तित्तिरिणाऽप्याम्नातम् ॥ अग्निहोत्रोच्छेषणाऽभ्यातनक्ति यज्ञस्य सन्तत्या इति ॥ पाठस्तु ॥ इन्द्रस्य त्वा भागꣳ सोमेनातनच्मीति ॥ हे क्षीर इन्द्रस्य भागं त्वां सोमवच्छीरसेनाऽऽतनच्मि । अञ्चतिधातुः कठिनीकरणार्थः । दधिनिष्पत्तये कठिनीकरोमीत्यर्थः । यद्यप्यातञ्चनहेतुर्यवागूशेषो, न तु सोमस्तथापि मनोभावनया तस्य सोमत्वं संपद्यते । यथा कश्चित् पुरुष आनुकूल्येन भावितो बन्धुर्भवति, प्रातिकूल्येन भावितः शत्रुर्भवति । यथा वा भक्ष्यं भोज्यं च विषत्वेन भावितं वमनं करोति । अमृतत्वेन भावितं जीर्णं सद् बलहेतुर्भवति । तदुक्तं वासिष्ठरामायणे, बन्धुत्वे भावितो बन्धुः परत्वे भावितः परः * विषाऽमृतदृशेवेद स्थितिर्भावनिरन्वनीति । तथात्राऽपि यवागूशेषस्य भावनया सोमत्वम् । तदेतत् तित्तिरिणा समाम्नातम् ॥ सोमेन त्वातनक्तीन्द्राय दधीत्याह सोममेवैतत् करोतीति ॥

अ॒ग्ने॑ व्रतपते । व्र॒तं च॑रिष्यामि॒ तच्छ॑केयं॒ तन्मे॑ राध्यतां ॥ इ॒दम॒ह-

---

एतावता प्रयासेन सोमत्वसम्पादने प्रयोजनं च तेनैवाम्नातम् ॥ यो वै सोमं भक्षयित्वा संवत्सरꣳ सोमं न पिबति पुनर्भक्ष्यस्य सोमपीथो भवति सोमः खलु वै सान्नाय्यम् । य एवं विद्वान् सान्नाय्यं पिबति अपुनर्भक्षस्य सोमपीथो भवतीति मन्त्रगतस्येन्द्रसम्बन्धकथनस्य सोमत्वकथनस्य च तात्पर्यं काण्वेनाऽऽम्नातम् ॥ स आ॒तन॒क्तीन्द्र॒स्य त्वा भागꣳ सो॒मेना॒तनच्मी॒ति । स य॒थैवा॒दो देवतायै हवि॒र्गृह्णन्नादि॒शत्ये॒वमे॒वैत॒द्दे॒वताया॒ आदि॒शति । यदाहेन्द्र॒स्य त्वा भा॒गमि॒ति सो॒मेना॒तनच्मी॒ति स्वद॒यत्ये॒वैनमिति ॥ कात्यायनः ॥ सोदकेनापिदधात्यमृन्मयेन विष्णो हव्यमितीति ॥ रक्षस्वेति मन्त्रशेषः । सर्वत्र सृष्टौ पालने संहारे च ब्रह्मविष्णुमहेश्वरा अभिमानिदेवताः । अतो विष्णुं संबोध्य हविषो रक्षा प्रार्थ्यते । पिधानपात्रस्योदकयुक्तस्याभिप्रायः काण्वेनाम्नातः ॥ उ॒दन्व॒ता कं॒सेन॒ वा च॑म॒सेन॒ वाऽमृन्मये॒नाऽपि॑दधाति । व॒ज्रो वा आ॒पो व॒ज्रमे॒वास्मै त॒दुप॒रिष्टाद॒भिगो॒प्तारं करोतीति ॥ अमृन्मयेनेत्यस्य मृन्मयवर्जनस्याऽभिप्रायस्तित्तिरिणा समाम्नातः ॥ न मृन्मयेनाऽपिदध्यात् । यन्मृन्मयेनाऽपिदध्यात् पितृदेवत्यꣳ स्यात् । अयस्पात्रेण वा दारुपात्रेण वाऽपिदधाति । तद्धि सदेवम् उदन्वद्भवति । आपो वै रक्षोघ्नीः । रक्षसामपहत्या इति ॥ ४ ॥

इति प्रथमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

द्वितीये दोहनमन्त्रा उक्ताः । तृतीये हविर्निर्वपनमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ अपरेणाहवनीयं प्राङ् तिष्ठन्नाग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमिति वेति ॥ तयोर्मन्त्रयोः प्रथममन्त्रपाठस्तु ॥ अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामिति ॥ व्रतस्यानुष्ठेयस्य कर्मणः पते! पालक, हे अग्ने! त्वदनुज्ञया व्रतं चरिष्यामि कर्माऽनुष्ठास्यामि । तच्छकेयं तत्कर्माऽनुष्ठातुं त्वत्प्रसादाच्छक्तो भूयासम् । तन्मे राध्यतां मदीयं तत् कर्म निर्विघ्नं सत् फलपर्यन्तं साध्यताम् । एतस्य मन्त्रणस्य तात्पर्यं काण्वेनाम्नातम् ॥ स आ॒हव॒नीय॒मी॒क्षमाणो व्रतमुपैत्यग्ने व्रतपत इ॒ति व्र॒तं चरिष्यामि त॒च्छकेयं त॒न्मे राध्यता॒मित्यग्नि॒र्वै दे॒वानां व्र॒तपतिस्तस्मा ए॒वैत॒द्व्र॒तं चरिष्यन् प्राह त॒स्मै नि॒वेदयति, त॒च्छकेयं त॒न्मे राध्यता॒मि॒ति ॥ ना॒त्र ति॒रो॒हितमिवास्तीति । तित्तिरिणाप्येतदाम्नातम् । अनेन मेध्योऽग्निर्व्रतपतिर्ब्राह्मणो व्रतभृद्-

मनृ॑तात्स॒त्यमुपै॑मि ॥ १ ॥ कस्त्वा॑ । यु॒नक्ति॒ स त्वा॑ यु॒नक्ति॒ कस्मै॑-

व्रतमुपेष्य ब्रूयादग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिस्तस्मा एवं प्रति प्रोच्य व्रतमालभत इति ॥ द्वितीयमन्त्रपाठस्तु ॥ इदमहमनृतात् सत्यमुपैमीति ॥ अनृतं मनुष्यजन्म । शीघ्रविनाशित्वात् । यथा बोधमात्रेण शीघ्रं निवर्तमानाः स्वप्नगजादयोऽनृता इत्युच्यन्ते, तद्वत् । सत्यं देवजन्म । बहुकालस्थायित्वात् । यथा जागरणगजादयस्तद्वत् । अहं यजमानोऽस्मादनृतान्मनुष्यजन्मन उद्धृत्य सत्यदेवताशरीरमुपैमि प्राप्नोमि । तत् सत्यमनुष्ठीयमानकर्मरूपेण प्रत्यक्षमिति मन्वान, इदमिति विशिनष्टि । सत्यानृतयोर्दैवमानुषजन्मपरत्वं मत्वा तैत्तिरीयः कश्चिन्मन्त्रं स्वयमेव व्याचष्टे ॥ अनृतात् सत्यमुपैमि

कं.४ मानुषाद् दैव्यमुपैमि । दैवीं वाचं यच्छामीति ॥ कण्वेनाप्ययमर्थ आम्नातः ॥ द्वयं वा इदं, न तृतीयमस्ति, सत्यं चैवानृतं च । सत्यं देवा अनृतं मनुष्याः स उपैत्यदिदमहमनृतात् सत्यमुपैमीति । तन्मनुष्येभ्यो देवानुपावर्तत इति ॥ अथवा लोकप्रसिद्धे एव सत्यानृते ग्रहीतव्ये । नानृतं वदेदित्यनृतवादनिषेधस्य कर्मप्रकरणे श्रुतत्वात् । अनृतवदनादुद्धृत्याऽहमिदं सत्यवदनं प्राप्नोमीति मन्त्रार्थः । अत एव कात्यायन, इदमहमिति वा सत्यवादीति व्रतोपायनं विधाय पश्चादेवमाह ॥ अतः कर्माङ्गमुत्तरे सत्यवदनमिति ॥ यतः सत्यवादी व्रतमुपेयात् अतः कारणात् तदुत्तरे कर्मकाले यत् सत्यवदनं तत् कर्माङ्गमित्यर्थः ॥ १ ॥ उक्तप्रकारेण व्रतमुपेत्य ततो ब्रह्मवरणं कृत्वा तेन ब्रह्मणाऽनुज्ञातो यज्ञपात्रप्रोक्षणार्थमपां प्रणयनं कुर्यात् ॥ तदाह कात्यायनः ॥ ब्रह्मन्नपः प्रणेष्यामि यजमानवाग्यत इत्युक्त्वा ब्रह्मानुज्ञात उत्तरेणाहवनीयं सम्प्रति निदधाति कस्त्वा युनक्तीति ॥ पाठस्तु ॥ कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्तीति ॥ अत्र मन्त्रं प्रयुञ्जानोऽध्वर्युर्यज्ञस्यारम्भकर्मात्मनः कर्तृत्वमपनीय प्रजापतेरेव कर्तृत्वं प्रश्नोत्तररूपाभ्यां मन्त्रवाक्याभ्यां प्रतिपादयति । प्रणीतानामपां धारक हे पात्र ! त्वां कः पुरुषो युनक्ति । आहवनीयस्योत्तरभागे स्थापयतीति प्रश्नः । तच्छब्दः प्रसिद्धार्थवाची । सर्वेषु वेदेषु लोकप्रसिद्धकर्तृत्वेन प्रसिद्धो यः प्रजापतिरस्ति स एव परमेश्वरो, हे पात्र ! त्वां युनक्तीत्युत्तरम् । पुनरपि कस्मै प्रयोजनाय त्वां युनक्तीति प्रश्नः । तस्मै प्रजापतये तद्गीत्यर्थं त्वां युनक्तीत्युत्तरम् । सर्वकर्मणा परमेश्वरप्रीत्यर्थं प्रवृत्त-

त्वा युनक्ति तस्मै त्वा युनक्ति ॥ कर्मणे वां वेषाय वां ॥ २ ॥ प्रत्युष्टं॰

गीतास्वर्जुनं प्रति भगवतोक्तम् । सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ॥ मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणमिति च । ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥ ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिनेति च । तस्य मन्त्रस्य प्रजापतित्वेन व्याख्यानं कण्वेनाप्याम्नायते ॥ स प्रणयति । कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्तीति । एताभिरनिरुक्ताभिर्व्याहृतिभिरनिरुक्तो वै प्रजापतिः । प्रजापतिर्यज्ञस्तत् प्रजापतिमेवैतद्यज्ञं युनक्तीति ॥ व्याहृतियुक्ताश्चतस्रो मन्त्रवाक्यरूपास्तासु किंशब्दतच्छब्दाभ्यां साधारणवाचिभ्यामेव देवता व्यवह्रियते । न त्वीदृग्गुणयुक्ता नामविशेषेणानेनोपेतेति विस्पष्टं निःशेषेणोच्यते । तस्मादेवानामानिरुक्तत्वम् । एताभिर्व्याहृतिभिः प्रणयतीत्यन्वयः । व्याहृतयो यद्वदनिरुक्तास्तद्वत् प्रजापतिरप्यनिरुक्तः । चतुर्मुखाद्यवतारस्वीकारात् पूर्वं सर्वजगत्कारणभूतः प्रजापतिरीदृश इति निर्वक्तुमशक्यत्वात् । अत एव बृहदारण्यके सृष्टेः पुरा प्रजापतिरूपस्यास्पष्टत्वमाम्नातम् । तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियतेति । यदा भूतभौतिकरूपसर्वजगद्विषयनामरूपाकारेण प्रजापतिस्वरूपं व्याकृतं विस्पष्टं भवति । तदानीं यज्ञरूपेणापि व्याक्रियते तत् । तथा सत्येतदनेन मन्त्रेण प्रजापतिरूपमेव यज्ञं युनक्ति अनुतिष्ठति ॥ तित्तिरिणाऽप्येतदेवाम्नातम् ॥ कस्त्वा युनक्ति स त्वा युनक्तीत्याह । प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्तीति ॥ अनन्तरभावी प्रयोगः कण्वेनैवमाम्नातः ॥ परिस्तीर्य द्वन्द्वपात्राण्युपसादयत्यग्निहोत्रहवणीं च शूर्पं च स्फ्यं च कपालानि च शम्यां च कृष्णाजिनं चोलूखलमुसले दृषदुपले तद्दश दशाक्षरा वै विराड् विराड् वै खलु वै यज्ञो विराजमेवैतद्यज्ञमभिसंपादयतीति ॥ तित्तिरिणाप्येवमाम्नाय, यज्ञायुधानि सम्भरति यज्ञो वै यज्ञायुधानि यज्ञमेवैतत्सम्भरति यदेकमेकं सम्भरेत् पित्र्यदेवत्यानि स्युर्यत् सह सर्वाणि मानुषाणि द्वे द्वे सम्भरति । याज्यानुवाक्ययोरेव रूपं करोत्यथो मिथुनमेव यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते स्फ्यं च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानीति ॥ कात्यायनः ॥ कर्मणे

रक्षः । प्रत्युष्टाऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽअरातयः ॥ उर्व॒न्तरिक्षमन्वेमि ॥३॥ धूरसि । धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति ॥ धूर्व-

---

वामिति शूर्पाग्निहोत्रहवण्यादायेति ॥ पाठस्तु ॥ कर्मणे वां वेषाय वामिति ॥ हे अग्निहोत्रहवणि, हे शूर्प, वां युवां कर्मणे कर्मार्थमाददे इति शेषः । विष्लृ व्याप्ताविति धातुः । वेषो व्याप्तिः । शूर्पोचितकर्मसु व्याप्त्यर्थं वां युवामहमाददे । शकटेऽवस्थितानां व्रीहीणां हविरर्थं पृथक्करणं प्रोक्षणाद्युदकधारणमित्येवमादयोऽग्निहोत्रहवण्युचितव्यापाराः । व्रीहिनिर्वापधारणमुलूखले व्रीहिप्रक्षेपः, पुनरुद्धरणं चेत्यादयः, शूर्पोचितव्यापाराः ॥ काण्वेनैतन्मन्त्रव्याख्यानमाम्नायते ॥ सोऽग्निहोत्रहवणीं च शूर्पं चादत्ते । कर्मणे वां वेषाय वामिति । यज्ञो वै कर्म यज्ञाय वामित्येवैतदाह । वेषाय वामिति । वेवेष्टीव हि यज्ञमिति ॥ २ ॥ कात्यायनः ॥ प्रतपनं प्रत्युष्टं निष्टप्तमिति श्रुति ॥ पाठस्तु ॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातय इति ॥ उप दाह इति धातुः, रा दान इति धातुः । हविषो दक्षिणाया वा दानं रातिः । तस्याः प्रतिबन्धका अरातयस्ते च प्रत्युष्टाः प्रत्येकं दग्धाः । तप सन्ताप इति धातुः । शूर्पादौ निगूढं रक्षो निष्टप्तं निःशेषेण सन्तप्तम्, अरातयश्च निष्टप्ताः । अनयोर्मन्त्रयोर्विकल्पः कण्वेनाम्नातः । स प्रतपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इति वा, निष्टप्तꣳ रक्षो निष्टप्ता अरातय इति वेति । पुनरपि, देवा ह वै यज्ञं तन्वाना असुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुरित्यादिना मन्त्रतात्पर्यमाम्नातम् ॥ कात्यायनः ॥ गच्छत्युर्वन्तरिक्षमिनीति ॥ अन्वेमीति मन्त्रशेषः । उरु विस्तीर्णमन्तरिक्षमवकाशमन्वेमि अनुसृत्य गच्छामि । गच्छतः पुरुषस्य पार्श्वयोरुभयोरवस्थितं रक्षो मन्त्रेणानेन निराक्रियते ॥ तमेतमभिप्रायं कण्व आह ॥ उर्वन्तरिक्षमन्वेमीति प्रतान्तरिक्षं वा अनु रक्षश्चरति । यथाऽयं पुरुष उभयतः परिच्छिन्नो ब्रह्मणैवैतदुभयमनाष्ट्रमन्तरिक्षं कुरुत इति ॥ ब्रह्मणैव=मन्त्रेणैव । एतदुभयं दृश्यमानं पार्श्वद्वयगतमन्तरिक्षमनाष्ट्रं नाशकरक्षोरहितं कुरुत इत्यर्थः ॥ ३ ॥ कात्यायनः ॥ श्रपणस्य पश्चादनस्तिष्ठति, समङ्गि धूरसीति धुर्टं प्रीदिपूर्वं निष्टनि । तत्र समाङ्गि समीचीनअरत्नाऽङ्गोपेतं, तस्य धुरं बलीवर्दवहनयोग्यं युगदेशं, धूरसीति मन्त्रेण स्पृशेदित्यर्थः । बौधायनोऽप्याह ॥

तं येऽनुयं धूर्वामः ॥ ४ ॥ देवानामसि । सस्नितमं वह्नितमं पप्रितमं जुष्ट-

जयनेन गार्हपत्यमग्निमुपगतो भवति तस्यैवोत्तरां धुरमभिमृशति धूरसीति ॥ आ-
पस्तम्बोऽप्याह ॥ उर्वन्तरिक्षमन्विहीति शकटायाभिप्रव्रजति अपरेण गार्हपत्यं
मागीपमुदगीषं वाऽनड्वाहयुगः शकटमवस्थितं भवति व्रीहिमद् यवमद्वा धूर-
सीति दक्षिणां युगधुरमभिमृशत्युत्तरां वेति ॥ पाठस्तु ॥ धूरसि धूर्व धूर्वन्तं
धूर्व तं योऽस्मान् धूर्वति । धूर्व तं यं वयं धूर्वाम इति ॥ व्रीहिरूपहविर्धारकः
शकटसम्बन्धिनो युगस्य बलीवर्दवहनप्रदेशे कश्चिद्धिंसकोऽग्निः शास्त्रदृष्टो-
ऽस्ति । तं प्रार्थयते । तुर्वी मुर्वी दुर्वी धुर्वी हिंसार्था इति धातुः । हे वह्ने, त्वं
धूरसि हिंसकोऽसि तस्माद् धूर्वन्तं हिंसन्तं पाप्मानं धूर्व विनाशय । यो रा-
क्षसादिर्यागविघ्नेनास्मान् धूर्वति हिंसितुमुद्युक्तस्तमपि धूर्व विनाशय । यं वा
आलास्यादिरूपं वैरिणं वयमनुष्ठातारो धूर्वामो हिंसितुमुद्युक्तास्तमपि धूर्व वि-
नाशय । पूर्वोक्तशकटसंबन्ध्यस्यातिक्रमणनिमित्तमपराधमपहोतुमग्न्याधारभूतस्य
शकटस्य धुरमनेन मन्त्रेण स्पृशेद् ॥ सोऽयमभिप्रायः कण्वेन मन्त्रविनियोग-
पुरःसरमित्थमाम्नायते ॥ स धुरमभिमृशति, धूरसि धूर्व धूर्वन्तं धूर्व तं यो-
ऽस्मान् धूर्वति धूर्व तं यं वयं धूर्वाम इत्यग्निर्वा एतमतिक्रमिष्यन् भवति त-
स्मा एवैतन्निह्नुत इति ॥ तैत्तिरीणाऽप्येवमाम्नातम् ॥ धूरसीत्याह । एष वै धु-
र्योऽग्निः, तं यदनुपस्पृश्यातीयाद् । अध्वर्युं यजमानं च प्रदहेत् । उपस्पृश्या-
ऽत्येति, अध्वर्योश्च यजमानस्य चाऽप्रदाहाय । धूरसि धूर्व धूर्वन्तं धूर्व तं यो-
ऽस्मान् धूर्वति । धूर्व तं यं वयं धूर्वाम इत्याह । द्वावेव पुरुषौ पश्चैव धूर्वति ।
यश्चैनं धूर्वति तावुभौ शुचार्पयतीति ॥ श्लोकेन योजयतीत्यर्थः ॥ ४ ॥

कात्यायनः ॥ देवानामित्युपस्तम्भनस्य पश्चादीषामिति ॥ स्पृशेदिति शे-
षः । शकटस्य दीर्घं काष्ठमीषा । तदग्रस्य भूमिस्पर्शो मा भूदित्याधारत्वेन
स्थापितं काष्ठमुपस्तम्भनम् । तस्य पाश्चात्यभागे तामीषां स्पृशेद् । बौधा-
यनः ॥ अनोऽभिमन्त्रयते त्वं देवानामिति ॥ आपस्तम्बः ॥ त्वं देवानामसि
यत् स्थितामित्युत्तरामीषामालभ्य जपतीति ॥ पाठस्तु ॥ देवानामसि सस्नितमं व-
ह्नितमं पप्रितमं जुष्टतमं देवहूतमम् । अह्रुतमसि हविर्धानं दृंहस्व मा ह्वार्मा ते
यज्ञपतिर्ह्वार्षीद् इति ॥ देवानामसि अस्मादीनां संबन्धि भवसि । शकट त्व-
मिति शेषः । तदेव शकटं सस्नितममित्यादिना विशिष्यते । ष्णा शौच इति

तमं देवहूतमं ॥ अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मा ते यज्ञपति-ह्वार्षीत् ॥ ८ ॥ विष्णुस्त्वा । क्रमतामुरु वातायापहतꣳ रक्षो यच्छं-

---

धातुः । सस्नितममतिशयेन शुद्धम् । यद्वा, ष्णै वेष्टने इति धातुः । दार्ढ्याय चर्मादिभिरतिशयेन वेष्टितम् । वह प्रापण इति धातुः । वह्नितमं व्रीहिरूपस्य हविषोऽतिशयेन प्रधानप्रापकम् । प्रा पूरण इति धातुः । प्रप्रितमं व्रीहिभिरतिशयेन पूरितम् । जुषी प्रीतिसेवनयोरिति धातुः । जुष्टतमं देवानामतिशयेन प्रियतमम् । ह्वेञ् स्पर्द्धायां शब्दे चेति धातुः । देवहूतमं देवानामतिशयेन ह्वातारम् । व्रीहिभिः पूर्णं शकटं दृष्ट्वा देवा आहूता इव शीघ्रमागच्छन्ति । ह्वृ कौटिल्य इति धातुः । तस्य ह्रुह्वरेश्छन्दसीति सूत्रेणोकाररेफसहितहकारादेशः । अह्रुतमकुटिलम् । आरोहणेऽपि भङ्गभीतिर्नास्तीत्यर्थः । डुधाञ् धारणपोषणयोरिति धातुः । हविर्धानं व्रीहिरूपस्य हविषो धारकं पोषकं वा । असीत्येतत् सस्नितमादिभिः पदैः प्रत्येकं संबध्यते । दृꣳहस्वेत्यादिकं पूर्ववद्व्याख्येयम् ॥ कण्वः । अथैषामभिमृशति देवानामसि सस्नितमं वह्नितमं प्रप्रितमं जुष्टतमं देवहूतमम् अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीदित्यत एवैतदुपस्तौतीति । मा ते यज्ञपतिर्ह्वार्षीदित्यह्वरामेवैतद् यजमानायाशास्त इति ॥ अह्वरामकौटिल्यामित्यर्थः ॥ ८ ॥ कात्यायनः विष्णुस्त्वेत्यारोहणमिति ॥ पाठस्तु ॥ विष्णुस्त्वा क्रमतामिति ॥ हे शकट विष्णुर्व्यापको यज्ञस्त्वा क्रमतां त्वा पादेनाक्रम्यारोहतु । अङ्गेषु प्रधानेषु च सर्वत्रानुगतत्वाद् यज्ञेषु व्याप्तिः ॥ कण्वः ॥ अथाधिरोहति विष्णुस्त्वाक्रमतामिति ॥ यज्ञो वै विष्णुः स इमां देवेभ्यो विक्रान्तिं विचक्रम इति । अन्यादिदेवार्थं शकटारोहणरूपामिमां विक्रान्तिं कृतवानित्यर्थः ॥ आपस्तम्बोऽपि विस्पष्टमाह ॥ विष्णुस्त्वाक्रꣳस्त प्रेक्षतस्वेति सव्ये चक्रे दक्षिणं पादमभ्याधायेति ॥ अक्रꣳस्तेति शाखान्तरपाठः ॥ कात्यायनः ॥ प्रेक्षत उरु वातायेति हविष्यानिति ॥ पुरोडाशरूपहविर्योग्यान् व्रीहीनित्यर्थः । हे शकट, वाताय स्वकीयान्तर्गतव्रीहिषु वायुसंचाराय उरु विस्तीर्णं, भवेति शेषः । शकटस्थव्रीहिणा तृणादिभिराच्छादितत्वेन संकुचितस्थाने च वायुर्न प्रविशति । तस्मादाच्छादनमपनीय वायुर्यथा प्रविशति । तथा तथास्थानस्य संकोचं परित्यजेत्यर्थः । अनेनैवाभिप्रायेणापस्तम्बो मन्त्रमेनमन्यथा विनियुङ्क्ते ॥ उरु वातायेति परीणाहमन्वाधायेति ॥ परीणाहमावरकं तृणादि यच्छकटं व्रीहीन् वहति तद्व्रीहिणामुपरि तृणादिभिराद-

तापंच ॥ देवस्य॑त्वासवि॒तुःप्र॑स॒वे॑ऽश्विनो॑र्बा॒हुभ्या॑ पू॒ष्णोह॑स्ता॑-

तं भवति । तत्र वायुरूपस्य प्राणस्याप्रवेशात् प्राणरहितमिव तद् भवति । अतोऽनेन मन्त्रेण वायुरूपप्राणायाऽवकाशः क्रियते ॥ तदाह कण्वः ॥ उरु वातायेत्यनः प्रेक्षते प्राणो वै वातः परिवृतमिव वा इदं यदनो ब्रह्मणैवेति उरुप्राणाय वाताय करोतीति ॥ किञ्च वायुप्रवेशरहितं वस्तु सर्वमपि आवरणरूपवरुणदेवताकं भवति। वरुणश्च बन्धकारित्वाद्यज्ञनिरोधकः । तन्निवृत्त्यर्थोऽयं मन्त्रः ॥ तदाह तित्तिरिः ॥ यद्वै किञ्च वातो नाऽभिवाति तत् सर्वं वरुणदेवत्यम् । उरु वातायेत्याह । वरुणमेवैतत् करोतीति ॥ कात्यायनः ॥ अपहतमिति निरस्यत्यन्यद्विद्यमानेऽभिमृशेदिति ॥ यदि व्रीहिभ्योऽन्यत् तृणपर्णादिकं तत्रावतिष्ठेत तदनेन मन्त्रेण निरस्येत् । तृणादेरभावे मन्त्रेण व्रीहीन् स्पृशेत् ॥ पाठस्तु ॥ अपहतꣳ रक्ष इति ॥ यज्ञावघातिनो रक्षसस्तृणादिषूपगूढत्वेनावस्थितिसम्भवात् तृणादिकमेव रक्ष इत्युच्यते । तच्चानेन मन्त्रेणापहतं निराकृतम् ॥ तमेतमभिप्रायं कण्व आह ॥ अपहतꣳ रक्ष इति । तृणं वा किञ्चिद्वा निरस्यति यज्ञदेवतन्नाष्ट्रा रक्षाꣳस्यपहन्तीति ॥ कात्यायनः ॥ यच्छन्तामित्यालभत इति ॥ पञ्चेति मन्त्रशेषः । पञ्चसंख्याका अङ्गुलयो हविर्यच्छन्तां व्रीहिरूपं हविर्नियच्छन्तु । पञ्चशब्दस्याङ्गुलिविषयत्वं कण्वो दर्शयति ॥ यच्छन्तां पञ्चेत्यभिनिदधाति पाङ्क्तो वै यज्ञः पञ्चेमा अङ्गुलयो यज्ञमेवैतदवधातीति । पञ्चसंख्याकैर्हविर्भिरुपेतत्वाद्यज्ञस्य पाङ्क्तत्वम् ॥ अयमर्थः प्रश्नोत्तराभ्यामग्निष्टोमप्रकरणे तित्तिरिणाम्नातः ॥ ब्रह्मवादिनो भवन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति। धानाः परिवापः पुरोडाशः पयस्यानेन पङ्क्तिराप्यते तद् यज्ञस्य पाङ्क्तत्वमिति ॥ तस्मादत्रापि पञ्चसंख्याका इमा अङ्गुलयः पाङ्क्तत्वसंपादनेनेदं हविर्यज्ञमेव सम्पादयन्ति । पञ्चाङ्गुलियुक्तेन मुष्टिना व्रीहीन् गृह्णीयादित्ययमर्थ उक्तो भवति ॥ अत एव आपस्तम्ब आह ॥ यच्छन्तां पञ्चेति मुष्टिं गृहीत्वा मुविमुष्टिमोप्येति ॥ कात्यायनः ॥ देवस्य त्वेति गृह्णात्याग्नेयं चतुरो मुष्टीन्निवपत्यग्नीषोमीय यथादेवतमन्यदिति ॥ पाठस्तु ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं हविर्गृह्णामीति ॥ सवितुर्देवस्य प्रेरकस्य परमेश्वरस्य प्रसवे प्रेरणे सति तेन प्रेरितोऽहमग्निदेवतायै जुष्टं प्रियं व्रीहिरूपं हविर्गृह्णामि । ग्रहणसाधनयोः स्वकीयबाह्वोरश्विबाहुभावना का-

भ्यां ॥ ६ ॥ अग्नये॒ जुष्टं । गृह्णाम्यग्नीषोमाभ्यां॒ जुष्टं॑ गृह्णामि ॥ भू-

र्षा । तयोस्तु पूषहस्तभावनेत्यभिप्रेत्याऽश्विनोरित्यादिकमुक्तमेवमग्नीषोमा-
भ्यां व्यासक्तदेवाभ्यां जुष्टं हविर्गृह्णामि ॥

तमेतं मन्त्रं कण्वो विनियोगपूर्वकं व्याचष्टे ॥ स गृह्णाति देवस्य त्वा सवितुः प्रसवे-
ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं गृह्णामीति वा यथादेवतं वेति ॥ सो-
ऽयं विनियोगः॥सविता वै देवानां प्रसविता तस्मादाह देवस्य त्वा सवितुः प्रसव इती-
ति।तदिदं प्रथमभागव्याख्यानमायः सवितृशब्दाभिधेयोऽस्तु सोऽयं देवानां मध्ये
प्रसविता प्रेरको देवः । यद्वा । देवानामप्येष प्रेरकस्तस्मात् । सवितृप्रसवितृ-
प्रसव इत्युक्तिरुचितेत्यर्थः । अश्विनोर्बाहुभ्यामित्यश्विना उ वै देवानामध्वर्यू
तस्मादाहाऽश्विनोर्बाहुभ्यामितीति तदिद्वितीयभागव्याख्यानम्।देवकर्तृके यागे-
ऽश्विनोरध्वर्युत्वात्तदीयबाहुचिन्तनमस्याध्वर्योर्युक्तमित्यर्थः । पूष्णो हस्ता-
भ्यामिति। पूषा वै देवानां भाग उ भूषणं पाणिभ्यामभिनिदधाति तस्मादू
आह पूष्णो हस्ताभ्यामितीति । तदिदं तृतीयभागव्याख्यानम् । पूषाख्यो दे-
वः स्वकीयपाणिभ्यां देवानामाभरणं धारणोचिते तत्र तत्र शरीरभागे भूष-
णं स्थापयति । तस्मात्तदीयहस्तत्वचिन्तनमुचितमित्यर्थः । अंसमणिबन्धयो-
र्मध्यभागे दीर्घदण्डाकारो बाहुशब्दार्थः । पञ्चाङ्गुलियुक्ताग्रभागो हस्तशब्दार्थ
इति विवेकः । सत्य देवाः, अनृतं मनुष्याः सत्येनैवैतद् गृह्णातीति । तदिदं पू-
र्वोक्तभागत्रये देवतास्मरणस्योपपादनं देवानां सत्यरूपत्वात्तदनुस्मरणेन हवि-
र्ग्रहणरूपमनुष्ठानं फलपर्यवसायित्वात् सत्यं भवति । देवतास्मरणाभावे मनु-
ष्याणामनृतरूपत्वात्, तत्कर्तृकमनुष्ठानं फलशून्यत्वादनृतं भवतीत्यर्थः ॥ ६ ॥
अथ यदमुष्मै जुष्टं गृह्णाति देवतायै आदिशति सर्वा वै देवता अध्वर्युं हविर्गृह्ण-
न्तमुपतिष्ठन्ते मम नाम ग्रहीष्यतीति ताभ्य एवैतत् सर्वाभ्यः सहसतीभ्यः समदं
करोतीति । तदिदमग्नये त्वाजुष्टमित्यादेश्चतुर्थभागस्य तात्पर्यम्। अमुष्मा इति
नामविशेष उपलक्ष्यते । अग्न्यादिनाम्ने देवतायै प्रियं हविर्यदादिशति
एतत् एतेनाऽऽदेशनेन सहसतीभ्यो वा भवन्तीभ्यस्ताभ्य एवाऽग्न्यादिभ्यः
सर्वाभ्यो देवताभ्यः समदं सर्वासां देवतानां कलहभावं करोति मदेन
सह वर्तत इति समदः कलहस्तस्य भावः समदः । यदाऽध्वर्युर्हविर्गृह्णाति
तदानीं हे अध्वर्यो त्वं ममैव ग्रहीष्यसीति वदन्त्यः सर्वा देवतास्तमध्वर्युं सेवन्ते ।

सायंत्वानारातयेस्वरभिविख्येषं ॥ ७ ॥ दृꣳहन्तांदुर्याः । पृथिव्या-

तदानीं नामविशेषमनुच्चार्य हविषि गृहीते सति मद्मात्सर्ययुक्तानां परस्परं कलहो भवेत् । इदमग्न्यर्थमिदमग्नीषोमार्थमिति विशेषनामग्रहणे सति कलहो न भवतीत्यर्थः ॥ तदेतत् सर्वं मन्त्रव्याख्यानं संगृह्य तित्तिरिराह ॥ देवस्य त्वा सवितुः प्रसव इत्याह । प्रसूत्यै अश्विनोर्बाहुभ्यामित्याह । आश्विनौ हे देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह । यत्ये अग्नये जुष्टं निर्वपामीत्याह अग्नय एवैतान् जुष्टं निर्वपतीति ॥ एतान् व्रीहीनित्यर्थः ॥ कात्यायनः ॥ भूताय त्वेति शेषाभिमर्शनमिति ॥ नारातय इति मन्त्रशेषः ॥ शकटेऽवस्थित हे व्रीहिशेष त्वां भूताय भवनाय यागान्तराणां ब्राह्मणभोजनस्य च पुनरपि सद्भावाय परिशेषयामीति शेषः । अरातये च कर्मण्यादानाय शेषयामि ॥ एतदेवाभिमेत्य कण्व आह ॥ स एतेन यजुषा यथापूर्वं गृहीत्वा प्रत्यभिमृशति । भूताय त्वा नारातय इति । यत एवेदं हविर्गृह्णन्ति तदेवैतेन पुनराप्याययति ॥ एतेन पूर्वोक्तेनाग्नये जुष्टमित्यादिना यजुषाऽग्नेऽग्नीषोमयोश्च क्रममनुल्लङ्घ्य हविर्गृहीत्वा शकटस्थं मन्त्रेण प्रत्यभिमृशेत् । यत एव शकटस्थात् । देवतार्थं पृथक्कृतेदं हविर्गृहीतं तदेव शकटस्थमेतेन प्रत्यभिमर्शनेन पुनराप्याययति भूयोऽभिवर्धयतीत्यर्थः ॥ कात्यायनः ॥ स्वरिति प्राग्वीक्षत इति ॥ अभिविख्येषमिति मन्त्रशेषः । स्वर्गहेतुर्यज्ञः स्वरित्यनेन पदेन विवक्ष्यते । ख्या प्रकथन इति धातुः । अभिविख्येषम् । अभितो विशेषेण ख्यापयेयं पश्येयमित्यर्थः । अनेन मन्त्रेण प्राङ्मुखो यज्ञभूमिं वीक्षते ॥ कण्वोऽप्याह ॥ स्वरभिविख्येषमिति प्राग्वीक्षते परिवृतमिव वा अस्येदं चक्षुर्भवति निरुद्धमिव यज्ञ उ वै स्वरहर्देवाः सूर्योऽग्निस्तस्मादाऽऽह स्वरभिविख्येषमितीति ॥ शकटमारूढवतोऽस्याध्वर्योरिदं चक्षुः परितो वेष्टितमिव सर्वतो निरुद्धमेव भवति तत्परिहाराय यज्ञभूमिः सर्वा द्रष्टव्या । यज्ञ एव स्वरादिभिः पञ्चभिः शब्दैस्तत्र तत्र विवक्ष्यते । तस्माद्यज्ञदर्शनविवक्षया स्वरभिविख्येषमिति मन्त्रं प्राहेत्यर्थः ॥ आपस्तम्बस्तु मन्त्रद्वयेन विस्पष्टमाह ॥ स्वरभिविख्येषमिति प्राक् प्रेक्षते, सुवरभिविख्येषमिति सर्वं विहारमनुवीक्षत इति ॥ तित्तिरिरप्याह ॥ तमसीव वा एषोऽन्तश्चरति । यच्च परिणाहि सुवरभिविख्येषं वैश्वानरं ज्योतिरित्याह । सुवरेवाभिविपश्यति वैश्वानरं ज्योतिरिति ॥ ७ ॥ कात्यायनः ॥ दृꣳहन्तामित्यवरोहतीति ॥ दुर्याः पृथिव्यामिति मन्त्रशेषः । पृ-

सुर्वन्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे ॥ अग्ने हव्यꣳ रक्षस्व ॥ ८ ॥

पवित्रेस्थो । वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनामि ॥ अच्छिद्रे-

थिव्यां वर्तमाना ये दुर्या दुरो द्वाराण्यर्हन्तीति दुर्याः गृहास्ते दृꣳहन्तां दृढा भवन्तु । अनेन मन्त्रेण शकटादवरोहेत् । हविर्गृहीत्वोत्तरतोऽध्वर्योर्भरेण गृहाणामदार्ढ्यशङ्का सम्भाव्यते । तामनेन मन्त्रेण सत्समाधानं कण्वो दर्शयति ॥ दृꣳहन्तां दुर्याः पृथिव्यामिति ॥ दृꣳहन्ताम् ईश्वरा यजमानस्य गृहा नविक्षोभन्त इति । गृहा एवाऽत्र दुर्यशब्देनाऽभिधीयन्ते । अस्य यजमानस्य योऽयमध्वर्युर्यज्ञमनुतिष्ठति । तमध्वर्युं हविर्गृहीत्वा गच्छन्तमनु त एते ग्रहाः मोदयितुं समर्थाः । तस्यैव व्याख्यानं विक्षोभ्योरीश्वरा इति । तानेव विक्षोभ्युमुद्युक्तान् गृहान्, एतेन मन्त्रेण पृथिव्यां दृढीकरोति, यजमानस्य गृहाः क्षोभं न प्राप्नुवन्तीत्यर्थः । हविर्ग्रहणस्याऽऽचारादावपि संभवादयमध्वर्युः किंकारिष्यतीत्यविज्ञाय लोकद्वयस्य भीत्या कम्पः सम्भाव्यते, तन्निवारणार्थोऽयं मन्त्रः । तदाह तित्तिरिः ॥ द्यावापृथिवी हविषि गृहीत उदवेपेताम् । दृꣳहन्तां दुर्या द्यावापृथिव्योरित्याह गृहाणां द्यावापृथिव्योर्धृत्या इति ॥ अस्य मन्त्रस्य शकटावरोहणहेतुत्वमापस्तम्बोऽपि दर्शयति ॥ दृꣳहन्तां दुर्या द्यावापृथिव्योरिति मत्यवरुह्येति ॥ कात्यायनः ॥ गच्छत्युर्वन्तरिक्षमितीति ॥ अन्वेमीति मन्त्रशेषः । पूर्वमपि व्याख्यातोऽयं मन्त्रः ॥ कात्यायनः ॥ श्रपणस्य पश्चात् सादयति पृथिव्यास्त्वेतीति ॥ पाठस्तु ॥ पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यꣳ रक्षस्वेति ॥ हे हविः, त्वां पृथिव्या नाभौ मध्ये सादयामि । तस्यैव व्याख्यानम् अदित्या इति । यथा सुप्तं बालं पुत्रं माता स्वाङ्के स्थापयति एवम् अहमिदं हविरदित्या उपस्थे भूम्या अङ्के सादयमीत्यनुवर्तते । हे अग्ने, तत्र समीपे स्थापितमिदं हव्यं रक्षस्व । सुप्तं पुत्रमिव बाधकेभ्योऽसुरेभ्यः पालयस्व । सोऽयमर्थः सर्वोऽपि, मध्यं वै नाभिर्मध्यमभयमित्यादौ ब्राह्मणे द्रष्टव्यः ॥ तित्तिरिरपि व्याचष्टे ॥ अदित्यास्त्वोपस्थे सादयामीत्याह । इयं वा अदितिः अस्या एवैनम् उपस्थे सादयति अग्ने हव्यꣳ रक्षस्वेत्याह गुप्त्या इति ॥ ८ ॥ इति प्रथमाऽध्याये तृतीयोऽनुवाकः ॥ ३ ॥

तृतीयेऽनुवाके हविर्ग्रहणविषया मन्त्रा उक्ताः ॥ चतुर्थेऽनुवाके हविःप्रो-

णपवित्रेणसूर्यस्यरश्मिभिः ॥ १ ॥ देवीरापो ऽअग्रेगुवोऽअग्रेपुवः ॥ अग्रऽइममद्ययज्ञंनयतसुधातुंयज्ञपतिंदेवायुवं ॥ २ ॥ युष्माऽइंद्रो ।

---

क्षणविषया मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति त्रीन् वेति ॥ त्रिभिः कुशैः सहितेन छिन्द्यात् ॥ अत एवापस्तम्बो विस्पष्टमाह ॥ तृणं काष्ठं वान्तर्धाय छिनत्ति, न नखेनेति ॥ वैष्णव्याविति मन्त्रशेषः । नपुंसकस्य व्यत्ययेन स्त्रीलिङ्गत्वम् । हे पवित्रे शोधके कुशद्वयरूपे युवां वैष्णवे यज्ञसंबन्धिनी स्थः । यज्ञो वै विष्णुरिति श्रुतेः ॥ तदेतदाह कण्वः ॥ स वै पवित्रे एव करोति पवित्रे स्थो वैष्णव्याविति यज्ञो वै विष्णुर्यज्ञिये स्थ इत्येवैतदाहेति ॥

कात्यायनः ॥ हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इतीति ॥ हविः पूर्वं गृहीतं ययाग्निहोत्रहवण्या सा हविर्ग्रहणी । तस्यामपः स्थापयित्वा पवित्राभ्यामुत्पुनीयात् ॥ पाठस्तु ॥ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति ॥ सवितुः प्रेरकस्य प्रसवे प्रेरणे सति हे आपो वो युष्मान् उत्पुनाम्युत्कर्षेण शोधयामि । अच्छिद्रेण पवित्रेण छिद्ररहितेन शोधकेन वायुस्वरूपेण । तथा सूर्यस्य रश्मिभिः शुद्धिहेतुभिरुत्पुनामीति पूर्वत्रान्वयः । वायोः सूर्यरश्मीनां च पादप्रक्षालनाद्यपहतभूमिशुद्धिहेतुत्वं प्रसिद्धम् ॥ एतदेवाऽभिप्रेत्य कण्वोऽप्याह ॥ अच्छिद्रेण पवित्रेणेत्ययं पवित्रं योऽयं पवते तस्मादाहाऽच्छिद्रेण पवित्रेणेति ॥ सूर्यस्य रश्मिभिरित्येते पवितारो ये सूर्यस्य रश्मयस्तस्मादाह सूर्यस्य रश्मिभिरितीति ॥ १ ॥ कात्यायनः ॥ सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इतीति ॥ उत्पूताभिरद्भिः पूरितं पात्रं सव्ये हस्ते स्थापयित्वा मन्त्रमुच्चारयन् दक्षिणेन हस्तेन पात्रमूर्ध्वं चालयेत् ॥ पाठस्तु ॥ देवीरापोअग्रेगुवोअग्रेपुवः । अग्र इममद्य यज्ञं नयत सुधातु यज्ञपतिं देवायुवम् । युष्मा इन्द्रो वृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये इति ॥ देवीरापः, हे द्योतनात्मिका आपो यूयम् अद्यास्मिन् दिने इममिदानीं प्रवर्तमानं यज्ञं कर्मविशेषं अग्रे नयत पुरतः प्रवर्तयत । यथा विघ्नो न भवति तथा कुरुत । कथं भूता आपः । अग्रेगुवः पुरतो निम्नदेशं प्रति गमनशीलाः । अग्रेपुवः यस्मिन् पूर्वमागच्छन्ति तस्मिन्नपहतिनिवारणेन शोधनशीलाः । यज्ञप्रवर्तनानाय ऊर्ध्वं यज्ञपतिं यजमानम् अग्रे नयतेत्यनुवर्तते । फलभोगाय प्रेरयत । कथंभूतं यज्ञपतिं

वृणीतवृत्रतूर्येयूयमिन्द्रमवृणीध्वंवृत्रतूर्येप्रोक्षिताःस्थ ॥ अग्नयेत्वाजुष्टंप्रोक्षाम्यग्नीषोमाभ्यांत्वाजुष्टंप्रोक्षामि ॥ ३ ॥ दैव्यायकर्मणे । शुंधध्वंदेवयज्यायै ॥ यद्वोशुद्धः पराजघानेदंवस्तच्छुंधामि ॥ ४ ॥

---

सुधातुं सुष्ठु दक्षिणादिना यज्ञस्य पोषकम् । देवायुवम् । यु मिश्रण इति धातुः । देवान् यौति यज्ञादिना मिश्रीकरोतीति देवायुः । यद्वा देवान् कामयत इति देवायुः । इदयुरिदं कामयमान इति यास्केनोक्तत्वात् । तं देवायुवं नयत । युष्मा इति छान्दस आकारः । हे आपो युष्मानिन्द्रो देवः, वृत्रतूर्ये वृत्रवधे निमित्तभूते सति अवृणीत सहकारित्वेन प्रार्थितवान् । यूयमपि वृत्रतूर्ये निमित्ते तमिन्द्रमवृणीध्वं सहकारित्वेन प्रार्थितवत्यः । सोऽयमर्थः सर्वोऽपि, तम्, उदिङ्गयति देवीराप इत्यादिना कण्वो विस्पष्टमुवाच ॥ इन्द्रस्याऽपां च परस्परवरणप्रसिद्धिं तित्तिरिर्दर्शयति ॥ वृत्रं हनिष्यन्निन्द्र आपो वव्र आपो इन्द्रं वव्रिर इति ॥ कात्यायनः ॥ प्रोक्षिता स्थेति तासां प्रोक्षणमिति ॥ हे आपो यूयं मदीयमनोभावनया प्रोक्षिता भवत । प्रोक्षणं नाम प्रकर्षेण सेचनं, तच्चान्यद्रव्यस्याऽद्भिः सम्भवति । अपां तु न केनाप्यन्येन द्रव्येणतत्सम्भवोऽस्ति । तस्माद्ध्यानमात्रोपचारेण तासां प्रोक्षणम् ॥ तमेनमभिप्रायं कण्वो दर्शयति ॥ प्रोक्षिता स्थेति स यदेताभ्यो निन्हुत इति ॥ अपलापत्युपचरतीत्यर्थः ॥ तित्तिरिस्तु मन्त्रपाठेन तमुपचारं दर्शयति ॥ प्रोक्षिता स्थेत्याह । तेनापः प्रोक्षिता इति ॥ कात्यायनः ॥ हविषश्चाग्नये त्वाग्नीषोमाभ्यां त्वेति । यथादेवतमन्यदिति ॥ हविषश्चेत्यत्र प्रोक्षणमित्यनुवर्तते । अत्र देवताद्वयसम्बन्धिनो हविषस्तद्देवतानां यथा प्रोक्षणम् एवमन्यदपि हविस्तत्तद्देवतानामनतिक्रम्य प्रोक्षणीयम् ॥ पाठस्तु ॥ अग्नये त्वा जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति ॥ स्पष्टार्थः ॥ २ ॥ ३ ॥ कात्यायनः ॥ पात्राणि दैव्यायेति ॥ कृष्णाजिनोलूखलादीनि यज्ञपात्राणि दैव्यायेति मन्त्रेण प्रोक्षयेत् ॥ पाठस्तु ॥ दैव्याय कर्मणे शुन्धध्वं देवयज्यायै । यद्वोऽशुद्धः पराजघानेदं वस्तच्छुन्धामीति ॥ दैव्याया ऽग्न्यादिदेवसम्बन्धिने कर्मणे शुन्धध्वं, हे यज्ञपात्राणि शुद्धानि भवत । रादेव कर्म विशिष्यते । देवयज्यायै देवसम्बन्धिन्यै यागक्रियायै । किञ्च, वो युष्माकं सम्बन्धि यदङ्गमशुद्धो नीचजातिस्तक्षादिः पराजघान पराहतां कृतवान् । छेदनतक्षणादिकाले स्वकीयहस्तस्पर्शरूपम् अशुचित्वं कृतवांस्तदेतद्

शर्म्म । स्यवधूतश्च्चोऽवधूताऽअरातयः ॥ अदित्यास्त्वगसि प्रतित्वादितिर्वेत्तु ॥४॥ अद्रिरसि । वानस्पत्योग्रावासिपृथुबुध्नः ॥

---

वो युष्माकमङ्गं शुन्धामि प्रोक्षामि प्रोक्षणेन शुद्धं करोमि ॥ तमिममर्थमथ पात्राणि प्रोक्षति । दैव्यायेत्यादिना कण्वः प्रोक्तवान् ॥ ४॥ इति प्रथम.ऽध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

चतुर्थेऽनुवाके प्रोक्षणमन्त्रा उक्ताः । पञ्चमे त्ववघातमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ शर्माऽसीति कृष्णाऽजिनादानमिति ॥ हे कृष्णाजिन, त्वम् उलूखलस्य धारणार्थं शर्म सुखहेतुरसि ।आजिनस्य, चर्मेति मनुष्यनाम; शर्मेति दैवं नाम । अतो मन्त्रे शकारः पठितः ॥ सोऽयमर्थः, त०।रत्ते शर्मासीति कृष्णस्य वा एतच्चर्मेत्यादिना ब्राह्मणेन स्पष्टीकृतः ॥ कात्यायनः ॥ अपेत्य पात्रेभ्योऽवधुनोत्यवधूतमितीति ॥ तदेतदापस्तम्बोऽपि ॥ उलूखलादिपात्रेभ्योऽपसृत्य दूरदेशे कृष्णाऽजिनमवधुनुयात ॥

पाठस्तु ॥ अवधूतं रक्षोऽवधूता अरातय इति ॥ धूञ् कम्पन इति धातुः । कृष्णाऽजिने गूढं रक्षोऽवधूतं कृष्णाजिनस्य कम्पनेन भूमौ पातितम् । एवमेवारातयोऽपि पातिताः ॥ कात्यायनः ॥ प्रत्यग्ग्रीवमास्तृणात्यादित्यास्त्वगसीतीति ॥ तदेतदापस्तम्बोऽपि स्पष्टमाह ॥ अदित्यास्त्वगसीत्युत्तरेण गार्हपत्यमुत्करदेशे वा प्राचीनग्रीवमुत्तरलोम्नोपस्तृणातीति ॥ पाठस्तु ॥ आदित्यास्त्वगसि प्रति त्वादितिर्वेत्त्विति ॥ हे कृष्णाजिन त्वमदित्या देवतायास्त्वगसि । ततोऽदितिर्भूमिस्त्वां प्रतिपन्ना मदीयं त्वमित्येवं वेत्तु जानातु ॥ एतस्याऽभिप्रायं कण्वस्तस्यप्राग्ग्रीवमुपस्तृणातीत्यादिना स्पष्टमुक्तवान् ॥ तित्तिरिश्च संग्राह, इयं वा अदितिरित्यादिना ॥ ननु चर्मान्तराणि परित्यज्य कृष्णाऽजिने कः पक्षपात इतिचेत् । यज्ञपुरुषसम्बन्धित्वरूपत्वादिति ब्रूमः । पुरा कदाचिद्यज्ञपुरुषः केनापि निमित्तेन देवेभ्योऽपक्रोऽन्यत्र जगाम । तदानीं स्वकीयवेषप्रच्छादनाय कृष्णमृगोऽभूत् । देवास्तु तदेतद्विज्ञाय तस्य मृगस्य त्वचमुत्क्षिप्य जगृहुः । तस्मादत्र पक्षपातो युक्तः ॥ सोऽ मर्थ मत्रोक्त्या कृष्णाऽजिनमादत्ते, यज्ञस्य सर्वत्वायेत्यादिना कण्वब्राह्मणेन प्रपञ्चितः ॥ तित्तिरिश्चैतमर्थं सञ्जग्राह ॥ यज्ञो देवेभ्यो निलायत कृष्णरूपं कृत्वा यत्कृष्णाजिने हविरध्यवहन्ति । यज्ञायज्ञादेवदत्तसंज्ञं प्रयुङ्क्ते हविषोऽस्कन्दायेति ॥ कथञ्चिदुलूख

प्रति॑त्वादि॑त्यास्त्वग्वे॑त्तु ॥ २ ॥ अ॒ग्नेस्त॒नूः । र॑सिवा॒चोवि॒सर्ज॑नं ॥ दे॒ववी॑तयेत्वागृह्णामि ॥ ३ ॥ बृ॒हन्ग्रावा॑ । सिवानस्प॒त्यः सइ॒दंदे॒वेभ्यः॥ह॒व्यꣳशमीष्वसुशमिशमीष्वहविष्कृदेहि॑ ॥ ४ ॥ कुक्कुटो॑-

लादधः पतितेऽपि व्रीहिषु कृष्णाजिनेनावरुद्धत्वेन भूमिस्पर्शाभावादस्कन्नमेव हविर्भवतीत्यर्थः ॥ १ ॥ कात्यायनः ॥ निदधात्युलूखलमद्रिरसि ग्रावासीति वा प्रतित्वेत्युभयोरिति ॥ विकल्पितयोर्द्वयोर्मन्त्रयोः प्रतिशेषो योजनीय इत्यर्थः ॥ पाठस्तु ॥ अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्नः । प्रति त्वादित्यास्त्वग्वेत्त्विति ॥ हे उलूखल त्वं यद्यपि वानस्पत्यो दारुमयस्तथापि दृढत्वादद्रिरसि पाषाणोऽसि पृथुबुध्नः स्थूलमूलः । मुसलघातोपद्रवेण चाञ्चल्यराहित्याय मूलस्य स्थूलत्वम् । हे उलूखल तथाविधस्त्वं ग्रावासि दार्ढ्येन पाषाणसदृशोऽसि । अदित्यास्त्वगधस्तादास्तीर्णा कृष्णाजिनरूपा भूमेर्या त्वगस्ति सा त्वां प्रतिगृह्य वेत्तु स्वकीयत्वेन जानातु ॥ अत्र द्वयोर्मन्त्रयोः साधारणवाक्यशेषं पृथग्योजयित्वा कण्वो विस्पष्टं दर्शयति ॥ स प्रतिगृह्णात्वद्रिरसि वानस्पत्यः प्रति त्वादित्यास्त्वग्वेत्त्विति वा, ग्रावासि पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्त्विति वेति ॥ दारुमयस्य पाषाणत्वाभिधानमुपचरति । तमेतं तित्तिरिर्दर्शयति ॥ अद्रिरसि वानस्पत्य इत्याह । ग्रावाणमेवैतत्करोतीति ॥ तमिममुपचारं यथा वा अदः सोमं ग्रावभिरित्यादिना कण्वः प्रपञ्चयामास ॥ २ ॥ कात्यायनः ॥ हविरावपत्यग्नेस्तनूरसीति ॥ पाठस्तु ॥ अग्नेस्तनूरसि वाचो विसर्जनम् । देववीतये त्वा गृह्णामीति ॥ हे हविस्त्वमग्नेराहवनीयस्य तनूः शरीरमसि । यतस्तत्र क्षिप्तं हविरग्निर्भवति । अतो हविरग्नेस्तनुः । किम्भूतं हविः । वाचो विसर्जनम् । अतो देववीतये देवानां तर्पणाय त्वा त्वां गृह्णामि आवपामीत्यर्थः । देवताभिरेवैतत्समर्द्धयतीति । अथवा पूर्वमपां प्रणयनकाले नियमिताया यजमानवाचो हविरावपनकाले विसर्गो भवति तस्मादिदं हविर्ग्रहणं वाचो विसर्जनमित्युच्यते ॥ तदाह कण्वः ॥ या वा अमूं वाचंयच्छति हविर्ग्रहीष्यन्नेतां विसृजते तस्मादाह वाचो विसर्जनमितीति ॥ ३ ॥ कात्यायनः ॥ बृहन् ग्रावेति मुसलमादत्त इति ॥ असि वानस्पत्य इति मन्त्रशेषः । हे मुसल त्वं यद्यपि वानस्पत्यो दारुमयस्तथापि ग्रावासि दार्ढ्येन पाषाणसदृशोऽसि तथा दीर्घत्वेन महानसि ॥ कात्यायनः ॥ स इदमवघ्नन्वदतीति ॥ पाठस्तु ॥ स इदं देवेभ्यो हव्यꣳ शमी-

म्रि । मधुजिह्वऽइषमूर्जमावद ॥ वयश्संघातेसंघातेजेष्म ॥ ५ ॥

ष्व सुशमि शमीष्वेति ॥ हे मुसल स त्वं देवेभ्यः अग्न्यादिदेवोपकारार्थं च इदं हव्यं व्रीहिरूपं शमीष्व शमय भक्षणाविरोध्युग्रतुषापनयनशान्तं कुरु । तस्यैव पदस्य व्याख्यानं– सुशमिशमीष्वेति । सुष्ठु शान्तं यथा भवति तथा शमय शान्तिर्द्विविधा। बाह्यतुषापनयनादेका। सेयं प्रथमावघातेन सम्पद्यते। अन्तःस्थितस्येषद्द्रव्यवर्णस्य मालिन्यस्यापनयनादपरा शान्तिः । सेयं फलीकरणेन सम्पद्यते । तमेतमुभयविधं तण्डुलसंस्कारं कुर्वित्यर्थः ॥ अत एव कण्वो व्याचष्टे ॥ हव्यं संस्कुरु साधु संस्कृतमित्येवैतदाहेति ॥ कात्यायनः ॥ हविष्कृदेहीति त्रिराह्वयतीति ॥ यजमानस्य पत्नीवान्ध्रो वा यः कोऽपि देवानामर्थं भक्त्या व्रीहीन्तस्म्यगवहन्ति तत्सम्बोधनेनाह्वानं क्रियते हविष्कृदेहि अत्राऽऽगच्छ।तदेतत्तित्तिरिर्व्याचष्टे॥हविष्कृदेहीत्याह। य एव देवानां हविष्कृतः। तान् ह्वयति त्रिर्ह्वयति त्रिःसत्या हि देवा इति ॥ त्रिवारमुक्तमर्थं देवाः सत्यं मन्यन्त इत्यर्थः ॥४॥ कात्यायनः ॥ आहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति । त्रिः शम्यया द्विर्दृषदं सकृदुपलामिति ॥ अन्यशब्देनाऽऽग्नीध्रो विवक्षितः । पेषणसाधने द्वे शिले दृषदुपले । शम्याशब्देनाऽरत्निप्रमाणं दारुमयं यज्ञायुधमुच्यते । तया शम्ययाऽऽग्नीध्रो दृषदं द्विवारं समाहन्यात् । उपलां सकृत् समाहन्यात् । तमिमं प्रयोगं त्रिवारमावर्तयेत् । तदेतदापस्तम्बोऽपि विस्पष्टमाह ॥ दृषदुपले समाहन्ति द्विर्दृषदि सकृदुपलां, त्रिः संचारयन्नवकृत्वः सम्पादयतीति ॥ पाठस्तु ॥ कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद । वयश्संघाते संघाते जेष्मेति ॥ हे शम्यारूप यज्ञायुधविशेष, त्वं कुक्कुटो मधुजिह्वोऽसि । असुरैः क केवं तान् हंतुमन्विच्छन् यः पुमान् अटति सर्वत्र संचरति सोऽयं कुक्कुटः । यद्वा । कुक्कुटाख्यपक्षिवद् ध्वनिविशेषम् असुरमीत्यर्थं यः करोति सोऽयं कुक्कुट इत्युपचर्यते । मधुजिह्वनामकः कश्चिद्देवानां भृत्यः । मधुरभाषिणी जिह्वा यस्येति तद्व्युत्पत्तिः ॥ तन्नामकं देवताभृत्यं कण्वो दर्शयति ॥ मधुजिह्वो वै स देवेभ्य आसीदिति ॥ तद्रूप हे यज्ञायुध त्वमसुरान् पराभावयन् यजमानस्येषमूर्जमावद अन्नं रसं च यथा समागच्छति तथा शब्दं कुरु भवदीयशब्देन असुरेषु पराभूतेषु तदीयमन्नं रसं च यजमानः सर्वतः प्राप्नोति । ततो यजमानसम्बन्धिनो वयं संघाते संघाते असुरैः सह क्रियमाणे तस्मिंस्तस्मिन् युद्धे

र्षवृद्धमसि । प्रतिस्त्वा वर्षवृद्धं वेत्तु ॥ परापूत᳘ꣳ रक्षः प्रतिपूता ऽअरातयः ॥ ६ ॥ अपहत᳘ꣳ रक्षो । वायुर्वो विविनक्तु ॥ देवो वः सविता प्रतिगृह्णातु हिरण्यपाणिरच्छिद्रेण पाणिना ॥ ७ ॥

---

जेष्य जितवन्तः। कदाचिदपि नास्माकं पराजय इत्यर्थः । सम्यगसुरा हन्यन्ते यत्रेति संघातो युद्धम् ॥ यज्ञायुधशब्देनासुराणां पराभव इति तित्तिरिः संगृह्य दर्शयति ॥ तयोः श्रद्धादेवस्य यजमानस्य वाऽसुरघ्नी वाक् यज्ञायुधेषु प्रविष्टासीत् । तेऽसुरा यावन्तो यज्ञायुधानामुद्वदतामुपाशृण्वंस्ते पराभवन्निति ॥ श्रद्धालुत्वेन याग कुर्वतो मनोः प्रभावादिदं सम्पन्नम् ॥ इममेवार्थं, मनो ह वा इत्याद्युपाख्यानेन कण्वः प्रपञ्चयामास ॥ ५ ॥ कात्यायनः ॥ वर्षवृद्धमसीति शूर्पमादत्त इति ॥ आदानप्रकारं बौधायनः स्पष्टीचकार ॥ अवान्यात्तुपान् कृत्वोत्तरेत्। शूर्पमुपगच्छतीति ॥ हे शूर्प वर्षवृद्धं वृष्टिगतजलेनाभिवृद्धमसि । वर्षवृद्धवेणुदलैरिषीकाग्रशलाकाभिर्नडाख्यतृणशलाकाभिर्वा शूर्पस्य निष्पन्नत्वात् ॥ तदेतत् कण्व आह ॥ वेणूना वा नडानां वेषीकाणां वेति ॥ कात्यायनः ॥ प्रति त्वेति हविरुद्वपतीति ॥ वर्षवृद्धं वेत्त्विति मन्त्रशेषः । हे हविः, वर्षवृद्धं त्वां प्रतिगृह्य वेत्तु स्वकीयत्वेन जानातु । अत्र ज्ञातृत्वं शूर्पस्य द्रष्टव्यम् । हविर्हेतूनां व्रीहीणां यवानां वा वर्षवृद्धत्वं प्रसिद्धम् ॥ अत एवाऽत्र कण्व आह ॥ व्रीहयो वा यवाश्चेति ॥ मन्त्रद्वये वृद्धशब्देन समृद्धिर्योत्यत इति तित्तिरिराह ॥ वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्वित्याह। वर्षवृद्धा वा ओषधयः वर्षवृद्धा इषीकाः समृद्ध्या इति ॥ कात्यायनः ॥ परापूतमिति निष्पुनातीति ॥ रक्षः प्रतिपूता अरातय इति मन्त्रशेषः। तुषेषु निगूढं रक्षः परापूतं निराकृतं शूर्पेण तुषेषु परापूतेषु तैः सह रक्षसो भूमौ पतनात् अरातयो हविर्दानप्रतिकूला आलस्यादिशत्रवश्च प्रतिपूताः प्रतिकूलाः सन्तो निराकृताः ॥ ६ ॥ कात्यायनः ॥ अपहतमिति तुषान्निरस्यतीति ॥ भूमौ पतितांस्तुपान् दूरे निःसारयेत् । रक्ष इति मन्त्रशेषः । तुषेषु निगूढं यद्रक्षस्तदपहतं दूरेऽपनीयमित्यर्थः ॥ कात्यायनः । वायुर्व इति विविनक्तीति ॥ कण्वोऽपि विविनक्ति ॥ वायुर्वो विविनक्तीति॥ हे तण्डुला वो युष्मान् शूर्पचालनेन निष्पन्नो वायुर्देवो विविनक्तु । कणेभ्यः पृथक्करोतु ॥ तथैव पृथक्कारम्, अयं वातः सूर्योऽयं पवत इत्यादिना कण्वः स्पष्टीचकार ॥ कात्यायनः ॥ देवो व इति पात्र्यामोप्या-

धृष्टिरसि । अपाग्नेऽअग्निमामादं जहि ॥ निष्क्रव्यादꣳ सेधा देवयजं वह ॥ १ ॥ ध्रुवमसि । पृथिवीं दृꣳह ॥ ब्रह्मवनि त्वा क्षत्रवनि सं-

भिमन्त्रयत इति ॥ पाठस्तु ॥ देवो वः सविता प्रतिगृह्णातु हिरण्यपाणिरच्छिद्रेण पाणिनेति ॥ हे तण्डुला वो युष्मान् हिरण्यपाणिः अङ्गुलीयकाद्याभरणयुक्तपाणिः सविता देवः, अच्छिद्रेण अङ्गुलीविश्लेषरहितेन स्वकीयेन पाणिना प्रतिगृह्णातु स्वीकरोतु । पात्र्यां यदा प्रक्षिप्यते तदा भूमौ स्कन्दनं मा भूदिति स्वकीयेन पाणिना पालयत्वित्यर्थः ॥ तमेतमभिप्रायं तित्तिरिराह ॥ अन्तरिक्षादिव वा एते प्रस्कन्दन्ति ये शूर्पात् । देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वित्याह । प्रतिष्ठित्यै हविषोऽस्कन्दायेति ॥ ७ ॥ इति प्रथमेऽध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

पञ्चमे अवघातमन्त्रविषया उक्ताः ॥ षष्ठे कपालोपधानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ धृष्टिरसीत्युपवेषमादायेति ॥ पलाशशाखाया मूलदेशे छिन्नः काष्ठभाग उपवेषः ॥ तथाचापस्तम्बः ॥ मूलतः शाखां परिवास्योपवेषं करोतीति ॥ ञिधृषा प्रागल्भ्ये इति धातुः । हे उपवेष त्वं धृष्टिः प्रगल्भोऽसीति । तीक्ष्णानङ्गारानितस्ततोऽपनेतुं प्रभुत्वादस्य प्रागल्भ्यम् ॥ तदाह कण्वः ॥ यद्वा एतेनाग्निं धृष्णोपचरति तस्माद्वा धृष्टिरिति ॥ कात्यायनः ॥ अपाग्न इत्यङ्गारान् प्राचः करोतीति ॥ उपवेषेणेति शेषः ॥ तच्च कण्वो दर्शयति ॥ तेनाङ्गारान् प्राच उपहृत्यपाग्नेऽग्निमामादं जहि निष्क्रव्यादꣳ सेधेतीति ॥ आममपक्वमत्तीत्यामादको ऽग्निर्लौकिकः । क्रव दाहे । क्रव्यं मांसमत्तीति क्रव्यादऽपरोऽग्निः । तावुभौ यागयोग्यौ न भवतः । यः पुनराहुत्याधारः स यागयोग्यः । *तथाविधांस्त्रीनङ्गारान् गार्हपत्यात्प्राग्भागे पृथक्कृत्वा तेषां मध्ये यागयो-* ग्यतारहितौ द्वौ वर्जयितुं गार्हपत्यं सम्बोध्योच्यते । हे अग्ने गार्हपत्य आमादमग्निमपजहि परित्यज । तथा क्रव्यादमग्निं निःषेध निःशेषेण दूरे गमय ॥ कात्यायनः ॥ आदेवयजमित्यङ्गारमाहृत्येति ॥ वहेति मन्त्रशेषः । हे गार्हपत्य, देवयजं देवानां यागयोग्यं तृतीयमङ्गारमावह स्वसमीपे समानय ॥ १ ॥ कात्यायनः ॥ कपालेनावच्छादयति ध्रुवमसीति ॥ देवयजमङ्गारं कपालेनावच्छादयेत् ॥ पाठस्तु ॥ ध्रुवमसि पृथिवीं दृꣳह । ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि द्विषतो वधायेति ॥ हे कपाल त्वं ध्रुवं स्थिरमसि । अङ्गारस्योपरि-

जातुवन्युपदधामिद्विषतोवधाय ॥ २ ॥ अग्नेब्रह्म । गृभ्णीष्वधरुणमस्यंतरिक्षंदृᳬह ॥ ब्रह्मवनित्वाक्षत्रवनिंसजातवन्युपदधामि द्विषतोवधाय ॥ धर्त्रमसिदिवंदृᳬह ॥ ब्रह्मवनित्वाक्षत्रवनिंसजातवन्युपदधामिद्विषतोवधाय ॥ ३ ॥ विश्वाभ्यस्त्वा ।'आशाभ्यउप-

वर्तमानमपि इतस्ततो न पतति पृथिवीं भूमीं दृᳬह दृढीकुरु पुरोडाशकपाकवेलायां त्वया व्यवधाने सति भूमेरत्यन्तदाहकृतं शैथिल्यं न भविष्यति । किञ्च, ब्रह्मवनित्वादिविशेषणैर्विशिष्टं त्वामुपदधामि देवयागहेतावङ्गारे स्थापयामि । किमर्थं द्विषतो यागविघातरूपं द्वेषं कुर्वतः असुरस्य पाप्मनो वधाय हिंसार्थम् । वन षण सम्भक्ताविति धातुः । ब्रह्मणा ब्राह्मणेन वन्यते पुरोडाशनिष्पत्त्यर्थं सम्यक् क्रियत इति ब्रह्मवनिः, तथा क्षत्रवनिः । सजातवनीति पदद्वयं योज्यम् । सजाताः समानकुले जाता यजमानस्याऽऽज्ञातयः ॥ २ ॥ कात्यायनः ॥ सव्याऽङ्गुल्या शून्येऽङ्गारं निदधात्यग्ने ब्रह्मेतीति ॥ कपालस्योपरि द्रव्यान्तराभावात्तद्देशस्य शून्यत्वम् । गृभ्णीष्वेति मन्त्रशेषः । निधीयमानाऽङ्गाररूप हे अग्ने ब्रह्मवत् मौढकर्मेदानीमस्माभिरनुष्ठीयमानं गृभ्णीष्व गृह्णीष्व नाशकानां रक्षसां वधेनानुगृह्णीष्व ॥

अत एव कण्व आह॥अग्निर्हि नाष्ट्राणाᳬरक्षसां हन्तेति ॥कात्यायनः॥ धरुणमिति पश्चादिति॥पूर्वं स्थापितस्य कपालस्य पश्चिमभागे धरुणमिति पश्चादिति मन्त्रेण कपालं स्थापयेत्॥पाठस्तु॥धरुणमस्यन्तरिक्षं दृᳬह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि द्विषतो वधायेति ॥ हे द्वितीयकपाल धरुणं पुरोडाशस्य धारकमसि । अतस्तमन्तरिक्षं दृढीकुरु । पुरोडाशकपालेनाग्न्युत्पन्नया ज्वालयाऽन्तरिक्षलोकस्योपद्रवो यथा न भवति तथा कुरु । यद्यप्येतत्कपालं ज्वालान्तरिक्षयोर्मध्ये व्यवधायकं न भवति । यद्यप्यन्तरिक्षदार्ढ्यार्थं कपालदेवता प्रार्थ्यते । अन्यत् पूर्ववत् ॥ कात्यायनः ॥ पुरस्ताद्धर्त्रमिति ॥ प्रथमकपालस्य पूर्वभागे धर्त्रमिति मन्त्रेण कपालं स्थापयेत् ॥ पाठस्तु ॥ धर्त्रमसि दिवं दृᳬह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि द्विषतो वधायेति ॥ पूर्ववद्व्याख्येयं ज्वालाऽग्रेण दाहभावो द्युलोकस्य दार्ढ्यम् ॥ ३ ॥ कात्यायनः ॥ विश्वाभ्य इति दक्षिणत इति ॥ मध्यकपालस्य दक्षिणभागे, विश्वाभ्य इति मन्त्रेण चतुर्थं कपालमुपदध्यात् ॥पाठस्तु॥ विश्वाभ्यस्त्वाशाभ्य उपदधामि द्विषतो वधायेति॥

दधामि विष्णुतोयवार्थं ॥ चितस्थोर्ध्वचितोभृगूणामंगिरसांतपसा-तप्यध्वं ॥ ४ ॥

शर्मा । स्यवंधूतःरक्षोवंधूताऽअरातयः ॥ अदित्यास्त्वगसि-

हे चतुर्थकपाल, त्वां विश्वाभ्यः सर्वाभ्य आशाभ्यो दिग्भ्यः सर्वदिग्दार्ढ्यार्थमुपदधामि । अन्यत् पूर्ववत् ॥ आशाभ्य इति पदस्य तात्पर्यं कण्वो दर्शयति ॥ चतुर्थमस्ति वा न वा तस्मादाह विश्वाभ्यस्त्वाशाभ्य इति ॥ सर्वासु श्रुतिषु त्रय इमे लोका इति श्रुतत्वात् । पृथिव्यादिलोकत्रयं प्रसिद्धम् । कस्यांचिद्भूमौ भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकानामिति सप्तानां लोकानां समाहारः श्रूयते । अतो महर्लोकादयः किं स्वर्गलोकस्यावयवा उताऽन्यचतुर्थस्थानमिति विशेषानिश्चयाल्लोकविशेषनामधेयमनुच्चार्य साधारण्येनाशाभ्य इति श्रुतमित्यर्थः ॥ कात्यायनः ॥ समं विभज्य द्वे दक्षिणत एवमुत्तरतश्चित स्थेतीति ॥ अष्टाकपालानि, पुरोडाशार्थं कपालचतुष्टयस्य स्थापितत्वादवशिष्टं यत् कपालचतुष्टयं तद् द्वे द्वे । विभज्य दक्षिणोत्तरयोर्दिशोश्चित स्थेति मन्त्रेणोपदध्यात् । ऊर्ध्वचित इति मन्त्रशेषः । चिञ् चयन इति धातुः । क्विबन्तस्य बहुवचनम् । हे कपालविशेषाः, चत्वारो यूयं चितः स्थ प्रथमकपालस्योपचयकारिणो भवथ । तथैवोर्ध्वचित उत्तरकपालोपहितानां द्वितीयादिकपालानामप्युपकारिणो भवत ॥ कात्यायनः ॥ भृगूणामित्यङ्गारैरभ्यूहतीति ॥ कपालान्यङ्गारैराच्छादयेदित्यर्थः ॥ पाठस्तु ॥ भृगूणामङ्गिरसां तपसा तप्यध्वमिति ॥ हे कपालानि यूयं भृगुनामकानामङ्गिरोनामकानां च देवर्षीणां तपोरूपेणाऽनेनाऽग्निना तप्यध्वं तप्तानि भवन्तु । अस्याग्नेस्तदीयतपोरूपत्वं भावयेदित्यर्थः ॥ एतदेवाभिप्रेत्य तित्तिरिराह ॥ भृगूणामङ्गिरसां तपसा तप्यध्वमित्याह । देवतानामेवैनानि तपसा तपन्तीति ॥ ४ ॥ इति प्रथमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

षष्ठे कपालोपधानविषया मन्त्रा उक्ताः । सप्तमे पेषणविषया मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ कृष्णाजिनमादत्ते पूर्ववदिति ॥ पूर्वं यथावघातार्थं कृष्णाजिनप्रयोगस्तद्वदत्रापि पेषणार्थं तत्प्रयोगस्तदर्थानां त्रयाणां मन्त्राणाम् ॥ पाठस्तु ॥ शर्मास्यवधूतꣳ रक्षोऽवधूता अरातयः । अदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु ॥ पूर्ववद्व्याख्येयम् ॥ कण्वस्तु मन्त्रत्रयविनियोगं स्पष्टमुदाजहार ॥ स कृष्णाजिनमादत्ते शर्मासीति । तदवधुनोत्यवधूतꣳ रक्षोऽवधूता अरातय इति ।

प्रतित्वादितिर्वेत्तु ॥ १ ॥ धिषणासि । पर्वतीप्रतित्वादित्यास्त्व-ग्वेत्तु॥ दिवस्कम्भन्यसिधिषणामिपार्वतेयीप्रतित्वापर्वतीवेत्तु॥२॥ धान्यमसि । धिनुहिदेवान्धिनुहियज्ञंधिनुहियज्ञपतिं ॥ धिनुहिमा

तस्मत्त्वग्रीवमुपन्नृणात्त्वादित्यास्त्वगसीति ॥ १ ॥ कात्यायनः ॥ तस्मिन् दृष-दं धिषणासीति ॥ तस्मिन् कृष्णाजिने पेषणाधारभूतां शिलां स्थापयेत् ॥ पाठस्तु ॥ धिषणासि पर्वती प्रतित्वादित्या स्त्वग्वेत्तु इति ॥ पेषणाधारभूते हे शिले त्वं पर्वती पर्वतात्मिका । कृष्णाजिनरूपा भूमेस्त्वगियं प्रति वेत्तु प्रतिगृह्य त्व-दवस्थानमनुजानातु ॥ वेत्त्विसस्य पदस्याभिप्रायं कण्वो दर्शयति ॥ प्रति त्वा-ऽदित्यास्त्वग्वेत्त्विति । संज्ञामेवैतद् दृषदे च कृष्णाजिनाय च वदति नेदन्यो-ऽन्यं हिनसाते इतीति ॥ एतदेतेन मन्त्रेण दृषदश्च कृष्णाजिनस्य च संज्ञामेव वदति । संमतिमेव ब्रूते । किमर्थं, दृषत्कृष्णाजिने परस्परं न हिनसाते नैव हिं-सां कुरुतामित्येतदर्थम् ॥ कात्यायनः ॥ पश्चाच्छम्यामुपोहत्युदीचीं दिव इतीति ॥ दृषदः पश्चिमभागस्योन्नत्याय तस्याधस्ताद् शम्यां स्थापयेत् ॥ पाठस्तु ॥ दि-वस्कम्भन्यसीति ॥ काष्ठरूपे हे शम्ये त्वं दिवो द्युलोकस्य स्कम्भन्यसि । अ-धःपतननिवारणाय स्तम्भनकारिणी भवसि ॥ शम्यायां द्युलोकस्तम्भनहेतुत्वं तित्तिरिर्दर्शयति ॥ द्यावापृथिवी सहास्तां ते शम्यामात्रमेकमहर्वैताम् शम्यामा-त्रमेकमहरिति ॥ अयमर्थः ॥ पुरा प्रजापतिना सृष्टे द्यावापृथिव्यौ जतुकाष्ठवत् परस्परं संश्लिष्टे अभूताम् । ते पश्चादेकस्मिन् दिने शम्याप्रमाणेन परस्परवियुक्ते अभूताम् । प्रतिदिनं तथेति विवक्षया वीप्सोक्ता । तयोः पुनः संश्लेषे याग-स्यावकाशो न स्यात् । ततो विश्लेषाय, दिवस्कम्भन्यसीति मन्त्र इति ॥ का-त्यायनः॥ दृषदुपलां धिषणासीति॥पेषणहेतुभूताम् उपरितनशिलां दृषद् यस्तन-शिलाया स्थापयेत् ॥ पाठस्तु ॥ धिषणासि पार्वतेयी प्रतित्वा पर्वती वेत्त्विति ॥ उपरिभागवर्तिनि हे उपले, त्वं पार्वतेयी पर्वताभिधाना अधस्तनशिलायाः सम्बन्धिनी पुत्री काष्ठरूपा धिषणासि । पेषणव्यापारस्य धारिका भवसि । अतस्त्वां मातृसमाना पर्वती प्रतिवेत्तु ॥

पार्वतेयीशब्दस्य यथोक्तमभिप्रायं कण्वो दर्शयति ॥ कनियसीव ह्येषा तस्मादा-ह पार्वतेयीति ॥ प्रति त्वेति पदस्याभिप्रायः, संज्ञामेवेत्यादिना पूर्ववदभि-हितः ॥२॥ कात्यायनः ॥ धान्यमसीति तण्डुलानोप्येति ॥ ओप्य दृषदि स्था-

यज्ञन्यं ॥ ३ ॥ प्राणायत्वा । उदानायत्वा व्यानायत्वा ॥ दीर्घामनु प्रसितिमायुषेधां ॥ देवोवः सविता प्रतिगृह्णातु हिरण्यपाणिरच्छिद्रेणपाणिना ॥ चक्षुषेत्वामहीनांपयोसि ॥४॥ वेदोसि । वेदनेन-

पायित्वा ॥ पाठस्तु ॥ धान्यमसि धिनुहि देवान् धिनुहि यज्ञं धिनुहि यज्ञपतिम् । धिनुहि मां यज्ञन्यमिति ॥ धिनोतिधातोः प्रीणनार्थस्य धान्यमिति रूपम् । हे हविस्त्वं धान्यमसि प्रीणयितृ भवसि यतो देवानग्न्यादीन् धिनुहि प्रीणय। तथा यज्ञं यज्ञाभिमानिनं देवं धिनुहि । तथा यज्ञपतिं यज्ञस्वामिनं यजमानं धिनुहि। तथा यज्ञन्यं यज्ञस्य नेतारं मामध्वर्युं धिनुहि। आहुतिद्रव्यस्य स्वल्पत्वेऽपि मन्त्रसामर्थ्येन देवप्रीतिहेतुत्वं युक्तम् ॥ तदाह तित्तिरिः ॥ धान्यमसि धिनुहि देवानित्याह । एतस्य यजुषो वीर्येण यावदेका देवता कामयते यावदेका तावदाहुतिः प्रथते । न हि तदस्ति यत्तावदेतस्या यावज्जुहोतीति ॥ ३ ॥ कात्यायनः ॥ पिनष्टि प्राणाय त्वेति प्रतिमन्त्रमिति ॥ पाठस्तु ॥ प्राणाय त्वोदानाय त्वा व्यानाय त्वेति ॥ प्रकर्षेण अनिति मुखे सर्वदा चेष्टत इति श्वासरूपो वायुः प्राणः। उदाऽऽनिति ऊर्ध्वं चेष्टत इत्युत्क्रान्तिजनको वायुरुदानः। व्यानिति व्याप्य चेष्टत इति शरीरव्यापको वायुर्बलहेतुर्व्यानः। हे तण्डुल, हे हविस्त्वां प्राणाय प्राणरक्षार्थं पिनष्मीति शेषः । एवमुत्तरमन्त्रयोर्योज्यम् ॥ कात्यायनः ॥ दीर्घामिति कृष्णाजिने मोहतीति ॥ पिष्टमसिस्कन्दयेद ॥ पाठस्तु ॥ दीर्घामनु प्रसितिमायुषेऽधाम् । देवो वः सविता प्रतिगृह्णातु हिरण्यपाणिरच्छिद्रेण पाणिनेति ॥ षिञ् बन्धने इति धातुः । प्रसितिः प्रबन्धः कर्मसन्ततिः । आयुषे यजमानस्यायुरभिवृद्ध्यर्थम् । दीर्घामविच्छिन्नां प्रसितिमनु कर्मसन्ततिमनुलक्ष्य त्वा कृष्णाजिने पिष्टं धारितवानस्मि। त्वयां यजमानस्यायुर्वृद्धौ कर्मसन्ततिः प्रवर्तते, न त्वन्यथा ॥ एतदेवाभिप्रेत्य तित्तिरिराह ॥ दीर्घामनुप्रसितिमायुषेऽधामित्याह । आयुरेवास्मिन् दधातीति ॥ देवो व इत्यादि मन्त्रशेषः पूर्ववद्व्याख्येयः ॥ कात्यायनः ॥ पिष्यमाणेषु निर्वपत्यग्नो महीनामित्याज्यमिति ॥ असीति मन्त्रशेषः । यदाध्वर्युस्तण्डुलान् पिनष्टि तदानीमाग्नीध्र आज्यं निर्वपेत् । हे आज्य त्वं महीनां गवां पयोऽसि क्षीरमसि क्षीरेणोत्पादितमसीत्यर्थः ॥ महीशब्दस्य गोवाचकत्वं कण्वो दर्शयति ॥ मह्यो वा एता एतेनाम्नायाद्दान इति ॥ ४ ॥ कात्यायनः ॥ पत्नी वेद प्रमुञ्चत । वेदो-

त्वंदेववेददेवेभ्योवेदोभवः ॥ तेनमह्यंवेदोभव ॥ ८ ॥

देवस्यंत्वा । सवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां ॥ संवपामिसमापऽओषधीभिःसमोषधयोरसेन ॥ सꣳरेवतीर्जगती- भिः संमधुमतीर्मधुमतीभिः पृच्यंतां ॥ जनंयत्वैत्वासंयौमि ॥ १ ॥

---

ऽसीति ॥ पाठस्तु ॥ वेदोऽसि वेद येन त्वं देववेद देवेभ्यो वेदो भवः । तेन मह्यं वेदो भवेति ॥ अयं मन्त्रः प्रयोगानुसारेणान्यत्रोत्कर्षणीयः । संमार्जनार्थं दर्भमुष्टिना निर्मितः पदार्थो वेदः। तं पदार्थम् ऋगादिवेदात्मना स्तौतीति । दर्भमुष्टिनिर्मित हे पदार्थ त्वं वेदोऽसि ऋगाद्यात्मकोऽसि । यद्वा, विद ज्ञान इति धातोरुत्पन्नत्वाद्वेदितासीत्यर्थः । येन कारणेन त्वं देवोऽसि. अतो हे देववेद द्योतनात्मकवेदनाख्यपदार्थ देवेभ्यो देवोपकारार्थं वेदो ज्ञापकस्त्वमभवः पूर्वमेवाऽभूः । तेन कारणेन मह्यं मदनुग्रहार्थं वेदो भव ज्ञापको भूयाः ॥ ८ ॥ इति प्रथमेऽध्याये सप्तमोऽनुवाकः ॥ ७ ॥

सप्तमे पेषणमन्त्रा उक्ताः । अष्टमे श्रपणमन्त्राः पुरोडाशविषया उच्यन्ते ॥ कात्यायनः ॥ पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्य त्वेति ॥ पाठस्तु ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां संवपामीति ॥ हस्ताभ्यामित्येतदन्तं पूर्ववद्व्याख्येयम् । संवपामि एतानि पिष्टानि पात्र्यां सम्यक् प्रक्षिपामि ॥ कात्यायनः ॥ उपसर्जनीरानयत्यन्यः पवित्राभ्यां प्रतिगृह्णाति समाप इतीति ॥ पिष्टेषु सेचनीया आप उपसर्जन्यः । आग्नीध्रस्ता आनयेत् । तदानीमध्वर्युः पवित्राभ्यां सहितो मन्त्रेण ताः प्रतिगृह्णीयात् ॥ पाठस्तु ॥ समाप ओषधीभिः समोषधयो रसेन । सꣳ रेवतीर्जगतीभिः संमधुमतीर्मधुमतीभिः पृच्यन्तामिति ॥ पृची सम्पर्क इतिधातुः । ओषधीभिः पिष्टरूपाभिराप इदानीं प्रतिगृहीतान्युदकानि संपृच्यन्तां सम्यगेकीभवन्तु । तथा पिष्टरूपा ओषधयोऽपि रसेन यथोक्तोदकरसेन संपृच्यन्ताम् । रेवतीः रैवत्य आपः, जगतीभिः पिष्टरूपाभिः संपृच्यन्ताम् ॥ रैवत्य आपो जगत्य ओषधय इति हि कण्वेनाम्नातम् । मधुमतीर्माधुर्योपेता आपो, मधुमतीभिर्माधुर्योपेताभिः पिष्टरूपाभिरोषधीभिः संपृच्यन्ताम् । अपामोषधीनां च परस्परप्रीतिहेतुत्वात् संपर्को युक्तः ॥ तदाह तित्तिरिः ॥ आपो वा ओषधीर्जिन्वन्ति ओषधयोऽपो जिन्वन्ति । अन्या वा एतासामन्या जिन्वन्ति तस्मादेवमाहेति ॥ जिन्वन्ति

इदमग्ने । इदमग्नीषोमयोरिषे त्वा ॥ घर्मोऽसि विश्वायुरुरुप्रथा ऽउरुप्रथस्वोरु ते यज्ञपतिः प्रथतां ॥ २ ॥ अग्निष्टे । त्वचं माहिंसीः

मीणयन्तीत्यर्थः ॥ कात्यायनः ॥ संयौति जनयत्यै त्वेतीति ॥ संयवनमपां पिष्टानां च मिश्रीकरणम् ॥ पाठस्तु ॥ जनयत्यै त्वा संयौमीति ॥ जलपिष्टरूप हे पदार्थद्वय, त्वां जनयत्यै यजमानस्य प्रजोत्पादनार्थं संयौमि सम्यङ् मिश्रीकरोमि । यु मिश्रणामिश्रणयोरिति धातुः । अनयोर्द्रव्ययोर्यथा मिश्रणं तथा शुक्रशोणितमिश्रणेन यजमानस्य प्रजोत्पत्तिर्भवति ॥ एतदेव तित्तिरिर्विशदयति ॥ जनयत्यै त्वा संयौमीत्याह । प्रजा एवैतेन दधातीति ॥१॥ कात्यायनः ॥ समं विभज्यासंहरिष्यन्नालभत इदमग्नेरिदमग्नीषोमयोरितीति ॥ मिश्रीकृतं पिष्टसमूहं समं यथा भवति तथा द्वेधा विभज्य भागद्वयं पुनरेवमेव पिष्टान् पृथगेव स्पृशेत् । इदं पिष्टस्य प्रथमार्द्धमग्नेरग्निसम्बन्धि भवत्विति शेषः । इदं द्वितीयार्धमग्नीषोमयोर्भवतु ॥ कात्यायनः ॥ इषे त्वेत्याज्यमधिश्रयतीति ॥ आज्यस्य प्रविलापनार्थं तत्पात्रस्याग्नौ स्थापनमधिश्रयणम् । हे आज्य त्वाम् । इषे इष्यमाणतृप्त्यर्थमधिश्रयेतीति शेषः ॥ तदेतत् कण्वो विस्पष्टयति ॥ स इषे त्वेत्यधिश्रयति वृष्टये तदाह यदिषे त्वेतीति ॥ कात्यायनः ॥ घर्मोऽसीति पुरोडाशमिति ॥ अधिश्रयतीत्यनुवर्तते । विश्वायुरिति मन्त्रशेषः । घृ क्षरणदीप्त्योरिति धातुः । अतो घर्मशब्दो दीप्यमानं प्रवर्ग्यं ब्रूते । हे पुरोडाश, त्वं श्रप्यमाणतया घर्मोऽसि दीप्यमानत्वात् प्रवर्ग्योऽसि । तथा विश्वायुः विश्वं कृत्स्नं यजमानसम्बन्ध्यायुर्यस्य पुरोडाशरूपस्य तत्रास्ति स त्वं विश्वायुः ॥ एतमभिप्रायं तित्तिरिर्दर्शयति ॥ घर्मोऽसि विश्वायुरित्याह । विश्वमेवायुर्यजमाने दधातीति ॥ प्रवर्ग्यरूपत्वोपचारप्रयोजनं कण्वो दर्शयति ॥ अथायमधिवृणक्ति पुरोडाशं घर्मोऽसि विश्वायुरिति यज्ञमेवैनं तत्करोति । यथा घर्मं प्रवृञ्ज्यादेवं प्रवृणक्तीति ॥ कात्यायनः ॥ उरु प्रथा इति प्रथयति यावत्कपालमिति ॥ कपालेष्वधिश्रितं पुरोडाशं कपालपरिमाणमनतिक्रम्य सर्वेषु कपालेषु संश्लेषयितुं प्रसारयेत् ॥ पाठस्तु ॥ उरु प्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति ॥ प्रथ प्रख्यान इति धातुः । हे पुरोडाश, त्वं स्वभावत उरु प्रथा उरु विस्तीर्णं यथा भवति तथा प्रथस्व । तथा ते यज्ञपतिः उरु प्रथतां प्रख्यातो भवतु ॥ २ ॥ कात्यायनः ॥ अग्निष्टमित्यङ्गारैरभिमृशतीति ॥ पाठस्तु ॥

ऽन्तरितꣳ रक्षोऽन्तरिताऽअरातयः ॥ देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधिनाके ॥ ३ ॥ माभेः । मा संविक्थाऽअतमेरुर्यज्ञोऽतमेरुर्यजमान-

---

अग्निष्टे त्वचं मा हिꣳसीदिति ॥ हे पुरोडाश, श्रपणाय प्रवृत्तोऽग्निस्ते त्वचं त्वदीयां, त्वग्रूपशरीरमुपरितनभागं मा हिꣳसीन्मा विनाशयतु । अतिदाहेन मषीभावो विनाशः । सोऽत्र मा भवत्वित्यर्थः । पूर्वमवघातपेषणाभ्यां हविषो य उपद्रव आसीद्, यः श्रपणेन भविष्यति । तत् सर्वमुदकस्पर्शेन शाम्यति । तमिममर्थं यद्वोऽशस्याघ्नतो वा पिष्टो वेत्यादिना कण्वः स्पष्टीचकार ॥ कात्यायनः ॥ पर्यग्नि करोत्यन्तरितमिति सहाज्यामिति ॥ पाठस्तु ॥ अन्तरितꣳ रक्षोऽन्तरिता अरातय इति ॥ अन्तरितं विनाशितम् । व्याख्यातमन्यत् । ज्वलद्भिर्दर्भैः परितो रक्षसां शोधनं पर्यग्निकरणम् । एतस्य पर्यग्निकरणस्य पशौ विहितत्वादत्रापि पर्यग्निकरणेन पुरोडाशः पशुत्वेनोपचर्यते ॥ तदेतदाह तित्तिरिः ॥ घर्मो वा एषोऽशान्तः । अर्धमासेऽर्धमासे प्रवृज्यते यत्पुरोडाशः ईश्वरो यजमानꣳ शुचाऽप्रदहः पर्यग्नि करोति पशुमेवैनमकः शान्त्या अप्रदाहायेति ॥ अयमर्थः । पुरोडाशो योऽस्ति स एव दीप्यमानोऽग्निर्भूत्वा न कदाचिदपि शाम्यति प्रतिपक्षं तप्तकपालैः सन्तप्यमानत्वात् । स च तापेन यजमानं प्रदग्धुं समर्थः । तत्र पशूपचारेण पर्यग्निकरणेन पुरोडाशे पशुकृते सति प्रदीप्ताग्निरूपपरित्यागेन यजमानं न प्रदहतीति ॥ किञ्च, पर्यग्निकरणेन रक्षसामत्र प्रवेष्टुं यच्छिद्रं सम्भावितं तन्निवार्यते ॥ तदेतदाह कण्वः ॥ अथैनं पर्यग्नि करोत्यच्छिद्रमेवैनमेतत्समन्तमग्निना परिगृह्णाति नेदेन नाष्ट्रा रक्षाꣳसि प्रमृशानित्यग्निर्हि नाष्ट्राणाꣳ रक्षसामपहन्तेति ॥ कात्यायनः ॥ देवस्त्वेति श्रपणमिति ॥ कुर्यादिति शेषः ॥ पाठस्तु ॥ देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधिनाक इति ॥ हे पुरोडाश, वर्षिष्ठे अत्यन्तप्रवृद्धे नाके द्युलोकवर्तिनि नाकनाम्न्यग्नौ त्वामधिश्रित्य सविता देवः श्रपयतु पक्वं करोतु । स च मनुष्यस्य श्रपणकर्तृत्वं मा भूदित्यभिप्रेत्य, देवस्त्वेत्युच्यते ॥ तदाह कण्वः ॥ न वा एतस्य मनुष्यः श्रपयिता तदेनं देव एव सविता श्रपयत्विति ॥ नाकनामकेनाग्निना रक्षांसि हन्यन्ते ॥ तदाह तित्तिरिः ॥ पुरोडाशं वा अधिश्रितꣳ रक्षाꣳस्यजिघाꣳसन् । दिवि नाको नामाग्निः रक्षोहा स एवास्माद्रक्षाꣳस्यपाहन्निति ॥ ३ ॥ कात्यायनः ॥ माभेरित्यालभते इति ॥ पाठस्तु ॥ मा भेर्मा संविक्था

स्यप्रजाभूयात् ॥ त्रितायत्वाद्वितायत्वैकतायत्वा ॥ ४ ॥

इति ॥ हे पुरोडाश मा भेर्भयं मा कार्षीः । मा संविक्थाः, चलनं मा कार्षीः । ञिभी भये । ओविजी भयचलनयोरिति च धातुद्वयम् । योऽयं पुरोडाशो मनुष्येणाध्वर्युणा कृतस्तमिमं मनुष्य एव स्पृशति । ततो भयचलनयोरभावः ॥ तमेतमभिप्रायं कण्ठो दर्शयति ॥ सोऽभिमृशति मा भेर्मा संविक्था इति । मा भैषीर्मा संविक्था यं त्वा मानुषः सन्तं मानुषोऽभिमृशामीत्येवैतदाहेति ॥ कात्यायनः ॥ अतमेरुरिति शृतावभिवासयति भस्मना वेदेन वोपवेषेण वेति ॥ शृतिः पाकः । तस्मिन्निमित्तभूते सति सम्यक्पाकसिद्ध्यर्थमाच्छादयेत् ॥ पाठस्तु ॥ अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयादिति ॥ तमु ग्लान इति धातुः । अतमेरुर्ग्लानिरहितः । यज्ञो यागहेतुः पुरोडाशः । तस्मादेतदभिवासनेन यजमानस्य प्रजा पुत्रपौत्रादिः । अतमेरुर्ग्लानिरहितो भूयात् । अस्याभिवासनस्य प्रयोजनं तित्तिरिः स्पष्टमाह ॥ मस्तिष्को वै पुरोडाशः । तं यन्नाभिवासयेत् । आविर्मस्तिष्कः स्यात् । अभिवासयति तस्माद्गुहा मस्तिष्कः । तस्मान्नाभिवासयति । तस्मान्मांसेन रसेनास्थिच्छन्नं वेदेनाभिवासयति । तस्मात्केशैः शिरश्छन्नमिति । शिरस्यवस्थितो मेदसः खण्डो मस्तिष्कः, गुहा गूढ आच्छन्नः । मेदःस्थानीयस्य मस्तिष्कस्य मांसस्थानीयं तस्याच्छादकम् । तस्यापि केशस्थानीया वेदगतदर्भा आच्छादका इत्यर्थः ॥ पात्र्यङ्गुलिप्रक्षालन-८ मास्येभ्यो निनयत्याभतप्य प्रसृगसंस्पन्दमानं त्रिताय त्वेति प्रतिमन्त्रमिति ॥ तमेतं विनियोगं बौधायनः स्पष्टमाह ॥ अत्रैतत्पात्रीप्रक्षालनं गार्हपत्याद्दक्षिणाभिनप्य हृत्वाऽन्तर्वेदि प्रतीचीन तिसृषु लेखासु निनयतीति ॥ आपस्तम्बोऽप्याह ॥ अङ्गुलिप्रक्षालन पात्रीनिर्णेजन चोल्मुकेनाभितप्य स्फ्येनान्तर्वेदि तिस्रो लेखा लिखति प्राचीरुदीचीर्वा ताः संस्पन्दयंस्त्रिर्निनयति । प्रसगपवर्गमिति ॥ पाठस्तु ॥ त्रिताय त्वा द्विताय त्वैकताय त्वेति ॥ हे पात्र्यऽङ्गुलिप्रक्षालनोदक, त्वां त्रितनाम्ने देवाय निनयामि तथा त्वा द्वितनाम्ने निनयामि तथा त्वामेकतनाम्ने निनयामि ॥ एतेषां त्रयाणां देवानामुत्पत्तिप्रकारस्तित्तिरिणा समाम्नातः ॥ देवान् वै हविर्भूत्वाऽब्रुवन् कस्मिन्निद् म्रक्ष्यामह इति । सोऽग्निरब्रवीत् । मयि तनूः संनिधध्वम् । अहं वस्तं जनयिष्यामीति । ते देवा अग्नौ तनूः संन्यदधत । तस्मादाहुः अग्निः सर्वा देवता इति । सो-

देवस्यत्वा । सवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ आददेऽध्वरकृतंदेवेभ्यः ॥ इन्द्रस्यबाहुरसिदक्षिणः सहस्रभृष्टिः शततेजाः ॥ वायुरसितिग्मतेजाद्विषतोवधः ॥ १ ॥ पृथिव्यैत्व-

---

ऽङ्गारेणापः अभ्यपालयत् । तत एकतोऽजायत । स द्वितीयमभ्यपालयत् । ततो द्वितोऽजायत । स तृतीयमभ्यपालयत् । ततस्त्रितोऽजायत । यदद्भ्योऽजायन्त तदाप्त्यानामाप्त्यत्वम् । तदेव अप्त्येषु मृजतेति । देवाः पूर्वं व्रीह्यवघातादिना हविः सम्पाद्य बीजवधादिपापलेपः कस्मिन् पुरुषे मार्जनीय इति विचार्याऽग्निवचनेन स्ववीर्यमग्नौ स्थापितवन्तः । ततः सोऽग्निः सर्ववीर्यधारिणाऽङ्गारेणाब्देवतामभिलक्ष्य तद्वीर्यमपातयत् । तस्मादुत्पन्नानामेकतादिनामकानां देवविशेषाणाम्, आपो मातरो देवतात्मानः पितर इत्याप्त्यनामकत्वं च युक्तम् ॥ कण्वोऽपि, चतुर्थ्यो विहितो ह वा अयमग्र आसेत्यादिना बहुधा प्रपञ्चयामास ॥ ४ ॥ इति प्रथमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

अष्टमे पुरोडाशमन्त्रा उक्ताः । नवमे वेदिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ देवस्य त्वेति स्फ्यमादायेति ॥ स्फ्यशब्देन दारुमयोऽरत्निप्रमाणः खननहेतुर्यज्ञायुधविशेष उच्यते ॥ कण्वोऽपि तत्स्वीकारं विधत्ते ॥ तमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददेऽध्वरकृतं देवेभ्यः ॥ तदेतद्देवस्य त्वेत्यादिकं, हस्ताभ्यामित्येतदन्तं पूर्वमेव व्याख्यातम् । देवेभ्यो देवोपकारार्थम् । अध्वरकृतं वेदिखननादिद्वारेण अध्वरं यज्ञं करोतीत्यध्वरकृत् ॥ अत एव कण्व आह ॥ यज्ञो वा अध्वरो यज्ञकृद्देवेभ्य इति वा वै तदाहेति ॥ तादृशं स्फ्यमाददे स्वीकरोमि । स्फ्यस्य वज्रांशत्वात् । खननादिनामर्थ्यमस्ति ॥ तस्य वज्रांशत्वं तित्तिरिराह ॥ इन्द्रो वृत्राय वज्रं प्राहरत् । स त्रेधा व्यभवत् । स्फ्यस्तृतीयः रथस्तृतीयः यूपस्तृतीयमिति ॥ कण्वस्त्विन्द्रो ह वा इत्यादिना स्फ्यस्य वज्रे चतुर्थांशत्वं प्रपञ्चयामास ॥ कात्यायनः ॥ सतृणं प्रत्यञ्चं कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरसि इति ॥ सतृणं केनचित्तृणेन सहितं स्फ्यमित्यर्थः ॥ पाठस्तु ॥ इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजाः । वायुरसि तिग्मतेजा द्विषतो वध इति ॥ वज्रांशरूप स्फ्य त्वम् इन्द्रस्य दक्षिणो बाहुरसि । तेन बाहुना धृतत्वात् तत्समानवीर्यत्वाद् वा बाहूपचारः ॥ अनेनोपचारेण तद्बाहुसमानवीर्यत्वं कण्वो

र्मी । मि॒पृ॒थि॒वि दे॒व॒य॒ज॒नि ॥ ओष॑ध्यास्ते॒ मूलं॒ मा हि॑ꣳसिषं ॥ २ ॥ व्र॒जं ग॑च्छ गो॒स्था॒नं वर्ष॑तु ते॒ द्यौर्ब॑धा॒न दे॑व सवितः पर॒मस्यां॑ पृथि॒व्याः श॒-

दर्शयति ॥ एष वै वीर्यवत्तमो यदिन्द्रस्य बाहुर्दक्षिणस्तद्वीर्यमेवास्मिन् दधाति । यदाहेन्द्रस्य बाहुरसि दक्षिण इतीति ॥ कथम्भूतः स्फ्यः । सहस्रभृष्टिः । भर्जनं पाको मारणमित्यर्थः । सहस्रसंख्यानां शत्रूणां भृष्टिर्यस्याऽसौ सहस्रभृष्टिः । यथा वज्रोऽसुराणां मारकस्तथा स्फ्योऽपि पाप्मना विनाशकः । शततेजाः । यथा वज्रस्य शतसंख्याका धारा भवन्ति दीप्यमानास्तथा स्फ्यस्यापि वज्रांशत्वाच्छततेजस्त्वोपचारः । वायुरसि तिग्मतेजाः । न केवलमिन्द्रसदृशः, किन्तु वायुसदृशोऽप्यसि । यथा वायुस्तीक्ष्णामग्निज्वालामुत्पादयंस्तिग्मतेजास्तथा स्फ्योऽपि वक्ष्यमाणस्तम्बच्छेदरूपं तीव्रं कर्म कुर्वंस्तिग्मतेजा इत्युच्यते । द्विषतो वधः । अनुष्ठानद्वेषिणोऽसुरादेर्वधहेतुः ॥ १ ॥ कात्यायनः ॥ तेन स्तम्बयजुर्हरिष्यन् वेद्यां तृणं निदधात्युदक्पृथिव्यै वर्मासीति ॥ हे तृण, त्वं पृथिव्यै वेदिस्थानरूपाया भूमेर्वर्मासि कवचस्थानमसि । यथा कवचेन शस्त्रप्रहारोपद्रवः परिह्रियते । तथा स्फ्येन वेदिखननावसरे भूम्युपद्रवस्तृणेन परिह्रियते ॥ कात्यायनः ॥ पृथिवि देवयजनीति तृणेऽन्तर्हिते प्रहरतीति ॥ ओषध्यास्ते मूलं मा हिꣳसिषमिति मन्त्रशेषः । हे देवयजनि, देवयागाश्रयभूते पृथिवि ते त्वदीयाया ओषध्यास्तृणरूपाया मूलं मा हिꣳसिषं मा विनाशयामि । अत्र देवयजनीति विशेषणेन चातिलोहिताभ्यामापादितमशुचित्वं निवार्यते ॥ तदाह तित्तिरिः—

विपाद्वै नामाऽसुर आसीत् । सोऽबिभेत् । यज्ञेन मा देवा अभिभविष्यन्तीति । स पृथिवीमभ्यवमीत् । अमेध्योऽभवत् । अथो यदिन्द्रो वृत्रमहन्नत् । तस्य लोहितं पृथिवीमनु व्यधावत् । अमेध्याऽभवत् । पृथिवि देवयजनीत्याह । मेध्यामेना देवयजनीं करोति । ओषध्यास्ते मूलं मा हिꣳसिषमित्याह । ओषधीनामहिꣳसाया इति ॥ विपमत्ति भक्षयतीति विपात् । अत एवाऽयमसुर एतन्नामकः ॥ २ ॥ कात्यायनः ॥ व्रजं गच्छेति पुरीषमादत्त इति ॥ स्फ्यस्य प्रहारेण निष्पन्ना इयं धूलिः, सा पुरीषमित्युच्यते । गोष्ठानमिति मन्त्रशेषः । हे पुरीष, त्वं व्रजं गच्छ । व्रजन्ति गच्छन्ति गावोऽवस्थातुं यस्मिन् देशे स देशो व्रजः । तं व्रजं प्रति गच्छ, गोष्ठानं गवां स्थानम् । इदानीमवस्थितिर्यस्य

तेन॒पाशैः॑ ॥ यो॒ऽस्मान्द्वेष्टि॒यंच॒व॒यंद्वि॒ष्मस्तमतो॒मामौक् ॥ ३ ॥ अ॒पार॑रुं वध्यासं पृथि॒व्यै दे॒वयजनात् ॥ व्र॒जंगच्छगो॒ष्ठानं॒वर्षतुते॒द्यौ॒र्ब॒धानदे॒वसवितः प॒रमस्यांपृथि॒व्यां॒ऽश॒तेन॒पाशैः ॥ यो॒ऽस्मान्द्वे॒ष्टि॒यंच॒व॒यंद्वि॒ष्मस्तमतो॒मामौक् ॥ अर॑रोदि॒वंमापप्तो॒द्र॒प्सस्ते॒द्यांमा-

व्रजस्य स व्रजो गोष्ठान एव वर्तमानः । गोभिरुपेतं तदीयदेशं गच्छ ॥ कात्यायनः ॥ वर्षतु त इति वेदिं प्रोक्षत इति ॥ द्यौरिति मन्त्रशेषः । हे वेदि, ते त्वदर्थं द्यौर्द्युलोकाभिमानी देवो वर्षतु जलसेचनं करोतु । वृष सेचन इति धातुः । खननोपद्रवपरिहारो वर्षणस्य प्रयोजनम् ॥ तदाह कण्वः ॥ यत्र खनति तदसंरोहयति तद्दशमयतीति ॥ कात्यायनः ॥ बधानेत्युत्करे करोतीति ॥ उत्करो नाम वेदेरुत्तरभागे तृणधान्यादिपरित्यागप्रदेशः । खननसमानीतां धूलिं तस्मिन्नुत्करे परित्यजेत् ॥ पाठस्तु ॥ बधान देव सवितः परमस्यां पृथिव्याम् शतेन पाशैः । योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् इति ॥ हे सवितः, प्रेरक, देव, परमस्यामन्तिमायां पृथिव्यां शतेन पाशैः शतसंख्याभिर्बन्धनरज्जुभिर्बधान । अस्मद्विरोधिनोऽसुरस्याऽऽनीतायां धूल्यां निगूढस्य बन्धनं कुरु भूमेरन्तिमप्रदेशो योऽन्धतामिस्रो नरकोऽस्तीति तस्मिन्ना बधानेत्यर्थः ॥ तथाह कण्वः ॥ एवमेवैतत् सवितारमाहाऽन्धे तमसि बधानेति । यदाह परमस्यां पृथिव्यामिति ॥ अत्र बन्धनीयो यः शत्रुरस्मान् द्वेष्टि, यं च बन्धनीयं शत्रुं वयं द्विष्मः । तमेनमुभयविधमपि अतोऽस्मादन्धतामिस्रनरकान्मा मौक् कदाचिदपि मा मुञ्च ॥ ३ ॥ कात्यायनः ॥ अपाररुमिति द्वितीयं प्रहरतीति ॥ पाठस्तु ॥ अपाररुं वध्यासं पृथिव्यै देवयजनादिति ॥ अररुनामको योऽसुरः पृथिव्यां वेदिस्थाने गूढाशये स्थितस्तमेनमररुं पृथिव्यै देवयजनात् पृथिव्याः संबन्धिने देवयजनाख्यात् वेदिस्थानाद् अपवध्यासम् । अपनीय यथा हतो भवति तथा करवाणि । अनेन मन्त्रेण द्वितीयवारं पूर्ववत् प्रहरेत् ॥ तदेतद् अररुभयं तित्तिरिर्दर्शयति ॥ अररुर्वै नामासुर आसीत् । स पृथिव्यामुपप्लुतोऽशयत् । तं देवा अपहतोऽररुः पृथिव्या इति पृथिव्या अपाघ्नन्निति ॥ कण्वोऽप्यररुर्ह वै नामेत्यादिना दर्शयति ॥ व्रजमित्यादिमन्त्रत्रयप्रयोगः पूर्ववत् ॥ पाठस्तु ॥ व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्या ऽशतेन पाशैः । योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति ॥ पूर्ववद्व्या-

स्कन् ॥ व्रजंगच्छगोष्ठानंवर्षतुतेद्यौर्बधानदेवसवितः परमस्यांपृथिव्याᳪशतेनपाशैः ॥ योस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतोमामौक् ॥ ४ ॥ गायत्रेणत्वाछंदसापरिगृह्णामित्रैष्टुभेनत्वाछंदसापरिगृह्णामिजागतेनत्वाछंदसापरिगृह्णामि ॥ सुक्ष्माचासिशिवाचा-

---

स्योनम ॥ कात्यायनः ॥ महरणाद्यभिन्नस्पस्पधीदुत्करमस्तो दिवमतीति ॥ महरणेन निष्पन्नां शत्रूणां धूलिमाग्नीध्रः, उत्करदेशे परित्यजेत् । मापप्त इति मन्त्रशेषः । हे अररो, दिवं यागफलरूपं द्युलोकमाप्तः माप्तो मा भूत् ॥ कात्यायनः ॥ द्रप्सस्त इति तृतीयमिति ॥ महरतीत्यनुवर्तते । द्यां मास्कानिति मन्त्रशेषः । हे वेदिदेव, ते पृथिवीरूपायास्तव द्रप्स उपजीव्यो रसो द्यां द्युलोकं मा स्कन् मा स्कन्दतु मा गच्छतु । स्कन्दिर् गतिशोषणयोरिति धातुः । उत्तरमन्त्रयपाठस्तु ॥ व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳪ शतेन पाशैः । योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति ॥ विनियोगोपव्याख्यानं पूर्ववत् ॥ ४ ॥ कात्यायनः ॥ पूर्वं परिग्राहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फयेन गायत्रेणेति प्रतिमन्त्रमिति ॥ यस्माद् भूमदेशादसुरैर्निष्कासितस्तस्मिन् प्रदेशे वेदेरियत्तां निश्चेतुं दक्षिणादिदिक्त्रये स्फयेन रेखात्रयं कुर्यात् । सोऽयं पूर्वः परिग्राहः ॥ पाठस्तु ॥ गायत्रेण त्वा छन्दसा परिगृह्णामि त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि जागतेन त्वा छन्दसा परिगृह्णामीति ॥ हे वेदि त्वा गायत्र्यादिच्छन्दस्त्रयरूपतया भावितेन स्फयेन दिक्त्रये परिगृह्णामि । ततश्छन्दोदेवता दिक्त्रये त्वामसुरेभ्यः पालयिष्यन्ति । पूर्वस्यां दिश्याहवनीयाग्निरेव पालकोऽस्तीत्यभिप्रायः । पुरा कदाचिदसुराणां विजये सत्येषा पृथिवी कृत्स्नाऽपि तेषामेव स्वभूतासीत् । देवानां तु भूम्यंशकोऽपि स्वभूतो नाऽभूत् । किन्तु यो देवो यत्र यदोपविष्टो यावद्दूरं पश्यति तत्र तावान् देशस्तस्य देवस्य तदा स्वाधीनोऽभवत् । ततो देवा असुरानयाचन्त । युष्मदधीनायामस्यां पृथिव्यां कोऽप्यंशो नियतोपेक्षितः । तत्र तत्र कियत् स्थानमस्मभ्यं दास्यथेति । ततोऽसुरा यावद्भवद्भिः परिगृहीतं तावद् दास्याम इत्यब्रोचन् । तस्मादयं वेदिपरिग्राहः ॥ तमिममर्थं तित्तिरिराह ॥ असुराणां वा इयमग्र आसीत् । यावदासीनः परापश्यति तावद्देवानाम् । ते देवा अब्रुवन् कस्त्वेव नोऽस्यामपीति कियत्सेयं स्वांशोऽन्यो दास्यथे-

सिस्योनाचासिंसुपदांचासि ॥ ऊर्जस्वतीचासिपयस्वतीच ॥५॥ पुराक्रूरस्यंविसृपोंविरप्शिन्नुदादायं पृथिवींजीवदानुं ॥ यामैरयं श्चन्द्रमसिस्वधाभिस्तांधीरासोअनुदिश्यंयजन्ते ॥ प्रोक्षितोवयो-

ति। यावत् स्वयंपरिगृह्णीयेतीति॥कण्वस्तु, देवाश्च वा असुराश्चोभये प्राजापत्या अस्पर्द्धन्तेत्यादिना वेदिपरिग्राहतात्पर्यं प्रपञ्चयामास ॥ कात्यायनस्तु, उत्तरं परिग्राहं परिगृह्णातीति, सुक्ष्मा-स्योनोर्जस्वतीति प्रतिमन्त्रं पूर्ववदिति॥वेदिखननात्पुरा क्रियमाणः पूर्वपरिग्राहः।पश्चात्क्रियमाण उत्तरपरिग्राहः। तस्मिन्नुत्तरपरिग्राहे पूर्वपरिग्राहवद्दक्षिणादिदिक्त्रये स्फ्येन रेखात्रयं कुर्यात् ॥ मन्त्रत्रयपाठस्तु ॥ सुक्ष्मा चासि शिवा चासि। स्योना चासि सुपदा चासि। ऊर्जस्वती चासि पयस्वती चेति ॥ हे वेदि त्वं खननेन संपादिता सती सुक्ष्मा शिवेत्येवं विधगुणयुक्ता भवसि। क्ष्मा भूमिः शोभना क्ष्मा सुक्ष्मा। खननेन पाषाणादिदोषराहित्यसम्पादनं पृथिव्याः शोभनत्वम्। उग्रस्य भूमौ निगूढस्यासुरस्य निष्कासनेन शान्तत्वम्। गुणद्वयस्यान्योन्यसमुच्चयार्थौ चकारौ। सोऽयं प्रथमो मन्त्रः। स्योना सुखरूपा। स्योनशब्दस्य सुखनामसु पाठात्। सुपदा। सम्यगुपवेशनयोग्या। सुष्ठु सीदन्ति देवा अस्यामिति व्युत्पत्तेः। चकारौ पूर्ववत्। सोऽयं द्वितीयो मन्त्रः। ऊर्क्शब्दो माधुर्यादिरसवाची। पयःशब्दो रसहेतोर्जलस्य क्षीरस्य च वाचकः। तदुभययुक्तासि। चकारौ पूर्ववत्। सोऽयं द्वितीयो मन्त्रः। अन्तेऽप्यसीत्यनुवर्त्तते। पूर्वपरिग्राहेण वेदिरूपां पृथ्वीं लब्ध्वोत्तरपरिग्राहेण यथोक्तगुणयुक्तां देवा अकुर्वन् ॥ सोऽयमर्थः, इमामेवैतत्पृथिवीं संविद्य सुक्ष्मां शिवामकुर्वन्नित्यादिना विस्पष्टं कण्वेनोदाहृतः ॥ ५ ॥ कात्यायनः ॥ पुरा क्रूरस्येत्यनुमार्ष्टीति ॥ वेदेरुपरीत्यर्थः ॥ पाठस्तु॥पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुं यामैरयंश्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदिश्य यजन्त इति ॥ अत्रैषमाख्यायिका मन्त्रेणाभिप्रेता। कदाचित् किल देवानामसुरैः सह संग्रामः प्राप्तः। तत्र प्रमादयो देवा इत्थं संमन्त्र्येदं चक्रुः। देवासुरसंग्रामे सति तेषां रुधिरादिभिरियं भूर्दूषिता देवयजनानर्हा भविष्यति। अतो भुवः सूक्ष्मरूपं सारभूतमादाय चन्द्रमण्डले स्थापयिष्याम इति ॥ तामिमामाख्यायिकां, देवा ह वा असुरैः संग्रामं संनिधास्यन्त इत्यादिना कण्वो दर्शयामास ॥ अस्मिन्मन्त्रे क्रूरश-

सि॥६॥ ॥प्रत्युष्टꣳरक्षःप्रत्युष्टाअरातयोनिष्टप्तꣳरक्षोनिष्टप्ता

न्दः संग्रामवाची ॥ तत्र कण्वेनैवमाम्नातम् ॥ संग्रामो वै क्रूरं संग्रामे हि क्रूरमिव क्रियते । हतोऽश्वो हतः पुरुषः शेत इति ॥ क्रूरशब्दस्य विरप इति विशेषणम् । विविधं सर्पन्ति योधा अस्मिन्निति विरप् संग्रामः । विरपः क्रूरस्येति पञ्चम्यर्थे षष्ठ्यौ । तथा सति विरपः क्रूरस्य पुरेत्युक्ते युद्धात् पूर्वमित्युक्तं भवति ॥ तदुक्तं कण्वेन पुरा संग्रामादित्येवैतदाहेति ॥ विरप्शिन्निति महतः परमेश्वरस्य संबोधनं, महन्नामसु पाठात् । विरप्शिनद्भुत इति पठितत्वात् । जीवदानुं जीवस्य दात्रीं यां पृथिवीमुदादाय अत्यन्तसारभूतां पृथिवीं मंक्षिप्योद्धृत्यादाय चन्द्रमस्यैरयन् चन्द्रमण्डले देवाः प्रक्षिप्तवन्तः । केन साधनेन प्रक्षिप्तवन्त इति तदुच्यते । स्वधाभिः । यद्यपि स्वधाशब्दोऽन्ननामसु पठितः । तथापि तेन शब्देन तत्साधनभूता वेदत्रयगता मन्त्रविद्या उच्यन्ते ॥ पृथिव्याः सारांशस्य वेदत्रयरूपेण साधनेन यत् स्थापनं तत् कण्वेनैव व्याख्यातम् ॥ उदादाय पृथिवीं जीवदानुमिति ॥ यद्वा, अस्या जीवममन्यन्त तच्चन्द्रमसि न्यदधत । यामैरयꣳश्चन्द्रमसि स्वधाभिरिति । या मधुश्चन्द्रमसि ब्रह्मणेत्येवैतदाहेति ॥ चन्द्रमण्डले मृगरूपः कृष्णवर्णो यः कलङ्को दृश्यते सोऽयं भूमेः सारांशः । पुरा द्यावापृथिव्यौ सहैवावस्थिते सत्यौ यदा परस्परं वियुज्येते स्म तदानीमन्योन्यसारांशं यज्ञयोग्यमन्योन्यस्वरूपेण स्थापितवत्यौ । तत्र भूमेः सारांशश्चन्द्रमसि दृश्यमानः कृष्णरूपमिवेति तित्तिरिराह ॥ द्यावापृथिवी सहास्तां ते वियती अब्रूताम् । अस्त्येव नौ सह यज्ञियमिति । यदमुष्या यज्ञियमासीत् । तदस्यामदधात् । तदूषा अभवत् । यदस्या यज्ञियमासीत् । तदमुष्यामदधात् । ततश्चन्द्रमसि कृष्णमिति ॥ धीरासो धीरा बुद्धिमन्तो यजमानास्तां चन्द्रमःस्थितां कृष्णवर्णां भूमिमुद्दिश्य वेद्यामस्यां विद्यतइति कथयित्वा यजन्ते यागं कुर्वन्ति । अनेन, पुरा क्रूरस्येति मन्त्रेण खातायां वेद्यामस्यां लोष्टकृतवैषम्यपरिहाराय समीकरणरूपं संमार्जनं कुर्यात् । हे विरप्शिन्नित्यस्य परमेश्वरस्य सम्बोधनस्य तु गृहाणेति पदमध्याहृत्य तेन सहान्वयः कर्त्तव्यः ॥ कात्यायनः ॥ द्विषतो वध इति स्फ्यमुदञ्चं महरतीति ॥ परित्यजेदित्यर्थः ॥ तथाचाऽऽपस्तम्बः ॥ उत्करे स्फ्यमुदस्यति द्वेष्यं मनसाऽऽध्याय इति ॥ असीति मन्त्रशेषः । हे स्फ्य, त्वं द्विषतः शत्रोर्वधोऽसि हिंसकोऽसि । यं द्विष्याद् यं द्वेष्यं महरामीत्येवं प्रहरणकाले मनसा भा-

अरातयः ॥ अनिशितोसिसपत्नक्षिद्वाजिनंत्वावाजेध्यायैसंमार्ज्मि ॥ प्रत्युष्ट्ःरक्षः प्रत्युष्टाअरातयोनिष्टप्तःरक्षोनिष्टप्ताअरातयः ॥ अनिशितासिसपत्नक्षिद्वाजिनींत्वावाजेध्यायैसम्मा-

---

वयेत् ॥ तदेतत् कण्व आह । अथेदमत्र स्फ्यं प्रहरस्मिन्नुचै त्वा वज्र प्रहरामीति। यं द्विष्यात् । वज्रो वै स्फ्यः स्तृणुते हैवैतानिति ॥ ६ ॥ इति प्रथमाध्याये नवमोऽनुवाकः ॥ ९ ॥

नवमे वेदिविषयमन्त्रा उक्ताः ॥ दशमे जुह्वादिष्वाज्यग्रहणार्था मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ आहृत्य स्रुवं प्रतप्य पूर्ववदिति ॥ यथाग्निहोत्रहवण्याः, प्रत्युष्टमितिमन्त्रेण प्रतापः पूर्वमुक्तस्तथा स्रुवस्यापि प्रत्युष्टमिति प्रतापः कार्य इत्यर्थः ॥ पाठस्तु ॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातय इति ॥ पूर्ववद्व्याख्येयम् ॥ अनेन मन्त्रेण स्रुवस्य प्रतपनं कण्वोऽपि दर्शयति ॥ स स्रुवमादाय प्रतपति प्रत्युष्टमितीति ॥ कात्यायनः ॥ वेदाग्रैरन्तरतः प्राक् संमार्ष्ट्यनिशित इतीति ॥ प्रतप्तं स्रुवं वामहस्ते धृत्वा दक्षिणहस्तेन वेदाग्रैः प्रागग्रसानं यथा भवति तथा समृज्यात् ॥ पाठस्तु ॥ अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै संमार्ज्मीति ॥ हे स्रुव त्वम् अनिशितोऽसि । शो तनूकरण इति धातुः । निशितो नितरां तीक्ष्णः । कुतः । अस्मद्विषये अनिशितः उपद्रवकारी न भवसीत्यर्थः । सपत्नक्षित् सपत्नानामस्मच्छत्रूणां क्षयहेतुः । क्षिणु हिंसायामिति धातुः । वाजिनं यज्ञद्वाराऽन्नहेतुत्वादन्नवन्तं त्वां स्रुवं संमार्ज्मि सम्यक् शोधयामि । मृजूष् शुद्धाविति धातुः । किमर्थं, वाजेध्यायै । ञिइन्धी दीप्ताविति धातुः । वाजस्यान्नस्य इध्यायै दीप्त्यै प्रकाशनार्थम् । शोधितेन स्रुवेणाज्ये हुते सत्यग्निर्दीप्यते । तया दीप्त्या तदाहुतिफलभूतमन्नं प्रकाशितं भवतीत्यर्थः ॥ कात्यायनः ॥ प्रतप्य प्रतप्य प्रयच्छत्यनिशितेति स्रुच इति ॥ जुहूपभृद्ध्रुवास्तिस्रः स्रुचः । ताः प्रत्येकं प्रत्युष्टमिति मन्त्रेण प्रतप्य वेद्यां स्थापनार्थम् अन्यस्य हस्ते प्रयच्छेत् ।
जुह्वादीनां स्त्रीलिङ्गत्वात् तद्विशेषणस्याप्यनिशितेति पदस्य स्त्रीलिङ्गत्वम् ॥ पाठस्तु ॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै संमार्ज्मीति ॥ पूर्ववद्व्याख्येयम् । स्रुवस्य पुरुषरूपत्वात् प्रथमतः संमार्जनम् । स्रुचां स्त्रीरूपत्वात् पश्चात्,

ञ्जिम ॥ १ ॥ अदित्यैरास्नासीन्द्राण्यैसंन्नहनं ॥ विष्णोर्वेष्पोस्यूर्ज्जे-
त्वादब्धेनत्वाचक्षुषावपश्यामि ॥ २ ॥ अग्नेर्जिह्वासिसुभूर्देवेभ्यः ॥
धाम्ने धाम्ने भवयजुषेयजुषे ॥ सवितुस्त्वाप्रसवउत्पुनाम्यच्छिद्रे-

संमार्जनम् ॥ तदिदं कण्व आह ॥ स वै स्रुचमग्रे संमार्ष्टि वृषा वै स्रुवो योषा स्रुच इति ॥ तित्तिरिरप्याह ॥ स्रुचः संमार्ष्टि स्रुवमग्रे सपुमाꣳसमेवाभ्यः सꣳश्यति मिथुनत्वाय अथ जुहूम् अथोपभृतं ध्रुवामिति ॥ आभ्यो जुह्वादिपोष-रूपयोपार्थ सꣳश्यति । सम्यक् तीक्ष्णी करोति ॥ १ ॥ कात्यायनः ॥ पत्नीꣳ सँनह्यति प्रसव्यदक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्य-धिवासोऽदित्यै रास्नासीति ॥ प्रत्यग्दक्षिणतो नैर्ऋत्यां दिशि अधिवासो व-स्त्रस्योपरि परिहरति । परितो वेष्टयेत् ॥ पाठस्तु ॥ अदित्यै रास्नासीन्द्राण्यै सँनहनम् इति ॥ हे रज्जो त्वम् । अदित्यै भूम्यां रास्नासि रशना भवसि । अथवेन्द्राण्यै इन्द्रपत्न्याः सँनहनं वस्त्रस्योपरि सम्यग्बन्धनहेतुसौवर्णदामस्था-नीयम् असीत्यनुवर्तते ॥ तमेतं मन्त्रं तित्तिरिः सम्यग्व्याचष्टे ॥ अदित्यै रा-स्नासीत्याह । इयं वा अदितिः अस्या एवैतद्रास्नां करोति । इन्द्राण्यै सन्नह-नमित्याह । इन्द्राणी वा अग्रे देवतानाꣳ समनह्यत आर्ध्नोदिति ॥ कात्याय-नः ॥ दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्प इति न ग्रन्थिं क-रोतीति ॥ असीति मन्त्रशेषः । रज्जोरुत्तरपाशे प्रतिमुच्योर्ध्वमुक्षुप्यमाण हे दक्षिणपाश, त्वं विष्णोर्व्यापकस्य यज्ञस्य वेष्पोऽसि । विष्लृ व्याप्ताविति धातुः । यद्वा, वेष्टनरूपोऽसि । वेष्ट वेष्टन इति धातुः । छान्दसः पकारादेशः ॥ कात्या-यनः ॥ ऊर्जे त्वेत्याज्यमुद्वासयेति ॥ हे आज्य, त्वा विलापनाय पूर्वं वह्नावधि-श्रितं त्वामिदानीम्, ऊर्जे अधिकपाकाभावेन स्वादुतमरसलाभाय वह्निप्रदेशा-द् बहिरुद्वासयामीति शेषः ॥ कात्यायनः ॥ पत्नीमवेक्षयत्यदब्धेनेति ॥ पाठस्तु ॥ अदब्धेन त्वा चक्षुषावपश्याम्यग्नेर्जिह्वासि सुभूर्देवेभ्यः । धाम्ने धाम्ने भव यजुषे यजुषे इति ॥ दभ्नातिधातुर्हिंसार्थः । हे आज्य, अदब्धेन हिंसा-रहितेन चक्षुषा त्वाम् अवपश्यामि । अवाचीनं यथा भवति तथाऽधोमुखः सन् पश्यामि । किञ्चाज्यमग्नौ, यदा जुहति तदाग्नेर्जिह्वेव ज्वालोत्पद्यते । अत-स्तन्निमित्तत्वादग्नेर्जिह्वा त्वमसि । सा च जिह्वा सुष्ठु भवतीति सुभूः । तच्च सुष्ठु-भवनं देवेभ्यो देवोपकारार्थम् । एवंविध, त्वं धाम्ने धाम्ने तत्तद्यागफलोपभोग-

णपुवित्रेणुसूर्यस्यरुश्मिभिः ॥ सुवितुर्वः प्रसुवउत्पुनाम्यच्छिद्रेणपुवित्रेणुसूर्यस्यरुश्मिभिः॥३॥तेजोसिशुक्रमस्यमृतमसिधामनामासि ॥ प्रियन्देवानामनाधृष्टन्देवुयजनं ॥ ४ ॥ यस्तेप्राणः पुशुपुम-

स्थानसिद्ध्यर्थं यजुपे यजुपे भव तत्तद्यागसिद्धये योग्यं भव । फलेन युज्यत इति व्युत्पत्त्या यजुःशब्दो यागवाची ॥ तदेतदभिमेत्य कण्व आह ॥ भव यजुपे यजुपे इति । सर्वस्मै यज्ञाय देवेभ्य एधीत्येवैतदाहेति ॥ कात्यायनः ॥ सवितुस्त्वेत्याज्यमुत्पुनाति प्रोक्षणीश्च पूर्ववदिति ॥ पाठस्तु ॥ सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति ॥ हे आज्य सवितुः प्रसवे वर्तमान त्वामुत्पुनामि । अच्छिद्रेणेत्यादिविशेषः, पवित्रे स्थ इत्यनुवाके व्याख्यातः । तस्मात् सुज्ञः । सोऽयमाज्योत्पवनमन्त्रः । सवितुर्व इत्यादिकस्तु प्रोक्षणीनामपाम् उत्पवनार्थो मन्त्रः । स च, पवित्रे स्थ इत्यनुवाके एव गतः । तस्मात् सुवकारेण, प्रोक्षणीश्चपूर्ववदित्युक्तं ॥ २ ॥ ३ ॥ कात्यायनः ॥ आज्यमवेक्षते तेजोऽसीतीति ॥ पाठस्तु ॥ तेजोऽसि शुक्रमस्यऽमृतमसीति ॥ हे आज्य, त्वं तेजोऽसि, त्वमविनाशशरीरकान्तिहेतुत्वात्तेजः, त्वं शुक्रमसि दीप्तमसि । स्निग्धस्वरूपत्वाद्दीप्तिमत्त्वम् । अमृतमसि विनाशरहितमसि । बहुदिनाऽवस्थानेऽप्योदनादिवत् पर्युषितत्वादिदोषाभावादविनाशित्वम् ॥ कात्यायनः ॥ स्रुवेणाज्यग्रहणं चतुर्जुहां धामनामेति सकृन्मन्त्र इति ॥ पाठस्तु ॥ धामनामासि प्रियं देवानामनाधृष्टं देवयजनमिति ॥ हे आज्य त्वं धाम स्थानमसि धीयते स्थाप्यते देवैश्चित्तवृत्तिरत्रेति धामशब्दव्युत्पत्तिः । तदेव; पुनर्नामादिभिश्चतुर्भिर्विशेषणैर्विशिष्यते । नामयति सर्वाणि भूतानि आत्मानं प्रति प्रणतानि करोतीत्याज्यस्य नामत्वम् । एतच्चाज्यापेक्षणम् । सर्वेषु मनुष्येषु प्रसिद्धम् । तथैतदाज्यं देवानां प्रियम् ॥ तत्प्रियत्वं च तित्तिरिः स्पष्टीचकार ॥ प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स आत्मन्नाज्यमधत्त । तं देवा अब्रुवन् । एष वा व यज्ञो यदाज्यमप्येव नो चास्त्विति ॥ यदा प्रजापतिर्यज्ञहवींषि देवेभ्यो विभज्य ददौ तदानीमाज्यं स्वकीयत्वेन स्वीचकार । तद् दृष्ट्वा देवा यज्ञे सारभूतं हविराज्यमेवेति वदन्तोऽस्माकमप्याज्ये भागोऽस्त्वित्यपेक्षितवन्त इत्यर्थः । तच्चेदमाज्यमनाधृष्टं गतसारत्वदोषेण कदाचिदप्यतिरस्कृतम् ॥ एतदपि प्रश्नोत्तराभ्यां तित्तिरिर्दर्शयति ॥ ब्रह्मवादिनो वदन्ति । कस्मात्सत्या यातयामान्य-

विष्टोदेवानांविष्ठामनुयोविंतस्थे ॥ आत्मन्वान्त्सोमघृतवान्हिभू-
त्वाग्निंगच्छस्वर्यजमानायविंद ॥ ९ ॥

इषे त्वा तिस्रः ॥ ३ ॥ चौरसि चतस्र. ॥ ४ ॥ अग्ने व्रतपते अष्ट ॥ ८ ॥
पवित्रे स्थ चतस्रः ॥ ४ ॥ शर्मासि सप्त ॥ ७ ॥ धृष्टिरसि चतस्रः ॥ ४ ॥
शर्मासि पुनः पञ्च ॥ ५ ॥ देवस्य त्वा चतस्रः ॥ ४ ॥ देवस्यत्वा पुनः प-
ट् ॥ ६ ॥ प्रत्युष्टं पञ्च ॥ ५ ॥ दशानुवाकेषु पञ्चाशत् ॥ ५० ॥ इ-
षे देवस्य समाः पञ्चाशत् ॥ ५० ॥

इति प्रथमशाखायां प्रथमदशके संहितायां प्रथमोऽध्यायः ॥

---

स्थानि हवींष्ययातयाममाज्यमिति प्राजापत्यमिति ब्रूयादयातयामो हि देवानां प्रजापतिरितीति ॥ चरुपुरोडाशादीनि चिरात्रस्थानेन यातयामानि गतसाराणि । आज्यं तु न तथा । तत्र हेतुः । प्रजापतिदेवताकत्वमित्यर्थः ॥ अथवा वज्ररूपत्वादनाधृष्टं रक्षोभिरतिरस्कृतम् ॥ तदाह कण्वः ॥ वज्रो वा आज्यं तस्मादाज्यानाधृष्टमिति ॥ तित्तिरिरप्याह ॥ घृत वै देवा वज्रं कृत्वा सोम मघ्नन्निति तथेदमाज्यं देवयजनं देवानुद्दिश्य यागसाधनम् । तच्च प्रसिद्धमेव ॥ ४ ॥ अनन्तरमन्त्रस्तु— यस्ते प्राण इत्यादिकः प्रयोगानुऽसारेणोपरिष्टादुत्कर्पणीयः ॥ अत एव कात्यायनस्तद्विनियोगमुत्तरत्रैवमुवाच ॥ पुरोडाशावभिघार्योद्वास्योपस्तीर्णे निधायानक्ति यस्त प्राण इतीति ॥ पाठस्तु ॥ यस्ते प्राणः पशुषु प्रविष्टो देवाना विष्ठामनु यो वितस्थे । आत्मन्वान्त्सोम घृतवान् हि भूत्वाग्निं गच्छ स्वर्यजमानाय विन्देति ॥ हे सोम श्रेष्ठतया सोमसमान, हे पुरोडाश ते तव प्राणो जीवनहेतुप्राणसदृशो प आज्यपदार्थः, पशुषु गवादिषु प्रविष्टः क्षीरमध्ये प्रविष्ट इव निगूढः । किञ्च य आज्यपदार्थो देवानामिन्द्रादीनां विष्ठामनु विशेषेण यागभूमौ स्थितिमनुसृत्य वितस्थे स्वयमपि वेद्यामाऽऽसादितं सद्विशेषेण तिष्ठति । तेनेसध्याहारः । तादृशेनाज्यपदार्थेन त्वयि प्रक्षिप्तेन घृतवान् घृतयुक्त आत्मवान् भूत्वा जीवात्मयुक्त इव श्रेष्ठो भूत्वाग्निं गच्छ आहुतिप्रक्षेपवेलायामाहवनीयाग्निं प्राप्नुहि । यद्वा उद्देश्यमग्निदेवता प्राप्नुहि । प्राप्य च यजमानाय यजमानोपकारार्थं स्वर्विन्द स्वर्गं लभस्व । हिशब्दो घृताक्तपुरोडाशस्य यथोक्तफलसाधनत्वप्रसिद्धिं द्योतयति ॥ उपरिष्टादपस्ताच्च घृतोपेतस्य पुरोडाशस्य स्वर्गप्राप्तिहेतुत्वं तित्तिरिराह ॥ उपरिष्टा-

दम्भयज्याऽस्तादुत्तानक्ति सुवर्गस्य लोकस्य समष्ट्या इतीति ॥ ९ ॥ ॥ इति प्रथमाध्याये दशमोऽनुवाकः ॥ १० ॥

अथ विनियोगसङ्ग्रहः ॥

आद्यो दशानुवाकाख्यस्तेषामर्थो विविच्यते ॥
शाखापवित्रनिष्पत्तिर्दोहनग्रहणेक्षणे ॥ १ ॥
अवघातः कपालानि पेषणं श्रपणं तथा ॥
वेदिराज्यग्रहश्चैतेऽनुवाकार्थाः प्रकीर्तिताः ॥ २ ॥
इषे शाखां छिनत्त्यूर्जे मार्ष्टि वायवेति वत्सकम् ॥
स्पृष्ट्वा देवः स्पृशेद् गा च यज्ञस्योपगूहनम् ॥
वसोः शाखा पवित्रं स्यात् पञ्चमन्त्रा अनुवाकगाः ॥ ३ ॥
द्यौः स्थालीं समुपाधाय वर्हा मा तेत्यधिश्रयेत् ॥
वसोः पवित्रमापाते देवस्त्वासेचने जपेत् ॥ ४ ॥
कामेति पृच्छेत् सा विश्वा त्रिभिस्तत्रोत्तरं वदेत् ॥
इन्द्रातश्चेति दध्याचाद्विष्णोर्दशा समीरिताः ॥ ५ ॥
अग्ने व्रतेदमित्येतौ विकल्प्येते व्रतग्रहे ॥
कस्त्वोदपात्रमादध्यात् कर्म शून्यान्यपो ग्रहः ॥ ६ ॥
प्रावेत् प्रत्युष्टेति धुरश्च प्रति धूर्धुरम् ॥
स्पृशेद्देवाः स्पृशेदीषां विष्णुरारुह्य वीक्षते ॥ ७ ॥
उर्विति त्यजेदन्यान् पञ्चना च स्पृशेद्दविः ॥
देवा गृह्णाति शेषं तु भू स्पृष्ट्वा स्वरितीक्षते ॥ ८ ॥
दृहाचरणाऽस्मागच्छत् पृथिव्याः स्थापयेद्धवि ॥
अनुवाके तृतीयेऽस्मिन्नुक्ता एकोनविंशतिः ॥ ९ ॥
दर्भा छिन्द्यात् पवित्रे स्थ इत्युनाति सवीस्यतः ॥
हस्तेन चालयेद्देवीः प्रोक्षणा प्रोक्षणं भवेत् ॥ १० ॥
अग्रये त्वा हविः प्रोक्ष्य देव्या पात्रेक्षणं भवेत् ॥ -
अनुवाके चतुर्थेऽस्मिन् पञ्चमन्त्रा उदिता खलु ॥ ११ ॥
शर्मेत्यजिनमादाय अवधूतेत्यवेति तत् ॥
अदित्यास्त्वग्भिचर्मोलूखले च विकल्पितौ ॥ १२ ॥
तस्मिन् हविः क्षिपेदग्रेर्मुशलाग्रहणं बृहत् ॥

स इत्यवदघात्येतद्धविः पत्नीमिहाह्वयेत् ॥ १३ ॥
आहन्यादु द्वपदे कुक्कु वर्षं शूर्पपरिग्रहः ॥
प्रति त्वा हविरुद्वापो निष्पुनाति परेत्यतः ॥ १४ ॥
तुषाञ्शिरस्येदपह वायुर्वस्तद्विवेचनम् ॥
देवः पात्र्यां हविः स्थाप्यं मन्त्राः षोडश निर्मिताः ॥ १५ ॥
उपवेषग्रहो धृष्टिरपाङ्गारविवेयोजनम् ॥
पुनः स्वीकार आदेव कपालं स्थापयेदु ध्रुवम् ॥ १६ ॥
अमेऽङ्गारं समारोप्य धरु धर्त्रमिति द्वयात् ॥
प्रत्यक्प्राची कपाले द्वे विश्वा दक्षिणतस्तथा ॥ १७ ॥
चित उत्तरतोऽङ्गारैरभ्यूहन्त्यूहति त्रिषु ॥
अनुवाके तु षष्ठेऽस्मिन् दश मन्त्रा उदीरिताः ॥ १८ ॥
शर्मासधूतादित्यास्त्वगित्येते पूर्ववत् त्रयः ॥
धिषेति द्वपदं तत्र स्थापयेद्दिव इत्यतः ॥ १९ ॥
शम्यामधः स्थापयित्वा स्थापयेद्धिषणोपलाम् ॥
समोप्य तण्डुला धान्यं पिप्याद प्राणेति तत्त्रिभिः ॥ २० ॥
दीर्घां कृष्णाजिनं मोहेचक्षुषे पिष्टमीक्षते ॥
मद्दीनामाज्यनिर्वापो वेदो वेदं प्रमुञ्चति ॥
अनुवाके सप्तमेऽस्मिन् मन्त्राः प्रोक्ताश्चतुर्दश ॥ २१ ॥
पिष्टावापो देव पात्र्या समापो जलपानयेत् ॥
जन संयौति तद् द्वेधा स्पृशेदिदमिदंद्वयात् ॥ २२ ॥
-इषे त्वाज्यमधिश्रिय पुरोडाशं श्रपेत्यतः ॥
उरु तं प्रथयेदग्निरद्भिस्तस्याभिमर्शनम् ॥ २३ ॥
अन्तः पर्यग्निकरणं देवस्त्वाश्रपयेद्धविः ॥
मा मे स्पृष्टा तं संभस्म नीत्वाप्स्याप्लवितात्त्रयात् ॥
निलये क्षालनजलं मन्त्राः षोडश वर्णिताः ॥ २४ ॥
देवस्य स्फ्यं समादत्ते इदं लभ्यजपेदमुम् ॥
तृणं पृथिव्ये संस्थाप्य पृथिवि प्रहरेदिदम् ॥ २५ ॥
व्रजं पुरीषमादत्ते वर्षं वेदिमवेक्षते ॥
यथोत्करे न्यसेत् पांसुद्वितीयप्रहृतिस्त्वया ॥ २६ ॥

अजं त्रयः पूर्ववत् स्युररोऽग्नीध्रः पुनर्न्यसेत् ॥
तृतीयमहातिर्द्रष्टुः पूर्ववत् स्युर्व्रजं त्रयः ॥ २७ ॥
वेदेः पूर्वपरिग्राहो गायत्रेण त्रिभिर्भवेत् ॥
उत्तरस्तु परिग्राहः सुक्ष्मा चेत्यादिभिस्त्रिभिः ॥ २८ ॥
अनुमार्ष्टि पुरा वेदिं द्विषतः स्फ्यं परित्यजेत् ॥
नवमेऽप्यनुवाकेऽस्मिन्नृचतुर्विंशतिरीरिताः ॥ २९ ॥
स्रुवं तपेत् प्रत्युष्टं संमृज्यादग्निरीत्यतः ॥
पुनः प्रत्युस्त्रिभिस्तापे मार्जनं च स्रुचीष्यते ॥ ३० ॥
अदित्यै नह्यते पत्नीं विष्णोस्तत्पांशुमूहनम् ॥
ऊर्जे त्वाज्यमुद्वास्यादब्धे पत्नीमवेक्षयेत् ॥ ३१ ॥
सवितुस्त्वाज्यमुत्पूय प्रोक्षणीः शोधयेत् सवि ॥
तेजोऽस्याज्यमवेक्ष्याथ जुह्वा गृह्णीत धामना ॥
यस्तेऽनक्ति पुरोडाशं मन्त्राः पञ्चदशेरिताः ॥ ३२ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निरोधयेत् ॥
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ३३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरभूपालसाम्राज्यधुरन्धरेण सायणाऽऽचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये प्रथमोऽध्यायः ॥ १ ॥ ॥

अथ सभाष्यशुक्लयजुर्वेदकाण्वसंहितायां द्वितीयोऽध्यायः ॥

ॐ कृष्णोसीध्मो वेदिर्बर्हिर्लिंगोक्तेऽअदित्याऽआपं विष्णोःप्रास्तरं
मूर्णम्रदसं वेदिर्भुपतये त्रीण्याग्नेयानिगंधर्वस्त्रयाणां परिधयो वी-
तिहोत्रं विश्वावसुराग्नेयीं गायत्रीः समिदाग्नेयं स्रुर्यस्त्वा लिंगो-
क्तेः सवितुर्विधृतीऊर्णम्रदसमात्वाप्रास्तरे घृताच्यसि त्रयाणां जुहूप
भृद्ध्रुवाः क्रमेणप्रियेणहविर्ध्रुवाऽअसदन्पाहिमां वैष्णवेऽग्नेवाज-
जिदाग्नेयं नमोदेवः स्वधापित्र्यः स्रुयमेस्रुचा वं घ्रिणा वैष्णवं वसुमती
माग्नेयं मितऽऐंद्रः संज्योतिषाज्यमत्रामीमदन्तपित्र्यं उपहूताद्या-
वापृथिव्यं मयीदमाशीः प्रतिग्रहणमग्नेवाजजिदाग्नेयं ब्रह्मत्वप्रति-
ष्ठां तं बृहस्पतिरांगिरसोपश्यद्देवसवितरेतमित्यादीनि सर्वाणिय-
जूंषि लिङ्गोक्तदेवत्यानि बृहस्पतिर्देवानां बार्हस्पत्यं निरस्तःपाप्मा
राक्षोघ्नं सिदमहं बार्हस्पत्यां मित्रस्यत्वा मैत्रमग्नेष्ट्वा प्राशित्रं याऽअ-
प्सुनाभ्यं प्रजापतेर्भागोन्वाहार्यं मे पातेऽनुष्टुबाग्नेय्येतत्ते वैश्वदेवं-
मग्नीषोमयोश्चत्वारि लिङ्गोक्तानि वसुभ्यस्त्रयाणां परिधयः संजा-
नाथां व्यंतु प्रास्तरं मरुतां कपिर्वार्हतं प्रास्तरं चक्षुष्पाऽआग्नेयं यं परि-
धिं देवलऽआग्नेयमग्नेः प्रियं च सः स्त्वभागाः सोमशुष्मो यद्वदेवं घृ-
ताचीस्रुचां वग्नेदब्धायोगार्हपत्योग्नये दक्षिणाग्निः सरस्वत्यै लिङ्गो-
क्तं मुलूखलेहविराप्यायनं ध्रौवाज्यं देवागातुविदोमनसस्पतिर्वात-
देवत्यां विराजं संबर्हिर्लिङ्गोक्तदेवत्यं त्रिष्टुब्विराड्रूपं कस्त्वाप्रा-
जापत्यं ऋचसाः शाचसं वेपोसि जुहोम्युपवेषोथयाजमानं स्वर्च-
सा त्वाष्ट्रीत्रिष्टुब्यज्ञस्य शूर्पीयवमान्कृपिरुद्राल वांधानां तर्वानि-
तिपश्चार्षेयो यजदेवत्यो दिविविष्णुस्त्रीणि वैष्णवान्यस्मादन्नाद्भा-
गोऽस्यै भूमिरगन्मस्वर्दैवः संज्योतिपाहवनीयः स्वयंभूः सूर्यस्यद्वे-
सौरेऽअग्नेगृहपतेगार्हपत्यः सूर्यस्यसौरं स्रुकविष्णो वैष्णव्यनुष्टुप्ततो-
सीतियजुरेतं दं मे पौत्रं मग्नऽइदमाग्नेयं पितृयज्ञः प्रजापतेरार्षमग्न-
येसोमायद्वे दैवस्वाहाकारश्रुतेरपहताऽआसुरं येरूपाणि कव्यवाह-
नोग्निस्त्रिष्टुम्नमो वः षड्लिङ्गोक्तानि परे पित्र्यं उदायुषाऽमृतदे-
वत्यं माधत्त पित्र्या गायत्र्यूर्जमापीविराट् ॥ २ ॥

ॐ कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि ॥ बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि॥१॥अदि-

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

प्रथमेऽध्याये हविःसंपादनोपयुक्ता मन्त्रा उक्ताः । द्वितीये तेन हविषा यजनायोपयुक्ता मन्त्रा उच्यन्ते । तत्र प्रथमेऽनुवाके संस्कृतायां वेद्यां स्रुचामासादनमुच्यते । तत्रादौ तावदिध्मादीनां प्रोक्षणमुच्यते ॥ कात्यायनः ॥ इध्मं प्रोक्षति विस्रस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि कृष्णोऽसीति प्रतिमन्त्रमिति ॥ योऽयमिध्मः पूर्वं दर्भैर्बद्धस्तं विस्रस्य प्रोक्षयेत् ॥ बर्हिस्तु प्रतिगृह्य तदीयग्रन्थिं पूर्वस्यां दिशि यथा भवति तथा वेद्यां निधाय प्रोक्षयेत्॥पाठस्तु॥ कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि।वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि । बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामीति ॥ हे इध्म त्वं कृष्णोऽसि । अन्तोदात्तः कृष्णशब्दो वर्णवाची । अत एव कृष्णं वासः कृष्णरूपमित्यादावन्तोदात्त आम्नातः । अयं कृष्णशब्द आद्युदात्तत्वान्मृगवाची । तस्मादत्र कृष्णमृगोऽसीत्यर्थः । यज्ञात्मको देवः कदाचिदपि केनापि निमित्तेन स्वशरीरगोपनाय कृष्णमृगस्य रूपं कृत्वा देवेभ्योऽपसृत्य निगूढोऽभवत् । ततो वने गत्वा वनस्पतीन् यज्ञयोग्यान् प्राविशत् । प्रविश्य खरे कठिने वृक्षे सर्वत्रावतस्थौ । तदेतदभिप्रेत्य, कृष्ण इत्याखरेष्ठ इति च द्वयमुच्यते ॥ तदेतत्तित्तिरिर्दर्शयति ॥ यज्ञो देवेभ्यो निलीयन् कृष्णं रूपं कृत्वा स वनस्पतीन् प्राविशत्।कृष्णोऽस्याखरेष्ठोऽग्नये त्वेति ॥ अतो वनस्पतिजन्य इध्मोऽग्नेः प्रियो भवति । तस्मादग्नये जुष्टं प्रियं त्वा शुद्ध्यर्थं जलेन प्रोक्षामि । सोऽयमाद्यो मन्त्रः ॥ हे वेदे त्वम् असुरसकाशाद् देवैर्लब्धत्वाद्वेदिरसि । लाभवाचिविदधातूत्पन्नत्वात् त्वं वेदिनामयुक्ताऽसि ॥ एतच्च नाम तित्तिरिर्दर्शयति ॥ यदिमाम् विन्दन्ति तद्वेदै वेदित्वमिति ॥ अतस्तादृशीं त्वां बर्हिषे जुष्टां बर्हिर्धारणोपयोगितया प्रियां प्रोक्षामि बर्हिषः प्रजारूपत्वाद् वेदेश्च पृथ्वीरूपत्वाद् बर्हिर्धारकत्वं युक्तम् ॥ तदाह तित्तिरिः ॥ प्रजा वै बर्हिः पृथिवी वेदिः । प्रजा एव पृथिव्यां प्रतिष्ठापयतीति ॥ सोऽयं द्वितीयो मन्त्रः ॥ हे दर्भ, त्वं बर्हिरसि प्रभूतत्वाद् वेदिच्छादनसमर्थमसि ॥ अतस्स्रुग्भ्यो जुष्टं स्रुचां धारणोपयोगित्वेन

स्यै॑व्युन्द॑नम॒सि॒ विष्णो॑ स्तु॒पो॑ऽसि ॥ ऊर्ण॑म्रदसं॒ त्वा स्तृणामि स्वा॒स॒स्थां दे॒वेभ्यः॑ ॥ २ ॥ भूप॑तये॒ स्वाहा॒ भुव॑नपतये॒ स्वाहा॑ भू॒ताना॒म्पत॑ये॒-

---

मियं त्वां प्रोक्षामि स्रुचां यजमानसदृशत्वाद्यजमानस्य प्रजानां मध्येऽवस्थातुं युक्तत्वात् प्रजारूपे बर्हिषि यजमानस्यावस्थानमुचितम् ॥ १ ॥ कात्यायनः ॥ शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमसीति ॥ असीति मन्त्रशेषः । हे प्रोक्षणशेषोदक त्वम् अदित्यै भूम्या व्युन्दनमसि विशेषेण क्लेदनसाधनमसि ॥ दर्भमूलसेचनं कण्व उपपादयति ॥ अथ याः परिशिष्टाः प्रोक्षिण्यो भवन्ति ताभिर्बर्हिषो मूलान्युपनिनयत्यदित्यै व्युन्दनमसीति । इयं वा अदितिरोषधयो यैर्वरस्या एवैतत्पृथिव्या ओषधीनां मूलान्युपानक्ति तस्मादिमा आर्द्रमूला ओषधय इति ॥ कात्यायनः ॥ बर्हिर्विस्रंस्य पुरस्तात् प्रस्तरग्रहणं विष्णोरितीति ॥ स्तुपोऽसीति मन्त्रशेषः ॥ दर्भमुष्टिरूप हे प्रस्तर, त्वं विष्णोर्व्यापकस्य यज्ञस्य स्तुपोऽसि । केशसंघातरूपदर्भशिखेव दर्भसंघातरूपोऽसि । ष्ट्यै स्त्यै शब्दसंघातयोरिति धातुः । औणादिको डुप्रत्ययः ॥ तदाह कण्वः ॥ अथ विस्रंस्य पुरस्तात् प्रस्तरं गृह्णाति । विष्णोस्तुपोऽसीति । यज्ञो वै विष्णुरयमु वै स्तुपो यच्छिखा तमेवैतद्यज्ञे दधातीति ॥ कात्यायनः ॥ वेदिं स्तृणात्यूर्णम्रदसमितीति ॥ पाठस्तु ॥ ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्य इति ॥ हे वेदे त्वां स्तृणामि दर्भैराच्छादयामि । कथंभूतां त्वाम् ऊर्णम्रदसम् ऊर्णमिव म्रद्वीम् । यथा प्रभोरूपवेष्टुं कम्बलं बहुपुटयुक्तत्वेन संकोच्य भूमावास्तृणन्ति । सा च भूः काठिन्यं परित्यज्य ऋजुर्भवति । तथा दर्भैराच्छादिता वेदिर्मृदुः सम्पद्यते । देवेभ्यः स्वासस्थां देवोपकारार्थं सुखेनासितुं स्थानभूताम् ॥ एतदेव कण्व आह ॥ स्वासने देवेभ्य इत्येवैतदाहेति ॥ २ ॥ भूपतये स्वाहेत्यादीनां त्रयाणां मन्त्राणां प्रयोगानुसारेणान्यत्र उत्कर्षः कर्तव्यः ॥ अत एव अन्यत्र, कात्यायन आह ॥ स्रुचमभिमृशति भूपतये स्वाहेतीति ॥ तमेतं विनियोगं कण्वो विस्पष्टं प्रपञ्चयामास ॥ तदभिमृशति भूपतये स्वाहेति ॥ तमेतं विनियोगं कण्वो विस्पष्टं प्रपञ्चयामास ॥ तदभिमृशति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेत्येतानि वै तेषामग्नीनां नामानि भूपतिर्भुवनपतिर्भूतानां पतिरितीति ॥ भूपसादयस्त्रयोऽग्नेर्भ्रातरः । स्वाहाशब्दो देवान् प्रति दानवाची निपातितः । अत एव बृहदारण्यके श्रूयते । देवा उपजीवन्ति स्वाहाकारं च वषट्कारं

स्वाहा ॥ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै ॥ ३ ॥ यजमानस्य परिधिरस्यग्निरिळऽईळितः ॥ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै ॥ यजमानस्य परिधिरस्यग्निरिळऽईळितः ॥ मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै ॥ यज-

---

येति । हविषो ग्रहणकाले परिधिभ्यो बहिर्यद्धविः स्कन्नं तद्धविर्भूपत्यादिनामकेभ्योऽग्निभ्रातृभ्यो दत्तमिति मन्त्राणामर्थः । एतेऽग्निभ्रातरो देवेभ्यो हव्यं वहन्तो यदा मृतास्तदानीमग्नेः स्कन्नं हविर्भ्रातृभ्यो भवत्विति वरं वृतवान् ॥ तमिममर्थं तित्तिरिरग्नेस्त्रयो ज्यायांसो भ्रातर आसन् । देवेभ्यो हव्यं वहन्तः प्रमीयन्तेत्यारभ्यान्ते स्पष्टमुवाच ॥ सोऽब्रवीद्वरं वृणै । यदेवावगृहीतं स्यादुतस्य बहिःपरिधिः स्कन्दात्तन्मे भ्रातॄणां भागधेयमसादिति तस्माद् यद् गृहीतं स्याद् तज्जुतस्य बहिःपरिधिः स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणातीति ॥ ३ ॥ कात्यायनः ॥ परिधीन् परिदधाति मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रमिति ॥ प्रथममन्त्रपाठस्तु ॥ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्याऽरिष्ट्यै यजमानस्य परिधिरस्यग्निरिळ ईळित इति द्युलोकावस्थितं सोमं रक्षितु सोमस्य पार्श्वे विश्वस्मिन् सर्वस्मिन् प्रदेशे वसतीति विश्वावसुः एतन्नामको गन्धर्वः ॥ तथाच श्रुत्यन्तरं, विश्वावसुऽसोमगन्धर्वमिति ॥ त्वा प्रादेशात्रयपरिमितां समिधं त्वां परिदधातु आहवनीयस्य पश्चिमभागे सर्वतः स्थापयतु । किमर्थं, विश्वस्याऽरिष्ट्यै । रिषतिर्हिंसार्थः ॥ आहवनीयस्थानरूपस्य विश्वस्य हिंसाराहित्याय । परिधेरभावे सति असुराः प्रविश्य हिंसां कुर्वन्ति ॥ किञ्च, यजमानस्य परिधिरसि यजमानमसुरेभ्यो रक्षितुं पश्चिमदिशि सर्वतः स्थापितासि । किञ्चाग्निरिल ईळितः ॥ असीत्यनुवर्त्तते ॥ आहवनीयस्याग्नेः प्रथमो ज्येष्ठभ्राता भूपतिनामधेयोऽग्निस्तद्रूपोऽसि । स चाग्निरिळः स्तुतियोग्यस्तस्मादीळितो होत्रादिभिस्तुतः । ईड स्तुताविति धातुः ॥ द्वितीयमन्त्रपाठस्तु ॥ इन्द्रस्य बहुरसि दक्षिणो विश्वस्यारिष्ट्यै । यजमानस्य परिधिरस्यग्निरिल ईळित इति ॥ हे द्वितीयपरिधे त्वम् इन्द्रस्य दक्षिणो बाहुरसि । रक्षायां समर्थत्वाद् इन्द्रबाहुत्वोपचारः । विश्वस्येत्यादि व्याख्यातम् । अत्राग्निशब्देन द्वितीय भ्राता भुवनपतिनामको विवक्षितः ॥ तृतीयमन्त्रपाठस्तु ॥ मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै । यजमानस्य परिधिरस्यग्निरिळ

मानस्य परि॒धिर॑स्य॒ग्निरि॒ळऽई॑ळि॒तः ॥४॥ वी॒तिहो॑त्रंत्वाकवेद्यु॒मं-
त॒ꣳसमि॑धीमहि ॥ अग्ने॑बृ॒हन्त॑मध्व॒रे ॥ ५ ॥ स॒मिद॑सि॒सूर्य॑स्त्वापु-
रस्ता॑त्पातु॒कस्या॑श्चि॒द॒भिश॑स्त्यै ॥ स॒वि॒तुर्बा॒हूस्थः॑ ॥ ६ ॥ ऊर्णा॑-
म्रदसंत्वा॒स्तृ॒णा॒मिस्वासस्थं॑दे॒वेभ्यः॑॥आत्वा॒वस॑वोरु॒द्रा आ॑दि॒त्याः

---

ईळित इति ॥ हे तृतीयपरिधे, त्वां मित्रावरुणावेतन्नामकौ देवौ ध्रुवेण स्थि-रेण धर्मणा धारणेन पोषणेन वा उत्तरत्र उत्तरस्यां दिशि परिधत्तां परितः स्थापयताम् ॥ विश्वस्येत्यादिपूर्ववत् । अत्राग्निशब्देन भूतानां पतिरित्येतन्ना-मकस्तृतीयो भ्राता विवक्षितः ॥ ३ ॥ ४ ॥ कात्यायनः ॥ प्रथमं परिधिं समि-धोपस्पृश्य वीतिहोत्रमित्यादधातीति ॥ पाठस्तु ॥ वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वर इति ॥ कविः क्रान्तदर्शी सर्वज्ञ इत्यर्थः । त-थाविध हे अग्ने त्वाम् अध्वरे यागे निमित्तभूते सति समिधीमहि अनेना-धारसमिध ऊर्ध्वस्थापनेन सम्यग्दीपयामि । कथम्भूतं त्वां, वीतिहोत्रम् । इण गताविति धातुः । इतिर्गतिः, विविधा इतिर्व्याप्तिः समृद्धिरित्यर्थः । वीतये होत्रं होमो यस्याग्नेरिति विग्रहः ॥ एतमेवार्थं श्रुतिर्दर्शयति ॥ वीतिहोत्रं त्वा कव इत्याह । अग्निमेव होत्रेण समर्द्धयतीति ॥ द्युमन्तं स्वत एव द्योतनोपे-तं बृहन्तं बृहद्यागवर्तित्वेन ॥ ५ ॥ कात्यायनः ॥ अनुपस्पृश्य द्वितीयां समिद-सीति ॥ द्वितीयां समिधमादधातीत्यनुवर्त्तते । हे आघारसमिद्गेः पूर्वभागे स्था-प्यमाना भवसि ॥ कात्यायनः ॥ सूर्यस्त्वेति जपत्याहवनीयमीक्षमाण इति ॥ पाठस्तु ॥ सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्या इति ॥ हे आहवनीय त्वां पुरस्तात् पूर्वस्यां दिशि सूर्यः कस्याश्चिदभिशस्त्यै सर्वस्या अपि हिंसायाः पातु रक्षतु । या काचिद्धिंसा प्रसक्ता तां सर्वां परिहरत्वित्यर्थः । चतुर्थी पञ्चम्यर्थे द्रष्टव्या । इतरस्मिन् दिक्त्रये परिधित्रयेण रक्षा भवति । पूर्वस्यां तु परिध्यभावेऽपि सूर्यो रक्षकः ॥ इममेवार्थं कण्व आह ॥ परिधय इमे अग्नितो गुप्तये परिहिता भवन्ति । सूर्यमेवास्यैतत्पुरस्तात्पुरोगां करोतीति ॥ कात्यायनः ॥ बर्हिषस्तृणे तिरश्चीनि दधाति सवितुरिरीति ॥ बाहू स्थ इति मन्त्रशेषः ॥ वेद्यामास्तीर्णस्य प्रागग्रस्य दर्भस्योपरि पुनरास्तारिष्यमाणस्य प्रस्तरस्य सांकर्यपरिहाराय तृणद्वयं तिर्यङ् निदध्यात् । हे तृणे युवामुभे सवितुः प्रेरकस्य देवस्य बाहू स्थः दक्षिणोत्तर-बाहुस्थानीये भवथः ॥ ६ ॥ कात्यायनः ॥ तयोः प्रस्तरꣳ स्तृणात्यूर्णम्रदसमि-

सदंतु॥७॥घृताच्यसिजुहूर्नाम्नासेदंप्रियेणधाम्नाप्रियेसदंसिसीद॥ घृताच्यस्युपभृन्नाम्नासेदंप्रियेणधाम्नाप्रियेसदंसिसीद ॥ घृताच्यसिध्रुवानाम्नासेदंप्रियेणधाम्नाप्रियेसदंसिसीद ॥ प्रियेणधाम्नाप्रियेसदंसिसीद॥८॥ध्रुवाऽअसदन्नृतस्ययोनौताविष्णोपाहि॥

---

तीति ॥ पाठस्तु ॥ ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य इति ॥ पूर्ववद् व्याख्यानम् ॥ कात्यायनः ॥ अभिनिदधात्या त्वा वसव इति । सव्याङ्गुल्या शून्य इति ॥ प्रस्तरमित्यनुवर्त्तते ॥ आस्तीर्णं प्रस्तरं तद्वद् रहिते शून्यस्थाने वामाङ्गुल्या प्रसारयेत्॥ पाठस्तु ॥ आ त्वा वसवो रुद्रा आदित्याः सदन्त्विति ॥ प्रस्तरस्य सवनत्रयाभिमानिनस्त्रयो वस्वादयो देवगणास्त्वामासादयन्तु सर्वतः प्रसारयन्तु ॥ ७ ॥ कात्यायनः ॥ जुहूं प्रतिमुच्य निदधाति घृताचीत्येवमितरे उत्तराभ्यां प्रतिमन्त्रमिति ॥ प्रथममन्त्रपाठस्तु ॥ घृताच्यसि जुहूर्नाम सेदं प्रियेण धाम्ना प्रिये सदसि सीदेति ॥ हे जुहु त्वं घृतमञ्चतीति घृताची घृतपूर्णासि भवसि ॥ जुहूर्नाम जुहूरित्येतत्तव नामधेयम् । हूयते अनयेति व्युत्पत्तेः । सा त्वमिदं प्रस्तरस्योर्ध्वं स्थानमधितिष्ठेति शेषः। उक्तमेव व्यक्तस्थानं प्रियेणेत्यादिकम्।प्रियेण देवानां प्रीतिहेतुना धाम्ना आज्यरूपेण तेजसा सहेति शेषः॥ तद्वै देवानां प्रियं धाम यदाज्यमिति हि श्रुतिः । प्रिये सदसि प्रस्तरस्योपरि प्रियस्थाने सीद प्राप्नुहि उपविशेत्यर्थः ॥ द्वितीयमन्त्रपाठस्तु ॥ घृताच्यस्युपभृन्नाम सेदं प्रियेण धाम्ना प्रिये सदसि सीदेति ॥ उप जुह्वाः समीपे स्थित्वा विभर्त्याज्यं धारयतीत्युपभृत् । व्याख्यातमन्यत ॥ तृतीयमन्त्रपाठस्तु ॥ घृताच्यसि ध्रुवा नाम सेदं प्रियेण धाम्ना प्रिये सदसि सीदेति ॥ ध्रुव गतिस्थैर्ययोरिति धातुः । यथा होमार्थं जुह्वुपभृतोस्तदा चलनं तद्वदस्याश्चलनाऽभावेन स्थिरत्वाद् ध्रुवेति नाम । व्याख्यातमन्यत ॥ कात्यायनः ॥ प्रियेण धाम्नेति हवींर्षि वेद्यां करोति ॥ कण्वोऽप्याह ॥ प्रियेण धाम्ना प्रिये सदसि सीदान्यानि हवींष्यासादयतीति ॥ आग्नेयः पुरोडाश इत्यादीन्यन्यानि, मन्त्रस्तु पूर्ववदेकैकं हविः संबोध्य व्याख्येयः ॥ ८ ॥ कात्यायनः ॥ ध्रुवा असदन्निति सर्वाण्यालभते ॥ पाठस्तु ॥ ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि । पाहि यज्ञं पाहि यज्ञपतिमिति ॥ ऋतस्य अवश्यम्भाविफलोपेतत्वेन सत्यस्य यज्ञस्य योनौ स्थाने सर्वे हविर्विशेषा ध्रुवा असदन् आवश्यकत्वेन स्थिराः

पाहियज्ञंपाहियज्ञपतिंपाहिमांयज्ञन्यं ॥९॥ ॥ अग्नेवाजजिं। द्वाजं-
त्वासरिष्यन्तंवाजजितᳪसमार्ग्मि ॥ नमोदेवेभ्यःस्वधापितृभ्यः
सुयमेमेभूयास्तं ॥१॥ अस्कन्नमद्यादेवेभ्यआज्यᳪसंम्भ्रियासं॥अंघ्रिणा-

आनिघ्नन् । हे विष्णो व्यापक यज्ञरूप तान् पाहि तान् हविर्विशेषान् रक्ष । अन्यत् पुरैव व्याख्यातम् ॥ कात्यायनः ॥ पाहि मामित्यात्मानमिति॥आलभत इति सूत्रशेषः । यज्ञन्यमिति मन्त्रशेषः । स च मन्त्रः पूर्वमेव व्याख्यातः ॥९॥ इति द्वितीयेऽध्याये प्रथमो नुवाकः ॥ १ ॥

प्रथमेऽनुवाके इध्मप्रोक्षणमारभ्य स्रुगासादनोपयुक्ता मन्त्रा उक्ताः । द्वितीये स्रुच्याघारविषया मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ इध्मसन्नहनमनुपरिधि संमार्ष्ट्यग्ने वाजजिदिति त्रिस्त्रिः परिक्रामम्मिति ॥ पाठस्तु ॥ अग्ने वाजजिद् वाजं त्वा सरिष्यन्तं वाजजितᳪ संमार्ज्मीति ॥ हे वाजजिदग्ने वाजमन्नं जयतीति वाजजित् । तथाविध हे अग्ने त्वां समार्ज्मि शोधयामि । कथंभूतं त्वां, वाजं सरिष्यन्तम् अन्नमुद्दिश्य गमिष्यन्तम्, अन्नसम्पादनोपयुक्तम् । वाजजितम्, अन्नमुद्दिश्य जयोपेतम् । अन्नप्रतिबन्धनिवारकमित्यर्थः ॥ कात्यायनः ॥ अपरमाहवनीयादञ्जलिं करोति नमो देवेभ्य इति ॥ ये देवा अनुष्ठानमनुगृह्णन्ति तेभ्यो नमस्कारोऽस्तु ॥ स्वधा पितृभ्य इति दक्षिण उत्तानमिति ॥ पुरा प्राङ्मुखो देवनमस्कारार्थमञ्जलिं कृतवान् ॥ इदानीं पितृनमस्कारार्थं दक्षिणामुख उत्तानं पाणिद्वयं कुर्यात् ॥ ये पितरः पालकाः सन्ति तेभ्यः स्वधास्तु ॥ स्वधाशब्दो निपातितः । स च पितॄनुद्दिश्य देयद्रव्यस्य पिण्डादेर्दाने वर्तते । अतो पदेयं तदास्याम इत्यर्थः ॥ अनेन मन्त्रद्वयेन देवाश्च पितरश्चोपचर्यन्ते ॥ तदाह कण्वः ॥ अथ स्रुचावारभ्य्यक्रमेण स्रुचोरञ्जलिं निदधाति नमो देवेभ्यः स्वधा पितृभ्य इति । देवेभ्यश्चैवैतत् पितृभ्यश्च निन्हुते आशिष्यं करिष्यन्निति ॥ निन्हुते अपन्हवति उपचरतीत्यर्थः ॥ कात्यायनः ॥ सुयमे म इति जुहूपभृतावादायेति ॥ पाठस्तु ॥ सुयमे मे भूयास्तमस्कन्नमद्याज्यं देवेभ्यः संभ्रियासमिति ॥ हे जुहूपभृतौ, मे मदर्थं सुयमे सुष्ठु नियते भूयास्तं भवतम् । यथा स्रुवयोः स्थितमाज्यं न स्कन्दति तथा धारयतमित्यर्थः । तथा मत्प्रसादाऽस्मिन् कर्मानुष्ठानदिने देवेभ्यो देवतोपकारार्थम् । आज्यं स्रुवयोः स्थितं घृतम् । अस्कन्नं भूमौ यथा न स्कन्दति तथा संभ्रियासं सम्यक्पोषणं कर-

विष्णोमाक्रत्वाक्रमिषं॥२॥वसुमतीमग्ने।तेछायामुपस्थेयंविष्णोः स्थानमसि ॥ इतइंद्रोवीर्यमकृणोदूर्ध्वोध्वरऽआस्थात् ॥ अग्नेवे ।

---

षाणि ॥ अस्कन्नमित्यादेरभिप्रायं कण्वो दर्शयति ॥ अविक्षुब्धमनेनं यज्ञं देवेभ्यस्तनवा इत्येवैतदाहेति॥ कात्यायनः॥दक्षिणातिक्रामन्त्यद्‌भ्रिणा विष्ण-वितीति ॥ पाठस्तु ॥ अद्‌भ्रिणा विष्णो मा त्वाक्रमिषमिति ॥ हे विष्णो व्याप-क यज्ञपुरुष त्वाम् अद्‌भ्रिणा पादेन मावक्रमिषम् अत्क्रमणं मा कार्षम् । पादेनातिक्रमणदोषो मे मा भूदित्यर्थः ॥ एतमेवाभिप्रायं कण्वो दर्शयति ॥ यज्ञो वै विष्णुस्तमेतदतिक्रमिष्यन् भवति तस्मा एवैतन्निन्हुते मा त्वावक्रमि-षमितीति ॥ १ ॥ २ ॥ कात्यायनः ॥ परिधीनप्यपरेण सञ्चरो होप्यतः स-व्येनेतो दक्षिणेनामुतो वसुमतीमित्यस्यायेति ॥ परिधीनां पश्चिमभागः सञ्चा-रदेशस्ततो होमायोत्सुकस्य सव्येन पादेनेतः परिधेः पश्चिमदिश्यऽवस्थानं दक्षिणेन पादेनामुतः पूर्वस्यां दिश्यवस्थानमित्यर्थः ॥ पाठस्तु ॥ वसुमतीमग्ने ते छायामुपस्थेयं विष्णोः स्थानमसीति ॥ हे अग्ने, ते तव छाया वसुमतीं यथा पुरुषस्य छाया समीपवर्तिनी तद्वत् समीपवर्तिनीं भूमिम्, उपस्थेयम् उप-तिष्ठेयं सेवेय । उपपूर्वस्तिष्ठतिः सेवार्थे वर्तते । स एव वाचिकः सेवाप्रकारः स्पष्टीक्रियते । विष्णोः स्थानमसि । हे वसुमति, त्वं यज्ञस्य स्थानं भवसि । अत्र स्थित्वा यागं कर्तुं शक्यत इत्यर्थः ॥ आहवनीयसमीपवर्तित्वादस्या भूमेर्यज्ञ-स्थानत्वं युक्तम् ॥ तदाह कण्वः ॥ यज्ञो वै विष्णुर्यज्ञस्य वा एतदन्तिकं ति-ष्ठति तस्मादाह विष्णोः स्थानमसीति ॥ कात्यायनः ॥ इत इन्द्र इति जुहो-तीति ॥ पाठस्तु ॥ इत इन्द्रो वीर्यमकृणोदूर्ध्वोऽध्वर आस्थात् । अग्नेर्वे-होत्रं वेर्दूत्यम् । अवतां त्वा द्यावापृथिवी अव त्वं द्यावापृथिवी । स्विष्टकृद्दे-वेभ्य इन्द्र आज्येन हविषा भूत् स्वाहेति ॥ पूर्वस्मिन्मन्त्रे यज्ञसम्बन्धि यत् स्था-नमुक्तं तदेव देवानां विजयहेतुत्वाद् दिक्शब्देन परामृश्यते । देवयजनव्य-तिरिक्तभूमेरसुराधीनतया तत्र देवाना पराजयेऽपि यज्ञप्रदेशः पराजयरहितः ॥ अत एव तित्तिरिराह ॥ विष्णोः स्थानमसीत्याह । यज्ञो वै विष्णुः । एतत् खलु वै देवानामपराजितमायतनं यद्यज्ञः देवानामेवापराजित आयतने ति-ष्ठतीति तथाविधादितोऽस्माद्देवयजनस्थानात् स्वकीयभूबलोपेतायुद्धार्थमु-द्युक्त इन्द्रो वीर्यमकृणोत् । वीरस्य कर्म शत्रुवधरूपमकरोत् । इन्द्रेण वीर्यं

होत्रं वेदूत्यं ॥ अवतात्वांद्यावापृथिवीऽअवत्वंद्यावापृथिवी ॥ ४ ॥ स्विष्टकृद्देवेभ्य । इन्द्रऽआज्येनहविषाभूत्स्वाहा ॥ संज्योतिषा ज्योतिः ॥५॥ अत्रपितरो । मादयध्वंयथाभागमावृषायध्वं ॥ अ-

---

कृते सति शत्रुप्रयुक्तविघ्नाभावाद् अध्वरो यज्ञ ऊर्ध्व आस्थादुन्नतावस्थितः । यस्मादध्वरो निर्विघ्नेऽवस्थितस्तस्मात् कारणाद्, हे अग्ने, त्वं चेद् होतुः कर्म वेविद्धि जानीहि । तथा, दूत्यं देवसम्बन्धि दूतकर्म वेविद्धि । होतृत्वदेवदूतत्वयोरग्निसम्बन्धित्वं कण्वो दर्शयति ॥ अग्नेर्वै होत्रं वेदूत्यमित्युभयं ह वा एतदग्निर्देवानां होता च दूतश्च, तदुभयं विद्धि यद्देवानामसीत्येवैतदाहेति ॥ ईदृशं त्वामग्निमुभे द्यावापृथिवी देवते अवतां पालयताम् । हे अग्ने त्वमपि द्यावापृथिवी लोकद्वयदैवते अव पालय इत्थमन्योन्यपालने सति देवेभ्यो देवोपकारार्थम्, इन्द्रः आज्येन हविषाऽस्माभिर्दत्तेन स्विष्टकृद् भूत् सुष्ठु इष्टं करोतीति स्विष्टकृत् तादृशो भवतु ॥ यद्यदस्माभिरिज्यते तत्तदिष्टं सर्वं वैकल्यरहितं करोतु । स्वाहा । इन्द्रं देवमुद्दिश्येदमाज्यं दत्तम् ॥ कात्यायनः ॥ उत्तराघारमाघार्यासंस्पर्शयन् स्रुचावेस जुह्वा ध्रुवाऽऽसमनक्ति संज्योतिषेतीति ॥ ज्योतिरिति मन्त्रशेषः ॥ अवागच्छतामित्यध्याहर्तव्यम् ॥ ध्रुवायां स्थितमाज्यरूपं यज्ज्योतिस्तेन ज्योतिषा सह जुह्वा सिच्यमानमाज्यरूपं ज्योतिः संगच्छताम् ॥ आघारशेषाज्यस्य ध्रौवाज्यस्य च संगमनं तित्तिरिरुपपादयति ॥ शिरो वा एतद्यज्ञस्य आत्मा ध्रुवा आघारमाघार्य ध्रुवाऽऽसमनक्ति आत्मनेव यज्ञस्य शिरः प्रतिदधातीति ॥ आत्मशब्देनात्र गलादधस्तनो देहभागो विवक्षितः ॥ कण्वोऽपि, तद्ध्रुवाऽऽसमनक्ति शिरो वा एतदित्यादिना तथैवावोचत् ॥ ३ ॥ ४ ॥ ५ ॥ अथोत्तरस्य प्रयोगस्यायं क्रमः ॥ प्रयाजा आज्यभागौ प्रधानयागस्तच्छेषप्राशनं चेति ॥ तत्र प्राशनार्थं हविश्चतुर्द्धा कृत्वेदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध इत्यृत्विग्भ्य आदिशेत् । तदानीं यजमानो मन्त्रं जपेत् ॥ तदाह कात्यायनः ॥ अत्र पितर इति यजमानो जपतीति ॥ पाठस्तु ॥ अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति ॥ हे पितरो, यूयम् अत्राऽस्मिश्चतुर्द्धा विभज्यादिश्यमाने मादयध्वं हृष्टा भवत । ततो हविषि यथाभागं स्वं स्वं भागमनतिक्रम्य आवृषायध्वं समन्ताद् वृषवदाचरध्वम् । यथा वृषो घासं स्वाभीष्टं प्राप्य तृप्तिपर्यन्तं स्वीकरोति तद्वद् स्वीकुरुत ॥ यद्यप्येतान् भागान् ऋत्विजो

मीमदन्तपितरोयथाभागमावृषायिषत ॥ ६ ॥ उपहूतापृथिवी । मा-तोपमांपृथिवीमाताह्वयतां ॥ अग्निराग्नीध्रात्स्वाहा ॥ ७ ॥ उप-हूतोद्यौःपितोपमांद्यौष्पिताह्वयतां ॥ अग्निराग्नीध्रात्स्वाहा ॥ ८ ॥ मयीद । मिन्द्रइन्द्रियंदधात्वस्मान्रायोमघवानः सचन्तां ॥ अस्मा-

---

भक्षयन्ति, न तु पितरस्तथापि दर्शनेन पितृणां तृप्तिर्भवति ॥ न वै देवा अ-श्नन्ति न पिबन्त्येतदेवा अमृतं दृष्ट्वा तृप्यन्तीति श्रुत्यन्तरात् ॥ कात्यायनः ॥ विसृज्यामीमदन्तेति ॥ जपतीत्यनुवर्त्तते ॥ पाठस्तु ॥ अमीमदन्त पितरो यथा-भागमावृषायिषतेति ॥ यान् पितृन् प्रति स्वीकुरुतेत्युक्तं ते पितरः, अमीमदन्त भृशं हृष्टवन्तः । यथाभागमावृषायिषत स्वं स्वं भागम् अनतिक्रम्य स्वीकृत-वन्तः ॥ पूर्वमन्त्रेण भागान् स्पृष्ट्वा जपेत् ॥ इमं तु विसृज्य जपतीति विशे-षः ॥ ६ ॥ कात्यायनः ॥ एकैकमाहरति द्यावापृथिव्योरुपह्वानेऽग्नीधे षडव-त्तं माऽहनात्युपहूता पृथिवीतीति ॥ यदा होता द्यावा पृथिव्योरुपह्वानं करोति तदानीमाग्नेयपुरोडाशमग्नीषोमीयपुरोडाशं चैकैकमाग्नीध्राय षडवत्तं सम्पा-द्याहरेत् । स चोपहूतेति मन्त्रेण प्राश्नीयात् ॥ पाठस्तु ॥ उपहूता पृथिवी मातोपमां पृथिवीमाता ह्वयताम् ॥ अग्निराग्नीध्रात् स्वाहा ॥ उपहूतो द्यौष्पितो-पमा द्यौष्पिता ह्वयताम् । अग्निराग्नीध्रात् स्वाहेति ॥ येयं पृथिवी दृश्यते सेयं जगतो माता उपहूता अभ्यनुज्ञाता मातृत्वेनास्माभिर्भाविता । सा च माता पृथिवी मा हविःशेषभक्षणायोद्यतम् । उपह्वयतामभ्यनुजानातु । आग्नीध्रादेत-न्नामकादार्त्विज्यात् कर्मणो हेतोरग्निरहं वह्निस्वरूप सन् भक्षयामीति शेषः । तस्मात् स्वाहा मदीयमुख.म्नाविद हविः स्वाहा सुहुतमस्तु । प्रथमपुरोडाशभक्षणे मन्त्रः ॥ ७ ॥ उपहूतो द्यौरित्यादिकस्तु द्वितीयपुरोडाशशेषभक्षणमन्त्रः ॥ द्यौः द्युलोकाभिमानी देवता पिता सर्वस्य जगत पालकत्वात् पिता उपहूतो-ऽस्माभिश्च पितृत्वेनाभ्यनुज्ञातो द्यौः पिता द्युलोकरूपः स पिता मा भक्षणाय उद्यतम् उपह्वयतामभ्यनुजानातु ॥ अग्निरित्यादिकं पूर्ववत् ॥ ८ ॥ कात्या-यनः ॥ आशासाने मयीदमिति यजमानो जपतीति ॥ यदा होता मन्त्रमाशीर्वि-षयं प्रयुङ्क्ते तदा यजमानो जपेत् ॥ पाठस्तु ॥ मयीदमिन्द्र इन्द्रियं दधात्व-स्मान् रायो मघवानः सचन्ताम् । अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वा-शिष इति ॥ इन्द्रः परमेश्वर इदमस्मदपेक्षितमिन्द्रियम् इन्द्रवद् वीर्यं मयि धत्

कः॑स॒त्त्वा॒शिषः॑स॒त्यानः॑स॒न्त्वा॒शिषः॑॥ अग्ने॑वाजजि॒द्वाजं॑त्वासस्॒वाᳪ॑सं॒वाज॒जितᳪ॒सं॒मा॑र्ज्मि ॥९॥। दे॒व॑सवि॒त॒रे॒तं॑त्वा॑वृणते॒बृ॒हस्प॒तिं॑ब्र॒ह्माणं॑ ॥ त॒द॒हं॒मन॑से॒प्रब्र॑वीमि ॥ १ ॥ मनो॑गाय॒त्र्यै । गा॑य॒त्री त्रि॒ष्टु॒भे॑त्रि॒ष्टु॒ब्ज॒ग॑त्यै॒ज॒ग॑त्य॒नु॒ष्टु॒भे॑ ॥ अ॒नु॒ष्टु॒प्प्र॒जाप॑तये॒प्र॒जाप॑ति॒र्विश्वे॑भ्यो॒दे॒वेभ्यः॑ ॥ २ ॥ बृ॒ह॒स्पति॒र्दे॒वानां॑ । ब्र॒ह्मा॒हं॒म॒नु॒ष्या॑णां॑ ॥

---

माने दधातु स्थापयतु । किञ्च, रायो धनानि दैवमानुषभेदेन द्विविधानि मघवानो धनवन्तश्चास्मान् यजमानान् सचन्तां समयन्तु सेवन्ताम् । किञ्चास्माकं यजमानानामाशिषोऽभीष्टार्थस्याशंसनानि सन्तु विद्यन्ताम्। किञ्च, नोऽस्माकमाशिषः पूर्वोक्ताः सत्याः सन्तु अवितथा भवन्तु ॥ कात्यायनः ॥ संमार्ष्टि पूर्ववदुपरिकामः॑सकृत्सकृत्सस्त्रा॑ग्नमिनीति॥पूर्वमिध्ममनंहने यथाऽग्ने वाजजिदिति मन्त्रेण संमार्गः कृतस्तत्परिक्रम्य त्रिः संमार्जनम् । अत्र तु परिक्रमणं विना संमार्जनमिति शेषः ॥ तथा मन्त्रपाठेऽपि पूर्वत्र, सरिष्यन्तमिति ॥ अत्रतु, ससृ॑वाᳪसमिति विशेष इत्यर्थः॥पाठस्तु ॥ अग्ने वाजजिद्वाजं त्वा ससृवाᳪसं वाजजितᳪ समार्ज्मीति ॥ वाजᳪससृवाᳪसम् अन्नमुद्दिश्य गतवन्तं सम्पादितवन्तमित्यर्थः ॥ अन्यत् पूर्ववत् ॥ ९ ॥ इति द्वितीयेऽध्याये द्वितीयोऽनुवाकः ॥ २ ॥

द्वितीये स्रुचाधारविषया मन्त्रा उक्ताः ॥ तृतीये, देवसवितरित्यादयो मन्त्रा ब्रह्मसम्बन्धिप्रयोगे उक्ताः ॥ तत्र कात्यायनो, ब्रह्माणं वृणीत इत्यारभ्य प्रयोगं ब्रुवन् देवसवितरित्युक्तमुदाजहार॥ पाठस्तु ॥ देवसवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणम् । तदहं मनसे प्रब्रवीमि । मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभे।अनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यः।बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणाम् । भूर्भुवः स्वरिति ॥ हे सवितर्देव एतं त्वा सवितृरूपं त्वां बृहस्पतिं ब्रह्माणं बृहस्पतिरूपं ब्रह्मनामकमृत्विजं वृणते याज्ञिका वरणं कुर्वन्ति।सवितृशब्दाभिधः परमेश्वर एव बृहस्पतिरूपेणावतारं कृत्वाऽस्य यागे ब्रह्मेति भावयन्तीत्यर्थः । तत्सर्वमहं मनुष्याणां मनसे मनोऽभिमानिदेवाय प्रब्रवीमि प्रकर्षेण कथयामि । तच्च मनो गायत्र्यै गायत्रीदेवतायै प्रब्रवीमीति शेषः । स चोत्तरेष्वपि पञ्चसु वाक्येषु द्रष्टव्यः । गायत्रीत्रिष्टुब्जगत्यनुष्टुप्प्रजापतिविश्वेदेवमुखेभ्यो ब्रह्मा प्रख्यातः । स च ब्रह्मा देवानां यागे बृहस्पतिरभूत् ॥ मनुष्याणां यागे त्वहं ब्रह्मा भवामि । इत्थं भूर्भुवः-

भूर्भुवः स्वर्निरस्तः पाप्मेदमहं बृहस्पतेः सदसि सीदामि ॥ ३ ॥ मि-
त्रस्य त्वा । चक्षुषा प्रतीक्षे ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बा-
हुभ्यां पूष्णो हस्ताभ्यां ॥ प्रतिगृह्णामि पृथिव्यास्त्वा नाभौ सादया-
म्यदित्या उपस्थे ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो-
हस्ताभ्यां ॥ ४ ॥ आददे । अग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेन ॥

---

स्वराख्येषु त्रिषु लोकेषु ब्रह्मप्रसिद्धिर्द्रष्टव्या । सोऽयं मन्त्रो वृतेन ब्रह्मणा जापतव्यः ॥ कात्यायनः ॥ ब्रह्मसदनात् तृणं निरस्य निरस्तः पाप्मेतीति ॥ योऽयं पाप्मा यज्ञविघातायाऽसुररूपेण निगूढः सोऽयं निरस्तो निराकृतः कात्यायनः ॥ इदमहं बृहस्पतेः सदसि सीदामीति ॥ इदमित्यङ्गुल्या निर्दिशन् ब्रह्मेत्थ ब्रूते । अहं मनुष्याणां ब्रह्मा बृहस्पतेर्देवसम्बन्धिब्रह्मणः सदसि स्थाने सीदाम्युपविशामि ॥ १ ॥ २ ॥ ३ ॥ कात्यायनः ॥ मित्रस्य त्वेति प्राशित्रं प्रतीक्षत इति ॥ चक्षुषा प्रतीक्षत इति मन्त्रशेषः । हे प्राशित्रभाग, त्वां मित्रस्य एतन्नामकस्यानुग्राहकस्य देवस्य चक्षुषा प्रतीक्षे सम्यक् पश्यामि ॥ कात्यायनः ॥ देवस्य त्वेति प्रतिगृह्णातीति ॥ पाठस्तु ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ प्रतिगृह्णामि स्वीकरोमीत्यर्थः । व्याख्यातमन्यत् ॥ कात्यायनः ॥ पृथिव्यास्त्वेति सादयतीति ॥ पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति ॥ सोऽयं मन्त्रोऽग्रे प्रतपत इत्यनुवाके व्याख्यातः ॥ कात्यायनः ॥ पुनरादाय, देवस्य त्वेत्यनामिकाङ्गुष्ठाभ्यामिति ॥ पाठस्तु ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इति ॥ असावप्यप्रकृद् व्याख्यातो मन्त्रः ॥ कात्यायनः ॥ अग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्निति ॥ पाठस्तु ॥ अग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेनेति ॥ हे प्राशित्र त्वाम् अग्नेरास्येन वह्निदेवतासम्बन्धिना मुखेन, तथा बृहस्पतिसम्बन्धिना मुखेन च प्राश्नामि भक्षयामि । अतो मदीयमुखस्योपद्रवो नास्तीत्यभिप्रायः ॥ पुरा कदाचिद्देवानां यागे बृहस्पतिः प्राशित्रं प्रतिगृह्णन् भक्षयँश्च मा हिंसिष्यतीति भीतः सन् हिंसापरिहाराय, देवस्य त्वेति मन्त्रेण प्रतिगृह्याग्नेष्ट्वेति मन्त्रेण प्राशितवानित्येतादृशमन्त्रद्वयाभिप्रायं तित्तिरिरित्यमाह ॥ सोऽबिभेत् प्रतिगृह्णँस्तं मा हिंसिष्यतीति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीत्यब्रवीत् । सवितृ-

याऽअप्स्वन्तर्देवतास्ताऽइदꣳशमयन्तु ॥ ५ ॥ स्वाहाकृतं जठरं । मिं-
द्रस्यगच्छ ॥ घसिनामेमासंपृक्थाऽऊर्ध्वे मेनाभेःसीद ॥ ६ ॥ इंद्र-
स्यत्वाजठरेसादयामि ॥ प्रजापतेर्भागोस्यूर्जस्वान्पयस्वान् ॥ ७ ॥
प्राणापानौमे । पाहिसमानव्यानौमेपाह्युदानव्यानौमेपाहि॥ऊर्गी-

---

प्रसूत एवैनं ब्रह्मणा देवताभिः प्रत्यग्रहात् । सोऽबिभेत्माक्त्त्वं माऽहिंसिष्यतीति-
त्यपेष्वास्येन प्राश्नामीत्यब्रवीत् ब्रह्मेरास्यं किंचन हिनस्तीति ॥ कात्यायनः ॥
नाभिमालभते या अप्स्वन्तरितीति ॥ पाठस्तु ॥ या अप्स्वन्तर्देवतास्ता इदꣳ
शमयन्तु । स्वाहाकृतं जठरमिन्द्रस्य गच्छ । घसिना मे मा संपृक्था ऊर्ध्वे मे
नाभेः सीद । इन्द्रस्य त्वा जठरे सादयामीति ॥ अप्स्वन्तर्जलेषु मध्ये या
देवताः सन्ति ता देवता इदं प्राशित्रं शमयन्तु । शान्तं कुर्वन्तु । भक्षितं
सन्मोदरे कमप्युपद्रवं यथा न करोति तथा कुर्वन्तु ॥ हे प्राशित्र
स्वाहाकृतं त्वां मया स्वाहाकारपूर्वकम् इन्द्राय समर्पितं भूत्वा तस्येन्द्रस्य
जठरं गच्छ । अतो ममोपद्रवो न भविष्यति । घस्लृ अदन इति धातुः । मे
घसिना मदीयेनादनेन भक्षणेन मा संपृक्थाः संपर्क मा कुरु । दन्तसंस्पर्शं मा
कुर्वित्यर्थः । मे मदीयाया नाभेरूर्ध्वं सीद उपरिभागे तिष्ठ। इन्द्रस्य परमेश्वर-
स्य जठरे त्वां सादयामि स्थापयामि ॥ कात्यायनः ॥ अन्वाहार्याभिघार्योद्वा-
स्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यामभिधायालभते, प्रजापतेर्भाग इति ॥पाठस्तु॥
प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् । प्राणापानौ मे पाहि समानव्यानौ मे
पाह्युदानव्यानौ मे पाहि । ऊर्गस्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रामु-
ष्मिँल्लोक इह चेति ॥ हे अन्वाहार्य, त्वं प्रजापतेः प्रजापालकस्य देवस्य भा-
गोऽसि । कथम्भूतो भागः । ऊर्जस्वान् रसयुक्तः । पयस्वान् क्षीरसारेणाज्येन
उपेतः । तथाविध त्वं मे यजमानस्य प्राणापानौ पाहि । ऊर्ध्वाधोवृत्ती वायु-
विशेषौ रक्ष । भुक्तस्यान्नस्य सर्वेष्ववयवेषु समत्वेन नयनहेतुर्वायुः समानः ।
शारीरं व्याप्य वर्तमानो वायुर्व्यानः । तौ समानव्यानौ मे मदीयौ पाहि ॥ उ-
त्क्रान्तिहेतुरुदानः । उदानव्यानौ मे मदीयौ पाहि । समानोदानाभ्यां सह
व्यानस्य द्विरभिधानं शारीरव्याप्तिदर्शनार्थम् । किञ्च, त्वम् ऊर्गसि रसरूपो-
ऽसि । अतो मयि यजमाने ऊर्जं धेहि । रसं स्थापय । किञ्च, त्वम् अक्षितिर-
सि । क्षयरहितोऽसि । अतो मे मदर्थम् । अमुत्रेह च परलोके तल्लोकयो-

स्वूर्ज्जम्मयि धेह्यक्षितिरसि मा मे क्षेष्ठाऽअमुत्रामुष्मिँल्लोकऽइह च ॥८॥
एषा ते । ऽअग्ने समित्तया वर्धस्व चाच प्यायस्व । वर्धिषीमहि च वय-
माच प्यासिषीमहि ॥९॥ एतत्ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे ।
तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥१०॥ मनो ज्योतिर्जुषतामा-
ज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु । अरिष्टं यज्ञं समिमं दधातु विश्वे दे-

---

मा क्षेष्ठाः क्षयं मा प्राप्नुहि । अमुत्रेत्यस्यैव व्याख्यानम्—अमुष्मिँल्लोक इति ॥ मा मे क्षेष्ठा अमुत्रेत्यस्य मन्त्रभागस्य तात्पर्यं तित्तिरिर्दर्शयति ॥ क्षीयते वा अमुष्मिँल्लोकेऽन्नमितः प्रदा इहामुष्मिँल्लोके प्रजा उपजीवन्ति । यदेवमभिमृश-त्यऽक्षितमेवैतद्भमयति, नास्यामुष्मिँल्लोकेऽन्नं क्षीयत इति ॥ स्वर्गलोके भु-ज्यमानमन्नं भोगे क्षीयते । पुनः सम्पादनहेतोः कृषिक्रियादेस्तत्राभावाद-ऽस्मिन्नेव भूलोके हविःस्वरूपेण देवेभ्यो यदन्नं दीयते तदेव फलरूपेण स्वर्गे लब्ध्वा प्रजा उपजीवन्ति । यदप्यत्र ब्राह्मणेभ्यो दीयते तदप्यमुत्रोपजीव-न्ति । एवं सति मन्त्रेणानेनाहार्यमभिमृशति चेत् तदानीमेतदन्नमक्षितिं प्रापयति तस्य पुरुषस्य स्वर्गे क्षयो नास्तीत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ का-त्यायनः ॥ एषा त इति होतानुमन्त्रयत इति ॥ पाठस्तु ॥ एषा ते अग्ने समित्तया वर्धस्व चाच प्यायस्व । वर्धिषीमहि च वयमाच प्यासिषीमहीति ॥ हे अग्ने ते तव समिदेषा इन्धनहेतुः काष्ठविशेषो यः प्रक्षिप्यते तया समिधा त्वं वर्धस्व वृद्धिं गच्छ । आप्यायस्व चास्मानपि सर्वतो वृद्धिं प्रापय । तथाच सति त्वत्प्रसादाद् वय वर्द्धिषीमहि वृद्धिं प्राप्नुयामः । आप्यासिषीमहि चास्म-दीयपुत्रपश्वादीन् सर्वतोऽभिवृद्धान् करवामः ॥ ९ ॥ कात्यायनः ॥ एतत्त इति समिदामन्त्रितः प्रस्तौति ॥ समिधमाधायानुज्ञाप्रदानाय सम्बोधितो ब्रह्मा मन्त्रेणानुजानीयात् ॥ पाठस्तु ॥ एतत्ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्र-ह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव । मनोज्योतिर्जुषतामाज्यस्य बृह-स्पतिर्यज्ञमिमं तनोतु । अरिष्टं यज्ञꣳ समिमं दधातु विश्वेदेवास इह माद-यन्ताम् ओ३म् प्रतिष्ठेति ॥ हे सवितर्देव ते तुभ्यमेतद्देवमिदानीं क्रियमाणं यज्ञं प्राहुर्यजमानाः कथयन्ति । अनुज्ञापयन्तीत्यर्थः । किञ्च, त्वया प्रेरितो देवानां यज्ञे यो ब्रह्मा तस्मै ब्रह्मणे बृहस्पतये प्राहुः । तेन कारणेन त्वं यज्ञमव पालय । तथा तेनैव कारणेन यज्ञपतिं यजमानमेवत्यनुवर्त्तते । तथा तेनैव कारणेन मा-

बासऽइहमादयंतामों३ प्रतिष्ठ ॥ ११ ॥ ॥ अग्नीषोमयोरुज्जितिं । मनू-ज्जेषं वाजस्य मा प्रसवेन प्रोहामि ॥ अग्नीषोमौ तमपनुदतां योऽस्मान्द्वे-ष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि ॥ इन्द्राग्न्योरुज्जितिम-नूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ॥ इन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि-

---

मतोऽध्वर्युं पालय । किञ्च, ते नमः । आज्यसम्बन्धि ज्योतिर्जुषतां दीप्यमानं रूपं सेवताम् । यज्ञसम्बन्धिन्याज्ये त्वदीयं चित्तं स्थापयेत्यर्थः । किञ्च बृहस्पतिर्य-ज्ञमिमं तनोतु विस्तारयतु । किञ्च, विश्वेदेवासः सर्वे देवा इह यज्ञकर्मणि मादयन्तां हर्षं कुर्वन्ताम् । एवं प्रार्थितः सविता देवः, ओं३ प्रतिष्ठेत्यनुज्ञां प्रयच्छ-ति । ओं३मित्यङ्गीकारार्थः । तथाऽस्तु । प्रतिष्ठ प्रणवं कुरु । समिदाधानकाले यजमानस्याऽभिमतं प्रधाणमवगत्य सविता देवोऽङ्गीकृत्य प्रयातुं प्रेरयती-त्यर्थः ॥ १० ॥ ११ ॥ द्वितीयेऽध्याये तृतीयोऽनुवाकः ॥ ३ ॥

तृतीये ब्रह्मसम्बन्धिमन्त्रा उक्ताः । चतुर्थे तु व्यूहादिमन्त्रा उच्यन्ते ॥ का-त्यायनः ॥ जुहूपभृतौ व्यूहत्यग्नीषोमयोरिति जुहूं प्राचीं दक्षिणेनोत्तानेनाग्नी-षोमीयमितीतरेणोत्तरां नीचां प्रतीचीं यथादेवतमन्यादिति ॥ जुहूपभृतोर्व्यूहनं नाम परस्परविपरीतत्वेनापो[redacted] । तत्रोत्तानेन दक्षिणहस्तेन जुहूं प्राचीं प्रथ-ममन्त्रमुच्चारयन्नपनुदेत् । वामहस्तेनाधोमुखेनोपभृतं प्रतीचीं द्वितीयमन्त्र-मुच्चारयन्नपनुदेत् ॥ तृतीयचतुर्थमन्त्राभ्यामैन्द्राग्नयागे पूर्वोक्ताग्नीषोमीय-यागवज्जुहूपभृतोर्व्यूहनं कुर्यात् ॥ प्रथममन्त्रपाठस्तु ॥ अग्नीषोमयोरुज्जि-तिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीति ॥ अग्नीषोमयोर्द्वितीयपुरोडाशदेव-तयोरुज्जितिमनु अविघ्नेन हविःस्वीकाररूपमुत्कृष्टं जयमनुसृत्योज्जेषं यजमानो-ऽहमुत्कृष्टजयं प्राप्तवानस्मि । वाजस्यान्नस्य पुरोडाशादेः प्रसवेनाभ्यनुज्ञ-या मा मां प्रोहामि मां यजमानं जुहूपधारिणं प्रोत्साहयामि । यद्यप्यूहतिधातुर्वि-तर्कार्थस्तथाप्युपसर्गवशाद् उत्साहवाची भवति ॥ द्वितीयमन्त्रपाठस्तु ॥ अग्नीषोमौ तमपनुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेना-पोहामि ॥ यः शत्रुरसुरादिरस्मान् द्वेष्टि अस्मदीययज्ञविनाशनाय द्वेषं करोति । यं चान्यमालस्यादिरूपमस्मदीयानुभावविरोधिनं शत्रुं वयं द्विष्मः । विनाशनो-द्योगं कुर्मः । उभयविधं तं शत्रुम् अग्नीषोमदेवौ अपनुदतां निराकुर्वताम् । अहमप्येनं द्विविधं शत्रुमुपभृद्रूपवाजस्य प्रसवेन पुरोडाशदेवताया अभ्यनु-

पंचंद्र्यंग्निभ्योवाजस्यैनंप्रसुवेनापोहामि ॥ १ ॥ वसुभ्यस्त्वा । रु-द्रेभ्यस्त्वादित्येभ्यस्त्वा ॥ संजानाथांद्यावापृथिवीमित्रावरुणौत्वा-वृष्ट्यावताम् ॥ २ ॥ व्यन्तुवयो । रिप्तोरिहाणामरुतांपृषतींगच्छ ॥ व-शापृश्निर्भूत्वादिवंगच्छततोनोवृष्टिमावह ॥ ३ ॥ चक्षुष्पाऽअग्नि ।

---

क्षया अपोहामि निराकरोमि ॥ तृतीयतुरीयमन्त्रद्वयपाठस्तु ॥ इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि इन्द्राग्नी तमपनुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीति ॥ अग्नीषोममन्त्रवत्तौ व्याख्यातौ ॥ ऐन्द्राग्नपुरोडाशानुष्ठाने तावेतौ स्रग्व्यूहनमन्त्रौ ॥ १ ॥ कात्यायनः ॥ जुहा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रतिमन्त्रमिति ॥पाठस्तु॥ वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वेति ॥ हे मध्यमपरिधे वसुभ्यो वसुदेवताप्रीत्यर्थं त्वा त्वां मध्यमपरिधिरूपमनज्मीति शेषः । एवं दक्षिणोत्तरपरिधिमन्त्रौ व्याख्यातौ । परिधित्रयाञ्जनेन सवनत्रयदेवताः प्रीयन्त इत्यभिप्रायः ॥ कात्यायनः ॥ स-ञ्जानाथामिति प्रस्तरादानमिति ॥ पाठस्तु ॥ संजानाथां द्यावापृथिवी मित्रा-वरुणौ त्वा वृष्ट्यावतामिति ॥ द्यावापृथिवी द्युलोकदेव्यौ संजानाथामादीय-मानमिमं प्रस्तरं सम्यगवगच्छताम् । हे प्रस्तर त्वां मित्रावरुणावेतन्नामकौ देवौ वृष्ट्याऽवतां जलवर्षणेन पालयताम् ॥ २ ॥ कात्यायनः ॥ अनक्त्येनं व्यन्तु वय इत्यग्रं जुह्वामुपभृति मध्यं मूलमितरस्यामिति ॥ इतरा ध्रुवा त-स्यामित्यर्थः ॥ पाठस्तु ॥ व्यन्तु वयो रिप्तो रिहाणा इति ॥ वयः पक्षिणः, रिप्तः व्यत्ययेन लकारस्य रेफः । लिप्तमित्यर्थः । रिहाणाः प्रस्तरगतमाज्य-लेपं लिहाना व्यन्तु गच्छन्तु । वी गतिप्रजनकान्त्यसनखादनेष्विति धातुः ॥ कात्यायनः ॥ मरुतामिति नीचैर्हृत्वा तृणमादायानुप्रहरतीति ॥ एकं तृणं प्र-स्तरात् पृथक् कृत्वा तं च प्रस्तरं नीचैरौन्नत्यं यथा न भवति तथा धृत्वा व-ह्नौ प्रहरेत् ॥ पाठस्तु ॥ मरुतां पृषतीं गच्छ । वशा पृश्निर्भूत्वा दिवं ग-च्छ । ततो नो वृष्टिमावहेति ॥ हे प्रस्तर त्वं मरुतां मरुन्नामकानां देवानां स-म्बन्धिनीं पृषतीं वाहनरूपामश्वां चित्रवर्णां गच्छ प्राप्नुहि । वायुवाहनवद्वेगेन गच्छेत्यर्थः । वशा पृश्निर्भूत्वा वशा स्वाधीना पृश्निरल्पतनुर्गौस्तद्रूपस्त्वं प्रा-प्य दिवं गच्छ द्युलोकं प्राप्नुहि । कामधेनुवत् तृप्तिकरी भूत्वा स्वर्गं गच्छेत्य-र्थः । ततः स्वर्गप्राप्तेरूर्ध्वं नोऽस्मदर्थं वृष्टिमावह भूलोके समानय ॥ ३ ॥ का-

चक्षुर्मेपाहि ॥ यंपरिधिंपर्यधत्थाऽअग्नेदेवपणिभिर्गुह्यमानः ॥४॥
तंतं । ऽएतमनुजोषंभराम्येषनेत्वदपचेतयातै ॥ अग्नेःप्रियपाथोपी-
तं ॥ ५ ॥ सꣳस्रवभागास्थे । षाबृहंतः प्रस्तरेष्ठाः परिधयश्चदेवाः ॥
इमांवाचमभिविश्वेगृणंतऽआसद्यास्मिन्बर्हिषिमादयध्वꣳस्वाहावा-

---

त्यनः ॥ चक्षुष्पा इत्यात्मनमालभत इति ॥ पाठस्तु ॥ चक्षुष्पा असि चक्षुर्मे पाहीति ॥ हे अग्ने त्वं चक्षुष्पा असि त्वदीयज्वालयान्धकारं निवर्त्य चक्षुष्पाः पालकोऽसि । अतो मे मदीयं चक्षुः पाहि । प्रस्तरप्रहरणेन प्रसक्तं चक्षुष उपद्रवं परिहरेत्यर्थः ॥ तमेतमभिप्रायं तित्तिरिर्दर्शयति ॥ यावद्वा अध्वर्युः प्रस्तरं प्रहरति तावदस्य चक्षुर्मीयते । चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्याह चक्षुरेवात्मं धत्त इति ॥ कात्यायनः ॥ परिधीननुप्रहरति यं परिधिमिति प्रथममिति ॥ पाठस्तु ॥ यं परिधिं पर्यधत्था अग्ने देवपणिभिर्गुह्यमानः । तं त एतमनुजोषं भराम्येष नेत्त्वदपचेतयाता इति ॥ हे आहवनीयाग्ने त्वं पणिभिः प्राणिभिश्चेतनात्मकैरसुरैर्गुह्यमानः । गुहू संवरणे इति धातुः । संव्रियमाणः संरुध्यमानः सन् यं परिधिं पश्चिमदिशि पर्यधत्था असुरोपद्रवनिवारणाय परिस्थापितवानसि ते तव जोषं प्रियं तमेतं परिधिम् अनुभरामि अनुक्रमेण हरामि । वह्नौ प्रक्षिपामि । एष परिधिस्त्वत्तः सकाशादपगतः सन् अपचेतयातै नैव चेतयतु । चिती संज्ञाने इति धातुः । त्वत्तोऽपगन्तु मा जानात्वित्यर्थः ॥ कात्यायनः ॥ इतरौ च युगपदग्नेः प्रियमितीति ॥ दक्षिणोत्तरपरिधी मन्त्रेण युगपत् प्रहरेत् ॥ पाठस्तु ॥ अग्नेः प्रियं पाथोऽपीतमिति ॥ हे दक्षिणोत्तरपरिधी युवामग्नेराहवनीयस्य प्रियमभिप्रेतं पाथोऽन्नम् अपीतमप्यपिगतम् ॥ अन्नमपि पाथ उच्यते इति हि यास्कः ॥ अग्नेरन्नं भवद्भ्यां प्राप्यतामित्यर्थः ॥ ४ ॥ ५ ॥ कात्यायनः ॥ सꣳस्रवभागा इति सꣳस्रावाञ्जुहोति ॥ पाठस्तु ॥ सꣳस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधयश्च देवाः । इमां वाचमभिविश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वꣳ स्वाहा वाडिति ॥ हे विश्वेदेवा एतन्नामकाः सर्वे देवा यूयं सꣳस्रवभागाः स्थ विलीनमाज्यं सम्यक् स्रवतीति व्युत्पत्त्या सꣳस्रव इत्युच्यते । स एव भागो येषां विश्वेषां देवानां ते सꣳस्रवभागाः । तथाविधा भवत । इषा इष्यमाणेन सꣳस्रवलक्षणेनान्नेन बृहन्तो महान्तः स्थ । किञ्च, प्रस्तरेष्ठाः प्रस्तरस्थायिनो ये देवाः परिध-

द् ॥ घृताचीस्थो धुर्यौ पातᳬसुम्नेस्थᳬसुम्ने मा धत्तं ॥३॥ ॥ अग्नेऽदब्धा-
यो । शीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्म-

यश्च परिधिभावमापन्नाश्च देवाः सन्ति ते विश्वे सर्वे देवा इमां मदीयां वाच-
म् अभिगृणन्तः सर्वत्र वर्णयन्तः । अयं यजमानः सम्यग्यजतीत्येवं सर्वेषां
देवानामग्रे कथयन्तो युयमासद्यात्रोपविश्यास्मिन् बर्हिषि एतस्मिन्मदीये
यज्ञे मादयध्वं हृष्टा भवत । स्वाहेति वाडित्येतौ शब्दौ हविर्दानार्थौ । स-
र्वथा दत्तमित्येवमादरं दर्शयितुं शब्दद्वयप्रयोगः ॥ ननु बृहदारण्यके, स्वाहा
वषडिति शब्दद्वयं दैविकहविर्दानमाम्नातम् ॥ देवा उपजीवन्ति स्वाहाकारं
च वषट्कारं चेति श्रुतेः । न तु वाडित्ययं शब्दो दानार्थे श्रुतः । नैव दोषः ।
वषडित्यस्यैव प्रत्यक्षत्वपरिहाराय वाडित्येवं शब्दान्तरेण प्रयुज्यमानत्वात् ॥
तदेव तित्तिरिणा विस्पष्टमुक्तम्— यद् वषट् कुर्याद् यातयामा वषट्कारः स्याद्
यन्न वषट् कुर्याद्रक्षाᳬसि यज्ञᳬ हन्युर्वडित्याह परोक्षमेव वषट् करोति नास्य-
स्य यातयामा वषट्कारो भवति । न यज्ञᳬ रक्षाᳬसि घ्नन्तीति ॥ ननु विश्वेषां
देवानां नास्ति सᳬस्तवभागत्वं, किन्तु वस्वादीनामेव ॥ तथा तित्तिरिणोक्तम् ॥
वसवो वै रुद्रा आदित्याः सᳬस्तवभागा इति ॥ नायं दोषः । विश्वशब्देन
वस्वादीनामपि विवक्षितत्वात् । वस्वादीन् प्रकृत्य विश्वशब्दवाच्यत्वमपि ति-
त्तिरिणैवोक्तम् ॥ एते हि विश्वेदेवा इति ॥ कात्यायनः ॥ घृताची इति धुरि
निदधाति ॥ शकटस्य या धूस्तस्यां जुहूपभृतौ निदध्यात् ॥ पाठस्तु ॥ घृता-
चीस्थो धुर्यौ पातᳬसुम्ने स्थः सुम्ने मा धत्तमिति ॥ हे जुहूपभृतौ युवां घृता-
ची घृतमञ्चतः प्राप्नुत इति घृताच्यौ स्थो भवतः । तथाविधे युवां धुर्याविन-
स्वाही धुरमर्हत इति तद्व्युत्पत्तेः । पातं रक्षतम् । किञ्च युवां सुम्ने स्थः सुख-
रूपे भवथः । तस्मात् सुखमाधत्तमास्थापयतम् ॥ ३ ॥ इति द्वितीयेऽध्याये तु-
रीयोऽनुवाकः ॥ ४ ॥

तुरीये स्रुग्व्यूहनादिमन्त्रा उक्ताः । पञ्चमे स्रुक्स्रुवग्रहादिमन्त्रा उ-
च्यन्ते ॥ कात्यायनः ॥ स्रुक्स्रुवं प्रगृह्णात्यग्नेऽदब्धायविति ॥ पाठस्तु ॥ अ-
ग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्म-
न्यै । अविषन्नः पितुं कृणु सुषदा योनौ स्वाहा वाड् इति ॥ दभ्नोतिर्हिंसाक-
र्मा । आयुरिति मनुष्यनाम । अदब्धमायुरहिंसितो मनुष्यो यजमानरूपो य-

न्यै ॥ भविषंनः पितुंकृणुसुपदायोनौस्वाहावाद् ॥ १ ॥ अग्नये संवेशपतयेस्वाहासरंस्वत्यैयशोभगिन्यैस्वाहा ॥ उलूखलेमुसले-यच्चशूर्पेऽआशिश्लेषंदृषदियत्कपाले ॥ २ ॥ उत्प्रुषोविप्रुषः । संजुहोमिसत्याःसंतुयजमानस्यकामाः स्वाहा ॥ आप्यायतांध्रुवाहविषाघृतेनयज्ञंयज्ञंप्रतिदेवयद्भ्यः ॥ सूर्यायाऽऊधोऽअदित्याऽउपस्थऽउ-

---

स्याग्नेः सोऽयमदब्धायुः । अश भोजन इति धातुः । अशितम भोक्तृतम । यद्वा, अशूङ् व्याप्ताविति धातुः । व्यापकतम । उक्तविशेषणद्वययुक्त हे अग्ने दिद्युरिति वज्रनाम । तस्माच्छत्रुप्रयुक्ताद्वज्रसपातादायुधान्मां पाहि । प्रसित्यै । बन्धनहेतुज्वालाविशेषः प्रसितिः।तस्याः शत्रुप्रयुक्ताया मां पाहि। दुरिष्टिरशास्त्रीयो यागस्ततो मां पाहि । दुरद्मनी दुर्भोजनं तस्मान्मां पाहि । पितुरित्यन्ननाम, नोऽस्मदीयं विषरहितं कुरु । योनिरिति गृहनाम, सुषदा सुष्ठुसदने सम्यगवस्थानयोग्ये योनौ गृहे मां स्थापयेति शेषः । स्वाहा वाडित्येतदुभयं पूर्ववद् व्याख्येयम् ॥१॥ कात्यायनः ॥ दक्षिणाग्नौ जुहोत्यग्नय इति,सरस्वत्या इति चेति ॥ प्रथममन्त्रपाठस्तु ॥ अग्नये संवेशपतये स्वाहेति ॥

स्त्रीपुंसयोरभिलापपूर्वकम् एकत्र शयनं संवेशः । तस्य पतिर्योऽग्निस्तस्मै स्वाहा हविर्दत्तम् ॥ द्वितीयमन्त्रपाठस्तु ॥ सरस्वत्यै यशोभगिन्यै स्वाहेति । जीवतः पुरुषस्य प्रशंसा यशस्तस्य यशसो भगिनी वाग्रूपा सरस्वती तथाविधायै हविर्दत्तम् ॥ कात्यायनः ॥ उलूखले इति पिष्टलेपां जुहोतीति ॥ पाठस्तु ॥ उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले । उत्प्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहेति ॥ उलूखलादिपञ्चसु तत्तद्व्यापारकाले यद्यदीयद्धविराशिश्लेष सर्वतः श्लिष्टमभूत् । किञ्च । उत्प्रुषः शूर्पपाता विप्रुषो हविर्द्रव्यस्य बिन्दवो ये सन्ति तत्सर्वं जुहोमि यथा नावशिष्यते तथा सम्यग् जुहोमि । तेन होमेन यजमानस्य कामाः सत्याः सन्तु । यत्कामितं तत्सर्वं लभताम् ॥ कात्यायनः ॥ अवदायावदाय ध्रुवामभिघारयत्याप्यायतामितीति ॥ ध्रुवायामवस्थितं घृतं यदा यदा होतुमवद्यति तदा तदा तां ध्रुवामभिघारयति । पुनर्घृतेन,पूरयेत् ॥ पाठस्तु ॥ आप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः । सूर्यायाः ऊधो अदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् इति ॥ देवयद्भ्यः देवानग्न्यादीन् यन्ति

कशीरापृथिवीयुज्ञेऽअस्मिन् ॥ ३ ॥ देवागातुविदो । गातुम्वित्वा-
गातुमित ॥ मनसस्पतऽइमंदेवयुज्ञᳪस्वाहावातेधाः ॥ ४ ॥ संब-

---

मः स्नुवन्ति यष्टुमित्येवं विग्रहे सति देवयन्तो यजमानास्तेभ्यस्तदुपकारार्थं यज्ञं यज्ञं प्रति यदा यदा यजमानमुपस्थितं तदा तदा हविषा घृतेन हविष्ट्वसिद्ध्यर्थं संस्कारयुक्तेनाज्येन ध्रुवास्थितेन स्थापिता स्रुक् आप्यायतां सर्वतः पूर्यताम् ॥ अदित्या उपस्थे । पृथिव्या उत्सङ्गे या सूर्या धेनुरस्ति क्षुप्तु इर्णं तृणभक्षणार्थं गमनं पुनरपि दोहनार्थं गृहगमनं यस्या धेनोरस्ति सा धेनुः सूर्या । तस्या ऊधस्तनानां मूलभागः क्षीरपूर्णं पयः; आप्यायतामित्यनुवर्तते । सर्वतो वर्धतामित्यर्थः । अस्मिन् यज्ञे अस्माभिरनुष्ठीयमाने पृथिवी या देवयजनरूपा विद्यते । सेयमुरुधारा बहुविधधारोपेता भवत्विति शेषः । तथा सति न कदाचिदियं ध्रुवा रिक्ता भवति ॥ तदेतद् ध्रुवाया आप्यायनमन्त्रपव्यतिरेकाभ्यां तित्तिरिर्दर्शयति । ध्रुवां वै रिच्यमानं यज्ञोऽनुरिच्यते । यज्ञं यजमानो यजमानं प्रजा ध्रुवामाप्यायमानां यज्ञोऽन्वाप्यायते यज्ञं यजमानो यजमानं प्रजा इति ॥ २ ॥ ३ ॥ कात्यायनः ॥ समिद्वत्स्नुवं जुहोति देवा गातुविद इतीति ॥ पाठस्तु ॥ देवा गातुविदो गातुमित्वा गातुमित । मनसस्पत इमं देव यज्ञᳪ स्वाहा वाते धा इति ॥ कै गै शब्दे इति धातुः । गीयते नानाविधैर्वैदिकशब्दैः प्रतिपाद्यत इति गातुर्यज्ञः । तं विदन्ति जानन्तीति गातुविदः । तादृशा हे देवा गातुमित्वा अस्मदीयो यज्ञः प्रवृत्त इति विदित्वा । एतिधातोर्गत्यर्थस्य ज्ञानार्थत्वमुपचर्यते । गातुमित तं यज्ञं गच्छत । यद्वा गातुं गन्तव्यो मार्गः । अस्मदीयेन यज्ञेन तुष्टाः सन्तः स्वकीयं मार्गं गच्छत । हे मनसस्पते देवान् यष्टुमस्मदीयस्य मनसः प्रेरणेन पालक परमेश्वर, इममनुष्ठितं यज्ञं स्वाहा त्वद्धस्ते ददामि । देव वाते वायुरूपे देवे धाः स्थापय । यज्ञोपक्रमे, वाताद् यज्ञः प्रयुज्यतामिति मन्त्रेण वातस्य यज्ञप्रवर्तकत्वमुक्तम् । अतः समाप्तावपि वाते यज्ञस्थापनमुचितम् । तदेतत्तित्तिरिर्दर्शयति ॥ ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद् । योऽयं पवते यज्ञं प्रयुङ्क्ते तदेनं प्रतिष्ठापयतीति । वाताद्वाध्वर्युर्यज्ञं प्रयुङ्क्ते देवा गातुविदो गातुमित्वा गातुमितेत्याह । यत एव यज्ञं प्रयुङ्क्ते तदेनं प्रतिष्ठापयतीति ॥ ४ ॥ कात्यायनः ॥ बर्हिः संबर्हिरितीति ॥ जुहोतीत्यनुवर्तते ॥ पाठस्तु ॥ सम्बर्हिरङ्क्ता हविषा घृतेन समादित्यैर्वसुभिः संमरुद्भिः

हिंस्क्ता॒ हविषा घृतेन॒ समादित्यैर्वसुभिः संमरुद्भिः ॥ समिन्द्रो विश्व-देवेभिरक्तां दिव्यं नभो गच्छतु यत्स्वाहा ॥ ५ ॥ कस्त्वा । विमुंच-ति॒ स त्वा विमुंचति॒ कस्मै॑ त्वा विमुंचति॒ तस्मै॑ त्वा विमुंचति ॥ पोषाय॒ रक्षसां भागोऽसि ॥ ६ ॥ वेदों । स्युपवेषो द्विषतो ग्रीवा उपवेवि-

---

समिन्द्रो विश्वदेवेभिरक्ता दिव्यं नभो गच्छत यत्स्वाहेति ॥ इन्द्रो देवः हविःसंस्कारयुक्तेन घृतेन बर्हिर्दर्भं समक्तां सम्यगञ्जनोपेतं करोतु । स चेन्द्रः केवलो न भवति, किन्त्वादित्यैर्वसुभिश्च द्विरिर्भगणदेवैः सहितः समक्तामित्य-नुवर्तते । तथा मरुद्भिर्गणदेवैः सहितः समङ्क्ताम् । तथा विश्वेदेवेभिर्विश्वनाम-केश्च गणदेवैः सहितः समङ्क्ताम् । एतद्भिरेव देवैरक्तं तदित्यध्याहारः । नभ इत्यादिस्तु नामसु पठ्यते । तदुक्तं बर्हिर्दिव्यं द्युलोके वर्तमानं नभो गच्छतु । आदित्यं प्राप्नोतु स्वाहा । इदं बर्हिर्देवोद्देशेन दत्तम् ॥ ५ ॥ कात्यायनः ॥ वेद्या प्रणीता निनयति परीत्य कस्त्वेतीति ॥ परीत्य होमस्थानात् प्रत्यावृत्ये-त्यर्थः ॥ पाठस्तु ॥ कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वां विमुञ्चति । पोषायेति ॥ पूर्वाध्याये, अग्ने व्रतपत इत्यनुवाके, कस्त्वा युनक्तीत्ययं यज्ञयोगमन्त्रः प्रजापतिदैवत्यो यथा व्याख्यातस्तथैवायं यज्ञवि-मोकमन्त्रो व्याख्येयः । किमर्थोऽयं यज्ञविमोकः? पोषाय, यजमानं पोषयितुम् । एतस्य विमोकस्याभावे यजमानोऽप्रतिष्ठितः स्यात् । विमोके त्वसौ प्रति-तिष्ठति । तदुभयं तित्तिरिर्दर्शयति ॥ यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति । कस्त्वा युनक्ति स त्वा विमुञ्चत्वित्याह । प्रजापतिर्वै-कः प्रजापतिनैवैनं युनक्ति प्रजापतिना विमुञ्चति प्रतिष्ठित्या इति ॥ का-त्यायनः ॥ पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनं रक्षसा-मिनीति ॥ भागोऽसीति मन्त्रशेषः । हे कणसमूह त्वं रक्षसामपेक्षितो भागो-ऽसि । तेषां नीचजातित्वान्निकृष्टकणरूपो भागो युक्तः ॥ ६ ॥ कात्यायनः ॥ मूलादुपवेषं करोति वेषोऽसीति ॥ यदा पलाशशाखां छित्वा यजमानस्य पशून् पाहीति व्यूहति ॥ पाठस्तु ॥ वेषोऽस्युपवेषो द्विषतो ग्रीवा उपवेवि-ड्ढीति ॥ वेष इति कर्मनाम । हे शाखामूल, त्वं वेषोऽसि कर्मात्मको भवसि तथा उपवेषोऽसि वेषस्य समीपगत उपकारी भवसि । द्विषतो द्वेषं कुर्वतो राक्षसादेर्ग्रीवा गलप्रदेशानुपवेविड्ढि समीपमागत्यातिशयेन प्रविश । उत्तरं

द्धि ॥ वेशाँ॑ऽअग्ने सुभग धारयेह ॥ ७ ॥ रुद्धाः कर्मण्या । ऽअनपा॑यिनो यथा॑सन् ॥ जुहोमि त्वा सुभग सौभगाय पुरुतमं पुरुहूत श्रव॒स्यन् ॥ ८ ॥ ॥ संवर्चसा । पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ॥ त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टं ॥ १ ॥ यज्ञ शं । चं त उप च ॥ शिवे मे संतिष्ठस्व रिष्टे मे संतिष्ठस्व रिष्टे मे

मन्त्रद्वयं लिङ्गानुसारेणापि यथास्थानं विनियोज्यम् । तत्राद्येन मन्त्रेणाग्निं प्रार्थयते ॥ पाठस्तु ॥ वेशान् अग्ने सुभग धारयेहेति ॥ सुभग शोभनभाग्यसंपन्न, हे अग्ने, इहास्मिन् कर्मणि वेशान् धारय हविषां प्रवेशान् पोषय ॥ ७ ॥ द्वितीयमन्त्रेण पयोलक्षणं हविः स्तुवन् जुहोति ॥ पाठस्तु ॥ रुद्धाः कर्मण्या अनपायिनो यथा सन् । जुहोमि त्वा सुभग सौभगाय पुरुतमं पुरुहूत श्रवस्यन् इति ॥ रुद्धाः अग्निमाश्रित्य स्थिताः कर्मण्याः । कर्मणि पूजार्हा देवा अनपायिनः कदाचिदप्यगताः । तथा सन् येन प्रकारेण भवन् भवन्तीत्यर्थः । तथा हे सुभग शोभनभाग्योपेत पुरुहूत बहुभिर्यजमानैराहूत वह्ने त्वां श्रवस्यन् स्तुवन् सौभगाय यजमानस्य सौभाग्यसिद्ध्यर्थं, पुरुतमम् अतिशयेन प्रभूतं हविर्जुहोमि ॥ ८ ॥ इति द्वितीयेऽध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

पञ्चमे स्रुक्स्रुवग्रहा मन्त्रा उक्ताः ॥ षष्ठे यजमानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ पूर्णपात्रं निनयति परीत्य सन्ततं यजमानोऽञ्जलिना प्रतिगृह्णाति संवर्चसेति मुखं विमृष्टे इति ॥ पाठस्तु ॥ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति ॥ वर्चसा ब्रह्मवर्चसेन समगन्महि वयं सङ्गता भवामः । तथा पयसा क्षीरादिरसेन समगन्महीत्यनुवर्तते । तनूभिरनुष्ठानक्षमैः शरीरावयवैः समगन्महि । शिवेन समीचीनेन कर्मणा श्रद्धायुक्तेन मनसा समगन्महि । किञ्च सुदत्रः त्वष्टा शोभनदानोपेतः त्वष्टानामको देवो रायो धनानि विदधातु संपादयतु । तन्वः शरीरस्यास्मदीयस्य यद्विलिष्टं विशेषेण न्यूनमङ्गं यदस्ति तदतिशयेन नः अनुमार्ष्टु न्यूनत्वपरिहारेणानुकूलं कृत्वा शोधयतु ॥ १ ॥ कात्यायनः ॥ यज्ञ शं च त इति वेदिमालभत इति ॥ पाठस्तु ॥ यज्ञ शं च त उप च शिवे मे सन्तिष्ठस्व रिष्टे मे सन्तिष्ठस्व स्विष्टे मे संतिष्ठस्वेति ॥ शमिति सुखम्, उपेत्युपचयोऽभिवृद्धिः । चकारावन्योन्यसमुच्चयार्थौ । अस्त्वित्यध्याहारः । हे यज्ञ ते तव सुखमस्तु । अभिवृद्धिरप्यस्तु ।

संतिष्ठस्व ॥ २ ॥ दिविविष्णुः । व्यक्रंस्त जागतेनच्छन्दसा ततो निर्भक्तः ॥ योस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तः ॥ योस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा ततो निर्भक्तः ॥ योस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ ३ ॥ अस्मादन्नादस्यै प्रतिष्ठाया अगन्म स्वः ॥ संज्योतिषाभूम ॥ ४ ॥ स्वयंभूरसि । श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे दे-

---

किञ्च ये यजमानस्य शिवे शान्तिनिमित्तं संतिष्ठस्व, हे यज्ञ शान्तो भव। अरिष्टेमे हिंसा तन्निमित्तं मे मम एतस्मिन्नर्थं संतिष्ठस्व । तथा स्विष्टेऽभीष्टे संतिष्ठस्व ॥ २ ॥ कात्यायनः ॥ विष्णुक्रमानक्रमते दिवि विष्णुरिति प्रतिमन्त्रमिति । विष्णुपादत्वबुद्ध्या स्वकीयपादस्य भूमौ प्रक्षेपा विष्णुक्रमाः ॥ प्रथममन्त्रपाठस्तु ॥ दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा ततो निर्भक्तः॥योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति ॥ विष्णुशब्दाभिधेयो यज्ञपुरुषः, जागतेन छन्दसा जगतीछन्दोरूपेण स्वकीयपादेन दिवि द्युलोके व्यक्रंस्त विशेषेण क्रमणं कृतवान् । तथा सति ततो द्युलोकात् निर्भक्तं भागरहितं कृत्वा, शत्रुर्निःसारितः।कोऽसौ शत्रुः। योऽस्मान् द्वेष्टि यश्चास्माभिर्द्विष्यते द्विविधोऽप्यसौ शत्रुः॥ द्वितीयतृतीययोर्मन्त्रपाठस्तु ॥ अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तः । योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति॥पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा ततो निर्भक्तः । योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति च ॥ एतौ द्वौ मन्त्रौ प्रथममन्त्रवद् व्याख्येयौ ॥ ३ ॥ ॥ ॥ कात्यायनः ॥ अस्मादन्नादिति भागमवेक्षत इति ॥ यो यजमानस्य हविर्भागस्तमवेक्षते । अस्मात्पुरतो वर्तितादन्नाद्यजमानसंबन्धिहविर्भागान्निर्भक्त इत्यादिको वाक्यशेषोऽनुवर्त्तनीयः ॥ कात्यायनः ॥ अस्यै प्रतिष्ठाया इति भूमिमिति । इत आरभ्य पञ्चसु विनियोगेष्ववेक्षत इति पदमनुवर्तते । अस्यै पुरतो दृश्यमानायै प्रतिष्ठितायै प्रतिष्ठाहेतोर्यज्ञभूमेर्निर्भक्त इत्यादिके पूर्ववदनुवर्तनीयम् ॥ कात्यायनः ॥ अगन्म स्वरिति प्राचीमिति ॥ पूर्वस्यां दिश्यवस्थितः स्वर्गलोकः स्वरित्यभिधीयते । तं लोकमगन्म यज्ञानुष्ठानेन वयं प्राप्तवन्तः ॥ कात्यायनः ॥ संज्योतिषेत्याहवनीयमिति ॥ अभूमेति मन्त्रशेषः । ज्योतिषा आहवनीयलक्षणेन सम्भूम वयं संगता अभूम ॥ ४ ॥ कात्यायनः ॥ स्वयंभूरिति सूर्यमिति ॥

हि ॥ सूर्यस्यावृतमन्वावर्ते ॥ ५ ॥ अग्ने गृहपते सुगृहपतिरहं त्वया गृहपत्या भूयासं ॥ सुगृहपतिस्त्वं मया गृहपत्या भूयाः ॥ ६ ॥ अस्थूरिणो गार्हपत्यानि सन्तु शतꣳ हिमाः तिग्मेन नस्तेजसा सꣳशिशाधि सूर्यस्यावृतमन्वावर्त्ते ॥ ७ ॥ उरु विष्णो । विक्रमस्वोरु क्षयाय नस्कृधि ॥ घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ॥ ८ ॥ ततोऽसि । तंतु

---

असि श्रेष्ठो रश्मिरिति मन्त्रशेषः । हे सूर्य त्वं स्वयंभूः स्वतः सिद्धः श्रेष्ठोऽत्यन्तप्रशस्तः रश्मिरसि दीप्तिरूपोऽसि ॥ कात्यायनः ॥ वर्चोदायं कामं कामयत इति ॥ काममुद्दिश्य सूर्यमवेक्षेतेति शेषः ॥ पाठस्तु ॥ वर्चोदा असि वर्चो मे देहीति । तेजोवाचिना वर्चःशब्देनापेक्षितः कामः सर्वोऽप्युपलक्ष्यते । हे सूर्य त्वं वर्चोदा अपेक्षितफलप्रदोऽसि । अतो मे मह्यं वर्चो देहि अपेक्षितं प्रयच्छ सूर्यस्येत्यनुवर्त्तते ॥ प्रदक्षिणमिति ॥ आवृतमन्वावर्त इति मन्त्रशेषः । सूर्यस्य संबन्धि आवृतं यदावर्त्तमानमस्ति तदनुसृत्याहमपि आवर्ते प्रादक्षिण्येनावर्तनं करोमि ॥ ५ ॥ कात्यायनः ॥ गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इतीति ॥ पाठस्तु ॥ अग्ने गृहपते सुगृहपतिरहं त्वया गृहपत्या भूयासम् । सुगृहपतिस्त्वं मया गृहपत्या भूयाः । अस्थूरिणो गार्हपत्यानि सन्तु इति । गृहपतेऽस्मदीयगृहस्य पालक हे अग्ने गृहपत्या गृहपालकेन त्वया त्वत्प्रसादेनेत्यर्थः । अहमपि सुगृहपतिः सुष्ठु गृहस्य पालको भूयासम् । तथा त्वमपि गृहपत्या मया मदीयसेवयेत्यर्थः । गृहपतिर्भूयाः गृहपालको भव । एवं सति नोऽस्माकं गार्हपत्यानि गृहपतिभ्यां स्त्रीपुरुषाभ्यां निष्पाद्यानि कर्माणि । अस्थूरिशब्देन स्थूलत्वमनुष्ठानाभ्यामलक्षणमभिधीयते । तद्रहितं यथा भवति तथा सम्यगनुष्ठितानि भवन्त्वित्यर्थः ॥ कात्यायनः ॥ शतꣳ हिमा इति ध्रुवादिति ॥ पाठस्तु ॥ शतꣳ हिमाः तिग्मेन नस्तेजसा सꣳशिशाधीति ॥ हे सूर्य शतꣳ हिमाः । शतसंख्याकानि वर्षाणि । हिमशब्दो हेमन्तऋतुमाचष्टे ॥ तथाच तैत्तिरीयाश्चाहुः ॥ शतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वैतदाहेति ॥ हिमशब्दसूचितैर्हेमन्तैस्तद्युक्ताः संवत्सरा लक्ष्यन्ते । शतसंवत्सरेषु निरन्तरं नः अस्मान् तिग्मेन तीक्ष्णेन तेजसा अनुष्ठानादिप्रकाशनेन संशाधि सम्यक् शिक्षय ॥ कात्यायनः ॥ सूर्यस्येत्यावर्तेत प्रदक्षिणमिति । आवृतमन्वावर्त इति मन्त्रशेषः पूर्ववद्व्याख्येयः ॥ ६ ॥ ७ ॥ कात्यायनः ॥ गच्छति प्राङ्कुरु विष्ण इति ॥ पाठस्तु ॥ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।

रस्यनुमातनुहि ॥ अस्मिन्यज्ञेऽस्याःऽसाधुकृत्यायामस्मिन्नन्नेऽस्मिन्लोके ॥ ९ ॥ इदंमे । कर्मेदंवीर्यंपुत्रोऽनुसंतनोतु ॥ अग्नेव्रतपतेव्रतमचारिषंतदशकंतन्मेराधि ॥ इदमहंयएवास्मिसएवास्मि ॥ १० ॥ ॥

---

घृतं घृतयोने पिब प्रप्रयज्ञपतिं तिर । ततोऽसि तन्तुरस्यनुमातनुहि । अस्मिन् यज्ञेऽस्याःऽ साधुकृत्यायामस्मिन्नन्नेऽस्मिँल्लोक इति ॥ विष्णो उरुक्रमस्त्वं महद्यथा भवति तथा यज्ञविघातकासुरविनाशेन पराक्रमं कुरु । नोऽस्माकं क्षयाय निवासार्थम् । उरु कृधि विस्तीर्णं स्थानं कुरु । हे घृतयोने घृतमेव योनिर्ज्वालोत्पत्तिकारणं यस्यासौ घृतयोनिरग्निः । तथाच मन्त्रान्तरमन्यत्राम्नातम् ॥ घृतप्रतीको घृतयोनिरेधि इति ॥ अतोऽग्निरूप हे विष्णो, घृतं पिब । पीत्वा च यज्ञपतिं यजमानं प्रप्रतिर प्रकर्षेण वर्धय । तिरतिधातुर्वृद्ध्यर्थः । ततोऽसि हे विष्णो त्वं त्रिस्तृतोऽसि । तथा तन्तुरसि । ब्रह्मादिसंततिरूपोऽसि अनुमातनुहि । विस्तृतं त्वद्रूपमनुसृत्य मामप्यभीष्टप्रदानेन विस्तारय कस्मिन् विषय इत्याकाङ्क्षायामुच्यते । अस्मिन्ननुष्ठीयमाने यज्ञे तथास्यां शिष्टैरनुष्ठीयमानायां साधुकृत्यायां विद्याविनयादिरूपक्रियायां तथाऽस्मिन्नन्ने दृश्यमाने भोज्यवस्तुनि तथास्मिँल्लोके इदानीं वर्तमाने बन्धुभृत्यादियुक्ते मनुष्यलोके एतेषु सर्वेषु विषयेषु मां वर्धयेत्यर्थः ॥ ८ ॥ ९ ॥ कात्यायनः ॥ पुत्रस्य नाम गृह्णातीदं म इत्यास्मन इति ॥ स्वस्य यः पुत्रस्तन्नामोच्चारयेत ॥ पाठस्तु ॥ इदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोत्विति ॥ इदमिदानीमनुष्ठीयमानं मे मदीयं कर्म यदस्ति यदपीदं वीर्यमेतत्कर्मफलमस्ति तदुभयं पुत्रोऽस्मदीयो देवदत्ताख्यः, अनुसंतनोतु अनुक्रमेण सन्ततं करोतु ॥ कात्यायनः ॥ व्रतं विसृजते येनोपेयादिति ॥ आदौ व्रतोपायनकाले येन विकल्पितेनाग्ने व्रतपत इदमहमिति व्रतं स्वीकृतं समाप्तावपि तदनुसारेण द्वयोरन्यतरेण व्रतं विसृजेत् ॥ अत्राऽयं प्रथममन्त्रे पाठविशेषः ॥ अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधीति ॥ व्रतपते व्रतस्य कर्मणः पालक हे अग्ने, व्रतमचारिषं कर्मानुष्ठितवानस्मि, तदशकं त्वदनुग्रहात् कर्मशक्तोऽभवं, त्वया च मे मदीयं तत्कर्मफलमराधि साधितम् ॥ द्वितीयमन्त्रपाठस्तु ॥ इदमहं य एवास्मि स एवास्मीति ॥ उपक्रमवेलायामिदं व्रतमहं करिष्य इति सङ्कल्प्य यः स्थितोऽस्मि स एवाहमिदानीं त्वत्प्रसादात् सङ्कल्पितकर्मसमाप्तिं कृत्वा स्थितोऽस्मि ॥ १० ॥ इति द्वितीयेऽध्याये षष्ठोऽनुवाकः ॥ ६ ॥

अग्नयेकव्यवाहनाय । स्वाहासोमायपितृमतेस्वाहा ॥ अपहताऽअसुरारक्षाᳬसिवेदिषदः ॥ १ ॥ येरूपाणि । प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधयाचरन्ति ॥ परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ २ ॥ अत्रपितरो । मादयध्वंयथाभागमावृषायध्वं ॥ अमीमदन्तपितरोयथाभागमावृषायिषत ॥ ३ ॥ नमोवः ।

---

षष्ठे याजमानमन्त्रा उक्ताः ॥ तावता दर्शपूर्णमासेष्टिः समाप्ता ॥ अथ सप्तमे पिण्डपितृयज्ञमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ पात्रतण्डुलमपूर्णᳬश्रपयित्वाऽभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति चेति ॥ पाठस्तु ॥ अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति ॥ पितॄणामग्निः कव्यवाहनामकः । तथाच तित्तिरिणा समाम्नातम् ॥ त्रयो वा अग्नयो हव्यवाहनो देवानां, कव्यवाहनः पितॄणाᳬ सहरक्षा असुराणामिति ॥ कवयः क्रान्तदर्शिनः पितरस्तेषां संबन्धि कव्यं हविः । तद्वोढुमधिकारो यस्यास्ति स कव्यवाहनस्तस्मात् । अग्नये स्वाहा हविर्दत्तम् । पितृमान् पितृसंयुक्तः । तस्मै सोमनामकाय देवाय स्वाहा हविर्दत्तम् ॥ कात्यायनः ॥ दक्षिणेनोल्लिखत्यपहता इतीति ॥ पाठस्तु ॥ अपहता असुरा रक्षाᳬसि वेदिषद इति ॥ वेद्यां सीदन्तीति वेदिषदः । तथाविधा अपहता वेदेः सकाशादपनीय त्याजिताः, वेद्या रक्षाᳬस्यपहतानि । असुरत्वं रक्षस्त्वं चेत्येतौ देवविरोधिजातिविशेषौ ॥ १ ॥ कात्यायनः ॥ उल्मुकं पुरस्तात् करोति ये रूपाणीतीति ॥ पाठस्तु ॥ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात् प्रणुदात्यस्मादिति ॥ असुरा देवविरोधिनः सन्तो ये स्वधया पैतृकनिमित्तेन रूपाणि प्रतिमुञ्चमानाः पितृसमानरूपाणि स्वीकुर्वन्तः चरन्ति पितृयज्ञस्थाने संचरन्ति । परापुरः पराक्रान्तान् देहान् स्थूलशरीराणीत्यर्थः । निपुरः न्यग्भूतान् देहान् सूक्ष्मशरीराणीत्यर्थः । ये स्वयमसुराः सन्तोऽपि स्वकीयमसुरत्वं प्रच्छाद्य तानि द्विविधानि शरीराणि भरन्ति धारयन्ति । तानसुरानग्निरुल्मुकरूपोऽस्माँल्लोकात् पितृयज्ञस्थानात् प्रणुदाति प्रकर्षेणापसारयति ॥ २ ॥ कात्यायनः ॥ अत्र पितर इत्युक्त्वोदङ्ङास्त आतमनादाद्वत्यामीमदन्तेति जपतीति ॥ आतमनाद् ग्लानिपर्यन्तम् ॥ पाठस्तु ॥ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् । अमीमदन्त पितरो यथाभागमा-

पितरः शुष्मायनमोवःपितरस्तपसे ॥ नमोवःपितरोयज्जीवंत-
स्मैनमोवःपितरोरसाय ॥ नमोवःपितरोघोरायमन्यवेस्वधायैवः
पितरोनमः ॥ एतद्वःपितरोवासोगृहानःपितरोदत्त ॥ ४ ॥ उदा-
युषास्वायुषोत्पर्जन्यस्यधामभिः ॥ उदस्थाममृतांऽअनु ॥ ५ ॥ आ-
धत्तपितरोगर्भंकुमारंपुष्करस्रजं ॥ यथेहपुरुषोसत् ॥ ६ ऊर्जंवहं-

---

दृषायिपतेति ॥ तदिदं मन्त्रद्वयम्, अग्ने वाजजिदित्यनुवाके यथा व्याख्या-
तं तथैवात्रापि व्याख्यातव्यम् ॥ ३ ॥ कात्यायनः ॥ नमो व इत्यञ्जलिं क-
रोतीति ॥ पाठस्तु ॥ नमो वः पितरः शुष्माय नमो वः पितरस्तपसे । नमो वः
पितरो यज्जीवं तस्मै नमो वः पितरो रसाय । नमो वः पितरो घोराय मन्यवे
स्वधायै वः पितरो नम इति ॥ हे पितरो युष्मत्सम्बन्धिने शुष्माय बलाय
वैर्यभिभवसामर्थ्याय नमो नमस्कारोऽस्तु । उत्तरेष्वपि पञ्चसु मन्त्रेषु नमो वः
पितर इति पदं पूर्ववद् योज्यम् । तपसे वैरिषु प्रयुक्ताय सन्तापाय । यज्जीव-
मस्मदीयजीवनं भवद्भिरनुगृहीतमस्ति तस्मै जीवनाय । रसाय भवत्-
प्रसादलब्धाय पयोघृतादिरूपाय । शत्रुवधहेतुत्वेन तीव्राय मन्यवे क्रोधाय ।
स्वधायै भवदीयान्नाय । स्वधायै पितॄणामन्नमिति श्रुतेः । शुष्मादीनां नमस्का-
रेण स्वस्यानुग्रहाय तत्सम्पत्तिः प्रार्थिता भवति ॥ कात्यायनः ॥ एतद्व इत्यु-
पास्यति सूत्राणि प्रतिपिण्डमूर्णादशावावयस्युत्तरे यजमानलोमानि वेति ॥
पाठस्तु ॥ एतद्वः पितरो वासो गृहान्नः पितरो दत्तेति ॥ हे पितरो, वो यु-
ष्माकमेतद्वासो मया दीयमानमिदं सूत्रमेव वस्त्रं, हे पितरस्तुष्टा यूयं नोऽस्म-
भ्यं गृहान् सर्वोपकरणसहितान् दत्त प्रयच्छत ॥ ४ ॥ कात्यायनः ॥ उदा-
युषेत्युत्थानमिति ॥ पाठस्तु ॥ उदायुषा स्वायुषोत्पर्जन्यस्य धामभिः । उद-
स्थाममृतान् अन्विति । प्रथम आयुःशब्दोऽन्नवाची, द्वितीयो जीवनवाची ।
स्वायुषा शोभनम् आयुर्जीवनं येन भवति तत् स्वायुः । तथाविधेन स्वायु-
षाऽन्नेन युक्तोऽहम् । उदस्थाम् । उत्थितोऽस्मि । तथा पर्जन्यस्य वृष्टि
हेतोर्मेघस्य सम्बन्धिभिर्धामभिः स्थानविशेषैर्युक्तोऽहमुदस्थाम् । अमृतान्
मरणरहितान् पितॄन् अनुसृत्य तत्सेवार्थमस्थाम् ॥ ५ ॥ कात्यायनः ॥
आधत्त इति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामेतीति ॥ पाठस्तु ॥
आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषो सत् इति ॥ हे

र्ती । रुमृतंघृतंपयःकीलालंपरिस्रुतं ॥ स्वधास्थंतर्पयतमेपितॄन् ॥७॥

कृष्णोऽसि नव ॥ ९ ॥ अग्ने वाजजिन्नव ॥ ९ ॥ देवसवित-
रेकादश ॥ ११ ॥ अग्नीषोमयोः षट् ॥६॥ अग्नेऽदब्धायोऽष्ट ॥८॥
संवर्चसादश ॥ १० ॥ अग्नये कव्यवाहनाय सप्त ॥ ७ ॥
सप्तानुवाकेषु षष्टि ॥ कृष्णाइमंमेषष्टि ॥ ६० ॥

इति प्रथमदशके संहितायां द्वितीयोऽध्यायः ॥ २ ॥

---

पितरः । पुष्करस्रजावश्विभ्यां देवाभ्यां समानम् । अश्विनौ देवौ पुष्करस्रजौ पद्ममालिनौ देवानां भिषजौ । तत्साम्यकथनेन रोगरहितमित्युक्तं भवति । तथाविधं कुमारं पुरुषरूपं गर्भमाधत्त संपादयत । इहास्मिन्नेव ऋतौ पुरुषो देवपितृमनुष्याणामपेक्षितार्थस्य पूरयिता यथा स येन प्रकारेण भूयात् तथाऽऽधत्तेति पूर्वत्र संबन्धः ॥ ६ ॥ कात्यायनः ॥ ऊर्जमित्यपो निषिञ्चतीति ॥ पाठस्तु ॥ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधास्थ तर्पयत मे पितॄनिति । हे आपो यूयं स्वधा पितृहविःस्वरूपा भवथ । अतो मे पितॄँस्तर्पयत । कथंभूता आपः । परिस्रुतं वहन्त्यः । तच्च सारं त्रिविधम् ऊर्जशब्देन, घृतशब्देन, पयःशब्देन चाभिधेयम् । तत्रोर्जशब्दो बलगतं स्वादुत्वमभिधत्ते । घृतपयसी प्रसिद्धे । तच्च घृतं मधुरं पयोऽपि कीलालम् । कील बन्धे । कीलनं कीलो बन्धः, तम् अलति वारयति तत्कीलालम् । अलज् वारणपर्याप्त्योरिति धातुः । सर्वबन्धनिवर्तकम् । ईदृशस्य त्रिविधस्य सारस्य वहनादपां पितृतर्पकत्वमुपपन्नम् ॥ ७ ॥ इति द्वितीयेऽध्याये सप्तमोऽनुवाकः ॥ ७ ॥

अत्र विनियोगसंग्रहः ।

सप्तानुवाकाध्यायेऽस्मिन् द्वितीयेऽर्थस्तु वर्ण्यते ॥
स्रुगासादनस्रुच्याघारौ प्रस्तारपैमन्त्रकाः ॥
स्रुच्यूहाद्या स्रुग्ग्रहाश्च याजमानश्च पैतृकाः ॥ १ ॥
कृष्ण इध्मं वेदिं वेदिं बर्हिं बर्हिः समुक्षति ॥
अभिषिञ्चेद्दर्भमूले विष्णोः प्रस्तरधारणम् ॥ २ ॥
ऊर्णेति स्तृणुते वेदिं भूत्रिभिः स्कन्नमर्शनम् ॥
गन्धेन्द्रमित्रत्रयतः परिधीन् दिक्त्रये क्षिपेत् ॥ ३ ॥
आघारसमिधौ वीति समिदाभ्यां क्षिपेत्पुरः ॥

पर्णो जपेत् सवि स्थाप्य तिरश्चीनं तथा द्वयम् ॥ ४ ॥
प्रस्तरास्तरणं तूर्णं मात्रा तस्य प्रसारणम् ॥
भूतं त्रिभिर्ध्रुवा स्थाप्याः प्रियेऽन्यद्दविषा स्थितिः ॥
हविः स्रुचे ध्रुवा पाहि स चतुर्विंशतिः खलु ॥ ५ ॥
अग्ने परिधिसंमार्गो ह्यञ्जली द्वौ नमः स्वधा ॥
स्रुवस्रुचौ समादायाऽङ्घ्रिणा दक्षिणदिग्गतिः ॥ ६ ॥
वसु स्थिरवेत इन्द्रेति होमः सद्यो ध्रुवाञ्जनम् ॥
अग्नामी स्वामिजपावुपामेऽग्निधदत्तंद्वयात् ॥
मयि स्वामि जपोथाऽग्ने मार्ष्टि मन्त्राश्चतुर्दश ॥ ७ ॥
देव ब्रह्मा वेदेः स्थाने तृणानि च निरस्यति ॥
इन्द्रप्रसोपविष्टः स्यान्मिम माशिन्नमीक्षते ॥ ८ ॥
देवस्य प्रतिगृह्णाति पृथिव्यास्त्वेति सादयेत् ॥
देवस्य पुनरादद्याद्ग्नेष्ट्वा भक्षयेदिदम् ॥ ९ ॥
पात्रं प्रक्षाल्य तेनाभिमन्वाहार्यं स्पृशेत् प्रजा ॥
यथा होतामन्त्रयेत ब्रह्मानुज्ञैतदिस्पतः ॥
अनुवाके तृतीयेऽस्मिन् मन्त्रा द्वादशवर्णिताः ॥ १० ॥
अग्नीद्वियात् स्रुची व्यूहेदिन्द्राग्नीद्वयतोऽपि च ॥
वसुभ्रयेण परिधीनञ्ज्यात् सं प्रस्तरग्रहः ॥ ११ ॥
समन्स्याम्नन्तु मरुतां प्रहरेच्चक्षुरित्यतः ॥
संस्पृशेदाद्यं परिधिं मध्यमं प्रहरेदथ ॥ १२ ॥
इतरौ प्रहरेदग्नेः संस्रवं स्रुचहोमकः ॥
धृता धृतेः स्रुचौ दध्यान्मन्त्राः पञ्चदशेरिताः ॥ १३ ॥
भुक्स्रुवमग्रहस्त्वमेर्होमो ह्यप्रसरद्वयात् ॥
केपान् खलु जुहोत्याप्या ध्रुवामाप्याययेत् सदा ॥ १४ ॥
समिष्ट होमो देवेति संवर्हिराहुतिर्भवेत् ॥
प्रणीता निनयेत् कस्त्वा कृणाम्यक्षः परित्यजेत् ॥ १५ ॥
वपवेषकृतिर्वेषो वेशानग्निं क्वचिद्भजेत् ॥
पयो होमः क्वचिदुद्दा मन्त्रा द्वादश वर्णिताः ॥ १६ ॥
इध्मं संवर्च विमृष्ट पश्च वेदिं स्पृशेत् क्रमात् ॥

क्रमादिवित्रयेणास्मांदक्षान्गागमवेक्षते ॥ १७ ॥
अस्यै भूमिमवेक्षेतागन्म मागीक्षते तथा ॥
संज्योपूर्वामिमीक्षित्वा स्वयं सूर्यमवेक्षते ॥ १८ ॥
वर्चः पश्येद्रवि कामी सूर्यावृत्तिः प्रदक्षिणा ॥
अग्ने दक्षेव पश्चिमाग्निं शतं ब्रूयाद तथा पुनः ॥ १९ ॥
सूर्यप्रदक्षिणाद्यांत्तरहं गच्छेदिदं त्विति ॥
स्वपुत्रनामग्रहणं पश्चादग्न इदंद्वयोः ॥
एकोन व्रतसंत्यागो मन्त्रा एकोनविंशतिः ॥ २० ॥
अग्ने सोमद्वयाद्धोमोऽपहता दक्षिणोल्लिखेत ॥
ये रूपोल्मुकमाधाय अत्रामीति द्वयं जपेत् ॥ २१ ॥
षड्भिर्नमोऽञ्जलिं कुर्यादेतत् स्रुवमुपास्यति ॥
उदोत्तिष्ठेन्मध्यपिण्डमथ माश्नाति तद्वधूः ॥
सिञ्चेदूर्जमपो मन्त्राः षोडशाऽत्रो पवर्णिताः ॥ २२ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ २३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते
माधवीये काण्ववेदार्थप्रकाशे
काण्वसंहिताया भाष्ये द्वितीयोऽध्यायः ॥ २ ॥

१ शुक्लयजुर्वेदकाण्वसंहितामन्त्रभाष्यम् । सायणाचार्य-
विरचितम् । भाग १ । प्रथमद्वितीयाध्यायौ। १)

२ अर्थसंग्रहः । सटीकः । ( मीमांसा ) १॥)

३ भाट्टभाषा । प्रकाशसहिता ( मीमांसा ) ॥)

४ प्राकृतप्रकाशः । वररुचिकृत. । भामहकृतव्याख्यासहित ॥)

५ भगवद्गीता । मधुसूदनटीका सहिता । ४)

६ व्युत्पत्तिवाद । मूलम् १॥)

७ भैरवी । शब्दरत्नव्याख्या ( कारकान्ता ) १)

८ परमलघुमञ्जूषा । ।)

९ साङ्ख्यतत्त्वकौमुदी । ।=)

१० नारदसंहिता ( ज्यौतिषम् ) । ।=)

११ मेदिनीकोषः । १)

१२ पूर्वपक्षावली । ।)

१३ उत्तरपक्षावली । ।)

१४ मीमांसापरिभाषा । ।)

१५ कारिकावली । रामरुद्री दिनकरी मुक्तावली शब्दखण्डान्ता ३)

१६ कालीशङ्करी जागदीश्या पञ्चलक्षण्या । ≈)

१७ सैव—माथुरी पञ्चलक्षण्याः। =)

१८ मीमांसान्यायप्रकाशः ( आपोदेवकृत ) ॥=)

१९ चरणव्यूहः—सभाष्य. शौनकीय परिशिष्ट स० ।=)

२० योगदर्शनं व्यासभाष्य तत्त्ववैशारदी टीकासह बालरामस्वामि-
कृत टिप्पणीसहित ३)

२१ काशिका पाणिनीयसूत्रवृत्ती । ५)

२२ चतुर्विंशतिमतसंग्रहः । धर्मशास्त्र । २)

२३ परिभाषेन्दुशेखर । भैरवीव्याख्यासमेतः । १)

२४ वैयाकरणभूषणसारः दर्पणसहितः । २॥)

२५ महाभाष्य ( नवाह्निकम् ) श्रीमता पतञ्जलिमुनिना प्रणीतम् ।
म. म. श्रीकैयटोपाध्याय, नागोजीभट्टाभ्यां निर्मिताभ्यां
प्रदीपो द्द्योताख्यविवरणाभ्यां समुल्लसितम् । २॥)

# अथ शुक्लयजुर्वेदकाण्वसंहिताभाष्ये
## तृतीयोऽध्यायः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

प्रथमद्वितीययोरध्याययोर्दर्शपूर्णमासेष्टिविषया मन्त्रा उक्ताः ॥ अथ तृतीयेऽध्याये आधानविषया मन्त्रा उच्यन्ते ॥ तत्र कात्यायनोऽमावास्यायामग्न्याधेयम् इत्यादिना कालविशेषादीनि ब्रह्मौदनपाकपर्यन्तान्यनुष्ठेयान्युक्तानि पश्चादिदमाह ॥ तं चतुष्प्राश्यं पचत्युद्धास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीः तिस्रः समिधो घृताक्ता आदधाति, समिधाग्निमिति प्रत्यृचमिति ॥ अस्यार्थः ॥ चतुर्भिर्ऋत्विग्भिः प्राशितुं योग्यमोदनं पक्त्वा बहिरुद्धास्य तस्योदनस्य मध्ये घृतासेचनाय स्थानं निम्नं कृत्वा ॥ कण्वोऽपि तमर्थं दर्शयति ॥ तस्य सर्पिर्गुमेचनं कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरादधातीति ॥ तत्र प्रथमाया ऋचः पाठस्तु ॥ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतनेति ॥ सम्यगिन्ध्यते दीप्यते वह्निर्यया काष्ठरूपया सा समित् । तया समिधाग्निं पुरोवर्तिनं दुवस्यत परिचरत । दुवस्यतिः परिचरणार्थत्वेन पठितः । अतिथिमतिथिवत्पूजनीयमग्निं घृतैर्होष्यमाणैर्बोधयत प्रज्वालयतेत्यर्थः । अस्मिन् प्रज्वालितेऽग्नौ हव्या नानाविधानि हवींषि जुहोतन । हे अनुष्ठातारः सर्वतो जुहुत ॥ १ ॥ द्वितीयस्या ऋचः पाठस्तु ॥ सुसमिद्धाय शोचिषे घृत तीव्रं जुहोतन । अग्नये जातवेदस इति ॥ सुसमिद्धाय शोभनतया सम्यग्दीप्ताय । अत एव शोचिषे शुचिष्मते दीप्तिमते जातवेदसे जातं वेत्ति वेदयतीति वा जातवेदाः । तथाविधायाग्नये तीव्रं घृतं स्वादुतमं समग्रं चाज्यं जुहोतन जुहुत ॥ २ ॥ तृतीयस्या ऋचः पाठस्तु ॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्येति ॥ हे अङ्गिरः । अङ्गतिर्गत्यर्थः । रसप्रत्ययो मत्वर्थीयः । तत्तद्यागेषु गतिमदग्ने तं त्वा तथाविधं त्वां समिद्भिर्यज्ञसम्बन्धिकाष्ठैर्घृतेन संस्कृताभिः तव वर्धयामसि प्रवृद्धं कुर्मः । हे यविष्ठ्य अतिशयेन युवा तत्र साधुर्यविष्ठ्यः । कदाचिदपि स्थविरत्वरहित इत्यर्थः । तथाविध हे अग्ने बृहच्छोचा प्रवृद्धं यथा भवति तथा दीप्यस्व ॥ ३ ॥ का-

आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिर्दक्षिणाग्निमादध्यातीति ॥ आयं गौरित्यादीनां तिसृणाम् ऋचां सार्पराज्ञीति नामधेयम् । ताभिर्ऋग्भिराहवनीयमुपतिष्ठते । दक्षिणाग्निमपि ताभिरेवादध्यात् । तत्र प्रथमाया ऋचः पाठस्तु ॥ आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन् स्वरिति ॥ गच्छतीति गौः । यज्ञनिष्पत्तये तत्तद्यजमानगृहेषु गन्ता पृश्निश्चित्रवर्णः लोहितशुक्लादिबहुविधज्वालैरुपेतः । तथाविधोऽयं दृश्यमानोऽग्निः अक्रमीत् सर्वत आहवनीयगार्हपत्यदक्षिणाग्निस्थानेषु सर्वतः क्रमणं पादविक्षेपं कृतवान् । यस्मादेवं तस्मात् पुरः प्राच्यां दिशि मातरं पृथिवीम् असदत् । आसीदत् । आहवनीयरूपेण प्राप्तवान् । तथा स्वः प्रयन् आदित्यरूपेण स्वर्गे सञ्चरन् पितरं च द्युलोकमपि असदत् । प्राप्तवान् । भूलोकद्युलोकयोर्मातापितृरूपत्वे अन्यत्रापि श्रूयते । द्यौः पिता पृथिवी मातेति ॥ ६ ॥ द्वितीयस्या ऋचः पाठस्तु ॥ अन्तश्चरति रोचनास्य प्राणादपानती व्यख्यन्महिषो दिवमिति ॥ अस्याग्ने रोचना काचिद्दीप्तिरन्तश्चरति जाठराग्निरूपेण प्राणिनामुदरेषु चरति । किं कुर्वती । प्राणादपानती प्राणाद् व्यापाराद् ऊर्ध्वमपानव्यापारं कुर्वती । प्राणापानयोर्वायुविशेषयोः प्रेरिकेत्यर्थः । सति हि जाठराग्नौ जीवनहेतोरौष्ण्यस्य शरीरे सद्भावात् प्राणापानौ प्रवर्तेते । शारीरस्यौष्ण्यस्य पुरुषजीवनत्वमन्यत्र श्रुतम् । उष्ण एव जीविष्यञ्छीतो मरिष्यन्निति ॥ महिमा माहात्म्यं यागकर्तृस्वरूपं मनोति ददातीति महिषोऽग्निः । स च दिवं द्युलोकं भोगस्थानं व्यख्यत् । अनुष्ठातृभ्यो विशेषेण प्रकाशितवान् ॥ ७ ॥ तृतीयस्या ऋचः पाठस्तु ॥ त्रिंशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रतिवस्तोरहद्युभिरिति ॥ धाम स्थानं, तच्च त्रिंशत् । मासगतदिनभेदेन त्रिंशत्संख्याकम् । तदेतद्विराजति विशेषेण दीप्यते । आलस्यरहितानां यजमानानामनुष्ठानेनाहवनीयाग्नीनां स्थानं मासगतेषु त्रिंशत्संख्याकेषु दिनेषु विशेषेण शोभत इत्यर्थः । पतङ्गाय पक्षिसदृशोऽग्निः पतङ्गः । यथा पक्षी कश्चिदेकस्मात् स्थानादपरं स्थानं गच्छति तद्वदग्निरपि गार्हपत्यस्थानादाहवनीयस्थानं गच्छतीत्यग्नेः पक्षिसादृश्यम् । तथाविधायाग्नयेत्यर्थः च धीयते स्तुतिरूपा वागुच्चार्यते । अहेति निपातः पूर्वोक्तनिषेधार्थः । अस्या ऋचः पूर्वार्धेऽग्निमाहात्म्यस्यापनाय पद्धावयद्वयेनार्थद्वयमुक्तं तावदेव न भवति, किन्त्वन्यदपि माहात्म्यमुच्यत इत्यर्थः । वस्तोरित्यहर्नामसु पठितम् । प्रतिवस्तोः प्रत्यहं

द्युभिः क्रीडाविशेषैर्द्योतनैर्वा। दीव्यतिधातोस्तदर्थवाचित्वात्। अयमग्निः। श्रोत्रं स इत्यध्याहारः ॥ ८ ॥ इति तृतीयेऽध्याये प्रथमोऽनुवाकः ॥ ३ ॥ १ ॥

प्रथमेऽनुवाकेऽग्न्याधानमन्त्रा उक्ताः ॥ द्वितीये त्वग्निहोत्रमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ उपविश्य समिधमादधात्यग्निज्योतिषमिति ॥ पाठस्तु ॥ अग्निज्योतिषं त्वा वायुमतीं प्राणवतीं स्वर्ग्यां स्वर्गायोपदधामि भास्वतीमिति ॥ हे समिध । स्वर्गाय स्वर्गसिद्ध्यर्थं त्वा नानाविधविशेषणयुक्तां त्वाम् । उपदधामि वह्नौ प्रक्षिपामि । कथम्भूतां त्वाम्, अग्निज्योतिषं त्वा वायुमतीम् । अग्निसम्बन्धिज्योतिर्यस्यां समिध्यभिव्यज्यते तादृशीम् । शुष्कायाः समिधोऽग्निज्वालाहेतुत्वं प्रसिद्धम् । वायुमतीं वायुसहायोपेताम् । सति हि वायुसाहाय्ये काष्ठेषु ज्वाला प्रवृद्धा भवति । प्राणवतीं बलवतीम् । प्राणो वै बलमिति श्रुत्यन्तरम् । शुष्कतृणपर्णादिष्विवाग्निज्वाला समिधि सहसा न शाम्यतीत्यर्थः । स्वर्ग्यम् । अनुष्ठातॄणां स्वर्गहेतुं भास्वतीम् । अग्नेः समिन्धनेन सूर्यवत्प्रकाशोपेताम् ॥ कात्यायनः ॥ प्रदीप्तामभिजुहोत्यग्निज्योतिरित्यौतीति ॥ या समित् प्रदीप्ता तामभिलक्ष्य जुहुयात् ॥ पाठस्तु ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति ॥ योऽयमग्निर्देवः स एव ज्योतिर्दृश्यमानं ज्योतिःस्वरूपं यच्चेदं दृश्यमानं ज्योतिस्तदेवाग्निर्देवः देवस्य ज्योतिषश्च कदाचिदपि अवियोगादेकत्वेन प्रतिपादनम् । स्वाहा ज्योतीरूपायाग्नये हविः प्रदत्तम् । सोऽयं सायङ्कालीनाग्निहोत्रहोमः ॥ १ ॥ अनयैव रीत्या प्रातःकालेऽपि समिदाधानं होमं च मन्त्रद्वयेन कुर्यादिति कात्यायनेनाभिप्रेतम् । तयोरुभयोर्मन्त्रपाठस्तु ॥ सूर्यज्योतिषं त्वा वायुमतीं प्राणवतीम् । स्वर्ग्यां स्वर्गायोपदधामि भास्वतीम् । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति ॥ पूर्वोक्ताग्निविषयमन्त्रद्वयवदिदं सूर्यविषयं मन्त्रद्वयं व्याख्येयम् ॥ कालद्वये मन्त्रद्वयव्यवस्थां कण्वो विस्पष्टं दर्शयति ॥ स जुहोत्यग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति । सूर्यसम्बन्धि यत्तेजोऽस्ति तत्सर्वं रात्रावग्निं प्रविशति । तस्मात् सायं होमेऽग्निर्ज्योतिरिति मन्त्रो युक्तः । उदयकालेऽप्यग्निसम्बन्धि ज्योतिः सूर्यं प्रविशति तस्मात् प्रातः सूर्यो ज्योतिरिति मन्त्रो युक्तः ॥ तमेतमर्थं तित्तिरिः मन्त्र दर्शयति ॥ अग्निं वादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे उभे हि तेजसी सम्पद्येते । उद्यन्तं वादित्यमग्निरनुसमारोहति तस्माद् धूम एवाग्नेर्दिवा ददृश इति ॥ २ ॥

कात्यायनः ॥ सजूरिति वेति ॥ जुहोतीत्यनुवर्त्तते । पूर्वोक्ताभ्यामग्निर्ज्योतिः सूर्यो ज्योतिरिति मन्त्राभ्यां सजूरित्यादिकं मन्त्रद्वयं होमे विकल्पितमित्यर्थः । तत्र प्रथममन्त्रपाठस्तु ॥ सजूर्देवेन सवित्रा सजूरात्र्येन्द्रवत्या । जुषाणोऽअग्निर्वेतु स्वाहेति ॥ सवित्रा देवेन प्रेरकेण परमेश्वरेण सह सजूः । जुषी प्रीतिसेवनयोरिति धातुः । समाना जूः प्रीतिर्यस्यासौ सजूः । तथा इन्द्रवत्या गव्या इन्द्रेण देवेनोपेतया रात्रिदेवतया सजूः समानप्रीतिः । उक्तगुणद्वयवानग्निर्देवः जुषाणोऽस्मासु प्रीतियुक्तः सन् वेतु अस्मदीयं कर्म प्राप्नोतु । वी गतिप्रजनकान्त्यसनखादनेष्विति धातुः । स्वाहा तथाविधायाग्नये हूयमानमिदं द्रव्यं दत्तम् ॥ ३ ॥ द्वितीयमन्त्रपाठस्तु ॥ सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या जुषाणः सूर्यो वेतु स्वाहेति ॥ अग्निमन्त्रवदयं सूर्यमन्त्रो व्याख्येयः । अत्रोषोदेवता पूर्वोक्ता रात्रिदेवतायाः स्थाने योजनीया । अत्राग्निमन्त्रस्य प्रौन् कामान् काण्वो व्याचष्टे ॥ सजूर्देवेन सवित्रेति ॥ सवितृमत्प्रसवाय सजूरात्र्येन्द्रवत्येति रात्र्या मिथुनीकरोतीन्द्रो यज्ञस्य देवता सेन्द्रं देवता करोति जुषाणो अग्निर्वेतु स्वाहेति । प्रत्यक्षं तस्यै देवतायै जुहति यस्याग्निहोत्रमिति ॥ सूर्यमन्त्रोऽपि तथैव, सजूर्देवेन सवित्रेत्येव प्रातरित्यादिना व्याख्यातः ॥ ४ ॥ कात्यायनः ॥ पुष्टिकामः स्थाल्या स्रुवेह पुष्टिमिति गार्हपत्ये इति ॥ जुहोतीत्यनुवर्त्तते । स च होमः स्थालीरूपेण स्रुवेण कार्यः ॥ पाठस्तु ॥ इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजा॰, रमयतु प्रजापतिः । अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहेति ॥ पुष्टिपतिः पुष्टिपालको देवः इह कर्मणि पुष्टिं दधातु पोषणं सम्पूर्त्तिं करोतु । इहास्मद्गृहे प्रजां पुत्रादिरूपां प्रजापतिः प्रजापालको देवः, रमयतु क्रीडयतु । गृहपतये गृहस्य पालकाय रयिमते धनवते । पुष्टिपतये पुष्टिपालकायाग्नये गार्हपत्यदेवाय स्वाहा हविर्दत्तम् ॥ कात्यायनः ॥ अग्नयेऽन्नादायेति दक्षिणाग्नाविति । जुहोतीत्यनुवर्त्तते ॥ पाठस्तु ॥ अग्नयेऽन्नादायान्नपतये स्वाहेति ॥ अन्नं पुरतः प्राप्तं सर्वमत्तीत्यन्नादः । तथान्नपतिरस्मदीयान्नस्य पालकः । तथाविधायाऽग्नये स्वाहा हविर्दत्तम् ॥ ५ ॥ अनमित्रं म इन्द्रः पश्चादिति द्वौ मन्त्रौ जपार्थौ द्रष्टव्यौ । तयोः पाठस्तु ॥ अनमित्रं मे अधरागनमित्रमुदक्कृधि । इन्द्रानमित्रं पश्चान्मेनमित्रं पुरस्कृधि ॥ इन्द्रः पश्चादिन्द्रः पुरस्तादिन्द्रो अस्माँऽअभिपातु विश्वतः । इन्द्रो जिघांसतां मनांसि विषूचीना व्यस्यताद् इति ॥ हे इन्द्र परमैश्वर्ययुक्ताऽग्ने मे ममाधराग्दक्षिण-

तः, अनमित्रम् । अनस्य प्राणस्य मित्रं रक्षकं कृधि कुरु । यद्वा अनमित्रं शत्रुरहितं स्थानं कुरु । तथा मे उदक् मे उत्तरतः अनमित्रं कृधि । मे मम पश्चात् पश्चिमतः अनमित्रं कृधीति वर्तते । मे मम पुरः पूर्वस्यां दिशि अनमित्रं कृधि । अयमिन्द्रः पश्चात् पश्चिमदिशि अस्मानभिपातु सर्वतः पालयतु । तथेन्द्रः पुरस्तात् पूर्वस्या दिश्यस्मानभिपातु तथेन्द्रो विश्वतः सर्वासु दिक्षु अस्मानभिपातु । अयमिन्द्रो जिघांसताम् अस्मान् हन्तुमिच्छतां शत्रूणां मनांसि विषूचीना विपरागमनानि, उद्दिष्टं स्थानं विहायान्यगमनयुक्तानि यथा भवति तथा व्यस्यतात् । असु क्षेपण इति धातुः । विशेषेण क्षिपतात् ॥ ६ ॥ कात्यायनः ॥ समिध आदधाति सर्वेषु यथापर्युक्षितं समिदसीतीति ॥ पाठस्तु ॥ समिदसि समिद्धो मेऽअग्ने दीदिहि । समेद्धा तेऽअग्ने दीद्यासमिति ॥ हे अग्ने त्वं समिदसि अस्मदीयकाष्ठप्रक्षेपेण सम्यगिध्यमानो दीप्यमानो भवसि । समिद्धोऽस्माभिर्दीपितः सन्मे मदनुग्रहार्थं दीदिहि अतिशयेन दीप्यस्व । दीधीङ् दीप्तिदेवनयोरिति धातुः । हे अग्ने ते तव समेद्धा सम्यग्दीपयिताऽहं दीद्यासं त्वत्प्रसादादतिशयेन दीप्तो भूयासम ॥ ८ ॥ इति तृतीयेऽध्याये द्वितीयोऽनुवाकः ॥ ३ ॥ २ ॥

द्वितीयेऽग्निहोत्रमन्त्रा उक्ताः । तृतीयेऽग्न्युपस्थानमन्त्रा उच्यन्ते ॥ तस्योपस्थानकर्तव्यतामग्ना उ ह देवाः सर्वान् पशून् संनिदधिर इत्यादिना कण्वो बहुधा प्रपञ्चयामास ॥ कात्यायनः ॥ सायमाहुत्यावर्हुतायां यजमानोऽग्नी उपतिष्ठते । उपप्रयन्त इति ॥ अस्मिन्ननुवाके बहव उपस्थानमन्त्राः । तत्रायं प्रथमो मन्त्रः ॥ उपप्रयन्तोऽअध्वरं मन्त्रं वोचेमाऽग्नये । आरेऽअस्मे च शृण्वत इति ॥ अध्वरं यज्ञम् उपप्रयन्तः उपगच्छन्तो वयमनुष्ठातारोऽग्नयेऽग्निप्रीत्यर्थं मन्त्रं मननेन त्रातारं शब्दसमूहं वोचेम अब्रूयाम । कथम्भूतायाऽग्नये, आरे दूरे, अस्मे अस्माकं समीप इति शेषः । शृण्वते दूरे समीपे चास्मदीयं वाक्यं श्रोतुमुद्युक्ताय । अस्य मन्त्रस्य प्राधान्यं कण्वो दर्शयति ॥ स उपद्रत्या प्रथमं सोपतिष्ठत इति ॥ १ ॥ अथ द्वितीयः ॥ अग्निर्मूर्द्धा दिवःककुत्पतिः पृथिव्याऽअयम् । अपांरेतांसि जिन्वतीति ॥ अयं दृश्यमानोऽग्निर्दिवो द्युलोकस्य मूर्धा शिरःसमानः । यथा शिरः शरीरस्योपरि वर्तते तथाऽयमग्निरहनि स्वतेजसा आदित्ये प्रविष्टत्वादादित्यरूपेण द्युलोकस्योपरि वर्तते । ककुच्छन्दो गवां पृष्ठं गलप्रदेशतः पश्चादवस्थितमुन्नतावयवमाचष्टे ।

तद्रूपमादित्यरूपोऽग्निः । सर्वेषामुपरि वर्तमानत्वात् ककुदित्युच्यते । तथा पृथिव्याः(१) पतिः पालकः । दाहपाकप्रकाशैर्भूलोके वर्तमानत्वात् उपकारत्वात् तादृशोऽग्निरादित्यस्वरूपः । अयं द्युलोकाद् वृष्टिरूपेण पतन्तीनां रेतांसि साराणि, व्रीहियवादिरूपेण परिणतानि जिन्वति प्रीणयति वर्धयतीत्यर्थः । अस्य मन्त्रस्य मियोक्तौ तात्पर्यं कण्वो, यथा वाचं कल्याणीं वदेदित्यादिना दर्शयामास ॥ २ ॥ अथ तृतीयः ॥ उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै उभा दातारा इषां रयीणामुभा वाजस्य सातये हुवे वाम् ॥ इन्द्रशब्देनात्राहवनीयो विवक्षितस्तस्य सर्वयज्ञसाधकत्वपरमैश्वर्योपेतत्वादग्निशब्देन गार्हपत्यः । अग्र नयनात् तस्य ह्याधानं प्रथमतो भवति । तथाविधौ हे इन्द्राग्नी वामुभौ युवाम् उभौ आहुवध्यै आह्वातुमिच्छामीति शेषः । किञ्च उभौ युवामुभौ राधसोऽस्माद् हविःस्वरूपात सह मादयध्यै युगपदेककर्मणि हर्षयितुमिच्छामीति शेषः । उभा युवामुभौ इषामिष्यमाणानां रयीणां धनानां दातारौ । अतो वामुभा युवामुभौ वाजस्य सातयेऽस्मभ्यमन्नस्य दानाय हुवे आह्वयामि । अस्यापि तात्पर्यं कण्व इत्थं दर्शयति । उभौ मे दातारौ सन्तं दत्तमित्येवैतदाहेति ॥ ३ ॥ अथ तुरीयः ॥ अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः । तं जानन्नग्न आरोहाथानो वर्धया रयिमिति ॥ हे आहवनीय ते तवायं गार्हपत्यो योनिरुत्पत्तिस्थानम् । अत एवायम् । ऋत्वियः । उत्पादनयोग्यः काल ऋतुकाल इत्युच्यते । सायम्प्रातरादौ तत्रोत्पादकत्वेन तथाविधकालोपेतः । यतो यस्माद् ऋतुकालोपेताद्गार्हपत्याज्जात उत्पन्नस्त्वम् । अरोचथाः कर्मकाले दीप्यमानभूः । हे अग्ने आहवनीय जानन् यथोक्तवृत्तमवगतं गार्हपत्यं स्वजनकम् । आरोह कर्मावसाने प्रविश । अथानन्तरं नो रयिम् । अस्मदर्थं धन पुनःपुनर्यजमानकारणं वर्धय समृद्धं कुरु । एतस्य तात्पर्यं कण्व इत्थं दर्शयति । पुष्टं वै रयिर्यदस्माकं पुष्टं तत्तो भूयो भूय एव कुरु तं नो वर्धयेत्येवैतदाहेति ॥ ४ ॥ अथ पञ्चमः ॥ अयमिह प्रथमोऽधायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विश इति ॥ अयमाहवनीय इह कर्मानुष्ठाने प्रथमो मुख्यः सन् धातृभिरधायि । आधानकर्तृभिराहितोऽभवत् ।

---

(१) प्रथते । प्रथ प्रख्याने । पृथुनाऽवतारिता पृथिवी । प्रथे सम्प्रसारण किच ।

कथम्भूतोऽयं होता देवानामाह्वानाय यजिष्ठः अतिशयेन यागोपयुक्तः । अध्वरेषु सोमयागादिषु ईड्यः ऋत्विग्भिः स्तुत्यः । अप्नशब्दः अपत्यनामसु पठितः । अप्नवानः पुत्रवन्तः, अतो भृगवो भृगुवंशोत्पन्नाः सर्वे महर्षयो विशे विशे यजमानरूपाय तस्मै तस्मै मनुष्याय तदुपकारार्थं वनेषु ग्रामाद्बहिर्जनालयेषु अरण्यप्रदेशेषु यमाहवनीयाख्यमग्निं विरुरुचुर्विशेषेण दीपितवन्तः । कथम्भूतमग्निम् । चित्रं विविधकर्मोपयोगित्वेन विचित्रम् । अत एव विभ्वं विभुत्वशक्तियुक्तं यं विरुरुचुः । अयमिह प्रथम इति पूर्ववदन्वयः । अस्य पूर्ववद् यथावानमित्यादिना प्रयोजने परत्वं कण्वो दर्शयामास । प्रथमशब्दस्य मुख्यत्वार्थपरत्वं तिचिरिर्दर्शयति । अयमिह प्रथमोऽधायि धातृभिरित्याह मुख्यमेवैनं करोतीति ॥ ५ ॥ अथ षष्ठः ॥ अस्य प्रत्नामनुद्युतꣲ शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिमिति ॥ अस्याग्नेः सम्बन्धिनीं प्रत्नां चिरन्तनकालीयेनां द्युतमनु दीप्तिमनुसृत्य अह्रयः ह्री लज्जायामिति धातुः । लज्जारहिता दोग्धारः । ऋषिम् । ऋषी गताविति धातुः । अर्षति दोहनस्थाने गच्छतीत्यृषिः गौः । तां गां शुक्रं पयः श्वेतवर्णं दुदुह्रे अग्निहोत्रहोमार्थं दुग्धवन्तः । मायं दोहनकाले अग्निसम्बन्धिप्रकाशाभावे दुह्यमानं क्षीरं भूमौ पतिष्यतीत्येवं दोग्धॄणां लज्जा भवति । सत्यां त्वद्दीप्तौ स्कन्दनशङ्काऽनुदयाल्लज्जादोषो नास्तीत्यर्थः । तत्र सहस्रसामित्येतद् गोर्विशेषणम् । षोऽन्तकर्मणीति धातुः । सहस्रसंख्याकानि कर्माणि क्षीरदध्याज्यरूपहविःप्रदानेन स्यति समापयतीति सहस्रसा तादृशीं गां दुग्धवन्त इत्यर्थः । तत्र सहस्रसामित्येतस्यद्तात्पर्यं कण्वो व्याचष्टे ॥ एषा वै परमा सनिर्यद सहस्रानिरिति ॥ ६ ॥ अथ सप्तमः ॥ तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि । वर्चोदा अग्नेऽसि वर्चो मे देहीति ॥ हे अग्ने त्वं तनूपा असि शरीराणां पालकोऽसि सति जुठराग्नौ भुक्ते जीर्णे सति शरीराणि पाल्यन्ते । अतो मे मम तन्वं शरीरं पाहि पालय ॥ अथाष्टमः ॥ आयुर्दा अग्नेऽस्यायुर्मे देहीति ॥ हे अग्ने त्वम् आयुर्दा असि । आयुषो दाता भवसि । यावन्तं कालं वपुष्युदराग्नेरौष्ण्यमुपलभ्यते तावन्तं कालं न म्रियते इति हि प्रसिद्धम् । अतो मे ममाऽपमृत्युपरिहारेणायुर्देहि ॥ अथ नवमः ॥ वर्चोदा अग्नेऽसि वर्चो मे देहीति ॥ हे अग्ने त्वं वर्चोदा असि वर्चसो वैदिकानुष्ठानप्रयुक्ततेजसो दाताऽसि । अतो मे तद्वर्चो देहि तत्तेज आहिताग्नेर्लोके प्रसिद्धम् ॥ ७ ॥ अथ

दशमः ॥ अग्ने यन्मे तन्वा ऊनं तन्मऽआपृणेति ॥ हे अग्ने, मे तन्वाः मदीयशरीरस्य यदङ्गं चक्षुरादिरूपं यदूनं दृष्टिमान्द्यादिरहितं मे तदङ्गमापृण सर्वतः पूरय ॥ चक्षुषा इत्यादिमन्त्रचतुष्टयतात्पर्यं कण्वो, यदेवेह वाचा कर्म वायुपो वेत्यादिना विस्पष्टमुवाच ॥ अथैकादशः ॥ इन्धानास्त्वा शतᳪ हिमा द्युमन्तᳪ समिधीमहि । वयस्वन्तो वयस्कृतᳪ सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यमिति ॥ हे अग्ने, त्वां शतᳪ हिमाः अस्मदायुषि विद्यमानान् शतसंख्याकान् संवत्सरान् समिधीमहि वयं नैरन्तर्येण दीपयामः सम्यक् । कथम्भूता वयम् । इन्धानास्त्वदनुग्रहेण दीप्यमानाः, वयस्वन्तोऽन्नवन्तः सहस्वन्तो बलवन्तः । अदब्धासः केनाप्यऽहिंसिताः । कथम्भूतं त्वाम् । द्युमन्तं दीप्तिमन्तम् । वयस्कृतं वयोऽन्नं करोतीति वयस्कृत् तम् । सहस्कृतं सहो बलं करोतीति सहस्कृत् तम् । सपत्नदम्भनं सपत्नानां शत्रूणां हिंसितारम् । अदाभ्यं केनापि हिंसितुमयोग्यम् । अत्र हिमा इत्येतस्य पदस्य संवत्सरवाचित्वं कण्वो व्याचष्टे ॥ शतं वर्षाणि जीव्यासमित्येवैतदाह यदा शतᳪ हिमा इतीति ॥ ८ ॥ ९ ॥

अथ द्वादशः ॥ चित्रावसो स्वस्ति ते पारमशीयेति ॥ हे चित्रावसो रात्रे चित्राणि विविधानि चन्द्रनक्षत्रान्धकाररूपाणि वसान्ति यस्यां रात्रौ सा चित्रावसुः । अत एव तित्तिरिराह ॥ रात्रिर्वै चित्रावसुरिति ॥ कण्वोऽपि विस्पष्टमाह ॥ रात्रिर्ह वा चित्रावसुरेषा हीमानि चित्राणि संगृह्यैव वसति तस्मान्नक्तं तारकाश्चित्रं ददृश इति । हे रात्रे ते तव पारं समाप्तिं स्वस्ति क्षेमो यथा भवति तथा अशीय व्याप्नवान् । इह लोके हि रात्रौ मनुष्येषु निद्राणेषु तस्करा गृहं प्रविशान्ति, तद्वदेव देवयजने रक्षांसि प्रविशन्तीति दाक्ष्या तन्निवारणार्थं रात्रिदेवतां प्रार्थयते ॥ अथ त्रयोदशे मन्त्रे कश्चिद्विनियोगविशेषमाह ॥ कात्यायनः ॥ सं त्वमित्युपविश्येति ॥ पूर्वोक्तैर्मन्त्रैरुत्थायोपस्थानम् । अत्र तूपविश्येति विशेषः ॥ पाठस्तु ॥ सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाᳪ स्तुतेन । सम्प्रियेण धाम्ना समहमायुषा संवर्चसा सम्प्रजया सᳪरायस्पोषेण ग्मिषीयेति ॥ हे अग्ने त्वं सूर्यस्य वर्चसा सूर्यसम्बन्धिना तेजसा समगथाः रात्रौ सङ्गतोऽसि । अग्निं वादित्यः सायं प्रविशतीति हि श्रुत्यन्तरं पूर्वमुदाहृतम् । कण्वोऽप्येतदुदाजहार ॥ स जपति सं त्वमग्ने सूर्यस्य वर्चसागथा इति यदैनं सूर्यः प्रविशतीति ॥ किञ्च, ऋषीणां मन्त्राणां स-

म्वन्धिना स्तुतेन स्तोत्रेण समगथाः । यद्वो हि मन्त्रा अग्निं स्तुवन्ति ।वि-
येण मीतिविषयेण धाम्ना स्थानेन नाम्ना जन्मना च समगथाः । निरुक्त-
कारो हि धामानीति शब्दस्य यथोक्तमर्थत्रयं दर्शयति । स्थानानि नामानि
जन्मानीति वेति । यथा स्वमुक्तैर्गुणैः सङ्गतोऽसि एवमहमपि त्वत्प्रसादादा-
युषा अपमृत्युदोषरहितेन संगिमषीय सङ्गतो भूयासम् । तथा वर्चसा विद्यै-
श्वर्यादियुक्तनेजसा संगिमषीय । तथा प्रजया पुत्रादिकया संगिमषीय तथा
रायस्पोषेण धनस्य पुष्ट्या संगिमषीय ॥ अथ चतुर्दशो विशेषः ॥ कात्यायन
आह ॥ गां गच्छत्यन्ध स्थेति ॥ कण्वोऽप्येतदाह ॥ अथ गामुपैत्यन्धस्थे-
ति ॥ पाठस्तु ॥ अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीय ऊर्ज
स्थोर्जं वो भक्षीय रायस्पोषस्थ रायस्पोषं वो भक्षीयेति ॥ हे गावो यूयम् ।
अन्ध स्थ अन्नभूताः स्थ । क्षीराज्यादिरूपस्यान्नस्य जनकत्वादन्नत्वोपचारः ।
अतो भवत्प्रसादाद्वो युष्मत्सम्बन्धि अन्धः क्षीराज्यादिरूपमन्नं भक्षीय सेवेय ।
भज सेवायामिति धातुः । तथा महः स्थ पूज्यरूपाः स्थ । मह पूजायामिति
धातुः । वो युष्माकं पूज्यानां प्रसादादहमपि महो भक्षीय पूज्यत्वं सेवेय ।
गौर्न पदा स्पृष्ट्येत्यादिस्मृतेर्गवां पूज्यत्वप्रसिद्धिः । तामेतां प्रसिद्धिं हिश-
ब्देन तित्तिरिः सूचयति ॥ महसा महो वो भक्षीयेत्याह महो होता इति ॥
१० ॥ ११ ॥ तथा ऊर्जः स्थ बलरूपा स्थ । गोः सम्बन्धिक्षीरादेर्बलहेतु-
त्वाद् बलरूपत्वोपचारः । ऊर्ज बलप्राणनयोरिति धातुः । वो युष्माकं प्रसा-
दादूर्जं भक्षीय बलं सेवेय । तथा रायस्पोषः स्थ । धनपुष्टिरूपाः स्थ । वैश्या
हि क्षीराज्यादिविक्रयेण धनं पुष्णन्ति । अतो धनपुष्टित्वोपचारः । वो यु-
ष्माकं प्रसादाद् रायस्पोषं धनपुष्टिं भक्षीय सेवेय ॥ अथ पञ्चदशः ॥ रेवती
रमध्वमस्मिन् योना अस्मिन् गोष्ठेऽस्मिन् क्षयेऽस्मिँल्लोके । इहैव स्येतो मा-
ऽपगातेति ॥ हे रेवतीः धनहेतुत्वेन रेवत्यो गावः । अस्मिन् योनौ दृश्यमाने-
ऽग्निहोत्रहविर्दोहनस्थाने रमध्वं क्रीडध्वम् । दोहनादूर्ध्वम् । अस्मिन् गोष्ठे
यजमानसम्बन्धिनि गोवाटे रमध्वं ततो रात्रावस्मिन् क्षये यजमानसम्ब-
न्धिगृहे रमध्वम् । गोवाटशब्देन गृहाद् बहिर्विश्रम्भेण सञ्चारदेशोऽभि-
हितः । सर्वदाऽस्मिँल्लोके । लोकृ दर्शन इति धातुः ।
यजमानसम्बन्धिदृष्टिविषये रमध्वम् । किं बहुना । इहैव एतस्मिन् यजमान-
सम्बन्धिदृष्टिविषये रमध्वम् । स्थान एव स्थ यूयं भवत । इतोऽस्मद्यज-

मानस्थानान्माऽपगात अतोऽन्यत्र मा गच्छ । । अत्र रेवतीशब्दस्य गोवाचित्वं कण्वो दर्शयति ॥ पशवो वै रेवतस्तस्मादाह रेवती रमध्वमितीति ॥ मित्रिश्चैतद्दर्शयति ॥ रेवतीरमध्वमित्याह । पशवो वै रेवतीरिति ॥ षोडशे विशेषमाह ॥ कात्यायनः ॥ सँहितेत्यालम्भने इति ॥ गामित्यनुवर्त्तते ॥ कण्वो विस्पष्टमेतदाह ॥ अथ गामभिमृशति सꣳहितासीति ॥ पाठस्तु ॥ सꣳहितासि विश्वरूप्यूर्जामाविश गौपत्येनेति ॥ हे गौः त्वं सꣳहितासि क्षीराज्यरूपहविर्दानाय यज्ञकर्मभिः संयुक्तासि । विश्वरूपी शुक्लकृष्णादिभिर्बहुभिः रूपैर्युक्ता सती ऊर्जा क्षीरादिरसैः मे गौपत्येन बहुविधगोस्वामित्वेन मा विश मां सर्वतः प्रविश । त्वत्प्रसादान्मम बहुविधो रसो बहुविधगोस्वामित्वं च सम्पाद्यताम् ॥ १२ ॥ १३ ॥ सप्तदशे विशेषमाह ॥ कात्यायनः ॥ गार्हपत्यं प्रत्योपतिष्ठत उपत्वेतीति ॥ कण्वोऽप्याह ॥ अथ गार्हपत्यमुपैत्युप त्वेतीति ॥ पाठस्तु ॥ उपत्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसीति ॥ हे दोषावस्तरग्ने दोषा रात्रिस्तस्यामपि वसति अजस्रं धार्यमाणत्वान्नोपशाम्यतीति दोषावस्ता । तथाविध हे गार्हपत्य दिवे दिवे प्रतिदिनम् । वयं यजमाना धिया श्रद्धायुक्तया बुद्ध्या नमो भरन्तो नमस्कारं सम्पादयन्तः । उप समीपे त्वा एमसि त्वां प्रत्यागच्छामः ॥ १४ ॥ अथाऽष्टादशः ॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे इति ॥ राजन्तं दीप्यमानम् । अध्वराणां गोपां गोप्तारम् । ऋतस्य सत्यवचनलक्षणस्य व्रतस्य दीदिविं दीपयितारं स्वे दमे अस्मदीये गृहे वर्धमानं चातुर्मास्यसोमपश्वादिभिरभिवृद्धिं गच्छन्तं, त्वामुपेत्यनुवर्त्तते । अत्र वर्धमानशब्दस्य तात्पर्यं कण्वो दर्शयति ॥ यदास्मकमिष्ठत्वं नो भूयो भूय एव कुरु तन्नो वर्धयेत्येवैतदाहेति ॥ १५ ॥ अथैकोनविꣳशः ॥ स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तय इति ॥ हे अग्ने गार्हपत्य, पूर्वोक्तगुणयुक्तस्त्वं नोऽस्माकं सूपायनो भव सुष्ठूपायं प्राप्तुं शक्यो भव । तत्र दृष्टान्तः— सूनवे पितेव । यथा पुत्राय पिता भयं विना सुखेन प्राप्तुं शक्यस्तद्वन्नोऽस्माकं स्वस्तये क्षेमाय सचस्व । अनेन कर्मणा समवेतो भव । सच समवाय इति धातुः । अत्र दृष्टान्ततात्पर्यं कण्वो दर्शयति । यथा पिता पुत्राय सूपचर एवं नः सूपचर एधीत्येवैतदाहेति ॥ १६ ॥ अथ विꣳशः ॥ अग्ने त्वं नो ऽअन्तम ऽउत त्राता शिवो भवा वरूथ्य इति ॥ हे गार्हपत्याग्ने त्वं नोऽस्माकम् अन्तमः अन्तिकतमः सर्वदा समीपवर्ती

मवेत्यन्वयः । उतापि च त्राता पालयिता । शिवः शान्तः । वरूथ्यः । पुत्रपौत्रादिसमूहो वरूथं तस्मै हितो वरूथ्यो भव । इमं मन्त्रमारभ्य चतस्र ऋचो द्विपदाः । तासां पुरुषरूपाणां ऋचां याचने तात्पर्यं कण्वो दर्शयति ॥ पुरुषछन्दसं वै द्विपदा द्विपाद्धयं पुरुषः पुरुषान् वा एतद्याचत इति ॥ अथैकविंशः ॥ वसुरग्निर्वसुश्रवाऽअच्छानक्षि द्युमत्तमर्ठरयिं दा इति ॥ हे गार्हपत्याख्याग्ने वसुर्जनानां वासयिता वसुश्रवा वसुना धनेन श्रवः कीर्तिर्यस्याऽसौ वसुश्रवा धनप्रदोऽयमित्येवमस्य कीर्तिर्महती । अच्छ निर्मलस्वभाव हे अग्ने, नक्षि अस्मदीयं होमस्थानं गच्छ । नक्ष गताविति धातुः । यदा यदा वयं होष्यामस्तदा तदा समागच्छेत्यर्थः । द्युमत्तमं दीप्तिमन्तं वर्णविशेषयुक्तं रयिं धनं दाः देहि ॥ १७ ॥ अथ द्वाविंशः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्य इति ॥ हे शोचिष्ठ दीप्तिमन् दीदिवः सर्वस्य दीपयतः तं त्वा पूर्वोक्तगुणयुक्तं त्वामग्निं सुम्नाय सुखार्थं सखिभ्यः अस्मदीयानां सखीनामुपकाराय च नूनं निश्चयेन ईमहे याचामहे ॥ अथ त्रयोविंशः ॥ स नो बोधि श्रुधी हवमुरुष्याणोऽअघायतः समस्मादिति ॥ हे अग्ने स त्वं नोऽस्मान् भवत्सेवकान् बोधि बुध्यस्व । हवमस्मदीयमाह्वानं श्रुधि शृणु । समशब्दः सर्वशब्दपर्यायः । अघं पापम् अस्मानिच्छतीत्यघायत् शत्रुः । समस्मादघायतः सर्वास्मदीयशत्रोर्नोऽस्मानुरुष्य पालय । उरुष्यतिस्तु रक्षणकर्मा ॥ १८ ॥ चतुर्विंशो विशेषमाह ॥ कात्यायनः ॥ गा गच्छतीळ एहीति ॥ हे इळे एहि । हे अदिते एहि आगच्छ । होमस्थानमिति शेषः । इळा मनोर्दुहिता अदितिर्देवमाता । इळा मनुरिवास्मान् । अदितिरादित्यानिव । अतस्तयैँस्तच्छब्दस्तद्धर्मनिर्देशाऽर्थः ॥ कात्यायनः ॥ काम्य एहीत्यालभत इति ॥ पाठस्तु ॥ काम्य एहि मयि वः कामधरणं भूयादिति ॥ हे काम्ये सर्वैः कामयितव्ये धेनो एहि अस्मद्धोमीयमागच्छ । वो युष्माकं गवां कामधरणम् । अपेक्षितफलधारकत्वं यदस्ति तन्मय्यनुष्ठातरि भूयात् अस्तु । युष्मत्प्रसादादहमभीष्टफलस्य धारयिता भूयासमित्यर्थः । अत्र मयि व इत्यस्य तात्पर्यं कण्वो दर्शयति ॥ मयि वः कामधरणमित्यहं वः प्रियो भूयासमित्येवैतदाहेति ॥ १९ ॥ अथ पञ्चविंशः ॥ सोमानर्ठस्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिज इति ॥ षुञ् अभिषवन इति इति धातुस्तस्मान्मनिन् प्रत्यये नकारान्तः । सोमानमभिषोतारम् । स्वृ शब्दोपतापयोरिति धातुः । स्वरणं शा-

प्ययितारम् । हे ब्रह्मणस्पते वेदपालकाग्ने, सोमयागकर्तारं स्तुतिरूपशब्दयुक्तं च मामित्यध्याहारः । कृणुहि कुरु । तत्रोपमानमुच्यते । कक्षीवन्तं कक्षीवन्नामकमृषिं यथा सोमयागयुक्तं स्तुतियुक्तं च कृतवानसि तथा मां कुरु । उपमानद्योतनाय इवशब्दोऽत्र लुप्तो द्रष्टः । कोऽसौ कक्षीवानिति ? सोऽभिधीयते । यः पुमानौशिजः । उशिजः पुत्रः तं कक्षीवन्तमिति योजनीयम् । सोऽयमर्थो यास्केन स्पष्टीकृतः ॥ सोमानं सोतारं प्रकाशनवन्तं कुरु । ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः कक्षीवान् कक्ष्यावानौशिजः उशिजः पुत्र इति ॥ सोमानमित्येतस्य तात्पर्यं तित्तिरिरपि सूचयति ॥ सोमानꣳ स्वरणं सोमपीथमेवावरुन्ध इति ॥ अत्र सोमानमित्यादेस्तृचस्य लोकत्रयोपस्थानभावनायां तात्पर्यमाह कण्वः ॥ यदाहवनीयमुपतिष्ठते दिवं तदुपतिष्ठते यद्गार्हपत्यं पृथिवीं तथैतदन्तरिक्षमुपतिष्ठते तद्ब्राह्मणस्पत्यत्वेनोपतिष्ठते इति ॥ २० ॥ अथ सप्तविंशः ॥ यो रेवान् यो अमीवहा वसुवित् पुष्टिवर्धनः । स नः सिषक्तु यस्तुर इति ॥ यः पुत्रो रेवान् धनवान् पुनरपि यः पुत्रः अमीवस्य रोगस्य हन्ता, वसुविद् वसुनो धनस्य सारत्वं वेत्तीति वसुवित्, पुष्टिवर्द्धनः पोषणस्य वर्द्धयिता । पुनरपि यः पुत्रः तुरस्त्वरायुक्तः शीघ्रकारी स तादृशः पुत्रोऽग्नेः प्रसादान्नोऽस्मान् सिषक्तु सेवताम् । तथाच यास्केन व्याख्यातम् । स नः सेवतां यस्तुर इति ॥ २१ ॥ अथाष्टाविंशः ॥ मा नः शꣳसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षाणो ब्रह्मणस्पत इति । रा दान इति धातोः क्वसुप्रत्यन्तस्य षष्ठ्येकवचनं ररुष इति, दानं कृतवत इत्युक्तं भवति । तस्य निषेधादररुष इत्युक्तम् । कदाचिदपि हविर्दानमकृतवत इत्यर्थः सम्पद्यते । तादृशस्य मर्त्यस्य मनुष्यस्य शंसः प्रशंसिता । धूर्तिः कर्मानुष्ठानप्रशंसारूपेण धौर्त्येन युक्तः पुत्रोऽस्मान् मा प्रणक् प्रकर्षेण मा व्याप्नोतु । नशिरयं व्याप्त्यर्थः । यद्वा, नश अदर्शन इति धातुः । मा प्रणक् मा प्रकर्षेण विनाशयत्वित्यर्थः । हे ब्रह्मणस्पते, नोऽस्मान् रक्ष । नास्तिकः पुत्रो यथा नोत्पद्यते तथा पालय ॥ २२ ॥ अथैकोनत्रिंशः ॥ महित्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः दुराधर्षं वरुणस्येति योऽयं मित्रः, यश्चार्यमा योऽपि वरुणः । एतन्नामकानां त्रीणां त्रयाणां देवानां सम्बन्धि अवः पालनम् । अस्तु भवतु । कथम्भूतमवनं महि महत्सर्वापद्विनाशकम् । द्युक्षं द्युमन्ति सुवर्णादिद्रव्याणि क्षियन्ति निवसन्ति यस्मिन् पालने तथाविधं दुराधर्षम् । अन्यैराधर्षयितुं तिर-

स्कर्तुमशक्यम् । अत्र महिस्त्रीणामित्यादितृचस्य मध्ये, नाध्वसु वारणेष्विति युक्तं यदुक्तं तस्य द्युलोकभूलोकगतसर्वमार्गाभिप्रायं कण्वो दर्शयति ॥ इमे वा अध्वानो वातुपणार्यैतरा द्यावापृथिव्योस्तानेवैतदुपतिष्ठत इति ॥ २३ ॥ अथत्रिंशः ॥ न हि तेषाममाचन नाध्वसु वारणेषु । ईशे रिपुरघशंस्म इति । अमाशब्दो गृहनामसु पठितः । अपीत्यस्मिन्नर्थे चन शब्दो वर्त्तते । अमा चन गृहेऽपि वर्तमानानां तेषां मित्रार्यमवरुणैस्त्रिभिर्देवैः पालितानां यजमानाना-मुपद्रवार्थेति शेषः । अघशंसः सर्वदा पापस्य मशंसको रिपुः । न ईशे, न समर्थो भवति खलु । तथा वारणेषु चोरव्याघ्रादिषु भयवशात्रिवारितेष्वपि अ-ध्वसु मार्गेषु रिपुर्नेशे बाधितुं न समर्थः । मित्रादिभिः पालितानामस्माकं गृहे-ऽरण्ये वा नास्ति चोरादिबाधा इत्यर्थः ॥ २४ ॥ अथैकत्रिंशः ॥ ते हि पुत्रासो अदितेः मजीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रमिति ॥ अदितेरख-ण्डितशक्तेर्देवमातुः पुत्रासः पुत्रास्ते पूर्वोक्ता मित्रार्यमवरुणा मर्त्याय मनुष्याय यजमानाय अजस्रं निरन्तरम् । अनुपक्षीणं तेजः प्रयच्छन्ति । किमर्थम् ? जीवसे जीवितुम् । यथा चिरं जीवनं भवति तथा तदुपायज्ञानं प्रयच्छ-न्ति ॥ २५ ॥ अथ द्वात्रिंशः ॥ कदाचनस्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यत इति ॥ हे इन्द्र परमैश्वर्य-युक्त कदाचन अस्माभिः पुनः पुनर्याच्यमानः सन् कदाचिदपि स्तरीर्ना-ऽसि हिंसको न भवसि । न कुप्यसीत्यर्थः । किञ्च हे मघवन् दाशुषे हविर्द-त्तवते त्वदनुग्रहार्थम्, उपोप अत्यन्तसमीपे, इन्नु क्षिप्रमेव । इच्छब्द एवका-रार्थः । नुशब्दः क्षिप्रवचनः । सश्चसि सेवसे । अत्यन्ताऽनुग्रहेण सेवकवत् क्षिप्रमेवातिसमीपमागच्छसीत्यर्थः । देवस्य ते प्रकाशमानस्य तव भूयो दानं बहुतरफलदानं पृच्यते यजमानेन संयुज्यते । अत्रेन्द्रशब्दस्य तात्पर्यं कण्वो दर्शयति । इन्द्रो यज्ञस्य देवता, सेन्द्रमेवैतदभ्युपस्थानं करोतीति ॥ २६ ॥ अथ त्रयस्त्रिंशः ॥ तत्सवितुर्वरेणियं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयादिति ॥ तादिति षष्ठ्यर्थे । तस्य देवस्य द्योतनाऽऽत्मकस्य स-वितुः प्रेरकस्याऽन्तर्यामिणो विज्ञानाऽऽनन्दस्वभावस्य हिरण्यगर्भोपाध्यव-च्छिन्नस्य वा ब्रह्मणो भर्गः(१)सर्वपापानां सर्वसंसारसागरस्य च भर्जनसमर्थं

१ भर्ग शब्दो वीर्यवचन । वेदणाख्य वा अभिषिच्यमानाद्भर्गोऽपचक्राम । वीर्यं वै भर्ग इति श्रुतेः । तेन हि पाप्मानं भृज्जति दहति । भृजी भर्जने । अस्य वा भर्गस्तेजोवचनः । यद्वा मण्डल पुरुषो दमयः इत्येतत् त्रयमभिप्रेयते ॥

तेजः सत्यज्ञानादिवेदान्तप्रतिपाद्यं वरेण्यं वरणीयं सर्वैः प्रार्थनीयं यदस्ति तद्धीमहि तादृशं तेजो वयं ध्यायामः । छान्दसं संप्रसारणम् । धियो यो नः । धीशब्दो बुद्धिवचनः, कर्मवचनो वा । बुद्धीः कर्माणि वा । यः सविता नः अस्माकं प्रचोदयात् । चुद संचोदने । प्रकर्षेण चोदयति प्रेरयति सत्कर्मा-ऽनुष्ठानायेति । सवितृपदस्य तात्पर्यं कण्वो दर्शयति ॥ सविता वै देवानां प्र-सविता तथोहास्मा एते सवितृप्रसूताः सर्वे कामाः समृद्ध्यन्त इति ॥ २७ ॥ अथ चतुस्त्रिंशः ॥ परि ते दूळभोरथोऽस्माँऽअश्नोतु विश्वतः । येन रक्षसि दाशुषे । समिद्धो मा समर्धय प्रजया च धनेन चेति ॥ हे अग्ने ते तव रथो-ऽस्मान् यजमानान् विश्वतः सर्वासु दिक्षु पर्यश्नोतु परितो व्याप्नोतु । क-स्यांचिदपि दिशि अल्पमपि स्थानमपरित्यज्यास्मद्रक्षणाय व्याप्नोतु। कथम्भू-तो रथः । दूळभः दुर्दभः । छान्दसो वर्णव्यत्ययः । दभ्नोतिर्वधकर्मा । दुः-खेन दभ्यते, केनापि सहसा हिंसितुमशक्य इत्यर्थः । येन रथेन दाशुषे दत्त-वते यजमानाय तदुपकारार्थं, रक्षांसि रक्षां करोषि । स रथः(छन्दसा)पर्यश्नो-त्वित्यन्वयः । समिद्धो मया सम्यक्प्रदीपितस्त्वं प्रजया च पुत्रादिकया धनेन च सुवर्णादिना मां समर्द्धय । मां यजमानं समृद्धं कुरु । दाशुष इति पदं कण्वो व्याचष्टे । यजमानो वै दाश्वांस इति॥ २७ ॥ इति तृतीयाध्याये तृतीयोऽनुवाकः ॥ ३ ॥ ३ ॥

तृतीयेऽनुवाके विस्तरेणाऽग्न्युपस्थानमन्त्रा उक्ताः । चतुर्थे संक्षेपेणा-ऽग्न्युपस्थानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ भूर्भुवः सुवरिति ॥ वाशब्दो विकल्पार्थः । पूर्वोक्तेनोपप्रयन्त इत्यादिना वा, वक्ष्यमाणेन भूर्भुवः स्वरित्या-दिना वा द्वयोरन्यतरेणाऽनुवाकेनोपस्थानं कुर्यादित्यर्थः ॥ प्रथममन्त्रः, कण्वो ऽप्येतदुपस्थानं दर्शयति ॥ स वा अग्निहोत्रं हुत्वा सायमुपतिष्ठते भूर्भु-वः स्वरितीति ॥ पाठस्तु ॥ भूर्भुवः स्वः सुप्रजाः प्रजया भूयासम् । सुवीरो वीरैः सुपोषः पोषैरिति ॥

अग्ने भूर्भुवः स्वः भूरादिव्याहृतित्रयाऽऽत्मकस्तदर्थभूतलोकत्रयात्मको वा त्वम्, अतस्त्वत्प्रसादाद् अहं यदा प्रजया धनुष्मत्यादिरूपया युज्येयं तदानीं सुप्रजाः अनुकूलत्वेन शोभमानाः प्रजा यस्य मम तादृशो भूयासम् । तथा वीरैः स्वस्वकार्येषु शूरैर्यदा युज्येयं तदानीं सुवीरः शास्त्रीयमार्गवर्तिशोभन-पुत्रो भूयासम् । यदा च पोषैः पुष्टैः संपद्भिर्युज्येयं तदानीं सुपोषः बहुमूल्याह

हिरण्यादियुक्तो भूयासम् ॥ १ ॥ द्वितीयतृतीयमन्त्रयोर्विशेषमाह ॥ कात्यायनः ॥ प्रवत्स्यन्नुभौ नर्येति प्रतिमन्त्रमिति ॥ कण्वोऽप्याह ॥ अथ खलु प्रवत्स्यन् गार्हपत्यमेवाग्र उपतिष्ठते । आहवनीयमिति ॥ यदा यजमानो ग्रामान्तरं गन्तुमिच्छति तदानीमुभावाहवनीयगार्हपत्याग्नी मन्त्रद्वयेनोपतिष्ठेत ॥ तयोः पाठस्तु ॥ नर्य प्रजां मे पाहि शꣳस्य पशून् मे पाहीति ॥ हे नर्य नरेभ्यो यजमानेभ्यो हित गार्हपत्य मे प्रजां पाहि । हे शꣳस्याऽनुष्ठातृभिः शंसितुं योग्याहवनीय, मे पशून् पाहि ॥ तुरीयपञ्चमयोर्विशेषमाह ॥ कात्यायनः ॥ उपतिष्ठत आहवनीयगार्हपत्यावागन्मेति प्रतिमन्त्रमिति ॥ ग्रामान्तरं गत्वा प्रत्यागतो यजमानो मन्त्राभ्यामाहवनीयगार्हपत्यावुपतिष्ठेत । कण्वोऽप्येतदुभयं दर्शयति ॥ स आहवनीयमुपतिष्ठते आगन्मेति । स गार्हपत्यमुपतिष्ठते । अयमग्निरिति ॥ आहवनीयार्थमन्त्रपाठस्तु ॥ आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् । अग्ने सम्राळभिद्युम्नमभिसह आयच्छस्वेति ॥ विश्वं वेत्ति वेदयतीति वा विश्ववेदाः । तं सर्वज्ञम्, अस्मभ्यम् । अस्मदर्थं, वसुवित्तमम् अतिशयेन वसुनो धनस्य वेदितारं लब्धारं तथाविधमाहवनीयमुद्दिश्यागन्म वयं ग्रामान्तरात् प्रत्यागताः । सम्यग्राजते दीप्यते इति सम्राट् । तथाविधाऽग्ने हे आहवनीय अभिद्युम्नं सर्वतोऽवस्थितं धनम् । अभिसहः शत्रूनभिभवितुं बलम् आयच्छस्व । दाण् दान इति धातोर्यच्छादेशः । धनं बलं जानीयास्मभ्यं देहि ॥ गार्हपत्यार्थमन्त्रपाठस्तु ॥ अयमग्निर्गृहपतिर्गार्हपत्यः प्रजावान् वसुवित्तमः । अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्वेति ॥ अयं पुरोऽवस्थितो गार्हपत्य एतन्नामकोऽग्निः गृहपतिः गृहस्य पालकः प्रजावान् अस्मदीयपुत्रपौत्रादिस्वामी । वसुवित्तमः प्रजाऽनुग्रहस्यातिशयेन धनस्य लब्धा । अन्यत् पूर्ववत् व्याख्येयम् ॥ षष्ठे विशेषमाह ॥ कात्यायनः ॥ गृहा मा बिभीतेति गृहानुपैतीति ॥ ग्रामान्तरादागतः स्वगृहान् प्राप्नुयात् ॥ कण्वस्त्वेवमाह ॥ स उपतिष्ठते गृहा मा बिभीतेति ॥ पाठस्तु ॥ गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि । ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमान इति ॥ मा गृहा बिभीत भयं मा कार्षिष्ट मा वेपध्वम् । यः कोऽपि शत्रुरागत्य विनाशयिष्यतीति बुद्ध्या मनसि कम्पनं मा कार्षिष्ट । यतो वयम् ऊर्जं बिभ्रतः अन्नं संपूर्णं धारयमाणान् युष्मान् प्रति एमसि आगतोऽस्मि । यथा यूयम् ऊर्जं बिभ्रतस्तथाऽहमप्यूर्जं

बिभ्रद्धारयन् सुमनाः शोभनमनस्कः सुमेधाः शोभनधारणप्रज्ञोपेतः, मनसा दुःखरहितेन मोदमानो हृष्यन् गृहरूपान् युष्मान् प्रति एमि आगच्छामि ॥ अथ सप्तमः ॥ येषामध्येति प्रवसन् येषु सौमनसो बहुः । गृहानुपह्वयामहे ते नो जानन्तु जानत इति ॥ प्रवसन् देशान्तरं गच्छन् यजमानो येषामध्येति । द्वितीयार्थे षष्ठी । इक् स्मरण इति धातुः । तथाविधान् गृहान् यथा भवति तथा स्मरति गृहविषयं क्षेमं सर्वदा चिन्तयतीत्यर्थः । तथा येषु गृहेषु यजमानस्य सौमनसो बहुः । सुमनसो भावः सौमनसः प्रीतिस्तदतिशयः स च भूयात् । गृहानुपह्वयामहे । तान् प्रीतिविषयान् । गृहाभिमानी देवोऽस्मत्समीपे समागच्छत्विति । सर्वदा यजमानः ते च गृहदेवा जानत उपकाराभिज्ञानात्नोऽस्मान् जानन्तु, एते कृतघ्ना न भवन्तीत्यवगच्छन्तु ॥ अथाष्टमः ॥ उपहूता इह गाव उपहूता अजावयः । अथोऽअन्नस्य कीलाल उपहूतो गृहेषु न इति ॥ इह गृहेषु गाव उपहूताः । धेनवो बलीवर्दाश्च सुखेन तिष्ठन्त्वित्येवम् अनुज्ञाताः । तथा इह गृहेषु अजावयः अजास्ताऽविस्तज्जातिद्वययुक्ताः पशव उपहूताः सुखेन वर्तन्तामित्यस्माभिरनुज्ञाताः । अथो अपिच अन्नस्य कीलालः । अन्नसंबन्धी रसविशेषो नः अस्मदीयेषु गृहेषु उपहूतः समृद्धो भवत्वित्येवमस्माभिरनुज्ञातः ॥ नवमे विशेषमाह ॥ कात्यायनः ॥ क्षेमाय व इति प्रविशतीति ॥ पाठस्तु ॥ क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳ शग्मꣳ शंयोः शंयोरिति ॥ हे गावो युष्मान् प्रपद्ये प्राप्नोमि । किमर्थं, क्षेमाय विद्यमानवस्तुनो रक्षणं क्षेमस्तदर्थम् । तथा शान्त्यै मम सर्वाऽनिष्टशमनाय । शंयोः शमिति सुखनाम, तत्कामयमान इति शंयुः । शंयुरिदंकामयमान इति यास्केनोक्तत्वात् । तादृशस्य मम । शिवं शग्ममिति द्वे सुखनामनी । तत्रायमैहिकं द्वितीयमामुष्मिकम् । उभयविधं सुखं भूयादिति शेषः । शंयोः शंयोरित्यभ्यास इत्यादरार्थः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ इति तृतीयेऽध्याये तुरीयोऽनुवाकः ॥ ३ ॥ ४ ॥

चतुर्थे सङ्क्षेपेणाग्न्युपस्थानमन्त्रा उक्ताः ॥ पञ्चमे वरुणप्रघासमन्त्रा उच्यन्ते ॥ चातुर्मास्याख्ययागः पर्वचतुष्टयात्मकः । वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चत्वारि पर्वाणि । तत्र वरुणप्रघासाख्ये द्वितीये पर्वणि दक्षिणोत्तरयोर्द्वयोर्वेद्योर्हविःप्वासादितेषु प्रतिप्रस्थाता पत्नीमुदानयेत् । जारं तदीयं पृच्छेत् । साऽपि तं जारं ब्रूयात् । तदाह कण्वः ॥ स पत्नीमुदान-

यति तदा नेष्यन् पृच्छति, केन चरसीति वरुण्यं ह वा एतत्स्त्रीकरोति यदन्यस्य सत्येन चरतीति ॥ वरुण्यमपकृत्यत्वेन तन्निवारणीयमित्यर्थः ॥ तित्तिरिरप्येतत् सर्वं निस्पष्टमाह ॥ पत्नीं वाचयति । मेध्यामेवैनां करोति । अथो तम एवैनामुपनयति । यज्जारꣳ सन्तं न ब्रूयात् । प्रियं ज्ञातिꣳ रुन्ध्यात् । असौ मे जार इति निर्दिशेत् । निर्दिश्यैवैनं वरुणप्रघासेन ग्राहयतीति ॥ आपस्तम्बोऽप्येतद्दर्शयति ॥ प्रतिप्रस्थाता पत्नीमुदानयन्नेतच्च वाचयति तां पृच्छति, पत्नि ! कति ते जारा इति । यानाचष्टे तान् वरुणो गृह्णात्विति निर्दिशतीति ॥ कात्यायनः ॥ आख्याते प्रघासिन इत्येनां वाचयति नयन्निति ॥ जारे पत्न्या कथिते सत्येना पत्नीं नयन् प्रतिप्रस्थाता प्रघासिन इति मन्त्रं वाचयेत् । कण्वोऽप्याह ॥ तां वाचयति प्रघासिन इति ॥ पाठस्तु ॥ प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषस इति ॥ घस्लृ अदन इति धातुः । प्रकर्षेण घस्यते भक्ष्यत इति हविर्विशेषः प्रघासः । स येषामस्ति तान् प्रघासिनो मरुत एतन्नामकान् देवान् हवामहे आह्वयामः । मरुतश्चेति चकारेण तदीयपरिचारकाः समुच्चीयन्ते । ते सर्वेऽपि रिशादसः । रिश हिंसार्थः । दस उपक्षये इति धातुः । रिशां वैरिकृतां हिंसां दस्यन्त्युपक्षयन्तीति रिशादसः । करम्भण, यवमयो हविर्विशेषः करम्भस्तेन सजोषसः समानप्रीतयः । तथाविधान् मरुत इति पूर्वत्राऽन्वयः ॥ १ ॥ कात्यायनः ॥ करम्भपात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखी जायापती वा दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा यद् ग्राम इतीति ॥ यवपिष्टेन निर्मितानि कृत्वा दक्षिणऽग्नौ प्रत्यङ्मुखमेषमेष्यादिरूपाणि करम्भपात्राणि तानि शूर्पेण पत्नी जुहुयादित्येकः पक्षः । दम्पती जुहुयातामित्यपरः पक्षः । तौ च दक्षिणोत्तरमार्गेण तानि पात्राण्याहृत्य वेदेः पूर्वदिशि पश्चिमदिशि वा स्थित्वा जुहुयाताम् ॥ कण्वस्तु पत्नीहोमपक्षमाश्रित्याह ॥ सा जुहोति यद् ग्राम इति ॥ पाठस्तु ॥ यद् ग्रामे यदरण्ये यत्सभाया यदिन्द्रिये । यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहेति ॥ ग्रामे वसन्तो ग्रामोपद्रवरूपं चकृम । तथाऽरण्ये वसन्तो वय यदेनो मृगवृक्षोपद्रवरूप चकृम । तथा सभायामवस्थिता वयं यदेनो महाजनतिरस्कारादिकं चकृम । तथेन्द्रिये जिह्वोपस्थरूपे प्रीतियुक्ता वयं यदेनः कलञ्जभक्षणपरस्त्रीगमनाऽऽदिकं चकृम, तथाऽन्यत्रापि भृत्यस्वाम्यादौ यदेनस्ताडनाऽवज्ञादिकं चकृम । अत भृत्य·

स्वामिविवक्षयैव तित्तिरिणा मन्त्र एवं समाम्नातः॥ यच्छूद्रे यदर्य एनश्चकृमेति॥ तदिदं सर्वं पापम् अवयजामहे विनाशयामः । अवपूर्वो यजतिर्नाशार्थः।स्वाहा एतद्धविर्देवतायै पापविनाशिन्यै दत्तम् ॥ २ ॥ कात्यायनः ॥ मो षू ण इति यजमानो जपतीति ॥ पाठस्तु ॥ मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीरिति ॥ पृदिति संग्रामनाम । हे इन्द्र, अत्र पृत्सु संग्रामेषु वर्तमानः । देवैस्त्वया सह सख्यं प्राप्तैर्मरुन्नामकैर्देवैः सहितस्त्वं नोऽस्मान् मो विनाशयेति शेषः। मोशब्दो निषेधार्थः । सुशब्दो विनाशाभावस्याऽऽधिक्यं ब्रूते । तथा सति विनाशलेशो मा भूदित्ययमर्थः संपद्यते । कः प्रसङ्गो विनाशस्येत्याशङ्क्यास्ति हीत्यादिना स प्रसङ्गोऽभिधीयते । शुष्मेति बलनाम । हे शुष्मिन् बलवन् इन्द्र, ते तव अवयाः अवेक्षारूपो व्यापारः, अस्ति हि स्म । विद्योतत एव खलु । अवपूर्वस्य अयतेरवया इति रूपम् । अवगतो यागोऽवयाः । यद्यपि तत्कालोचितत्वदीययागाभावरूपोऽपराधोऽस्मासु विद्यते, तथाऽपि कृपालुस्त्वमस्मान् मा विनाशयेत्यर्थः । मिह सेचन इति धातुः । मीढुषो वृष्टिप्रदत्वेन सेक्तुः । हविष्मत हविर्योग्यस्य यस्य तव यव्या यवमयैः करम्भपात्रैर्निष्पन्ना होमक्रिया, महश्चित् पूजा खलु । तस्य तव यथोक्तपूजोपेतस्याऽस्मासु कृपालुत्वं युक्तमित्यभिप्रायः । किञ्च, गीरस्मदीया स्तुतिरूपा वाक् मरुतो भवतः सखीन् वन्दते नमस्करोति । नमो मरुद्भ्य इत्येवमादिकायास्तुतेर्नमस्काररूपत्वान्मरुद्विषयनमस्कारेणापि तुष्टस्य तव कृपैव युक्तेत्यर्थः ॥ ३ ॥

कात्यायनः ॥ अक्रन् कर्मेत्येनां वाचयतीति ॥ पाठस्तु ॥ अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सचाभुवः इति ॥ कर्मकृतः वरुणप्रघासाख्ये कर्मकारिण ऋत्विजः, वाचा स्तुतिरूपया सह कर्म वरुणप्रघासानुष्ठानरूपम्, अक्रन् कृतवन्तः । कथम्भूतया वाचा । मयोभुवा । मय इति सुखनाम । तन्मयो भवति निष्पद्यते यया स्तुतिरूपया वाचा सा स्तुतिर्मयोभूस्तया मयोभुवा वाचा मन्त्ररूपस्तुत्येत्यर्थः । सचाभुवः सहभवनशीलाः । परस्परं यजमानेन यस्या चास्मिन् कर्मणि सहावस्थिता ऋत्विजः। देवेभ्यो देवार्थं कर्म कृत्वा वरुणप्रघासनामकं कर्मानुष्ठायास्तं प्रेत गृहान् गच्छत । सोऽयमर्थः कण्वेन दर्शितः ॥ अस्तं प्रेतेतिग्रहाभुवा अस्तं त देवानां गृहेष्वेव प्रतिष्ठापयतीति ॥ तित्तिरिरप्यमुमेवार्थं दर्शयति ॥ अक्रन् कर्म कर्मकृत

इत्याह । देवानृणां निरवदाय अनृणा गृहानुपप्रेतेति वाचे बृहादेति ॥ देवान् उद्दिश्य कर्त्तव्यो यज्ञ ऋणं, तन्निरवदाय निःशेषेण परिहृत्येत्यर्थः ॥ ४ ॥ कात्यायनः ॥ अवभृथेति जायापती स्नात इति ॥ वरुणप्रघासस्य कर्मणोऽन्ते तदङ्गभूतं यदवभृथाख्यं कर्म जलसमीपे क्रियते तत्रानेन मन्त्रेण दम्पतिभ्यां जले स्नानं कर्तव्यम् ॥पाठस्तु॥ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुण ।अव देवै-र्देवकृतमेनोयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देवरिषस्पाहीति ॥ अवाचीनानि पात्राणि जलमध्ये क्रियन्ते यस्मिन् यज्ञविशेषे सोऽयमवभृथः । हे अवभृथ त्वं निचुम्पुण नितरां मन्दं गच्छ । चुप मन्दायां गताविति धातुः । निचे-रुरसि नितरां चरणशीलोऽसि । तथाप्यत्र निचुम्पुण नितरां मन्दं गच्छ । मन्दगतौ किं प्रयोजनमिति, तदुच्यते । देवैर्द्योतनात्मकैरस्मदीयैरिन्द्रियैर्देवकृतं मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिर्मर्त्यकृतं मर्त्येषु मनुष्येषु यज्ञदर्शनार्थमागतेषु कृतमवज्ञारूपं यदेनोऽस्ति तदप्यहमवयासिषमित्यनुवर्त्तते । इदमस्माभिः परि-त्यक्तमेनो यथा त्वां न प्राप्नोति तथा, हे यज्ञ मन्दं गच्छेत्यभिप्रायः । हे देव अवभृथाख्यस्य यज्ञपुरुष । रा दान इति धातुः । बहुविधविरुद्धफलदायिनो रिषो वधात् पाहि पालय रिषतिर्हिंसार्थः । विरुद्धफलदायी वधस्त्वत्प्रसादा-दस्माकं मा भूदित्यर्थः ॥ ५ ॥ इति तृतीयेऽध्याये पञ्चमोऽनुवाकः ॥३॥५॥

पञ्चमे वरुणप्रघासमन्त्रा उक्ताः ॥ षष्ठे साकमेधगतं किञ्चित् कर्मोच्य-ते ॥ कात्यायनः ॥ पूर्णा दर्वीमवद्धन्ति पूर्णा दर्वि परापतेति ॥ पाठस्तु ॥ पूर्णा दर्विपरापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो इति ॥ हे दर्वि अन्नप्रदानसाधनभूते काष्ठादिनिर्मिते त्वं पूर्णायाः स्थाल्याः सकाशादन्नं गृहीत्वा सम्पूर्णा भूत्वा परिपूर्णत्वादेव उत्कृष्टा सती परा इन्द्र-देवतां प्रति गच्छ। सुपूर्णा कर्मफलेन सुष्ठु पूर्णा सती पुनरापत भूयोऽस्मान् प्रत्यागच्छ । हे शतक्रतो इन्द्र, त्वं चाहं चोभौ वस्नेव वसुना धनेनेवेषमितीषं हविःस्वरूपमन्नम् । ऊर्जं हविर्दानफलरूपं रसविशेषं च विक्रीणावहै परस्पर-द्रव्यविनिमयरूपं विक्रयं करवावहै । अहं हविस्तुभ्यं ददामि त्वं च मह्यं फलं देहीत्यर्थः ॥ १ ॥ कात्यायनः ॥ देहि म इति जुहोतीति ॥ कण्वो-ऽप्याह ॥ स जुहोति देहि म इति ॥ पाठस्तु ॥ देहि मे ददामि ते नि मे धेहि नि ते दधौ । निहारं निहरामि ते निहारं निहरासि मे स्वाहेति ॥ हे यजमान त्वं मे मह्यमिन्द्राय देहि हविः प्रथमं प्रयच्छ । ते तुभ्यं यजमानाय ददामि

अपेक्षितं पश्चात् प्रयच्छामि । अनेन प्रथमपादेन उक्त एवार्थः पुनरपि द्वितीयपादेनादरातिशयार्थमुच्यते । मे मह्यम् इन्द्राय निधेहि प्रथमं त्वं हविर्निनतरां सम्पादय । ते तुभ्यं यजमानाय निदधौ अपेक्षितफलं सम्पादयामि । निहारशब्दो मूल्यवाची । नितरां ह्रियते इति व्युत्पत्तेः । निहारं मूल्यभूतं हविः, ते तुभ्यम् । इन्द्राय निहरामि यजमानोऽहं नितरां समर्पयामि । उत्तरो निहारशब्दो मूल्येन क्रेतव्यं पदार्थं ब्रूते । तत्रापि नितरां ह्रियते इति व्युत्पत्तिः । निहारं क्रेतव्यवस्तुरूपं फलं मे मह्यं यजमानाय निहरासि पश्चान्नितरां प्रयच्छ । पूर्वोक्तपादद्वयेनोक्तोऽर्थः । आदरेण द्विवारमिन्द्रेणोक्तः । तमर्थमुत्तरार्द्धेन यजमानः सम्यगङ्गीकरोति स्वाहेत्ययं शब्दो हविर्दानार्थः ॥ २ ॥ तृतीयेऽध्याये षष्ठोऽनुवाकः ॥ ३ ॥ ६ ॥

षष्ठे साकमेधगतपूर्णादर्व्याख्यकर्माङ्गभूतमन्त्रा उक्ताः । सप्तमेऽपि साकमेधगतपितृयज्ञाख्यकर्माङ्गभूता मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमदन्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्यामिति ॥ कण्वोऽप्याह ॥ ऐन्द्रीभ्यामुपतिष्ठते । इन्द्रो ह्याहवनीयोऽक्षन्नमीमदन्तेति ॥ तत्र प्रथममन्त्रपाठस्तु ॥ अक्षन्नमीमदन्त ह्यवप्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी इति ॥ अद भक्षण इति धातोर्लुटि घस्लादेशे सत्यक्षन्निति रूपम् । पितृयज्ञाख्ये कर्मणि ये पितरः सन्ति तेऽस्माभिर्दत्तं हविःस्वरूपमन्नम् । अक्षन् भक्षितवन्तः । कथमेतदवगम्यते । उच्यते । हि यस्मादमीमदन्त । हर्षं प्राप्ताः । मदी हर्षे इति धातुः । तस्मादक्षन्नित्यवगम्यते । अत्रास्मदीयां भक्तिमवगत्य प्रियाः प्रीतियुक्ताः सन्तः, अधूषत स्वकीयं शिरः कम्पितवन्तः । धूञ् कम्पन इति धातुः । किञ्च स्वभानवः स्वयं दीप्तियुक्ता विप्रा मेधाविनः सन्तो, नविष्ठया नवतमया मती मतियुक्ता अस्तोषत स्तुतिं कृतवन्तः । अहो भक्तिरित्यभिधानं स्तुतिः । हे इन्द्र नु क्षिप्रं ते तव, हरी एतन्नामकौ हरितवर्णावश्वौ, योज गमनाय रथे योजय । तवाभीष्टायाः पितृतृप्तेः संपन्नत्वात् तैः पितृभिः सह त्वया गन्तव्यमित्यर्थः ॥ १ ॥ द्वितीयमन्त्रपाठस्तु ॥ सुसंदृशं त्वा वयं मघवन् वन्दिषीमहि । प्रनूनं पूर्णवन्धुरः स्तुतो यासि वशाँ अनु योजान्विन्द्र ते हरी इति ॥ हे मघवन् इन्द्र सुसंदृशं त्वा शोभनदर्शनं त्वां वयमनुष्ठातारो वन्दिषीमहि अभिवादयामः । इत्थमस्माभिर्नमस्कृतस्त्वं, पूर्णवन्धुरः । रथनीडवाची ब-

न्धुरशब्दः । संपूर्णरथनीडोपेतो भूत्वा स्तुतः अस्माभिः स्तूयमानः सन् वशान् अनु अस्मदीयकामाननुलक्ष्यीकृत्य नूनं प्रयासि अवश्यमस्मदीयान् कामान् दातुमेव स्वस्थाने गच्छसि । योजेत्यादि पूर्ववत् ॥२॥ कात्यायनः ॥ मनो न्वाहुवामह इति गार्हपत्यं तिसृभिरिति ॥ उपतिष्ठन्त इत्यनुवर्तते ॥ तत्र प्रथमायाः पाठस्तु ॥ मनो न्वाहुवामहे नाराशꣳसेन स्तोमेन । पितॄणां च मन्मभिरिति । नुः क्षिप्रवचनः । पितृयज्ञानुष्ठानविषयं चित्तं तदाभिमानि- दैवतमित्यर्थः । आहुवामहे आह्वयामः । केन साधनेनेति । तदुच्यते । स्तोमेन स्तोत्रेण । कथम्भूतेन, नाराशंसेन । शंसः प्रशंसनम् । नराणां मनुष्याणां योग्यः शंसो नराशंसः । तत्संबन्धी नाराशंसः । स्तोत्रं द्विविधं– दैवं, मानुषं च । यत्र देवाः स्तूयन्ते तद्दैवं, यत्र च मनुष्याः प्रशस्यन्ते तन्मानुषम् । तथाविधेन स्तोत्रेणेत्युक्तं भवति । किञ्च, पितॄणां मन्मभिः । पितरो यैः स्तोमैर्मन्यन्ते- ऽवगम्यन्ते तादृशैः स्तोत्रैराह्वयामः ॥ ३ ॥ द्वितीयायाः पाठस्तु ॥ आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशे इति । नोऽस्माकं मनः पूर्वोक्तं चित्तं पुनर्भूय आ एतु आगच्छतु । किमर्थं, क्रत्वे क्रतवे, संकल्पाय, यज्ञं संकल्पयितुं दक्षाय कर्मण्युत्साहाय । ज्योगिति निपातश्चिरवचनः । जीवसे चिरं जीवितुं, सूर्यं दृशे च चिरकालं सूर्यमवलोकयितुं च । एतेषां संकल्पादीनां सिद्धये मनः पुनरागच्छतु ॥ ४ ॥ तृतीयायाः पाठस्तु ॥ पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातꣳ सचेमहीति ॥ हे पितरः, भवदनुज्ञया दैव्यो देवसम्बन्धी जनः पुरुषो नोऽस्मभ्यं मनः पूर्वोक्तचित्तं पुनर्भूयो ददातु, प्रयच्छतु प्रेरयत्वित्यर्थः । तथा सत्यनुष्ठानं कृत्वा भवत्प्रसादाज्जीवं जीवन्तं व्रातं पुत्रपश्वादिगणं सचेमहि सेवेमहि । सचतिः सेवार्थः । अनन्तरमाम्ना- तो मन्त्रः प्रकरणबलाद् अत्र जपार्थो द्रष्टव्यः ॥ ५ ॥ पाठस्तु ॥ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहीति ॥ अत्र पितृयज्ञे सोम नामको देवोऽस्ति । सोमाय पितृमत इत्येवं हविषो विहितत्वात् । हे सोम वयं यजमानाः । तव व्रते त्वत्संम्बन्धिनि कर्मणि वर्तमानाः । तनूषु भवदीय- शरीरेषु मनो बिभ्रतः अस्मदीयचित्तं धारयतः । त्वत्कारुण्यात् प्रजावन्तः पुत्रपौत्रादिसंपन्नाः सचेमहि सर्वदा च संयुक्ता भवेम ॥ ६ ॥ इति तृतीये- ऽध्याये सप्तमोऽनुवाकः ॥ ३ ॥ ७ ॥

सप्तमे साकमेधगतपितृयज्ञमन्त्रा उक्ताः ॥ अष्टमे साकमेधगतत्र्यम्बक-

हविर्विषया मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ एष ते जुहोतीति ॥ पाठस्तु ॥ एष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहेति ॥ रोदयति विरोधिनां शतमिति रुद्रः । हे रुद्र, ते स्वस्रा तव भगिन्या अम्बिकया एतन्नामधारिण्या सह एषोऽस्माभिर्दीयमानः पुरोडाशभागो भजनीयः स्वीकर्तुं योग्यः । त्वं तथाविधं पुरोडाशं संजुषस्व स्वाहा इदं हविर्दत्तम् । अम्बिकाया रुद्रभगिनीत्वं कण्वो दर्शयति । अम्बिका ह वै नामास्य स्वसा तयास्यैष सहभाग इति । योऽयं रुद्राऽऽख्यः क्रूरो देवः, तस्य विरोधिनं हिंसितुमिच्छा भवति । तमनया भगिन्या क्रूरदेवतया साधनभूतया हिनस्ति । सा चाम्बिका शरत्कालरूपं प्राप्य ज्वरादिकमुत्पाद्य तं विरोधिनं हन्ति । रुद्राम्बिकयोस्तयोरुभयोरुग्रत्वमनेन हविषा शान्तं भवति । तदेतत् सर्वं तित्तिरिर्दर्शयति ॥ एष ते रुद्रभागः सहस्वस्राम्बिकयेत्याह शरद्वा अस्याम्बिका सा प्रिया एष हिनस्ति यमऽ हिनस्ति तयैनऽसह शमयतीति ॥ कात्यायनः ॥ अतिरिक्तमाखूत्करमुपकिरत्येष तइतीति॥यजमानस्य पुत्रभृत्यादयो यावन्तः पुरुषाः सन्ति तान् गणयित्वा प्रतिपुरुषमेकैकः पुरोडाश इत्येतावतः पुरोडाशान्निरूप्य ततोऽप्यधिकमेकं पुरोडाशं निर्वपेत् । सोऽयमतिरिक्त इत्युच्यते । तदेतत् कात्यायनेन आदौ सूचितम्। त्रैयम्बकान्निर्वपति रौद्रानेककपालान् यावन्तो यजमानगृह्या, एकाधिकानिति ॥ तित्तिरिणाप्येतदाम्नातं, प्रतिपुरुषमेककपालान्निर्वपत्येकमतिरिक्तमिति ॥ तत्र योऽयमतिरिक्तः पुरोडाशस्तेनासौ जुहुयात् । किन्तु मूषकोत्खाते तु, उद्वासा एष त इति मन्त्रेणोपकिरेत् । कण्वोऽप्येतदाह ॥ अथ योऽयमतिरिक्तो भवति तमेवमुत्तरत आखूत्करीप उपकिरत्येष ते रुद्रेति ॥ पाठस्तु ॥ एष ते रुद्र भाग आखुस्ते पशुरिति ॥ हे रुद्र, एषोऽस्माभिरुपकीर्यमाणोऽतिरिक्तः पुरोडाशस्ते भागस्त्वया भजनीयः । तथा ते तव आखुः पशुः मूषकः पशुत्वेन समर्पितः । तत्समर्पणं कण्वो दर्शयति ॥ आखुस्ते पशुरिति तमस्मा आखुमेव पशुमनुदिशति तमस्य स्वं ददाति यथेतरान् पशून् हिनस्तीति ॥ अस्या रुद्रभगिन्यास्ते त्वन्निमित्तं ददाति । तद्दानेन च तुष्टो रुद्रस्तयाऽम्बिकया यजमानस्य पशून् मारयतीति ॥ १ ॥ कात्यायनः ॥ आगत्यावरुद्रमदीति जपतीति ॥ कण्वोऽप्याह ॥ अथ पुनरेत्य जपत्यवरुद्रमितीति । द्वयोर्मन्त्रयोः प्रतीकमिदम् । तयोरेष प्रथमन्त्रः ॥ पाठस्तु ॥ अव रुद्रमदीमह्यव देवं त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो

व्यवसापयादिति ॥ रुद्रमेव असौ रुद्र इति मनसा तमवगत्य, अदीमहि यथा त्वदनुग्रहादस्मं भक्षयेम तथा त्र्यम्बकं त्रीण्यम्बकानि नेत्राणि यस्य तादृशं देवमव त्रिनेत्रोऽयं देव इति, मनसावगत्यादीमहीत्यनुवर्त्तते । यथा येन प्रकारेण नोऽस्मान् वस्यसो वसुमुत्तमं करत् असौ त्रियम्बकः कुर्यात् । किञ्च यथा वः श्रेयसो ज्ञातिषु प्रशस्यतरान् कुर्यात् । किञ्च यथा नो व्यवसाययात् । येन प्रकारेणास्मानवसाययेत् सर्वेषु कार्येषु निश्चययुक्तान् कुर्यात् । तथैवैनं भजाम इति शेषः ॥ आशीःपरत्वं मन्त्रस्य तित्तिरिर्दर्शयति ॥ अवरुद्र मदीमहीत्याह । आशिषमेवैता आशास्त इति ॥ २ ॥ ॥ द्वितीयमन्त्रपाठस्तु ॥ भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम् । सुगं मेषाय मेष्या इति ॥ हे रुद्र त्वं भेषजमसि औषधवत् सर्वोपद्रवनिवारकोऽसि । अतोऽस्मदीयेभ्यो गवाश्वपुरुषेभ्यः सुगं सुखेन गन्तुं प्राप्तुं शक्यं यद्भेषजं सर्वव्याधिनिवारकमस्ति तद्देहीति शेषः । तथाऽस्मदीयानां सुगं भेषजं देहि । अनेन मन्त्रेण स्वगृहे विद्यमानानां पशूनां क्षेममाशिषेन्वति । तमेनमर्थं तित्तिरिर्दर्शयति ॥ भेषज गव इत्याह । यावन्त एव ग्राम्याः पशवस्तेभ्यो भेषजं करोतीति ॥ ३ ॥ कात्यायनः ॥ अग्निं त्रिः परियन्ति पितृवत्सव्यो नाघ्नानाःऽत्र्यम्बकमिति दैवविधेवनैव दक्षिणा नाघ्नाना इति ॥ यथा पितृमेधे पुत्रादयः पुरुषाः स्वकायावामभागस्थानूरूंस्ताडयन्तस्त्रिवारमप्रदक्षिणं परियन्ति एवमत्र पुरुषाः प्रथमेनैव त्र्यम्बकमन्त्रेणाऽग्निमप्रदक्षिणत्रयेण प्रदक्षिणत्रयेण च परियन्तीत्यर्थः ॥ पाठस्तु ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतादिति ॥ सुगन्धिं दिव्यगन्धोपेतं पुष्टिवर्धनं धनधान्यादिपुष्टेर्वर्धयितारं, त्र्यम्बकं नेत्रत्रयोपेतं रुद्रं यजामहे पूजयामः । ततो रुद्रस्य प्रसादान्मृत्योर्मुक्षीय अपमृत्योः संसारमृत्योश्च मुक्तो भूयासम् । अमृतान्मा मुक्षीय स्वर्गरूपान्मुक्तिरूपाच्चाऽमृतान्मा मुक्षीय, मा मुक्तो भूयासम् । अभ्युदयनिःश्रेयसरूपात् फलद्वयान्मम भ्रंशो मा भूदित्यर्थः । मृत्योर्मोचने दृष्टान्तः । उर्वारुकमिव बन्धनादिति ॥ यथा कर्कन्ध्वादेः फलमत्यन्तपक्वं सत् स्वकीयबन्धनस्थानाद् वृन्तात् प्रमुच्यते तद्वत् ॥ ४ ॥ कात्यायनः ॥ कुमार्यश्चोत्तरेणेति ॥ यजमानसम्बन्धिन्यः कुमार्योऽपि पूर्वोक्तपुरुषवदुत्तरेण त्र्यम्बकमन्त्रेणाग्निं त्रिः परियन्ति ॥ पाठस्तु ॥ त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुत इति ॥ पतिवेदनम् ।

भर्तुर्लब्धारम् । अनुकूलपतिमद्यमित्यर्थः । अन्यत् पूर्ववदित्यर्थः । इतो मुक्षीय अस्मान्मातृपितृभ्रातृकर्मतो मुक्ता भूयासम् । अमुतो मा मा मुक्षीय, विवाहादूर्ध्वं भविष्यतः पत्युर्मुक्ता मा भूयासम् । जनकस्य गोत्रं गृहं च परित्यज्य पत्युर्गोत्रे च गृहे त्र्यम्बकप्रसादात् सर्वदा वसामीत्यर्थः ॥ ५ ॥ कात्यायनः ॥ मूतयोः कृत्वा वंशयष्ट्यां कुत्वे वासज्ज्योभयतः स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासजत्यन्तेनेतीति ॥ व्रीहियवादिधान्यवहनार्थं तृणवंशादिभिर्निर्मितः पात्रविशेषो मूतमित्युच्यते । तयोरुभयोर्मूतयोस्त्र्यम्बकान् विशेषान् प्रक्षिप्य स्वकीयेनांशेन वोढुं शक्यायां वंशयष्ट्याम् अग्रद्वये तन्मूतद्वयमवासज्ज्योन्नते स्थाणौ वृक्षवंशवल्मीके वा मूतद्वययुक्तां वंशयष्टिं संसजति । ततो गोभिराघ्रातुमशक्यत्वाद् गावो रोगं न प्राप्नुवन्तीत्यर्थः ॥

पाठस्तु ॥ एतेन रुद्रावसेन परो मूजवतोऽतीहि अवततधन्वा पिनाकावस इति ॥ मुजवन्नाम कश्चित् पर्वतो रुद्रस्य वासस्थानम् । अवसशब्देन देशान्तरं गच्छतो मार्गमध्ये तटाकादिसमीपे भोक्तव्य ओदनविशेषोऽभिधीयते । हे रुद्र एतेन मूतद्वयगतेन हविःशेषाऽऽरूपेन भोज्येन सहितस्त्वं मूजवतः परः पर्वतात् परभागवर्ती सन् अतीहि । अतिक्रम्य गच्छ । कथम्भूतस्त्वम् । अवततधन्वा अवरोपितधनुष्कः । अस्मद्विरोधिनां त्वया निवारितत्वादित ऊर्ध्वं धनुषि ज्यासमारोपणस्य प्रयोजनाभावादवरोपणमेवेदानीं युक्तम् । तथा पिनाकावसः । पिनाकाख्यं त्वदीयं धनुरावस्ते सर्वत आच्छादयतीति पिनाकावसः । यथा धनुर्दृष्ट्वा प्राणिनो न बिभ्यति तथा त्वदीयं धनुर्वस्त्रादिना प्रच्छाद्य गच्छेत्यर्थः ॥ कात्यायनः ॥ कृत्तिवास इत्यनवेक्षमेत्योपस्पृश्यात्यय इति ॥ उन्नते वृक्षादौ मूतद्वयेऽवसज्ज्य प्रत्यावर्तमानो मूतद्वयस्यावेक्षणमकृत्वा वेदिसमीपे अहिंसन् हिंसामकुर्वन् शिवः अस्मदीयपूजया सन्तुष्टः शान्तः कोपरहितो भूत्वा अतीहि पर्वतमतिक्रम्य गच्छ ॥ ६ ॥ इति तृतीयेऽध्यायेऽष्टमोऽनुवाकः ॥ १ ॥ ८ ॥

इत्यमष्टमे साकमेधगतत्र्यम्बकहविर्विषया मन्त्रा उक्ताः ॥ नवमे वाजिनविषया मन्त्रा उच्यन्ते ॥ यत्र यत्रामिक्षायागो भवति तत्र तत्रानुनिष्पादी वाजिनयाग इत्येवं जैमिनीये धर्मविचारशास्त्रे निर्णीतम् । चातुर्मास्येष्वपि प्रथमपर्वणि वैश्वदेव्यामिक्षा विहिता । तत्रायं वाजिनयागः प्रसक्तः । क्षीरे विकृते सति तत्र निष्पन्नं नीरं वाजिनमित्युच्यते । तदेव यागे द्रव्यम् । वाजिशब्दाभिधेयास्तत्र देवाः । तदेतदन्यत्राम्नातम् । तप्ते पयसि दध्यानयति वैश्वदेव्यामिक्षा

वाजिभ्यो वाजिनमिति ॥ तस्य द्रव्यस्य निष्पत्तिप्रकारमापस्तम्बोऽप्याह । तप्ते प्रातर्दोहे सायं दोहमानयति । तत्संवर्तते । साऽऽमिक्षा । यदन्यत्तद्वाजिनमिति ॥ तस्मिन् वाजिनयागे शेषभक्षणे विकल्पितास्त्रयो मन्त्रास्तानाह ॥ कात्यायनः ॥ वाजिनां वाजिनं भक्षयामीति । वाज्यहं वाजिनस्योपहूत उपहूतस्य भक्षयामीति । वाजे वाजी भूयासमिति चेति ॥ तत्र प्रथममन्त्रपाठस्तु ॥ वाजिनां वाजोऽवतु भक्षोऽस्मान् रेतःसिक्तममृतं बलाय । विश्वेदेवा अभियत्संबभूवुस्तन्माधिनोतिं प्रजया धनेन । वाज्यहं वाजिनस्योपहूत उपहूतस्य भक्षयामीति ॥ वाजिनामित्यस्यार्थः वाजिनामकानां यागदेवानां संबन्धी वाजोऽन्नभूतो हविःशेषो भक्ष्यो भक्षयितुं योग्योऽस्मानवतु स वाजोऽस्मान् रक्षतु । रेतः भक्षितहविःशेषपाकपरिणामरसरूपमस्मदीयं सिक्तं पुत्रोत्पत्त्यर्थं योनौ स्थापितं सदमृतं पुत्ररूपजीवोपेतत्वेन विनाशरहितं भूत्वा बलाय अपत्यसंपत्तिरूपबलसिद्ध्यै संपद्यतामिति शेषः । विश्वेदेवाः सर्वेऽपि देवा एतदुपलक्षिताः सर्वे जना यदति रेतोरूपं यद्वस्त्वभि प्राप्य संबभूवुः समुत्पन्नाः । तत्सर्वजनोत्पादकं तद्रेतः प्रजया धनेन मां धिनोतु प्रीणयतु । वाज्यहं पूर्वोक्तवाजाख्याऽन्नवान् यजमानोऽहमुपहूत इतरैरनुज्ञातः सन् उपहूतस्य वाजस्य इतरैरनुज्ञातस्य हविःशेषस्य कञ्चिद्भागमिति शेषः । भक्षयामि हविःसंस्काररूपं भक्षणं करोमि । यस्तु वाजिनं भक्षयामीति द्वितीयो मन्त्रः कात्यायनेनोदाहृतः, असौ शाखान्तरीयः ॥ तृतीयमन्त्रपाठस्तु ॥ वाजे वाजी भूयासमिति ॥ वाजेऽन्नविषये वाजी भूयासं संग्रामवान् भूयासम् । वाजशब्दोऽन्नसंग्रामयोर्वाचकः । यत्र युद्धेनाऽन्नं लभ्यते तत्र वाजिदेवतानुग्रहाद् विजयिनो भूयास्मेत्यर्थः ॥ १ ॥ ॥ २ ॥ अथ पर्वसमाप्तौ कर्तव्ये वपने मन्त्रविनियोगमाह ॥ कात्यायनः ॥ अपरेण दक्षिणाग्निं दक्षिणां गोदानमुन्दति सवित्रा प्रसूता इतीति ॥ गोदानं शिरसो भागः ॥ पाठस्तु ॥ सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूम् । दीर्घायुत्वाय वर्चस इति ॥ सवित्रा प्रेरकेण परमेश्वरेण प्रसूताः प्रेरिता दैव्यो दिवि भवा दृष्टेर्जाता आपो जलानि ते मुण्डनार्थमवस्थितस्य यजमानस्य तव तनूं शरीरावयवभूतं शिर उन्दन्तु क्लेदयन्तु । किमर्थम् । दीर्घायुत्वाय बहुकालजीवनाय, वर्चसे ब्रह्मतेजोऽभिवृद्धये ॥ ३ ॥ कात्यायनः ॥ कश्यपस्येति यजमानो जपतीति ॥ सोऽयं जपो वपनकालीनः ॥ पाठस्तु ॥ कश्यपस्य त्र्यायुषं जमदग्नेस्त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषमिति ॥ कश्यपस्य एतन्नामकस्य प्रजापतेः सम्बन्धि त्र्यायुषं त्रयाणां बाल्ययौवनस्थवि-

स्वरूपाणामायुषां समाहाररूपम् । तथा जमदग्नेरेतन्नामकस्य त्र्यायुषम् । तथा देवानामिन्द्रादीनां त्र्यायुषम् । यदुक्तेषु पर्यायेषु यत् त्र्यायुषमस्ति तत् त्र्यायुषं सर्वमस्तु मम यजमानस्य भवतु । कश्यपादीनां बाल्यादिषु यादृशं चरितं तादृशं मम भूयादित्यर्थः ॥ ४ ॥ कात्यायनः ॥ वपति येन धातेतीति ॥ पाठस्तु ॥ येन धाता बृहस्पतेरिन्द्रस्य चायुषेऽवपत् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय । दीर्घायुत्वाय बलाय वर्चसे । सुप्रजास्त्वाय चाथो अथो जीव शरदः शतमिति ॥ धाता सर्वस्य जगतो विधाता चतुर्मुखो ब्रह्मा बृहस्पतेरिन्द्रस्य चायुषे आवयोरुभयोरायुर्वृद्ध्यर्थं येन यादृशेन मन्त्रात्मकेन क्षुरेण वपनमकरोत् । हे यजमान ते तव तेन ब्रह्मणा तादृशेन मन्त्रात्मकेन क्षुरेण वपामि वपनं करोमि । किमर्थं जीवात्वादिप्रयोजनषट्कसिद्ध्यर्थम् । जीवनहेतुभूतमन्त्रादिकमौषधं, जीवनं प्राणधारणं, दीर्घायुष्यमायुष्याभिवृद्धिः, बलं शरीरेन्द्रियदार्ढ्यम्, वर्चः शारीरकान्तिः, सुप्रजास्त्वं सदाचारपुत्रादिसमृद्धिः । चकारस्तु प्रयोजनसमुच्चयार्थः । अथोक्तप्रयोजनसम्पत्तेरनन्तरम्, असौ पुरतो वर्तमानो यजमानस्त्वं शतं शरदो जीव शतसंख्याकान् संवत्सरान् अत्यन्तसंयोगेन जीवनवान् भव ॥ ५ ॥ ६ ॥ ॥ इति तृतीयेऽध्याये नवमोऽनुवाकः ॥ ३ ॥ ९ ॥

अत्र विनियोगसंग्रहः ॥
नवानुवाकास्त्वध्याये तृतीयेऽर्थास्तु तेष्वमी ॥
आधानमाग्निहोत्रं च विस्तरेणाग्न्युपस्थितिः ॥ १ ॥
संग्रहेणापि वरुणप्रघासाः साकमेधकाः ॥
पित्र्यर्थास्त्र्यम्बकार्थाश्च त्र्यम्बकाख्ये विनिर्णीताः ॥ २ ॥
समिधा समिधो दध्ना तिसृभिस्तु जपेदुप ॥
अग्न्याधानं भूर्भुवः सुवरित्यादौ द्यौरितीरयेत् ॥ ३ ॥
उपतिष्ठावत आयं गौरितस्तृभिर्वर्णिनाः ॥
अग्निज्यो समिदाधानमग्निज्यो जुहुयात् तथा ॥ ४ ॥
सूर्यज्यो समिदाधानं सूर्यो ज्योतिर्जुहोति हि ॥
सजूर्द्वयेन जुहुयात् काम्यहोमौ विहाग्नये ॥ ५ ॥
अनमीन्द्र उभौ जप्यौ समिति समिधं क्षिपेत् ॥
अनुवाके द्वितीयेऽस्मिन् मन्त्रा एकादशेरिताः ॥ ६ ॥

उपस्थानमुपेत्याथैस्त्रयोदशभिरीरितम् ॥
अन्वेतमानं नव पूर्वाग्निश्चतुस्त्रिंशाद् समीरिताः ॥ ७ ॥
संसृष्टोपस्थितिभूर्भुः सर्प-शंस्यद्वयं गताः ॥
आगन्मापमिति द्वाभ्यामागच्छाग्नेरुपस्थितिः ॥ ८ ॥
गृहात्त्रयाद् गृहानापश्का विशेद् क्षेमा नवेरिताः ॥
प्रघा पत्नीं वाचयेत यद्वाहोनकरम्भगः ॥ ९ ॥
मोषूस्त्वामीक्षयेदसन् पत्नीं वाचयते ततः ॥
अवस्थातो दम्पती द्वौ पञ्च मन्त्रा इहेरिताः ॥ १० ॥
पूर्णा हविर्ग्रहो देहि जुहोति द्वाविहेरितौ ॥
असन्नुत्सुमुपस्थानं द्वाभ्यामाहवनीयके ॥ ११ ॥
मन आनः पुनर्गार्हपत्याग्नौ तिसृभिस्तथा ॥
वयं तुराजपेन्मन्त्राः षडेवात्रोपवर्णिताः ॥ १२ ॥
यथ होमोऽप्येष ते रु शेषमाखूत्करे क्षिपेत् ॥
अवभेषद्वयं जप्यं त्र्यम्बकेन प्रदक्षिणम् ॥ १३ ॥
कुमारीणां तथा त्र्यम्बशेषमूतेऽवबुध्यतु ॥
एतेनेति सदेत्क्रति जलस्पर्शोऽष्टवर्णिताः ॥ १४ ॥
वेदार्थस्य प्रकाशेन तमोहार्दं निवारयेत् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १५ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये काण्ववेदार्थप्रकाशे संहिताभाष्ये तृतीयोऽध्यायः ॥ १ ॥ ३ ॥

## अथ शुक्लयजुर्वेदकाण्वसंहिताभाष्ये चतुर्थोऽध्यायः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

तृतीयेऽध्याये आधानाग्निहोत्राग्न्युपस्थानचातुर्मास्यमन्त्रा उक्ताः। अथ चतुर्थमारभ्य नवमान्तेषु सोमयागमन्त्रा उच्यन्ते ॥ तत्रास्मिँश्चतुर्थेऽध्याये सोमक्रयमन्त्राः प्राधान्येनोच्यन्ते ॥ आदौ तावद् यजमानसंस्कारार्थं वपनमन्त्रा उच्यन्ते । स च यजमानः षोडशानाम् ऋत्विजां वरणं कृत्वा प्राचीनशालां गन्तुम् अरण्योरग्निं समारोप्य तत्र गच्छेत् ॥ कात्यायनः ॥ प्रचीनशालास्तम्भं पूर्वार्द्धे गृहीत्वारणिपाणिरिदमगन्मेतीति ॥ आपस्तम्बोऽप्याह ॥ यदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्तविश्वेऋक्सामाभ्यांसन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेमेति॥ देवा इज्यन्ते यस्मिन् स्थाने तद्देवयजनम् । तत्र पृथिव्याः सम्बन्धि । इदमितिहस्तेनाभिनीय प्रदर्श्यते । तादिद देवयजनमागन्म यष्टुकामा आगताः स्म । यत्र यस्मिन् देवयजने विश्वे देवासः सर्वे देवा अजुषन्त प्रीतियुक्ताः स्थिताः । यत्राजुषन्त इद देवयजनमित्यन्वयः । ऋक्सामाभ्यां यजुर्भिर्वेदत्रयगतैर्मन्त्रैः सन्तरन्तः समुद्रवन्महान्तं सोमयागं समुत्तरन्तः सम्यगुत्तरन्तः समापयन्तो वयं रायस्पोषेण धनपुष्ट्या इष्यमाणेनान्नेन च संमदेम हर्षं सम्यक् प्राप्नुयाम । देवयजनाख्यस्य स्थानस्य स्वर्गसंबन्धित्वं भवति । किन्तु पृथिवीसंबन्धित्वम् । एतस्यार्थस्य प्रसिद्धत्वं तित्तिरिर्दर्शयति ॥ यदमगन्म देवयजनं पृथिव्या इत्याह । देवयजनं ह्येव पृथिव्या आगच्छतीति ॥ अस्मिन् मन्त्रे देवशब्देन षोडशर्त्विजो ब्राह्मणा विवक्षिता इत्येतदपि स एव दर्शयति । विश्वे ह्येतद्देवा जोषयन्ते ब्राह्मणा इति ॥ १ ॥ कात्यायनः ॥ प्रथमं दक्षिणं गोदान वितार्योनत्तीमा आप इति ॥ शिरसो दक्षिणभागमाश्रान् केशान् विभक्तान् क्लेदयेदित्यर्थः ॥ पाठस्तु ॥ इमा आपः शमु मे सन्तु देवीरिति ॥ देव्यो द्योतमाना निर्मला इमा आपः शिरःक्लेदनाय सिच्यमाना एता आपो मम यजमानस्य शमु सन्तु सुखकारिण्य एव भवन्तु ॥ कात्यायनः ॥ यूपवद् कुशतरुणं क्षुरेण चान्तर्निधाय छित्त्वेति ॥ यथा यज्वर्थस्य छेदनायौषध इति मन्त्रेण छिन्द्याद् एवमत्रापि तृणान्तर्द्धानं क्षुरस्थापनं च मन्त्रद्वयेन कर्तव्यमित्यर्थः । आपस्तम्बोऽप्याह ॥ ओषधे कुश एनं यजमानं

त्रायस्व क्षुराद्रक्षस्व ॥ हे क्षुर यजमानं मा हिंसीः मा धस्व ॥ कात्यायनः ॥ आपो अस्मानिति स्नात्वेति ॥ पाठस्तु ॥ आपो अस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु विश्वꣳ हिरिप्रं प्रवहन्ति देवीरिति ॥ मातरः मातृवत् पालयित्र्य एता आपः, अस्मान् कृतक्षौरान् यजमानान् पुनन्तु शोधयन्तु क्षौरकर्मनिर्मितामपद्धतिं निवारयन्तु । घृतेन क्षरणोपेतेन जलेन पुनन्तीति घृतप्वो जलदेवताश्च नोऽस्मान् घृतेन क्षरणयुक्तेन जलेन पुनन्तु शुद्धान् कुर्वन्तु । देवीर्द्योतमाना आपो विश्वꣳ हिरिप्रं सर्वमपि पापम् । अस्मद्यजमानेभ्यः प्रवहन्तु प्रकर्षेणापनयन्तु ॥ कात्यायनः ॥ उदिदाभ्य इत्युत्क्रामतीति ॥ शुचिरापूत इति मन्त्रशेषः ॥ शुचिः पूत इतिशब्दद्वयेन स्नानाचमनाभ्यां बहिरन्तश्च शुद्धिद्वयमभिधीयते । इच्छब्दः समुच्चयार्थः । तथाविधः सन्नहम् । आभ्य उरसश्च उद्गाम्य एमि भूमिमागच्छामि ॥ कात्यायनः ॥ क्षौमं वस्ते दीक्षातपसोरितीति ॥ दुकूलवस्त्रमाच्छादयतीत्यर्थः ॥ पाठस्तु ॥ दीक्षातपसोस्तनूरसि तां त्वा शिवाꣳ शग्मां परिदधे भद्रं वर्णं पुष्यन्निति ॥ हे क्षौमवस्त्र त्वं दीक्षातपसोस्तनूरसि दीक्षाभिमानिदेवतायास्तपोऽभिमानिदेवतायाश्च शरीरवत् प्रियस्वरूपमसि । शिवां शग्मां द्वयोरपि शब्दयोः सुखनामत्वादत्यन्तसुखरूपमित्युक्तं भवति । हे देवताद्वयतनो तां त्वां तथाविधसुखकरीं त्वां परिदधे यजमानोऽहं त्वां परितो धारयामि । किं कुर्वन् । भद्रं वर्णं पुष्यन् । अनेन वस्त्रधारणेन शरीरे कल्याणं वर्णविशेषं पोषयन् ॥ २ ॥ ३ ॥ इति चतुर्थाध्याये प्रथमोऽनुवाकः ॥ ४ ॥ १ ॥

प्रथमे यजमानस्य वपनमन्त्रा उक्ताः ॥ द्वितीये अञ्जनादिसंस्कारमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते । कुशेषु नवनीतेन शीर्ष्णोऽनुलोमꣳ सम्पादको महीनां पयोऽसीति ॥ प्राचीनशालायां पूर्वभागे स्थित्वा कुशेषु लग्नं नवनीतं गृहीत्वा शिर आरभ्य पादान्तस्य शरीरस्याभ्यङ्गं कुर्यात् ॥ पाठस्तु ॥ महीनां पयोऽसि वर्चोदा असि वर्चो मे देहीति ॥ हे नवनीत त्वं महीनां गवाम् । महीशब्दो गोनामसु पठितः । पयोऽसि । क्षीरजन्यत्वात् पयस्त्वोपचारः । वर्चोदा असि स्निग्धत्वेन कान्तिप्रदोऽसि । अतो मे मह्यं यजमानाय वर्चो देहि । कान्तिं प्रयच्छ ॥ कात्यायनः ॥ वृत्रस्येत्यक्षिणी अनक्ति त्रैककुदाञ्जनेनाऽभावेऽन्यादिति ॥ त्रिककुत्पर्वतादुत्पन्नं लभ्यते चेत् तेनाक्षिद्वयमञ्ज्यात् । तदभावेऽन्यदप्यञ्जनमस्तु ॥पाठस्तु॥ वृत्रस्य कनीनिकासि चक्षुर्दा असि चक्षुर्मे देही-

ति ॥ हे अञ्जन, त्वं वृत्रस्य वृत्रनामकस्य कनीनिका असि, नेत्रमध्यगतकृष्णमण्डलरूपाऽसि । तदेवाह तित्तिरिः ॥ इन्द्रो वृत्रमहनत् तस्य कनीनिका परापतत् । तदाञ्जनमभवदिति । चक्षुर्दा असि कनीनिकारूपत्वाद् दृष्टिप्रदत्वमुपपन्नम् । अतो मे मह्यं चक्षुर्देहि । दृष्टिपाटवं प्रयच्छ ॥ १ ॥ कात्यायनः ॥ कुशपवित्रैश्चित्पतिर्मेति पावयति सप्तभिः ॥ प्रतिमन्त्रमच्छिद्रेणेति ॥ शेषोऽनुषज्यते । प्रतिमन्त्रं पृथक् सप्तभिः कुशैः शोधने क्रियमाणे मिलित्वा कुशपवित्राण्येकविंशतिः संपद्यन्ते । एतदेवाभिप्रेत्य तित्तिरिराह ॥ एकविंशत्या पावयति दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशो यावानेव पुरुषस्तमप्रं परिवर्गं पावयतीति ॥ पाठस्तु ॥ चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयमिति ॥ चिच्छब्दो ज्ञानवाची । ज्ञानानां पतिश्चित्पतिर्मनोऽभिमानी देवः । मनो वै चित्पतिरिति तित्तिरिणोक्तत्वात् । यद्वा प्रजापतिर्वै चित्पतिरिति श्रुतेः । स वा भवतु । शुद्धिहेतुत्वोयुश्छिद्ररहितत्वाद् अच्छिद्रं पवित्रम् । अथवा आदित्यमण्डलम् । असौ वा आदित्योऽच्छिद्रं पवित्रमिति श्रुतेः । तेन पवित्रेण सूर्यसम्बन्धिरश्मिभिश्च मां यजमानं चित्पतिः पुनातु शुद्धं करोतु । हे पवित्रपते शुद्धिपालक ते तवानुग्रहात् पवित्रपूतस्य पूर्वोक्तेन पवित्रेण शुद्धस्यैतस्य यजमानस्याभीष्टं भूयादिति शेषः । तदेवाभीष्टं स्पष्टीक्रियते । यत्कामो यस्मिन्ननुष्ठाने कामवानहं पुनः शुद्धो भवामि । तच्छकेयं तदनुष्ठानं कर्तुं शक्तो भूयासम् । वाक्पतिर्बृहस्पतिः सविता देवोऽन्तर्यामी । एतदपि मन्त्रद्वयं पूर्ववद् योज्यम् ॥ २ ॥ कात्यायनः ॥ आ वो देवास इति वाचयतीति ॥ अध्वर्युर्यजमानं वाचयेत् ॥ पाठस्तु ॥ आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामह इति ॥ हे देवासो देवा, अध्वरे अस्मदीये यज्ञे वामं प्रयति वननीयं सम्भजनीयम् अनुष्ठानं प्राप्नुवति सति तदीयं सम्भावितं फलं, वो युष्मान् आ ईमहे साकल्येन याचामहे । किञ्च हे देवासो देवा यज्ञियास आशिषो यज्ञसम्बन्धीनि फलानि आ समानेतुं वो युष्मान् हवामहे आह्वयामः ॥ ३ ॥ कात्यायनः ॥ स्वाहा यज्ञमित्यङ्गुली अनयते नानाहस्तयोरेवंशेषं प्रतिमन्त्रमुत्तमेन मुष्टीकृत्वेति ॥ हस्तयोर्यदेतत्कनिष्ठाङ्गुलिद्वयं तत् प्रथममन्त्रेण यथाप्रसृतं न भवति तथा सङ्कोचयेत् । एवमुत्तरैस्तत्तदनन्तरं भाविनोऽङ्गुलिद्वयस्य

सङ्कोचो द्रष्टव्यः । द्यावापृथिवीभ्यामेतत्पदं यथा मन्त्रद्वयम्भवति तथा विच्छेदनीयम् । ततश्चत्वारो मन्त्राः सम्पद्यन्ते । स्वाहा यज्ञं वातादित्युत्तमेन मन्त्रेण मुष्टिद्वयं कुर्यात् । तदेतत् सर्वमापस्तम्बो विस्पष्टयति । स्वाहा यज्ञं मनसेति द्वे स्वाहा दिव इति द्वे स्वाहा पृथिव्या इति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा यज्ञं वातादारभ इति मुष्टीकरोति । अन्यत्र पाठस्तु ॥ स्वाहा यज्ञं मनसः स्वाहोरोरन्तरिक्षात् । स्वाहा द्यावापृथिवीभ्याम् स्वाहा वातादारभ इति ॥ मनःशब्दस्तैत्तिरीयके तृतीयान्तः । अत्र तु पञ्चम्यन्तः । स्वाहाशब्दस्य निपातत्वेन यदर्थवाचित्वात् । तत्र तत्र उचिता अर्था ब्राह्मणानुसारेणोपलक्षणीयाः । ते चाऽत्र लक्ष्यन्ते । मनसो यज्ञं स्वाहा चित्तेन यज्ञमभिगच्छामि । उरोरन्तरिक्षात् स्वाहा विस्तीर्णेऽन्तरिक्षे यज्ञ आश्रितः । द्यावापृथिवीभ्यां स्वाहा द्यावापृथिव्योर्यज्ञ आश्रितः । वातात् स्वाहारभे वायुप्रसादात् प्रवर्तनीयमिदं कर्म मारब्धं करोमि । सोऽयमुपलक्षितः सर्वोऽर्थस्तित्तिरिणा स्पष्टमुदाहृतः ॥ स्वाहा यज्ञं मनसेत्याह । मनसा हि पुरुषो यज्ञमभिगच्छति । स्वाहा द्यावापृथिवीभ्यामित्याह । द्यावापृथिव्योर्हि यज्ञः । स्वाहोरोरन्तरिक्षादित्याहाऽन्तरिक्षे हि यज्ञः । स्वाहा यज्ञं वातादारभ इत्याह । यं वायवः पवन्ते स यज्ञस्तमेव साक्षादारभते मुष्टीकरोति वाचं यच्छति यज्ञस्य धृत्या इति । वातस्य क्रियाहेतुत्वाद् यज्ञरूपत्वम् ॥ ४ ॥ इति चतुर्थेऽध्याये द्वितीयोऽनुवाकः ॥ ४ ॥ २ ॥

द्वितीयेऽभ्यञ्जनादिसंस्कारमन्त्रा उक्ताः ॥ तृतीये स्रौदूग्रहणहोममन्त्रा उच्यन्ते ॥कात्यायनः॥ उदूग्रहणानि जुहोति स्थाल्या स्रुवेणाकूत्या इति प्रतिमन्त्रमिति ॥ तत्र प्रथममन्त्रपाठस्तु ॥ आकूत्यै प्रयुजेऽग्नये स्वाहेति ॥ यज्ञं करिष्यामीत्येवंविधमानसः सङ्कल्प आकूतिः । तस्यै आकूत्यै तत्सम्पूर्त्यर्थं प्रयुजे निर्विघ्नेन मां प्रेरयते अग्नये वह्निदेवाय स्वाहा । इदं हुतमस्तु ॥ द्वितीयमन्त्रपाठस्तु ॥ मेधायै मनसेऽग्नये स्वाहेति ॥ श्रुतयोर्ग्रन्थतन्त्रयोर्द्धारणशक्तिर्मेधा, तत्सिद्ध्यर्थं मनसे मनोऽभिमानिनेऽग्नये हुतमस्तु ॥ तृतीयमन्त्रपाठस्तु ॥ दीक्षायै तपसेऽग्नये स्वाहेति ॥ व्रतनियमो दीक्षा, तत्सिद्ध्यर्थं मदीयशारीरतपोऽभिमानिनेऽग्नये हुतमस्तु ॥

तुरीयमन्त्रपाठस्तु ॥ सरस्वत्यै पूष्णेऽग्नये स्वाहेति ॥ मन्त्रोच्चारणशक्तिः सरस्वती । तत्सिद्ध्यर्थं वागिन्द्रियाय पोषकाय वह्नये हुतमस्तु ॥ पञ्चममन्त्र-

पाठस्तु ॥ आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहेति ॥ हे आपो, यूयं ये च द्यावापृथिवी द्यावापृथिव्यौ य-च्चोरु विस्तीर्णमन्तरिक्षं तेषामस्मदीना सर्वेषां देवानामनुग्रहादिति शेषः । बृह-स्पतये एतन्नामकाय देवाय हविषा विधेम आज्येन परिचर्यां कारवाम । क-थम्भूता आपः । देवीर्देव्यो द्योतमानाः । बृहतीः प्रभूताः विश्वशम्भुवः विश्वं सुखेन भावयित्र्यः । एतानि विशेषणानि वृष्टिजन्यास्वप्सु युज्यन्ते । तदाह तित्तिरिः ॥ या वै वर्षास्ता आपो देवीर्बृहतीर्विश्वशम्भुव इति ॥ १ ॥ पश्च-मन्त्रपाठस्तु ॥ विश्वेदेवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति ॥ विश्वो मर्तः । सर्वो मनुष्यः नेतुः फलमाप-कस्य देवस्यादानादिगुणयुक्तस्य सख्यं सखिभावं वुरीत वृणुते प्रार्थयते । किञ्च, विश्वः सर्वो जनः रायो धनाय इषुध्यति प्रार्थयते । याञ्चाकर्मण्ययं धातुः पठितः । किञ्च पुष्यसे पोषणाय, द्युम्नं यशोऽन्नं वा । यास्केन तथो-क्तत्वात् । वृणीते सर्वो जनः प्रार्थयते । स्वाहा तस्मै प्रेरकाय देवाय हुत-मस्तु ॥ २ ॥ इति चतुर्थेऽध्याये तृतीयोऽनुवाकः ॥ ४ ॥ ३ ॥ तृतीये औ-द्रहणाख्यहोममन्त्रा उक्ताः ॥ तुरीये कृष्णाजिनादिमन्त्रा उच्यन्ते ॥ कात्या-यनः ॥ शुक्लकृष्णमभिनालभत ऋक्सामयोरितीति ॥ पाठस्तु ॥ ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातम् । आस्य यज्ञस्योदृच इति ॥ हे शुक्लकृष्ण-रेखे, कृष्णाजिनगते, युवाम् ऋक्सामयोः शिल्पे स्थः । ऋगभिमानिसामा-भिमानिदेवतयोर्ये शिल्पे चातुर्ये तद्रूपे भवथः । ते वां तथाविधे यु-वाम् आरभे अहं स्पृशामि । ते मा पातं तथाविधं मां पालयतम् । कियन्तं कालमिति चेत् तदुच्यते । अस्य यज्ञस्योदृचः अनुष्ठीयमानस्य यज्ञस्य येयम् ऋगुत्तमास्ति तत्पर्यन्तं यज्ञसमाप्तिपर्यन्तमित्यर्थः । ऋक्सामाभिमानिन्यौ दे-वते केनापि निमित्तेन देवानां यज्ञार्थमवस्थिते सन्त्यौ कृष्णमृगो भूत्वा तदीयं रूपं सम्यक् कृत्वा देवेभ्योऽपक्रम्य दूरदेशे कस्मिंश्चित् तिष्ठताम् । तस्य मृगस्य चर्मणि यः शुक्लो वर्णः सोऽयमृचः शिल्परूपं यश्च कृष्णो वर्णः सोऽयं साम्नः शिल्परूपम् । तत्सर्वमाह तित्तिरिः ॥ ऋक्सामे वै देवेभ्यो यज्ञार्थं तिष्ठ-माने शुक्लकृष्णरूपं कृत्वाऽपक्रम्य तिष्ठतामिति । एष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिन अस्यैव साम्नो यत्कृष्णमिति ॥ १ ॥ कात्यायनः ॥ दक्षिणमा-रोहति शर्मासीति ॥ पाठस्तु ॥ शर्मासि शर्म मे यच्छ नमस्ते अस्तु मा मा हिंसीः

रिति ॥ हे कृष्णाजिन त्वं शर्मासि शरणमसि। अतो मे मह्यं शर्म यच्छ शरणं देहि । स्वकीयत्वेन स्वीकुर्वित्यर्थः । ते तुभ्यं कृष्णाऽजिनाय नमोऽस्तु मा हिꣳसीः । मां च यजमानं हिंसितं मा कुरु ॥ कात्यायनः ॥ मेखलां बध्नीतोर्गसीतीति ॥ आपस्तम्बोऽपि विस्पष्टमाह । शरमयी मौञ्जी वा मेखला त्रिवृत्पृथ्व्यन् मतरतः पाशा तया यजमानं दीक्षयतीति ॥ पाठस्तु॥ ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छेति ॥ हे मेखले त्वमाङ्गिरसी अङ्गिरोनामकानाम् ऋषीणां सम्बन्धिनी ऊर्गऽन्नम्रूपा ऊर्णम्रदा असि कम्बलवन्मृदुरसि । तथाविधा त्वम् ऊर्जमन्नरसं मे यच्छ मह्यं देहि । अस्याः शरमय्या मेखलाया अङ्गिरोभिः सम्बन्धं तित्तिरिर्दर्शयति ॥ अङ्गिरसः सुवर्गं लोकं यन्तदूर्जं व्यभजन्त ततो यदत्यशिष्यत ते शरा अभवन् । ऊर्ग्वै शरा यच्छरमयी मेखलाऽभवदूर्जमेवावरुन्धे इति ॥ अङ्गिरोनामकानाम् ऋषीणां परस्परमन्नरसे विभज्यमाने यदवशिष्टं तच्छरनामकतृणविशेषेणाविर्भूतं तस्मादूर्गसीत्यादिमन्त्र उपपद्यत इत्यर्थः ॥ २ ॥ कात्यायनः ॥ नीविं कुरुते सोमस्य नीविरसि ॥ असीति मन्त्रशेषः । हे मेखले त्वं सोमस्य नीविरसि । सोमदेवतायाः प्रियभूतग्रन्थिरसि मूलाग्रयोरेकीकरणेन ग्रन्थिविशेषो नीविरित्युच्यते ॥ कात्यायनः ॥ शिरः प्रोर्णुते विष्णोः शर्मासीतीति ॥ आच्छादयतीत्यर्थः ॥ पाठस्तु ॥ विष्णोः शर्मासि शर्म यजमानस्येति ॥ हे वस्त्र, त्वं विष्णोर्व्यापिनो यज्ञस्य शर्मासि सुखहेतुर्भवसि । अतो यजमानस्य शर्म सुखं संपादयेति शेषः ॥ कात्यायनः ॥ कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नाति तया कण्डूयनमिन्द्रस्य योनिरसीति ॥ आपस्तम्बोऽप्याह ॥ कृष्णविषाणा यजमानो यच्छत्यावध्नातीत्येके त्रिवलिः पञ्चवलिर्वेति ॥ असीति मन्त्रशेषः । हे कृष्णविषाणे त्वं पूर्वमिन्द्रस्य योनिरसि तथेदानीमप्युत्पत्तिस्थानं भवेति शेषः । पुरा कदाचिद् यज्ञपुरुषो दक्षिणां देवीं समभवत् । तस्मात् सम्भवनादिन्द्रोऽजायत तदानीमन्यस्योत्पत्तिर्माभूदिति विचार्येन्द्रः सद्योनिमाच्छिद्य मृगेषु न्यदधात् । निहिता सा योनिः कृष्णविषाणाऽभूत् । सोऽयमर्थस्तित्तिरिणा, यज्ञो दक्षिणामभ्यध्यायदित्यस्मिन्नाख्याने समाख्यातः । तस्मादस्या इन्द्रयोनित्वमुपपन्नम् ॥ कात्यायनः ॥ भूमौ चोल्लिखति सुसस्या इतीति ॥ आपस्तम्बोऽप्याह तथा वेदेर्लोष्टमुद्धतीति ॥ पाठस्तु ॥ सुसस्याः कृषीस्कृधीति ॥ सस्यं व्रीहियवादि, तदर्थो भूमिगतो व्यापारः कृषिः । याः

कृषयः सन्ति ताः सर्वाः सुसस्याः शोभनधान्याः कृधि । हे कृष्णविषाणे कुरु । एतन्मन्त्रलभ्यं फलं तित्तिरिरुदाजहार ॥ कृष्यो याः सुसस्या या इत्याह । तस्मादकृष्टपच्या ओषधयः पच्यन्त इति ॥ ३ ॥ कात्यायनः ॥ मुखसंमितमौदुम्बरं दण्डं प्रयच्छत्युच्छ्रयस्वेत्येनमुच्छ्रयतीति ॥ पाठस्तु ॥ उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यꣳहस आस्य यज्ञस्योदृच इति ॥ हे वनस्पते वृक्षावयवरूप दण्ड, उच्छ्रयस्व उन्नतो भव । एवमूर्ध्वो भूत्वा अंहसः पापान्मां पाहि । तत्र तत्र कालावधिरुच्यते । अस्यानुष्ठीयमानस्य यज्ञस्य आ उदृचः उत्तमाया ऋचः समाप्तिगतायाः । तदवर्यन्तमित्यर्थः ॥ ४ ॥ इति तुरीयाऽध्याये तुरीयोऽनुवाकः ॥ ४ ॥ ४ ॥

तुरीये कृष्णाजिनादिमन्त्रा उक्ताः ॥ पञ्चमे व्रतकरणादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्त्वेति ॥ मौनेनावस्थितस्य यजमानस्य वाग्विसर्जनमेतन्मन्त्रवाक्योच्चारणं विधीयते ॥ पाठस्तु ॥ व्रतं कृणुत व्रतं कृणुत व्रतं कृणुतेति ॥ दीक्षितस्य भोजनाय यत् पयो नियतं तद् व्रतमित्युच्यते ॥ हे परिचारिका, व्रतं कृणुत दोहनादिना क्षीरं सम्पादयत । त्रिवारं वाक्याभ्यासिरादरार्थो । अनेन मन्त्रेण मौनपरित्यागं तित्तिरिरभिविधत्ते ॥ व्रतं कृणुतेति वाचं विसृजतीति ॥ कात्यायनः ॥ अग्निर्ब्रह्मेति च सकृदिति ॥ एनमपि मन्त्रं सकृदुच्चारयेत् ॥ पाठस्तु ॥ अग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञिय इति ॥ ब्रह्मशब्देन वेदत्रयमभिधीयते । तस्य वेदत्रयस्याग्नित्वमुपचर्यते । आधानेन निष्पन्नस्य वैदिकस्याग्नेर्वेदव्यतिरेकेणासम्भवात् । तस्य चाग्नेर्यज्ञसाधनत्वाद् यज्ञत्वमुपचर्यते । तथा यज्ञयोग्यस्य खादिरादेर्वनस्पतेर्यज्ञसाधनत्वाद् वनस्पतिर्यज्ञ इत्यनुवर्तनीयम् ॥ १ ॥ कात्यायनः ॥ दैवीं धियमिति व्रतायोपस्पर्शनामिति ॥ बोधायनः ॥ अथाप आचामति दैवीं धियमिति ॥ आपस्तम्बः ॥ दैवीं धियं मनामह इति हस्ताववनिक्ते इति ॥ पाठस्तु ॥ दैवीं धियं मनामहे सुमृडीकामभिष्टये । वर्चोदां यज्ञवाहसꣳ सुतीर्था नोऽअसद्वशा इति ॥ अभिष्टये अभिमुखत्वेन प्राप्तस्य यज्ञस्य सिद्ध्यर्थं धियमनुष्ठानविषयां बुद्धिं मनामहे याचामहे । याञ्चाकर्मस्वेतत्पदं पठितम् । कथम्भूतां धियं, दैवीं देवसम्बन्धिनीं देवतोद्देशेन प्रवृत्ताम् । सुमृडीकां शोभनसुखहेतुम् । वर्चोदाम् । अनुष्ठानविषयस्य तेजसो दात्रीम् । विश्वधायसं विश्वस्य सर्वस्यानुष्ठानक्रमस्य धारयित्रीम् । तथाविधा धीः सुतीर्था अस्माभिः सुष्ठु तरीतुं प्राप्तुं

शक्त्या सती वशे असत् । अस्माकमधीनत्वे भवतु ॥ २ ॥ कात्यायनः ॥ ये देवा इति व्रतयतीति ॥ बोधायनः । अथासौ कंसे चमसे वा निषिच्य व्रतं प्रयच्छति तद्दक्षिणतः परिश्रित्य व्रतयति ये देवा इति ॥ पाठस्तु ॥ ये देवा मनोजाता मनोयुजो दक्षक्रतवः । ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहेति ॥ दीव्यन्ति द्योतन्त इति देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः । ते च देवा मनोजाता दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः । तथाविधायामिच्छायामुत्पन्नायां पश्चाच्चक्षुरादीनां प्रवर्तमानत्वात् । तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्तन्ते । अन्यचित्तस्य रूपादिप्रतिभासाभावात् । एतमेवार्थमभिप्रेत्य चक्षुरादिप्राणपरत्वं तैत्तिरिर्व्याचष्टे ॥ प्राणा वै देवा मनोजाता मनोयुज इति । ते च देवा दक्षक्रतवः दक्षाः कुशलाः क्रतवः संकल्पा येषां चक्षुरादीनां ते दक्षक्रतवः । संकल्पितार्थकारिण इत्यर्थः । ते देवा ये सन्ति ते देवाः, नः अस्मान् अवन्तु अनुष्ठानविघ्नपरिहारेण पालयन्तु । तथा ते देवा नः अस्मान् पान्तु फलबाधया पालयन्तु । तेभ्यः प्राणरूपेभ्यो देवेभ्यः स्वाहा इदं क्षीरं हुतमस्तु ॥ ३ ॥ कात्यायनः ॥ श्वात्राः पीता इति नाभिमालभत इति ॥ पाठस्तु ॥ श्वात्राः पीता भवत यूयमापोऽस्माकमन्तरुदरे सुशेवाः । ता अस्मभ्यमयक्ष्मा अनमीवाऽअनागसः स्वदन्तुन्देवीरमृताऽऋतावृध इति ॥ हे आपः क्षीररूपा यूयं मया पीताः सत्यः श्वात्रा भवत क्षिप्रपरिणामाः शीघ्रं जीर्णा भवत ॥ श्वात्रमिति क्षिप्रनामेति यास्केनोक्तम् । किञ्चाऽस्माकं पीनवतामन्तरुदरे जलपाकस्थाने सुशेवाः शोभनसुखा भवतेत्यनुवर्तते । शेवमिति सुखनाम । तास्तथाविधा आपः, अस्मभ्यम् । अस्मदुपकारार्थं, स्वदन्तु स्वादुत्वयुक्ता भवन्तु । कथम्भूतास्ताः । अयक्ष्माः प्रबलरोगविशेषरहिताः । अनमीवाः अल्पेन रोगसामान्येनापि रहिताः । अनागसः पापरहिता उपद्रवकारिण्यो न भवन्तीत्यर्थः । देवीर्देवेभ्यः शरीरपुष्टिहेतुत्वेन द्योतमानाः । अमृताः अपमृत्युरहिताः । ऋतावृधः यज्ञवृद्धिहेतवः ॥ ४ ॥ कात्यायनः ॥ मेक्षन् कृष्णविषाणया लोष्टं किञ्चिद्वादद्य इयं त इतीति ॥ मेक्षन् मेहन् मूत्रं करिष्यन् । किञ्चिदियं त इत्यनेन लोष्टव्यतिरिक्तं तृणादिकं विवक्षितम् ॥ पाठस्तु ॥ इयं ते यज्ञिया तनूरिति ॥ हे यज्ञपुरुष इयं पृथिवी, ते तव यज्ञिया तनूः यज्ञयोग्यो देहः । अतोऽस्या मूत्रोपहतिपरिहाराय व्यवधानं कर्तुं लोष्टं तृणं वा स्वीकरोमीत्य-

ऽभिप्रायः ॥ कात्यायनः ॥ अपो मुञ्चामीति मेहतीति ॥ पाठस्तु ॥ अपो मुञ्चामि न प्रजाम् । अꣳहोमुचः स्वाहाकृताः पृथिवीमाविशतेति ॥
अपो मुञ्चामि अस्यां पृथिव्यां लोष्टादिव्यवहितायां मूत्ररूपा अपो मुञ्चामि, न प्रजां प्रजोत्पत्तिनिमित्तं रेतो न मुञ्चामि । अतो हे आपः अंहोमुचः अंहसः पापात् पुरुषं पृथक्कुर्वत्यः । स्वाहाकृताः पूर्वं क्षीरपानकाले स्वाहेत्यनेन मन्त्रेण स्वीकृता यूयं पृथीवीमाविशत इदानीं पृथिवीं प्रविशत ॥ कात्यायनः ॥ पृथिव्या संभवेत्यत्र निदधातीति ॥ पुरा स्वीकृतं लोष्टादिकं मूत्रस्थाने निदध्यात् । हे लोष्टादिक, पृथिव्या सह त्वमेकीभव ॥ ५ ॥ कात्यायनः ॥ अग्ने त्वमित्युक्त्वा स्वपितीति ॥ पाठस्तु ॥ अग्ने त्वꣳसुजागृहि वयꣳसुमन्दिषीमहि । रक्षा णो अप्रयुच्छन् प्रबुधे नः पुनस्कृधि इति ॥ हे अग्ने त्वं सुजागृहि सुष्ठु निद्रारहितो भव । वयं यजमानाः सुमन्दिषीमहि । साधु स्वप्स्यामः । मन्दितिः स्वापार्थः । युच्छ प्रमादे इति धातुः । अप्रयुच्छन् प्रमादरहितः सन् नो रक्ष अस्मान् पालय । नोऽस्माकं प्रबुधे प्रबोधाय पुनस्कृधि भूयोऽपि प्रयत्नं कुरु । अस्याग्नेः प्रार्थनायास्तात्पर्यं तित्तिरिर्दर्शयति ॥ अग्निमेवाधिपं कृत्वा स्वपिति रक्षसामपहत्या इति ॥ ६ ॥ कात्यायनः ॥ विबुधुमस्वप्स्यन्तं पुनर्मन इति वाचयतीति ॥ पाठस्तु ॥ पुनर्मनः पुनरायुर्मऽआगात् पुनश्चक्षुः पुनः श्रोत्रं म आगात् । पुनः प्राणः पुनरात्मा म आगात् । वैश्वानरो अदब्धस्तनूपा अग्निर्मा पातु दुरितादवद्यादिति ॥ मे मनः यजमानस्य मनः पुनरागात् सुप्तिकाले विलीय पुनरिदानीं शरीरे समागतम् । किञ्च स्वापकालेन मे मदीयमायुर्नष्टप्रायं भूत्वा पुनरागादिदानीं पुनरुत्पन्नमिवासीत् । तथा मे चक्षुः पुनरागात् । तथा मे श्रोत्रं पुनरागात् । तथा मे प्राणवायुः पुनरागात् । तथा मे आत्मा तत्त्वरूपो जीवः पुनरागात् । एवं सर्वेष्वागतेषु अत ऊर्ध्वमयमग्निः, अवद्यात् = जिह्वया वदितुमयोग्यान्निन्दितात् दुरितात् पापात्, मा पातु मां पालयतु । कथं सोऽग्निः । वैश्वानरः विश्वानरसम्बन्धी सर्वपुरुषोपकारकः । अदब्धः केनाप्यहिंसितः । तनूपाः अस्मदीयशरीरस्य पालकः ॥ ७ ॥ कात्यायनः ॥ त्वमग्न इत्याह क्रुद्ध्वाऽव्रत्यं वा व्याहृत्येति ॥ दीक्षितो यदा क्रुध्यति, यदा च व्रतविरुद्धं ब्रूते तदानीं त्वमग्न इति मन्त्रं ब्रूयात् ॥ पाठस्तु ॥ त्वमग्ने व्रतपा असि देव आमर्त्येष्वा । त्वं यज्ञेष्वीड्य इति ॥ हे अग्ने देवो द्योतनात्मकस्त्वम् । आ मर्त्येषु मनुष्यपर्यन्तेषु सर्वत्र

प्राणिव्रतस्य कर्मणः पालको भवसि । तथा त्वमासमन्ताद्यज्ञेष्वीड्यः स्तुत्योऽसि । अत्र स्वापस्य व्रतविरोधित्वात् तत्परिहारोऽनेन मन्त्रेण सम्पाद्यते । तदेतदाह तित्तिरिः ॥ अव्रत्यमिव वा एष करोति यो दीक्षितः स्वपिति । त्वमग्ने व्रतपा असीत्याहाऽग्निर्वै देवानां व्रतपतिः स एवैनं व्रतमालम्भयतीति ॥ ८॥ कात्यायनः ॥ लब्धमालभ्य वाचयति रास्वेयदिति । क्रती देयद्रव्यं यथान् परिचारकैरानीतं तत्सर्वमुपस्पृश्येमं मन्त्रं पठेत्.॥ पाठस्तु ॥ रास्वेयत्सोमा भूयो भर देवो नः सविता वसोर्दाता वस्वदादिति ॥ हे सोम एतन्नामक देव इयद् रास्व एतावद्धनं देहि, भूयः पुनरपि आभर धनमाहर । वसोर्धनस्य दाता । सविता देवो नोऽस्मभ्यं वस्वदात् । पूर्वमपि धनं दत्तवान् भूय इत्यस्य पदस्याऽपरिमितपशुरूपधनाहरणे तात्पर्यम् । तदाह तित्तिरिः ॥ सोमा भूयो भरेत्याहापरिमितानेव पशून् अवरुन्ध इति ॥ ९ ॥ इति तुरीयेऽध्याये पञ्चमोऽनुवाकः ॥ ४ ॥ ५ ॥

पञ्चमे व्रतवरणादिमन्त्रा उक्ताः ॥ षष्ठे सोमक्रयण्यानयनमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ ध्रौवं जुह्वां चतुर्गृह्णाति । बर्हिस्तृणेन हिरण्यं बध्वाऽवदधात्येषा त इतीति ॥ ध्रुवायां स्थितमाज्यं जुह्वां गृहीत्वा तस्मिन्नाज्ये तर्दतृणेन बद्धं हिरण्यमवदध्यात् ॥ पाठस्तु ॥ एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजं गच्छेति ॥ शुक्र दीप्यमानाऽग्ने तव एषा तनूर्दृश्यमानमाज्यरूपं शरीरम् । एतदाज्ये प्रक्षिप्यमाणं हिरण्यं वर्चस्त्वदीयं तेजस्तया सम्भव आज्यरूपया तन्वा एकीभव । ततो भ्राजं गच्छ हिरण्यगतां दीप्तिं माप्नुहि । एतन्मन्त्रपाठेनाऽग्नेः सतेजस्त्वं सतनुत्वं संपद्यते ॥ सतेजसमेवैनं सतनु करोतीति ॥ कात्यायनः ॥ जूरसीति जुहोति ॥ पाठस्तु ॥ जूरसि धृता मनसा जुष्टा विष्णवे । तस्यास्ते सत्यसवसः प्रसवे तनु यन्त्रमशीय स्वाहेति ॥ हे सोमक्रयणि, वाग्रूपा त्वं जूरसि वेगयुक्तासि । तथा मनसा धृता नियमितासि विष्णवे जुष्टा यज्ञार्थंप्रीतियुक्तासि । सत्यसवसः अवितथाभ्यनुज्ञायास्तस्यास्ते तथाविधायास्तव सोमक्रयण्याः प्रसवे अनुज्ञायां सत्यां तनु स्वल्पं यन्त्रं नियमनम् अशीय प्राप्नुयाम् । विनयोचिता नियमस्य स्वल्पत्वमुच्यते ॥ परमार्थतस्तु नियमस्य यज्ञसमाप्तिपर्यन्तत्वान्महत्त्वम् । स्वाहा इदमाज्यं सुहुतमस्तु । तमेतं मन्त्रं तित्तिरिर्विभज्य व्याचष्टे । वाग्वा एषा यत् सोमक्रयणी । जूरसीत्याहं मनसा ध्यायते तद्वाचा वदति धृता मनसेत्याह । मनसा हि वाग्धृता जुष्टा

विष्णवे इत्याह यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति । तस्यास्ते सत्यसवसः प्रसव इत्याह सवितृप्रसवमेव वाचमवरुन्ध इति ॥ जवते शीघ्रकर्तव्यतामवगच्छतीत्यर्थः ॥ कात्यायनः ॥ चन्द्रमसीति हिरण्यमुद्धृत्येति ॥ पुरा जुहा बद्ध्वा स्थापितं हिरण्यमुद्धरेत् ॥ पाठस्तु ॥ चन्द्रमसि शुक्रमस्यऽमृतमसि वैश्वदेवमसीति । हे हिरण्य, त्वं चन्द्रमसि । आह्लादहेतुर्भवसि । चदि आह्लाद इति धातुः । शुक्रमसि दीप्यमानमसि । अमृतमसि विनाशरहितमसि । अग्निसंयोगेऽपि हिरण्यस्य विनाशाभावः प्रसिद्धः । वैश्वदेवमसि सर्वदेवसंबन्ध्यसि सर्वोऽपि देवो हिरण्यदानादिना तुष्यत्येव ॥ १ ॥ २ ॥ कात्यायनः ॥ चिद्सीत्येनामभिमन्त्रयत इति ॥ एनां सोमक्रयणीमित्यर्थः ॥ पाठस्तु ॥ चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी सा नः सुप्राची सुप्रतीची भव मित्रस्त्वा पदि बध्नीतां पूषाध्वनस्पात्विन्द्रायाध्यक्षाय । अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । सा देवि देवमच्छेहीन्द्राय सोमम् । रुद्रस्त्वा वर्तयतु स्वस्ति सोमसखा पुनरेहीति ॥ हे वाग्देवतारूपे सोमक्रयणि, त्वं चिदादिशब्दप्रतिपाद्यासि । अन्तःकरणस्य चित्तं मनो बुद्धय इति वृत्तयः । देहादिसंघातस्याऽचेतनत्वं व्यावर्त्य चेतनत्वं सम्पादयता बाह्यवस्तुषु वा निर्विकल्पं रूपं सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तम् । तदेवात्र चिदित्युच्यते । लोके यः कश्चित् पदार्थः एवं भवति वा न वेति संकल्पविकल्पौ कुर्वाणा वृत्तिर्मनः । तदेवात्र मन इत्युच्यते । भवत्येवेति निश्चयरूपा वृत्तिर्बुद्धिः । सैवात्र धीशब्देनोच्यते । सोमक्रयण्याश्चिन्मनोधीरूपत्वेन प्रशंसा क्रियते । तत्र तित्तिरिर्दर्शयति । वाग्वा एषा यत्सोमक्रयणी । चिदसि मनासीत्याह शास्त्येवैनामेतदिति ॥ वागात्मिकां सोमक्रयणीं चिदादिशब्दवाच्या त्वमित्येवं प्रशंसतीत्यर्थः । चिदादिरूपत्वमुपचारेण सम्पाद्य प्रशंसा कृता । दक्षिणादिरूपत्वेन तु विद्यमानैव प्रशंसा क्रियते । यान्येतानि देवत्रा क्षत्त्राणीन्द्रो वरुणः सोमो रुद्र इति तेन सोमेन क्षत्त्रेणाभिमन्तव्यस्य सोमपालत्वं द्रव्यस्य क्रयहेतुत्वेन क्षत्त्रिया त्वम् । ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदनीययोः अदितिदेवताकत्वात् सेयमदितिरुभयतःशीर्ष्णी तद्रूपत्वं चास्याः क्रयद्वारा तत्संबन्धित्वादुपचर्यते । यथोक्तमर्थं सर्वं तित्तिरिर्दर्शयति ॥ दक्षिणासीत्याह दक्षिणा ह्येषा यज्ञियासीत्याह यज्ञियामेवैनां करोति । क्षत्त्रियासीत्याह क्षत्त्रिया ह्येषाऽदितिरस्युभयतः

शीर्ष्णीत्याह । देवदेवादित्यः प्रायणीयो यज्ञनामादित्य उदयनीयस्तस्मा- देवमाहेति ॥ सा पूर्वोक्ताचिदादिरूपा त्वं नोऽस्मदर्थं सुप्राची सुप्रतीची भव प्रथममेोमस्य क्रेतारं प्रति सुष्ठु प्राङ्मुखी गत्वा पश्चादस्मान् प्रति समाग- ते सुष्ठु प्रत्यङ्मुखी भव ॥ ३ ॥ मित्रो हितकारी देवस्त्वां पदि बध्नीता- म् । दक्षिणपादे बन्धनं करोतु । तथा पूषा पोषको देवः अध्वनस्पातु भयोपे- तान्मार्गात् त्वां पालयतु । सोमयागस्याध्यक्षायेन्द्राय स्वामिने देवाय तत्प्री- त्यर्थं सोमक्रयसाधनत्वेन माता त्वाऽनुमन्यतां त्वदीयमाता त्वामङ्गीकरोति । एवं पित्रादयोऽप्यनुमन्यन्ताम् । सगर्भस्त्वया सहैकस्मिन् वा गर्भेऽवस्थितो वत्सो भ्राताऽनु त्वत्तः पूर्वं पश्चाद्वोत्पन्नः, सखा सहसञ्चारी वत्सः स एव सयूथ्यः एक- स्मिन् गोसमूहे वर्तमानत्वात् ॥४॥ हे देवि सोमक्रयणि, सा त्वम् इन्द्राय सोम- मच्छेहि इन्द्रार्थं सोमद्रव्यं प्राप्तुं गच्छ । रुद्रस्त्वा वर्तयतु । सोमं गृहीत्वा स्थि- ता त्वा रुद्रो देवोऽस्मान् प्रति निवर्तयतु । सोमो देवः सखा यस्यास्तव सा त्वं सोमसखाऽसि । क्षेमेण पुनरेहि भूयोऽप्यागच्छ । मित्रस्त्वा पदि बध्नीता- मित्यादि मन्त्रव्याख्यातमर्थं तित्तिरिर्यद्वहास्यादित्यादिना विस्पष्टं प्रपञ्च- यामास ॥ ५ ॥ इति तुरीयेऽध्याये षष्ठोऽनुवाकः ॥ ४ ॥ ६ ॥

षष्ठे सोमक्रयण्या मन्त्रा उक्ताः ॥ सप्तमे सोमक्रयण्यनुगमनादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ उदीचीं नियमानामनुगच्छतो वस्व्यसीति ॥ अनु- गच्छतोऽध्वर्युयजमानावित्यर्थः ॥ पाठस्तु ॥ वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि । बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिराचक इति ॥ सोमक्रयणी गौर्वसुरूपेणादित्यरूपेण रुद्ररूपेण च स्तूयते, वस्वादिभिः पञ्चभिर्वाक्यैः । किञ्च बृहस्पतिर्देवः त्वा सुम्ने रम्णातु त्वां सुखं रमयतु । आचक इति कामक- र्मसु पठितम् । रुद्रो देवो वसुभिरष्टभिर्देवैः सह त्वा रक्षितुं कामयतित्यर्थः ॥ १ ॥ कात्यायनः ॥ पट्पदान्यतीत्य सप्तमं पर्युपविशति हिरण्यमस्मिन्नि- धायाभिजुहोत्यदित्यास्त्वेतीति ॥ पाठस्तु ॥ अदित्यास्त्वा मूर्द्धन्नाजिघर्मि देव- यजने पृथिव्या । इळायास्पदमसि घृतवत्स्वाहेति ॥ अदित्याः अखण्डि- तायाः पृथिव्या भुवः मूर्द्धन् मूर्द्धनि शिरोरूपे देवयजने देवानां यागयोग्य- स्थाने वा आजिघर्मि । हे सोमक्रयणीपद त्वामाक्षारयामि । घृ क्षरणदीप्त्यो- रिति धातुः । देवयजनस्य पृथिवीमूर्द्धत्वमसिद्धिं तित्तिरिर्दर्शयति ॥ पृथि- व्या एष मूर्धा यद्देवयजनमिति ॥ किञ्च, इळायास्पदमसि, हे स्थानविशेष

गोः पादोऽसि तेन पादेनाङ्कितत्वात् । तच्च तित्तिरिर्दर्शयति ॥ यदेवास्य पदाद् घृतमपीड्यत तस्मादेवमाहेति ॥ सा यत्र यत्र न्यक्रामत् । ततोद्घृतमपीड्यतेति च ॥२॥ कात्यायनः ॥ स्फयेन पदं त्रिः परिलिखत्यस्मे रमस्वेतीति ॥ हे गोः पद त्वम् अस्मासु रमस्व क्रीडां कुरु ॥कात्यायनः॥ समुद्धृत्य पदं स्थाल्यामावपत्यस्मे ते बन्धुरिति ॥ पाठस्तु ॥ अस्मे ते बन्धुरिति ॥ हे सोमक्रयणीपद ते तव अस्मे बन्धुः वय बन्धुभूताः स्म ॥ कात्यायनः ॥ यजमानाय पदं प्रयच्छति त्वे राय इतीति ॥ हे यजमान ते त्वयि रायो धनान्येतत्पदरूपेण तिष्ठन्त्विति शेषः ॥ अनेन पदे धनसम्पत्तिं त्तिरिर्दर्शयति ॥त्वे राय इति यजमानाय प्रयच्छति यजमान एव रयिं दधातीति ॥ कात्यायनः ॥ अस्मे राय इति यजमानः प्रतिगृह्णातीति ॥ अस्मे अस्मासु यजमानेषु रायो धनानि पदरूपेण तिष्ठन्तु ॥३॥ कात्यायनः ॥ मा वयमित्यध्वर्युरात्मानं स्पृशतीति ॥ पाठस्तु ॥ मा वयꣳ रायस्पोषेण वियौष्मेति ॥ वयमध्वर्युप्रभृतयो रायस्पोषेण धनस्य पुष्ट्या मा वियौष्म वियुक्ता मा भवाम ॥

कात्यायनः ॥ हृत्वा पत्न्यै पदं प्रयच्छति नेष्टा तोत इत्येनां वाचयतीति ॥ तोतशब्दः कलत्रवाची । तस्मिन् कलत्रे रायः पदरूपाणि धनानि तिष्ठन्तु । पत्न्यै पदप्रदानं तित्तिरिरुपपादयति ॥ ततो राय इति पत्न्या अर्द्धो वा एप आत्मनो यत्र पत्नी यथा गृहेषु निधत्ते तादृगेव तदिति ॥ कात्यायनः ॥ सोमक्रयणीञ्च समीक्षमाणां समख्य इतीति ॥ एनां वाचयतीत्यनुवर्तते ॥ पाठस्तु ॥ समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा । मा म आयुः प्रमोषीर्मो अहं तव वीरान् विदेय तव देवि संदृशीति ॥ देव्या द्योतमानया धिया बुद्ध्या समख्ये अहं पत्नी सोमक्रयणी सम्यग्यथा भवति तथा विस्तीर्णदर्शनया दक्षिणत्वयोग्यया गवा सोमक्रयण्या । समित्यनेन उपसर्गेण संयुज्य स्थितास्मीत्ययमर्थ उपलक्ष्यते । एवंविधे सोमक्रयणि, त्वं मे पत्न्या आयुर्मा प्रमोषीः । प्रमुषितं विनष्टं मा कार्षीः । मो अहं तव सोमक्रयण्यास्तव आयुरहं पत्नी मो प्रमोषिषमित्यध्याहारः । प्रमुषितं मा कार्षम् । किञ्च तव सोमक्रयण्याः संदृशि सन्दर्शने सति वीरान् पुत्रान् विदेय लभेय ॥ ४ ॥ इति तुरीयेऽध्याये सप्तमोऽनुवाकः ॥ ४ ॥ ७ ॥

सप्तमे सोमक्रयण्यनुगमनादिमन्त्रा उक्ताः ॥ अष्टमे यजमानवाचनादिमन्त्रा उच्यते ॥कात्यायनः ॥एष ते इति वाचयतीति ॥ आपस्तम्बोऽप्याह ॥

एष ते गायत्रो भाग इत्येतैर्यजमानो भागरूपं राजानमुपतिष्ठत इति ॥ मन्त्रचतुष्टयस्य प्रतीकमिदम् ॥ प्रथममन्त्रपाठस्तु ॥ एष ते गायत्रो भाग इति मे सोमाय ब्रूतादिति ॥ हे सोम, ते तव एष पुरोदृश्यमानो भागो गायत्रः गायत्रीसम्बन्ध इति मे एवम्प्रकारं मम यजमानस्य वचनं सोमाय ब्रूतात् । हे अध्वर्यो सोमाभिमानिदेवाय ब्रूहि । गायत्रीछन्दोऽयं सोमस्य तव क्रयो, न तु यथार्थमित्येव यजमानोक्तेरभिप्रायः । तमेतमभिप्रायम्, अध्वर्यो सोमाय कथयेत्यर्थः ॥ द्वितीयतृतीयमन्त्रयोः पाठस्तु ॥ एष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतात् । एष ते जागतो भाग इति मे सोमाय ब्रूतादिति ॥ त्रैष्टुभः त्रिष्टुप्छन्दसः सम्बन्धी जागतो जगतीछन्दसः सम्बन्धी । अन्यत् पूर्ववद् व्याख्येयम् ॥ तुरीयमन्त्रपाठस्तु ॥ छन्दोमानानाᳬ साम्राज्यं गच्छतादिति मे सोमाय ब्रूतादिति ॥ अग्निष्टुन्दस्येतावन्त्यक्षराणीति परिमाणं येर्दबैर्ज्ञायते ते छन्दोमानास्तेषां छन्दोमानानां सम्बन्धी लोकः साम्राज्यः समीचीनराज्योपेतः । तल्लोकं हे सोम गच्छतात् त्वं प्राप्नुहि । इति मे मम यजमानस्यैतद्वचनं सोमाय ब्रूतात् । हे अध्वर्यो सोमदेवाय कथय एतेषां मन्त्राणां तात्पर्यं तित्तिरिर्दर्शयति ॥ यो वै सोमᳬ राजानᳬ साम्राज्यं लोकं गमयित्वा क्रीणाति । गच्छति स्वानाᳬ साम्राज्यं छन्दाᳬसि खलु वै सोमस्य क्रयो देवमभिमन्त्रयते । साम्राज्यमेवैनं लोकं गमयित्वा क्रीणाति गच्छति स्वानाᳬ साम्राज्यमिति ॥ अस्यायमर्थः ॥ योऽयं यजमानः सोमाभिमतं राजानं समीचीनराजं हि लोकं प्रथमतो वाचा प्राप्य सन्तोषं जनयित्वा पश्चात् क्रीणाति स यजमानो ज्ञातीनां मध्ये साम्राज्यं प्राप्नोति । सोमस्य तथाविधो लोकः क इति चेद्, गायत्र्यादिच्छन्दोदेवता यत्र तिष्ठन्ति स एव तथाविधो लोकः । तस्मात् कारणात् सोमक्रयात् पूर्वमेतैर्मन्त्रैर्मन्त्रयित्वा क्रयं कुर्वाणः साम्राज्यं प्राप्य क्रीतवान् भवति, तेन स्वयमपि ज्ञातीनां मध्ये साम्राज्यं प्राप्नोति ॥१॥ कात्यायनः ॥ प्राहुपविष्टस्याऽस्माकोऽसीति सोममालभत इति ॥ पाठस्तु ॥ आस्माकोऽसि शुक्रस्ते ग्रहः । विचितस्त्वा विचिन्वन्त्विति ॥ हे सोम त्वं क्रयपर्यागतः सन् अस्मदीयोऽसि ते तव सम्बन्धी शुक्रः एतन्नामको यो ग्रहोऽस्ति सोऽयं ग्रहः । ग्रहेषु साधुः । एतदुपलक्षणमैन्द्रवायवादिग्रहाणामपि । ते सर्वे ग्रहाः साधव इत्यर्थः ॥ विचितो विवेकेन चयनस्य कर्तारः, त्वां विचिन्वन्तु सोमरूपं त्वां विविच्य सारासारविवेकं कृत्वा

सारभूतमेकत्र समुद्दयन्तु ॥ २ ॥ कात्यायनः ॥ सोमं मिमीते दशकृत्वोऽभि-
त्यमितीति ॥ पाठस्तु ॥ अभि त्य देवꣳ सवितारमोण्योः कविक्रतुमर्चामि स-
त्यसवꣳरत्नधामभिप्रियं मतिं कविम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवी-
मनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वरिति ॥ त्यं देव यः क्रतः सोमाख्यो
देवस्तमभ्यर्चामि सर्वतः पूजयामि । कथम्भूत देवं, द्यावापृथिव्योः सवितारं
सोमयागानाम्। ओण्योरिति द्यावापृथिवीनामसु पठितम्। कविक्रतु मेधाविकर्मा-
णम्। सत्यसवम् अवितथप्रेरणम् । रत्नधां मम रत्नानां धारकं पोषकं वा । अभि
सर्वतः प्रियं देवानां प्रीतिविषयं मतिं मननयोग्यं कविं क्रान्तदर्शिनम् ।
किञ्च, यस्यादित्यस्य दीप्तिः अमतिः केनापि मन्तुमशक्या सती ऊर्ध्वगमना-
ऽभिमुखी, सवीमनि प्रसवविशायवती देशे यत्र नक्षत्रादीनां प्रसवः प्रवृत्तिस्त-
त्रेत्यर्थः। अदिद्युतत् सर्वाणि वस्तूनि द्योतितवती । हिरण्यपाणिः पाणिःसुवर्णा-
भरणयुक्तः तद्युक्तः स्वरादित्यः सुक्रतुः साधुसङ्कल्पः, कृपा अत्यन्तकृपालुः,
अमिमीत पूर्वोक्तप्रभावयुक्तः स देवः सायं मिमीतवान् । एतावान् सोम इति तदीयं
परिमाणं निश्चितवान् ॥ ३ ॥ कात्यायनः ॥ उष्णीषेण बध्नाति प्रजाभ्य-
स्त्वेतीति ॥ सोम प्रजाभ्यः प्रजानामुपकाराय त्वा सोमरूपं त्वां बध्नामीति
शेषः ॥ कात्यायनः ॥ अङ्गुल्या मध्ये विवृणोति प्रजास्त्वानुप्राणन्त्विति ॥
उष्णीषेण बद्धस्य सोमदेवस्याश्वासनिरोधो मा भूदिति विवरं कुर्यात् । प्रजा-
स्त्वामनुप्राणिहीति मन्त्रशेषः । हे सोम त्वानु प्रथमतः श्वासं कुर्वन्तं त्वाम
अनुसृत्य प्रजाः सर्वाः प्राणन्तु श्वासं कुर्वन्तु । तथा हे सोम त्वमपि प्रजा
अनु प्रथमतः श्वासं कुर्वतीः प्रजा अनुसृत्य प्राणिहि श्वासं कुरु । प्रजानां
तव च कदाचिदपि श्वासनिरोधो मा भूत् । किञ्च परस्परमनुसृत्य श्वासः
प्रवर्ततामित्यनेनाऽभिप्रायेण विवरं करोतीत्यर्थः ॥ ४ ॥ इति तुरीयेऽध्याये-
ऽष्टमोऽनुवाकः ॥ ४ ॥ ८ ॥

अष्टमे यजमानवाचनादिमन्त्रा उक्ताः ॥ नवमे हिरण्यस्पर्शादिमन्त्रा उ-
च्यन्ते ॥ कात्यायनः ॥ चन्द्रं त्वेति हिरण्यमालभ्य वाचयतीति ॥ पाठस्तु ॥
चन्द्रं त्वा चन्द्रेण क्रीणामि शुक्रꣳ शुक्रेणामृतममृतेनेति ॥ हे सोम चन्द्रं त्वा,
चदि आह्लादन इति धातुः । फलहेतुत्वेनाह्लादकरं त्वां चन्द्रेण शुक्रेण दी-
प्यमानेन अमृतेन अग्निसंयोगादिनापि विनाशरहितेन ॥ कात्यायनः ॥ सग्मे त
इति सोमविक्रयणꣳ हिरण्येनाभिकम्पयतीति ॥ यो हिरण्यं गृहीत्वा सोमं वि-

क्रीणाति तमध्वर्युर्हिरण्येनाभिकम्पयेत् । तद्धस्ते हिरण्यं पुनः पुनर्दत्त्वा स्वी-कुर्वन् व्यवहारं कुर्यादित्यर्थः । गोरिति मन्त्रशेषः । औकारस्य स्थाने ओकारश्छान्दसः । हे सोमक्रयिन् ते गौः गमे तिष्ठत्विति शेषः । या गौः सोमस्य मूल्यत्वेन तुभ्यं दत्ता सा त्वदीया गौः पुनः मत्याहृत्य मगेव मदीयमंगवति यजमाने तिष्ठतु । हिरण्यमेव तवास्तु गौर्मा भूदित्यर्थः ॥ कात्यायनः ॥ अस्मे त इति यजमानसहितं निदधातीति ॥ यजमानेन मत्यर्पितं यद्धोद्रव्यं तत्पुनर्यजमानसहितं सोमविक्रयिणः पुरतो निदधातीत्यर्थः । चन्द्राणीति मन्त्रशेषः । हे सोमविक्रयिन्, ते चन्द्राणि तुभ्यं दत्तानि यानि हिरण्यानि तान्यस्मे अस्मासु मत्याहृत्य तिष्ठन्तु । तव गारेव सोमंमूल्यमस्तु हिरण्यानि मा भूवन्नित्यर्थः ॥ १ ॥ कात्यायनः ॥ अजां मत्यङ्मुखीमालभ्य वाचयति तपसस्तनूरितीति ॥ पाठस्तु ॥ तपसस्तनूरसि प्रजापतेर्वर्णः । परमेण पशुना क्रीयसे सहस्रपोषं पुषेयमिति ॥ हे अजे त्वं तपसः पुण्यस्य तनूरसि देहो भवसि यज्ञनिष्पादकस्य सोमस्य द्युलोकेऽवस्थितस्यानयनार्थम् अजां गृहीत्वा गायत्रीदेवता जगामेति सोमाहरणोपाख्याने तित्तिरिणा समाम्नातम् । तस्मादजायाः पुण्यशरीरत्वम् । किञ्च, वर्णेत इति वर्णो देहः । हे अजे त्वं प्रजापतेर्वर्णोऽसि । यथा प्रजापतिः सर्वदेवतामिय एवमजापि सर्वदेवतामिया । तदपि तित्तिरिणा समाम्नातम् ॥ सा वा एषा सर्वदेवत्या यदजेति ॥ हे सोम, त्वं परमेण पशुना उत्तमेनाजादिरूपेणानेन पशुनेदानीं क्रीयसे । पशोरुत्तमत्वं च तपसस्तनूरित्यादिना पूर्वमेवोक्तम् । अतोऽस्य प्रसादात् सहस्रपोषं पुत्रपश्वादिसहस्राणां यथा भवति तथा पुषेयं पुष्टो भूयासम् ॥ २ ॥ कात्यायनः ॥ सव्येनाजां प्रयच्छन्, मित्रो न इति दक्षिणन सोमम‍ादायेति ॥ पाठस्तु ॥ मित्रो न एहि सुमित्रध इतीति ॥ हे सोम त्वं नोऽस्माकं मित्रः प्रीतियुक्तो भूत्वा सुमित्रधाः शोभनानां मित्राणां धारकः सन् एहि आगच्छ । वस्त्रेण बद्धस्य सोमस्य वरुणदेवताकत्वेन क्रूरत्वात् तच्छान्त्यर्थं मित्रत्वेन प्रार्थनम् । तदाह तित्तिरिः ॥ वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रध इत्याह शान्त्या इति ॥ कात्यायनः ॥ दक्षिणोरुं प्रत्यूह्य वासः सोमं निदधातीन्द्रस्योरुमितीति ॥ वासः प्रत्यूह्य उपवस्त्रमुपरि स्थाप्येत्यर्थः ॥ पाठस्तु ॥ इन्द्रस्योरुमाविश दक्षिणम् । उशन्नुशन्तꣳ स्योनः स्योनमिति ॥ यजनरूपेण परमैश्वर्येणोपेतत्वादैन्द्रशब्देन यजमानो विवक्षितः । हे सोम, त्वमिन्द्र-

स्य यजमानस्य दक्षिणमूरुं विश दक्षिणेऽस्मिन्नुगत्युपविशेत्यर्थः ॥ कथम्भूतस्त्वम् । उशन् दक्षिणमूरुं कामयमानः स्योनः सुखरूपः । कथम्भूतमूरुम् । उशन्तं त्वद्विषयकामेनोपेतं, स्योनम् उपवेष्टुं सुखकरम् । पुरो देवाः क्रीत सोमम् इन्द्रस्योरावुपावेशयन् । तस्मादत्र यजमानस्येन्द्रशब्देन व्यवहार इति । तदाह तित्तिरिः ॥ देवा वै सोममक्रीणन् तमिन्द्रस्योरौ दक्षिण आसादयन् । एष खलु वा एतर्हीन्द्रो यो यजते तस्मादेवमाहेति ॥ ३ ॥ कात्यायनः ॥ स्वानभ्राजेति जपति सोमक्रयिणमीक्षमाणमिति ॥ पाठस्तु ॥ स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानो । एते वः सोमक्रयणास्तान् रक्षध्वं मा वो दभन्निति ॥ स्वानादिभिः सप्तभिः शब्दैर्द्युलोके सोमस्य रक्षकाः सप्तदेवाः संबध्यन्ते । हे स्वानादयः सप्तदेवा वो युष्माकं सोमक्रयणाः सोमं क्रेतुमानीता ये हिरण्यादिपदार्था एते पुरतः स्थापितास्तान् पदार्थान् यूय रक्षध्वम् । वो युष्मान् मा दभन् । तेऽपि वैरिणो मा हिंसिषत । स्वानादीना द्युलोके सोमरक्षकत्वं तित्तिरिर्दर्शयति ॥ स्वान भ्राजेत्याहैते वामुष्मिँल्लोके सोममरक्षन्निति ॥ ४ ॥ कात्यायनः ॥ गृहीतसोमं परिमाग्न इति वाचयतीति ॥ पाठस्तु ॥ परिमाग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजेति ॥ हे अग्ने, दुश्चरिताद् मा बाधस्व मा परितो निवारय । सुचरिते सदाचाररूपे पुण्ये मा मा यजमानम् । आभज सर्वतो भज स्थापयेत्यर्थः ॥ कात्यायनः ॥ उदायुषेत्युत्थानमिति ॥ पाठस्तु ॥ उदायुषा स्वायुषोदस्थाममृताँ अन्विति ॥ उदायुषा उत्कृष्टेन चिरजीवलक्षणेन आयुषा निमित्तभूतेन, तथा स्वायुषा यागदानादिना शोभनेनायुषा निमित्तभूतेन अमृताननु सोपाधिदेवाननुसृत्य उदस्थाम् अहमुत्थितवानस्मि । देवाननुसृत्योत्थानं तित्तिरिर्दर्शयति ॥ उदायुषा स्वायुषेत्याह देवता एतान् वाऽऽरभ्योत्तिष्ठतीति ॥ ५ ॥ कात्यायनः ॥ श्रीर्ण्णी सोमं कृत्वा पाणिमन्तर्द्धाय प्रतिपन्थामित्यतोऽभ्येतीति ॥ शकटमभिलक्ष्य गच्छेदित्यर्थः ॥ पाठस्तु ॥ प्रतिपन्थामपद्महि स्वस्ति गामनेहसम् । येन विश्वाः परिद्विषो वृणक्ति विन्दते वस्विति ॥ पन्थानं मार्गं प्रत्यपद्महि वयं प्रत्यापद्यामहि । प्रतिपन्नाः प्राप्ता अभूमेत्यर्थः । येन यथा । कथम्भूतं पन्थानं स्वस्तिगं क्षेमेण गन्तुं योग्यम् । अनेहसम्, एहः पापरूपश्चोरादिबाधा, तद्रहितम् । येन पथा गच्छन् पुरुषो विश्वाः विश्वान् द्विषो द्वेषिणश्चोरादीन् परिवृणक्ति परितो वर्जयति । वसु विन्दते धनं लभते । तं पन्थान-

मिति पूर्वत्राऽन्वयः॥ ८॥ इति चतुर्थाध्याये नवमोऽनुवाकः॥ ४॥ ९॥

नवमे हिरण्यस्पर्शादिमन्त्रा उक्ताः॥ दशमे कृष्णाजिनास्तरणादिमन्त्रा उच्यन्ते॥ कात्यायनः॥ कृष्णाजिनमास्तृणात्यदित्यास्त्वगिति। अस्मिञ्छकटे इत्यर्थः। असीति मन्त्रशेषः। हे कृष्णाजिन त्वम्। अदित्यास्त्वगसि अखण्डितायाः पृथिव्यास्त्वग्रूपासि॥ कात्यायनः॥ तस्मिन् सोमं निदधात्यदित्यै सद इतीति मन्त्रशेषः। हे सोम त्वम् अदित्यै सदः अदितेर्भूमेः संबन्धि स्थानम् आसीद सर्वतः प्राप्नुहि। तत्रोपविशेत्यर्थः॥ कात्यायनः॥ अस्तभ्नाद् द्यामिति सोममालभ्य वाचयतीति॥पाठस्तु॥ अस्तभ्नाद् द्यामृषभोऽअन्तरिक्षममिमीत वरिमाणं पृथिव्याः आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानीति॥ ऋषभः श्रेष्ठः सोमः द्यामस्तभ्नात। द्युलोको यथा न पतेत्‌ तथा स्वकीययाज्ञया स्तम्भनं चकार। तथान्तरिक्षमप्यस्तभ्नात्। तथा पृथिव्या वरिमाणं भूमेर्वरिष्ठत्वं सर्वेभ्यो भूतेभ्योऽधिकश्रेष्ठत्वम् अमिमीत निर्मितवान्। तथा सम्राट् सम्यग् राजमानो विश्वा विश्वानि सर्वाणि भुवनान्यासीदत्। लोकान् व्याप्तवान्। इत इत्थमुक्तेन प्रकारेण तानि द्युलोकस्तम्भनादीनि विश्वानि सर्वाणि वरुणस्य सर्वावरणसामर्थ्ययुक्तस्य सोमस्य व्रतानि व्रतवन्नियतानि कर्माणि सर्वदा तानि करोतीत्यर्थः॥ १॥ कात्यायनः॥ वनेषु व्यन्तरिक्षमिति॥ सोमं पर्याणहनेन परि तत्प्रतिबन्धनहेतुना वस्त्रेण परितो वेष्टयेदित्यर्थः। बौधायनोऽप्याह॥ अथैनं वाससा परितनोति वनेष्विति॥ पाठस्तु॥ वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु। हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्राविति॥ वरुणः सर्वावरणसमर्थः। सोऽग्रे वनेषु वनगतवृक्षाग्रेषु अन्तरिक्षमाकाशं विततान। तत्रावरणद्रव्याभावादत्यन्तं विस्तारितवान्। तथा अर्वत्सु मत्तेषु वाजं बलं विततानेत्यनुवर्तते। उस्रियासु गोषु। उस्रियाशब्दो गोनामसु पठितः। पयः क्षीरं विततान। हृत्सु हृदयेषु क्रतुं सङ्कल्पं तच्छक्त्युपेतं मनो विततान। विक्षु प्रजासु अग्निं जाठराग्निं विततान। दिवि द्युलोके सूर्यं विततान। अद्रौ पर्वते सोमं वल्लीरूपम्। अदधात् स्थापितवान्। परमेश्वरस्यैव सोमदेवतारूपेणावतीर्णत्वान्मन्त्रद्वयोक्तं द्युलोकस्तम्भनादिसामर्थ्यं द्रष्टव्यम्। पर्वतगतानां पाषाणानां सन्धिषु सोमवल्ल्या उत्पद्यमानत्वादद्रौ सोमस्थापनं द्रष्टव्यम्। तदाह तित्तिरिः॥ सोममद्राविस्याह। ग्रावाणो

अद्रयस्तेषु वा एष सोमं दधातीति ॥ २ ॥ कात्यायनः ॥ कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरितीति ॥ पाठस्तु ॥ सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकाम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चितेति ॥ हे सोम त्वं सूर्यस्य सम्बन्धि यच्चक्षुरस्ति तत्समानचक्षुर्युक्तो भव । तथाग्नेरक्ष्णः कनीनकाम् अग्नेः सबन्धि यदक्षि विद्यते तस्याक्ष्णः सबन्धिनी या कनीनका तारका ताम् अतरः । हे इत्यनुवर्तते । तत्समानदृष्टिपाटवयुक्तो भवेत्यर्थः । यत्र यस्मिन् देवयजने, एतशेभिरीयमे अश्वैर्गच्छसि । एतश इत्यश्वनामसु पठितः । तत्रेत्यध्याहारः । तस्मिन् देवयजने विपश्चिता विदुषा सर्वज्ञेनाग्निना सह भ्राजमानो दीप्यमानस्तिष्ठेति शेषः । सूर्याग्निदृष्टिविषये सति मार्गो रक्षोबाधरहितो भवति । तदाह तित्तिरिः । एष वा खलु चा अरक्षोहनः पन्था योऽग्नेश्च सूर्यस्य चेति ॥ ३ ॥ कात्यायनः ॥ अनड्वाहौ युनक्त्युस्रा एतमितीति ॥ पाठस्तु ॥ उस्रा एतं धूर्षाहौ युज्येथामनश्रू ऽअवीरहणौ ब्रह्मचोदनौ । स्वस्ति यजमानस्य गृहान् गच्छतमिति ॥ हे उस्रावनड्वाहौ एतं गच्छतम् । कथम्भूतौ उस्रौ धूर्षाहौ शकटस्य धुरं वोढुं समर्थौ । अनश्रू नेत्रयोरश्रुरहितौ, सोत्साहावित्यर्थः । अवीरहणौ शृङ्गादिभिर्वीराणां पुत्राणां शिशूनां हननमकुर्वाणौ । ब्रह्मचोदनौ ब्राह्मणानां यज्ञं प्रति प्रेरकौ। तथाविधौ युवां क्षेमेण यजमानस्य गृहान् प्रति गच्छतम् ॥ ४ ॥ कात्यायनः ॥ भद्रो म इति वाचयतीति ॥ पाठस्तु ॥ भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभिधामानि । मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृकाऽअघायवो विदन् । श्येनो भूत्वा परापत यजमानस्य गृहान् गच्छतन्नौ संस्कृतमिति ॥ हे सोम मे मम यजमानायोपकारार्थं भद्रोऽसि कल्याणरूपोऽसि । भदि कल्याण इति धातुः । हे भुवस्पते भुवशब्देनाऽत्र भूमौ स्थितानि भूतानि यजमानाध्वर्युप्रभृतीन्युपलक्ष्यन्ते । तेषां भूतानां च पालकत्वात् पतिः सोमः । एतदेवाभिप्रेत्य तित्तिरिराह ॥ प्रच्यवस्व भुवस्पत इत्याह भूतानाᳬ ह्येष इति ॥ तथाविध हे सोम विश्वानि सर्वाणि धामान्यभिप्राचीनवंशं दाहविधानादिस्थानान्यभिलक्ष्य प्रच्यवस्व प्रकर्षेण गच्छ । परिपरिण इत्यनेन सर्वत्र सञ्चरन्तस्तस्करविशेषा उच्यन्ते । ते त्वा मा विदन् । त्वां सोमं मा जानन्तु । तथा परिपन्थिनः यजमानयागस्य प्रतिषेधका विद्वेषिणः त्वां मा विदन् । अघायवः अघं पापं हिंसारूपम् इच्छन्तो

वृका । अरण्यश्वानास्त्वां मा विदन् ॥ किञ्च श्येनो भूत्वा श्येनपक्षिवच्छीघ्रगामी भूत्वाऽस्मदीयस्य यजमानस्य गृहान् परापत शीघ्रङ्गच्छ । तत्र एहेषु नौ आवयोस्तव च मम च संस्कृतं सर्वोपकरणसंयुक्तं स्थानं विद्यत इति शेषः ॥ ५ ॥ कात्यायनः ॥ शालापूर्वेण प्रतिप्रस्थाताऽग्नीषोमीयपशुमादाय तिष्ठति कृष्णसारङ्ग मेध्यमभावे लोहितसारङ्गं नमो मित्रस्येत्येतेन आलभ्य वाचयतीति ॥ पाठस्तु ॥ नमो मित्रस्य वरुणस्य चक्षसे महोदेवाय तदृतꣳसपर्यत । दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसतेति ॥ अस्मिन् मन्त्रे सूर्यरूपेण सोमः स्तूयते । मित्रस्य वरुणस्येति चतुर्थ्यर्थे षष्ठ्यौ । मित्राय सूर्याय नमोऽस्तु । कथम्भूताय मित्राय वरुणाय स्वरश्मिभिर्जगदावृण्वते चक्षसे चक्षुष्मते द्रष्ट्रे महो महते देवाय द्योतमानाय । हे ऋत्विजस्तं ज्योतिष्टोमरूपम् ऋतं सत्यम् अवश्यफलप्रदं कर्म अनुष्ठायेति शेषः । सपर्यत तेनानुष्ठानेन सपर्यया परिचर्यां कुरुत । किञ्च दूरेदृशे द्युलोकात्मके दूरे दृशो प्राणिभिर्दृश्यत इति दूरदृक् तस्मै। देवजाताय देवाद् द्योतमानाद् परमात्मन उत्पन्नो देवजातः, तस्मै । केतवे अह्नो लक्षणरूपाय । हे ऋत्विजः दिवस्पुत्राय द्युलोकस्य पुत्रवत् प्रियाय सूर्याय शꣳसत सूर्यप्रीत्यर्थं शंसनं स्तुतिं कुरुत ॥ ६ ॥ कात्यायनः ॥ उत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमिति ॥ असीति मन्त्रशेषः। वरुणस्योत्तम्भनमसि ॥ उत्तभ्यते शकटस्य मुखाग्रमुन्नतत्वेन स्थाप्यते यस्मिन् काष्ठे तत्काष्ठमुत्तम्भनम् । हे काष्ठ त्वं वरुणस्य शकटस्य उत्तम्भनमसि । यथा वरुणो बन्धकारी देवः, एवं शकटेऽपि बद्धस्य सोमस्य स्थापितत्वाद् वरुणशब्देन शकटमुपचर्यते ॥ कात्यायनः ॥ शम्ययोद्र्हति वरुणस्य स्कम्भसर्जनी इति ॥ स्थेति मन्त्रशेषः । वरुणस्य शकटस्य युगे बद्धयोर्बलीवर्दयोर्गलस्य भागे काष्ठनिर्मिते शम्ये स्थाप्येते । ताभ्यां बलीवर्दयोरितस्ततो गमननिवारणं भवति । ते ततस्तम्भशब्देनोच्येते । हे शम्ये युवां स्कम्भनी स्कम्भितुं सृज्यमाने भवथः ॥ कात्यायनः ॥ अभिमृशत्येनां वरुणस्य ऋतसदन्यसीति । एनामित्येतेन आसन्दी परामृश्यते । औदुम्बरीमासन्दीमिति पूर्वत्र प्रकृतत्वात् । वरुणशब्देनाऽत्र बद्धः सोम उपलक्ष्यते । हे आसन्दि त्वं वरुणस्य वस्त्रादिना बद्धस्य सोमस्य संबन्धिनी ऋतसदन्यसि ऋतं यज्ञस्तन्निष्पत्त्यर्थमुपवेशनस्थानभूतासि ॥ कात्यायनः ॥ कृष्णाजिनमस्यामास्तृणाति । वरुणस्य ऋतसदनमसीतीति ॥ हे कृष्णाजिन त्वं वरुण-

स्य बद्धस्य सोमस्य सम्बन्धि ऋतसदनमसि यज्ञार्थमुपवेशनस्थानमासि ॥ कात्यायनः ॥ तस्मिन् सोमं निदधाति वरुणस्य ऋतसदनमासीदेति ॥ हे सोम त्वं वरुणस्य वस्त्रबद्धस्य तव सम्बन्धिनीम् ऋतसदनीं यज्ञार्थमुपवेशनस्थानभूतामासन्दीं प्राप्य आसीद कृष्णाजिने सुखेनोपविश ॥ ७ ॥ कात्यायनः ॥ या त इति वाचयतीति ॥ पाठस्तु ॥ या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यानिति ॥ हे सोम ते तव या धामानि प्रातःसवनादीनि स्थानानि, प्राप्येति शेषः । हविषा यजन्ति ऋत्विजस्तदीयरसरूपेण हविषा यागं कुर्वन्ति। अतो यज्ञमभिलक्ष्येति शेषः । ते तव सम्बन्धीनि तानि स्थानानि सर्वाणि स्थानानि परिभूरस्तु । भवान् परितः प्राप्तवान् भवतु । किञ्च, गयस्फानो गृहाभिवर्द्धकः । प्रतरणः प्रकर्षेण यज्ञपारं प्रसर्पांस्तारयिता सुवीरः शोभनास्त्वत्प्रसादलब्धा वीरा अस्मत्पुत्रपौत्रा यस्य तव स त्वं सुवीरः । अवीरहा यः वीराणां महतां परिपालक इत्यर्थः । हे सोम, यथोक्तगुणयुक्तः सन् दुर्यान् प्रचर गृहान् प्राप्नुहि॥ इति तुरीयाध्याये दशमोऽनुवाकः ॥४॥१०॥

अत्र विनियोगसङ्ग्रहः—

सोमक्रयार्था एतस्मिंश्चतुर्थाध्याय ईरिताः ॥
दशानुवाका एतेषामर्थोऽत्र प्रविविच्यते ॥ १ ॥
वपनश्चाभ्यञ्जनाद्या मन्त्रा उद्धरणाभिधाः ॥
अजिनाद्या व्रतार्थाश्च क्रयण्यानयनाचिताः ॥ २ ॥
सोमक्रयण्यनुगतिर्यजमानस्य वाचनम् ॥
हिरण्यस्पर्शनाद्याः स्युरजिनास्तरणादयः ॥ ३ ॥
यज्ञ शालास्तम्भजप इमा शिरसवन्दनम् ॥
तृणाऽन्तर्धानिमार्पति छेदनं स्वधिमन्त्रनः ॥ ४ ॥
अपः स्मायादुदुत्क्रामेद्दीक्षा वस्तेऽत्र सप्त हि ॥
महीनां नवनीतेनाभ्यञ्ज्यात्त्रेति चक्षुषोः ॥
आज्यां विभिक्षितायोषो छिद्रेणेति भवेत्रिषु ॥ ५ ॥
आवो वाचपते स्वाहा मुष्टिरेकादशेरिताः ॥
आकूत्यै जुहुयाद्व षड्भिः षड्वात्रोपवर्णिताः ॥ ६ ॥
ऋक्सामाजिनसंस्पर्शः शर्मास्यजिनरोहणी ॥

ऊर्ध्वांखलां प्रबध्नाति सोम तस्मीविवन्धनम् ॥ ७ ॥
विष्णोः शिरः प्रोर्णुते च निपाणामिन्द्रमन्त्रतः ॥
कण्डूयनार्थमादद्यात् मुसत्या लेखनं भुवि ॥
उच्छ्रेति दण्डोच्छ्रयणमष्टौ मन्त्रा इहेरताः ॥ ८ ॥
व्रतं त्रिभिर्वाग्विमोको ह्यग्निर्वैद्यासकृद् वदेत् ॥
दैवीं धपः स्पृशेदप्य पिबेत् श्वात्रा इति स्पृशेत् ॥ ९ ॥
नाभि तथेयनेरपि मूत्रार्थं लोष्टमाहरेत् ॥
अपो मुञ्चा मूत्रयेत तत्र लोष्टं क्षिपेत् पृथु ॥ १० ॥
अग्ने त्वप्स्यन्मन्त्रयेत बुद्धं वाचयते पुनः ॥
क्रोधादौ त्वमिति ब्रूयादेयद्रव्यं स्पृशन् वदेत ॥ ११ ॥
शास्त्रे यदनुवाकेऽस्मिन्नुक्ता मन्त्राश्चतुर्दश ॥
घृते स्वर्णं क्षिपेदेषा जूरसीति जुहोति हि ॥
चन्द्रं हिरण्यमुद्धृत्य चित्सोमक्रयणीं जपेत् ॥
षष्ठेऽस्मिन्ननुवाके तु मन्त्राश्चत्वार ईरिताः ॥ १२ ॥
वस्वी क्रयण्यनुगतिरादित्याः सप्तमे पदे ॥
जुहोत्यस्मे परिलिखेत् पदमस्मे क्षिपेद् घटे ॥ १३ ॥
त्वे पदं स्वामिने दद्यादस्मेति स्वीकरोत्यमौ ॥
मा वयं संस्पृशेद्दल्विक् ततो पत्न्यै नयेत् पदम् ॥
समख्ये वाचयेत् पत्नीं नव मन्त्राः प्रकीर्तिताः ॥ १४ ॥
चतुरो वाचयेदेप ह्यस्मा सोमं स्पृशेत्तथा ॥
अभिसोमं मिमीतेऽथ प्रजेत्युष्णीषबन्धनम् ॥
प्रजास्त्वेति विवृणुते मन्त्रा अष्टावुदीरिताः ॥ १५ ॥
स्वर्णं स्पृष्ट्वा जपेच्चन्द्रं सप्ते स्वर्णेन कम्पयेत् ॥
अस्मे स्वर्णं क्षिपेदग्नेऽर्जा स्पृष्ट्वा वाचयेत्तपः ॥ १६ ॥
मित्रो न सोममादत्त इन्द्रोरौ स्थापयेदमुम् ॥
जपेत् स्वानेति परिमा ससोमं वाचयेदथ ॥ १७ ॥
उदोत्थाय ह्यनो गच्छेत् मतिमन्त्रा इहेरिताः ॥
आदिकृष्णाजिनं स्तृत्वा ह्यदिसोमं सादयेत् ॥
अप स्पृष्ट्वा वाचयेत वने वस्त्रेण वेष्टयेत् ॥ १८ ॥

कृष्णाजिनं पुरोदध्यादनड्वाहौ तु योजयेत् ॥
वस्वेति वाचयेद्रुद्रः सारङ्गं वाचयेत्ततः ॥ १९ ॥
षड्ग्राभाणि प्राकृतम् उत्स्नेदो षड् शम्ययोः ॥
षड् स्पृशेदिहासन्दीमजिनास्तरणं षड् ॥
षड् सोमं सादयेत जपेद् या ते चतुर्दश ॥ २० ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ २१ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये तुरीयोऽध्यायः ॥ ४ ॥



देवानां तद्द्वारा तत्तन्मन्त्राभिगायत्र्यादिच्छन्दोदेवतानां च तृप्तिर्भवति । तदतद्भिप्रेत्य लौकिकन्यायवचनम् तित्तिरिर्विस्पष्टमाह ॥ यावाद्वर्वै राजानुचरैरागच्छति सर्वेभ्योऽतिथिभ्यस्तेभ्य आतिथ्यं क्रियते । छन्दाꣳसि खलु वै सोमस्य राज्ञोऽनुचराणीति ॥ १ ॥ अथाग्निमन्थनमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ अग्नेर्जनित्रमिति शकलमादाय वेद्यां करोतीति ॥ असीति मन्त्रशेषः । जायते अस्मिन्निति जनित्रम् । हे शकल त्वमग्नेर्जनित्रमसि । अग्निजननाधारभूतमसि ॥ कात्यायनः ॥ वृषणाविति कुशतरुणेति ॥ आदायेत्यनुवर्तते । स्थ इति मन्त्रशेषः ॥ हे दर्भौ युवां वृषणौ सेक्तारौ भवतः । यथा पुत्रजननाय स्त्रीपुरुषौ वीर्यस्य सेक्तारौ तद्वद्युवामप्यरण्योरग्निजननसामर्थ्यसम्पादकाविरित्यर्थः ॥ कात्यायनः ॥ उर्वश्यसीत्यधरारणिं तयोरिति ॥ शकलेस्थापितयोर्दर्भयोरधरारणिं निदध्यात् ॥ हे अधरारणे त्वम् । उर्वश्यसि । यथोर्वशी पुरुषभोगायार्थमताच्छेते तद्वत् त्वमप्यधोऽवस्थितासीत्यर्थः ॥ कात्यायनः ॥ आयुरसीत्युत्तरमाज्यस्थालीं स्पृशेदिति ॥ येयमुत्तरारणिर्निधास्यते । तयाऽऽज्यस्थालीं स्पृशेत् । हे स्थालीगताज्य त्वम् आयुरसि । त्वयेन जनयिष्यमाणस्याग्नेरायुःप्रदमसि ॥ कात्यायनः ॥ पुरूरवा इत्यभिधानमिति ॥ असीति मन्त्रशेषः । अधरारणेरभिमुखत्वेनोत्तरारणिं निदध्यात् । हे उत्तरारणे त्वं पुरूरवा असि । यथा पुरूरवःशब्दाभिधेयः पुरुष उर्वश्या अभिमुखत्वेनोपरि वर्तते तथा त्वमपीत्यर्थः । उक्तान् विनियोगानापस्तम्बोऽपि दर्शयति ॥ अग्नेर्जनित्रमसीत्यधिमन्थनशकलं निदधाति वृषणौ स्थ इति मात्रौ दर्भावुर्वश्यसीत्यधरारणिमादत्ते पुरूरवा इत्युत्तरारणिमिति ॥ कात्यायनः ॥ मन्थति गायत्रेणेति प्रतिमन्त्रमिति ॥ मन्त्रत्रयेणारण्योर्मन्थनं कुर्यात् । पाठस्तु ॥ गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा छन्दसा मन्थामि जागतेन त्वा छन्दसा मन्थामीति ॥ हे अग्ने त्वां गायत्रीछन्दोऽभिमानिना देवेन सवित्राऽहं मन्थामि । अरण्योर्मन्थनेनोत्पादयामि । द्वितीयतृतीयमन्त्रावप्येवं व्याख्येयौ ॥ २ ॥ कात्यायनः ॥ भवतन्न इति प्रास्यतीति ॥ आपस्तम्बोऽप्याह ॥ भवतन्नः समनसाविति प्रणीतं परिधिमाहवनीये प्रहरतीति ॥ पाठस्तु ॥ भवतन्नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य न इति ॥ योऽयमाहवनीयोऽग्निर्यश्चायं मथितोऽग्निस्तावुभौ हे अग्ने नोऽस्मदर्थं समनसौ मनसा सहितौ सचेतसौ परस्परं

समानचित्तयुक्तौ । अन्यविषयं मनः परित्यज्यास्मदनुग्रहाभिमुखत्वं समनस्त्वं तस्मिन्ननुग्रहे परस्परविप्रतिपत्तिराहित्य सचेतस्त्वम् । अरेपसौ पापरहितौ अस्मद्विषये प्रामादिकेनापराधेनापि कोपाभावः पापराहित्यम् । भवतम् । यथोक्तगुणयुक्तावुभौ तिष्ठतम् । पापराहित्यमेव स्पष्टीक्रियते । यज्ञं मा हिꣳसिष्टम् । अस्मदीयं कर्म मा विनाशयतम् । तथा यज्ञपतिमपि मा विनाशयतम् । हे जातवेदसावुभावग्नी, अस्मिन्ननुष्ठानदिने नोऽस्मदर्थं शिवौ शान्तौ भवतम् ॥ ३ ॥ कात्यायनः ॥ अग्ना अग्निरिति जुहोतीति ॥ पाठस्तु ॥ अग्ना अग्निश्चरति प्रविष्ट ऋषीणां पुत्रोऽअभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहेति ॥ अग्नावाहवनीयाख्ये यः प्रविष्टोऽग्निर्मथ्यमानः सोऽयं चरति हविर्भक्षयति । चर गतिभक्षणयोरिति धातुः । कथम्भूतोऽग्निः । ऋषीणां पुत्रः ऋत्विजो वेदविदश्चात्र ऋषय इत्युच्यन्ते । तैरुत्पादितत्वात् पुत्रवत् पुत्रः । अभिशस्तिपावा अभिशस्तिर्वैकल्यनिमित्तोऽभिशापः । तस्मात् पाति रक्षतीत्यभिशस्तिपावा । हेअग्ने स तथाविधस्त्वं नोऽस्मदर्थं स्योनः सुखरूपो भूत्वा सुयजा शोभनेन संयोगेन इह स्थाने देवेभ्य इन्द्रादिभ्यो हव्यं सोमादिरूपं यज देहि । अस्माभिर्दत्तं हविर्देवान् प्रापयेत्यर्थः । किं कुर्वन् सदं सदा अप्रयुच्छन् अप्रमाद्यन् स्वाहा तुभ्यमिदमाज्यं हुतम् ॥४॥ इति पञ्चमेऽध्याये प्रथमोऽनुवाकः ॥ ५ ॥ १ ॥

प्रथमे आतिथ्यादिमन्त्रा उक्ताः । द्वितीये तानूनप्त्रादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ ध्रौवं स्रुवमादाय पञ्चग्रहानादानेन गृह्णात्यापतय इति ॥ तित्तिरिः ॥ प्राणो वा आपतिः प्राणमेव प्रीणातीति ॥ हे आज्य त्वाम् आपतये प्राणदेवतात्प्रीत्यर्थं गृह्णामि अस्मिन् पात्रे स्वीकरोमि ॥ द्वितीयमन्त्रपाठस्तु ॥ परिपतये त्वा गृह्णामीति ॥ इष्टमाप्त्युपायमनिष्टपरिहारोपायं च चिन्तयित्वा परितः पालयतीति परिपतिर्मनः । तदप्याह तित्तिरिः ॥ मनो वै परिपतिर्मन एव प्रीणातीति ॥ हे आज्य त्वा परिपतये मनोदेवतात्प्रीत्यर्थं गृह्णामि ॥ तृतीयमन्त्रपाठस्तु ॥ तनूनप्त्र इत्यारभ्य त्रिषु मन्त्रेषु त्वा गृह्णामीत्यर्थं मन्त्रशेषोऽनुषज्यते । तनूं शरीरं न पातयति न विनाशयतीति तनूनपात् जाठरोऽग्निः । हे आज्य त्वां तनूनप्त्रे जाठराग्नये तस्मै देवतात्प्रीत्यर्थं गृह्णामि ॥ तुरीयमन्त्रपाठस्तु ॥ शाक्वरायेति ॥ शाक्वनशीलः शाकरः शक्तिमान् पुरुषः । तस्य सम्बन्धि शाक्वरम् । शक्तिस्वरूप, हे आज्य, त्वां शाक्वराय शक्तिसम्बन्धाभिमानिदेवतात्प्रीत्यर्थं गृह्णामि ॥ पञ्चम-

मन्त्रपाठस्तु ॥ शक्मन् ॥ शक्तिमत्सु पुरुषेषु यदोजिष्ठं तस्मै, हे आज्य, त्वां गृह्णामि । ओजो नामाष्टमो धातुः । तस्य सारम् ओजिष्ठम् । तदवष्टम्भेनैव शरीरे शक्तिरवतिष्ठते । ओजःसाराभिमानिदेवतामीत्यर्थं गृह्णामीत्यर्थः । तनूनप्त्र-संज्ञकजाठराग्निदेवताविषयस्य शपथकर्मणो हेतुभूतमाज्यं तनूनप्तृसंज्ञकम् । तदेतदुक्तैः पञ्चभिर्मन्त्रैर्गृहीतम् ॥ कात्यायनः ॥ तनूनप्त्रमेतद्दक्षिणस्यां वेदि-श्रोणौ निधायावमृशन्त्यृत्विजो यजमानः अनाधृष्टमितीति ॥ पाठस्तु ॥ अ-नाधृष्टमस्यनाधृष्यं देवानामोजः । अनभिशस्त्यभिशस्तिपा अनभिशस्तेन्य-म् । अञ्जसा सत्यमुपगेषᳪं स्विते मा धा इति ॥ हे आज्य, त्वम् अनाधृष्टम-सि । इतः पूर्वं केनाप्यतिरस्कृतमसि । अनाधृष्यम् इतः परमप्यतिरस्कार्यं दे-वानामोजः अग्न्यादीनां सम्बन्धि सारमसि । अनभिशस्ति अभिपूर्वः शंस-तिर्गर्ह्यायां वर्तते । तद्रहितमनभिशस्ति त्वमसि । अभिशस्तिपाः । ऋत्विजां प-रस्परविरोधेन निन्दनमभिशस्तिः तस्याः पातिरक्षतीत्यनभिशस्तिपाः । लिङ्ग-व्यत्ययादभिशस्तिपम् । अनभिशस्तेन्यम् अनभिशस्तमनभिनिन्दितं यत्स्वर्गादि-फलं तद्धेतुत्वादनभिशस्तेन्य आज्य, तथाविधमसि । अतो हे ऋत्विक्, अञ्जसा ऋजुमार्गेण मानसकौटिल्यरहितेन सत्यम् आज्यस्पर्शरूपं शपथम् उपगेषमुप-गच्छेयम् । हे तनूनप्त्राज्य, सुविते शोभनमार्गे यज्ञकर्मणि मा धाः मां स्थाप-य ॥ कात्यायनः ॥ अग्ने व्रतपा इत्याहवनीये समिधमाधायेति ॥ पाठस्तु ॥ अग्ने व्रतपास्त्वे व्रतपाः । या तव तनूरियᳪं सा मयि या मम तनूरेषा सा त्वयि । सह नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरिति ॥ हे व्रतपाः सर्वेषां व्रतानां पालकाग्ने त्वं व्रतपाः । त्वमस्मदीयस्य वर्तमानस्य व्रतस्य पालको भवसीति शेषः । तत्र तथाविधस्य व्रतपालकस्य या तनूः शरीरमस्ति सेयं तनूर्मयि भवत्विति शेषः । या च मम तनूर्मदीयं शरीरं सैषा तनूस्त्वयि भवतु । तथा सति, हे व्रतपते पालकाग्ने । व्रतान्यनुष्ठेयानि कर्माणि नौ आवयोरभियजमानयोः सह प्रवर्तन्तामिति शेषः । व्रतेषु मम यावानादर-स्तावानेव तवापि भवत्वित्यर्थः । किञ्च, दीक्षापतिः दीक्षायाः पालकः सोमः मे मदीयां दीक्षाम् । अनुमन्यताम् । तथा तपस्पतिः उपसद्रूपस्य तपसः पाल-कः सोमः, तपो मदीयमुपसद्रूपमनुमन्यतामिति वर्तते ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ॥ कात्यायनः ॥ यजमानपञ्चाः सोममाप्यायन्त्यᳪंशुरᳪंशुरितीति ॥ ऋत्विज-श्चत्वारः, पत्नी पञ्चमी, यजमानः षष्ठः ॥ पाठस्तु ॥ अᳪंशुरᳪंशुष्टे देव सो-

माप्यायतामिन्द्रायैकधनविदे। आतुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व। आप्याययास्मान्त्सखीन्त्सन्या मेधया। स्वस्ति ते देवसोम सुत्यामुदृचमशीयेति॥ अंशुशब्दः सोमवल्लया अवयवमाचष्टे। शीर्षा सर्वसङ्ग्रहार्थो। हे सोम देव, ते त्वदीयोऽशुरंशुः सर्वेऽप्यवयवा इन्द्राय इन्द्रप्रीत्यर्थम्। आप्यायताम्। अनेन प्रोक्षणेन सर्वतो वर्धताम्। चिरकालावस्थानेन सोमस्य योऽवयवो म्लानो भवति यश्च शुष्यति तदुभयमनेनाप्यायितं भवतीति मन्त्रस्य तात्पर्यम्। तदाह तित्तिरिः॥ यदेवास्या युवायते यन्मीयते तदेवास्यैतेनाप्याययतीति॥ कथम्भूताय इन्द्राय एकधनविदे। यावन्तः सोमयागाः सन्ति तेषु सर्वेषु सोमरूपमिदं द्रव्यमेकमेव धनं तदिन्द्रो लभते इत्येकधनवित्। किञ्च, हे सोम, तुभ्यं त्वत्प्रीत्यर्थम्। इन्द्र आप्यायतां बहुसोमपानेनेन्द्रो वर्धताम्। तथा हे सोम त्वमपि इन्द्रायेन्द्रप्रीत्यर्थम्। आप्यायस्व सर्वतः महद्भव। एतन्मन्त्रपाठेनोभयोरभिवृद्धिः कृता भवति। तदाह तित्तिरिः॥ उभावेवेन्द्रं सोमं चाप्याययतीति। किञ्च, हे सोम सखीन् सखिवत् प्रीतिविषयान् अस्मान् ऋत्विजः॥ तित्तिरिरप्याह॥ ऋत्विजो वा सखाय इत्युक्तम्॥ सन्या धनदानेन, मेधया अनुष्ठानेनार्थज्ञानधारणशक्त्या च आप्यायय। महद्धान् कुरु। किञ्च, हे सोमदेव, ते स्वस्ति क्षेमोऽस्तु तव प्रसादादहम्, उदृचं येयमृगुत्तमा समाप्तिकालीनाऽस्ति तत्पर्यन्तम्। सुत्यां सोमाभिषवक्रियाम्। अशीय। प्राप्नुयाम्॥ ५॥ ६॥ कात्यायनः॥ प्रस्तरे निन्हुते तदुत्तानहस्ता दक्षिणोत्तानायेष्टा राय इतीति॥ सर्वेऽप्यृत्विजः प्रस्तरे स्वकीयहस्तानुत्तानान् कृत्वा दक्षिणहस्तमुत्तानमुपर्यवस्थाप्य निन्हुते। तेन परियन्ति सोममुपचरतीत्यर्थः॥ पाठस्तु॥ एष्टा रायः प्रेषे भगाय। ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति। प्रैषे प्रकर्षेणेष्यमाणायाज्ञाय भगाय ऐश्वर्यार्थं रायो धनानि एष्टा आसमन्तादिष्टा अपेक्षिता।दिष्टा। हे सोम त्वत्प्रसादादस्माकं रायो भवन्त्वित्यभिप्रायः। किञ्च, ऋतवादिभ्यः सत्यवादिभ्यो ऽस्मिद्योतिभ्यस्तत्प्रीत्यर्थम् ऋतं सत्यम् अवश्यम्भाविफलोपेतं कर्म हे सोम सम्पादयेति शेषः। नमो दिवे द्युलोकाभिमानिन्यै देवतायै नमोऽस्तु। नमः पृथिव्यै भूमिदेवतायै नमोऽस्तु। तयोर्देवतयोरनुग्रहेणानुष्ठातुर्यजमानस्याविघ्नेन स्थितिर्भवति। तदाह तित्तिरिः॥ द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिँल्लोके प्रतितिष्ठतीति॥ ७॥ कात्यायनः॥ उपसदं जुहोति स्रुवेण

या त इतीति ॥ पाठस्तु ॥ या ते अग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीस्त्वेषं वचोऽपावधीत् स्वाहेति ॥ अत्र कयाचिदाख्यायिकया कण्वोऽसुराणां लोकत्रये तिस्रः पुर इदमुवाच । ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे । अयस्मयीमेवास्मिँल्लोके राजतीमन्तरिक्षे हरिणीं दिवीति ॥ एतमेवार्थं तैत्तिरीयश्चाह ॥ तेषामसुराणां तिस्रः पुर आसन्नयस्मय्येवमथ राजती हरिणीति । ता एतास्तिस्रः पुरो दग्धुपसद्देवतारूपोऽग्निर्यदा तासु पूर्षु प्रविश्य व्याप्नोति तदानीमेतास्तिस्रः पुरोऽग्नेस्तनवो भवन्ति । तदेतदभिप्रेत्यायं मन्त्रः प्रवर्तते । अयसि शेत इत्ययःशया लोहमयीत्यर्थः । हे अग्ने तव या तनूरयःशया लोहमयपुरी व्यापित्वेन तद्रूपा सती, वर्षिष्ठा देवीमतिशयेनाभिमतफलवर्षिणी । गह्वरेष्ठा असुरसंबन्धितया गह्वरे विषमे देशे तिष्ठतीति गह्वरेष्ठा सा ते तनूः उग्रं वचो अपावधीत् छिन्धिभिन्धीत्यादिकम् । असुरैः प्रोक्तं तीव्रं वचनं विनाशितवती । तथा त्वेषं वचः असुरैः प्रोक्तं देवाधिक्षेपरूपत्वेन प्रदीप्तं वाक्यम् अपावधीद्विनाशितवती । स्वाहा । तथा विधोपकारे तुभ्यमग्नये हविर्दत्तम् । अथवा असुरैरुपद्रुता देवा अन्नपाने अलभमानाः क्षुधया पिपासया च वयं पीडिता इति वदन्ति । तदेतदुग्रं वचः । तथा किमुपघातकमस्माभिः कृतमित्येवं क्लिश्नन्तो देवा यद्वाक्यं संतापहेतुत्वेन प्रदीप्तं वदन्ति तदिदं त्वेषं वच इत्युच्यते । तदेतत् सर्वमाह तित्तिरिः ॥ अशनायापिपासे ह वा उग्रं वचः, एनश्च वैरहत्यं च त्वेषं वच इति ॥ कात्यायनः ॥ एवमितरे अन्वहयत् रजःशयत् हरिशयां चेति । यथा प्रथमदिनेऽग्नेऽयःशयेत्युपसदनुष्ठिता एवमितरे द्वितीयतृतीये उपसदौ द्वितीयतृतीयदिनयोरनुतिष्ठेत् । द्वितीयस्यामुपसदि हरीशयामिति पाठभेदः ॥ तयोर्मन्त्रयोः पाठस्तु ॥ या ते अग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीस्त्वेषं वचो अपावधीत् स्वाहा । या तेऽग्ने हरीशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीस्त्वेषं वचो अपावधीत् स्वाहेति ॥ रजःशया रजतमयी हरीशया हिरण्मयी । अन्यत् सर्वं पूर्ववद् व्याख्येयम् ॥ ८ ॥ इति पञ्चमेऽध्याये द्वितीयोऽनुवाकः ॥ ५ ॥ २ ॥

द्वितीये तनूनप्त्रादिमन्त्रा उक्ताः ॥ तृतीये उत्तरवेदिनिर्माणमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ शम्यामुदीचीं निदधाति पुरस्तात् पश्चाच्च दक्षिणतः प्राचीमुत्तरतश्च स्फ्येनान्तर्लिखति तप्तायनीति प्रतिमन्त्रमिति ॥ उत्तरवेदेः

परिमाणं निर्णेतुं चतसृषु दिक्षु स्फयेन रेखाः कुर्यात् । तदानीं पूर्वस्यां दिशि शम्यामुदग्रां निधाय तस्याः पश्चिमपार्श्वे तदीयप्रमाणेन रेखां कुर्यात् । तथा पश्चिमदिश्यप्युदगग्रां शम्यां निधाय तस्या अभ्यन्तरतो रेखां कुर्यात् । एवं दक्षिण उत्तरतश्च प्रागग्रां शम्यां निधाय रेखाद्वयं कुर्यात् । तदेतत् सर्वमापस्तम्बोऽपि विस्पष्टमाह ॥ शम्यां पुरस्तादुदगग्रां निधाय स्फयेनोदीचीमभ्यन्तरमुल्लिखति तप्तायनी मेऽसीत्येवं दक्षिणतः प्राचीं तप्तायनी मेऽसीति पश्च दुदीचीमवतान्मा नाथितमित्युत्तरतः प्राचीमवतान्मा व्यथितमितीति ॥ अनन्तरेषु चतुर्षु मन्त्रेष्वयं प्रथममन्त्रः ॥ तप्तायनी मेऽसीति ॥ हे पृथिवि त्वं मे ममाऽनुग्रहार्थं तप्तायन्यसि । तप्तं पुरुषमयति प्राप्नोतीति तप्तायनी । यो हि दरिद्रः क्षत्ररहितोऽहमिति सन्तप्यते तं पुरुषं तापोपशान्त्यर्थं प्राप्नोतीत्यर्थः ॥ अथ द्वितीयः ॥ वित्तायनी मेऽसीति ॥ धनरहितस्य वित्तार्थं तं पुरुषं प्राप्नोतीति वित्तायनी । पृथिव्यां हि प्राप्तायां सस्यनिष्पत्तिद्वारा महद्धनं लभ्यते ॥ अथ तृतीयः ॥ अवतान्मा व्यथितमिति ॥ व्यथ भयचलनयोरिति धातुः । व्यथितमन्नाभावाद् भीतं मां यजमानमवतादियं पृथिवी रक्षतात् ॥ अथ चतुर्थः ॥ अवतान्मा नाथितमिति ॥ नाथतिधातुर्याच्ञार्थः । नाथितं याचितवन्तं मां यजमानमवतात् । भूयो याच्ञा न यथा भवति तथा पृथिवी रक्षतात् ॥ १ ॥ कात्यायनः ॥ विदेरग्नेरिति चात्वाले प्रहरति स्फयेनेति उत्तरवेदिनिवपनार्थं यस्मिन् भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल इत्युच्यते । तं प्रदेशमापस्तम्बो विस्पष्टं दर्शयति ॥ उत्तरस्माद्वेद्यंसात् प्रक्रमे चात्वालमनुत्तरवेदिं तूष्णीं शम्यया परिमितेति तस्मिंश्चात्वाले स्फयेन मृदं खनेत् ॥ पाठस्तु ॥ विदेरग्नेर्नभो नामेति ॥ हे चात्वालगते मृत्तिके अग्नेस्त्वदभिमानिदेवस्य नभो नाम विदेः नभ इत्येतादृशं नामधेयं विद्धि । अग्निनामोच्चारणपुरःसरं प्रहरणं कण्वो विधत्ते ॥ स वा अग्नीनां नामानि गृह्णन् प्रहरतीति ॥ कात्यायनः ॥ अग्ने अङ्गिर इति पुरीषं हरतीति ॥ खाता मृत् पुरीषम् ॥ पाठस्तु ॥ अग्ने अङ्गिर आयुना नाम्नेहीति ॥ हे अङ्गिरः, अग्ने अङ्गानां मध्ये सारभूतवह्ने । आङ्गिरसत्वेनास्य शब्दस्य निर्वचनं छन्दोगा आमनन्ति । एतमुवाङ्गिरसं मन्यतेऽङ्गानां यद्रसस्तेनेति ॥ भुक्तान्नपचनहेतुत्वादुदराग्नेः शरीरावयवानां मध्ये सारत्वं प्रसिद्धम् । तेषु तेषु कर्मसु एति गच्छतीत्यायुशब्दोऽत्याग्नेर्नामधेयम् । हे अग्ने, आयुना नाम्ना अभिहितः सन्

एहि आगच्छ ॥ कात्यायनः ॥ योऽस्यामिति निवपतीति ॥
उत्तरवेदिस्थाने मृद् निक्षिपेत् ॥ पाठस्तु ॥ योऽस्यां पृथिव्यामसि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदध इति ॥ अस्यां पृथिव्यां दृश्यमानायां भूमौ योऽग्निः, हे अग्ने, यस्त्वं वर्तसे । किञ्च, ते तव यज्ञियं यज्ञयोग्यं यन्नाम मसि-द्धमग्निरित्येतादृशं नामानाधृष्टं केनापि याज्ञिकेनातिरस्कृतं तेन त्वादधे । तेन नाम्ना युक्तं त्वामास्थापयामि ॥ कात्यायनः ॥ एवं द्विरपरं द्वितीयस्यां तृतीयस्यामिति विशेष इति ॥ यथा पूर्वैस्त्रिभिर्मन्त्रैः स्वाहा हृत्वा वेद्यर्थं मृद् प्रक्षिप्ता एतत्त्रितयं पुनरपि द्विः कुर्यात् । द्वयोः पर्याययोर्द्वितीयस्यां तृतीय-स्यामिति पाठविशेषो द्रष्टव्यः । पर्यायद्वयगतानां षण्णां मन्त्राणाम् ॥पाठस्तु॥ विदेरग्नेर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि ॥ यो द्वितीयस्यां पृथिव्यामसि यत्तेनाधृष्टं नाम यज्ञियं तेन त्वादधे । विदेरग्नेर्नभोनामाग्ने अङ्गिर आयुना नाम्नेहि । यस्तृतीयस्यां पृथिव्यामसि यत्तेन.धृष्टं नाम यज्ञियं तेन त्वादध इति ॥ यद्यपि पृथिवीशब्दस्य प्रकृतत्वाद् द्वितीयतृतीयशब्दयोर्विशेष्यत्वेन स एवानुवर्तते तथाप्यौचित्याद् द्वितीया पृथिव्यन्तरिक्षं तृतीया पृथिवी द्यौरि-त्यवगन्तव्यम् । अन्यत् सर्वं पूर्ववद् व्याख्येयम् ॥ कात्यायनः॥ अनुत्वेति चतुर्थं यथापूर्वमाहृत्येति ॥ यथा पूर्वस्मिन् पर्यायत्रये मृदाहृत्य प्रक्षिप्ता एवं चतुर्थमपि प्रक्षेपणपर्यन्तं मृदाहरणं कुर्यात् ॥ पाठस्तु ॥ अनु त्वा देववीतय इति ॥ देववीतये देवानां प्राप्तये त्वां, हे मृत्तिके, त्वाम् अनु पूर्वोक्तमाहरण-त्रयमनुसृत्याहरामीति शेषः ॥ कात्यायनः ॥ सिंहासीति व्युहत्युत्तरवेदिं शम्ययामात्रीमिति ॥ येयमुत्तरवेदिश्चतुर्दिक्षु शम्यया परिमितानां व्यूहति वि-क्षेपेण पांसुभिराच्छादयेत् ॥ पाठस्तु ॥ सिंहासि सपत्नसाही देवेभ्यः कल्प-स्वेति ॥ हे उत्तरवेदे, त्वं सिंही सिंहमाना भूत्वा सपत्नसाही । शत्रूणा-मभिभवित्री अभिभवसि । अतो देवेभ्यो देवोपकारार्थं कल्पस्व समर्था भव ॥ कात्यायनः ॥ प्रोक्षत्युत्तरवेदिं सिकताश्च प्रकिरति । सिंहासीति प्रतिमन्त्र-मिति ॥ तत्राद्यं प्रोक्षणमन्त्रपाठस्तु ॥ सिंहासि सपत्नसाही देवेभ्यः शुन्ध-स्वेति ॥ हे उत्तरवेदे त्वं शुन्धस्व शुद्धा भव । अन्यत् पूर्ववत् ॥ अथ सिक-ताप्रक्षेपणमन्त्रपाठः ॥ सिंहासि सपत्नसाही देवेभ्यः शुम्भस्वेति ॥ हे उत्तर-वेदे त्वं शुम्भस्व सिकताप्रक्षेपेण शोभिता भव । अन्यत् पूर्ववत् ॥ २ ॥
इति पञ्चमेऽध्याये तृतीयोऽनुवाकः ॥ ५ ॥ ३ ॥

उत्तरवेदिनिर्माणमन्त्रास्तृतीये कथिताः ॥ चतुर्थे निर्मितायाः उत्तरवेदेः प्रोक्षणादिसंस्कारमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ उत्तरवेदिं प्रोक्षतीन्द्रघोष इति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गमिति ॥ तत्रायं प्रथमो मन्त्रः ॥ इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पात्विति ॥ इन्द्र इत्यनेन शब्देन घुष्यते विस्पष्टं कथ्यते यो देवः सोऽयमिन्द्रो देवो वसुभिः अष्टसंख्याकैर्गणदेवैर्युक्तः स देवः पुरस्तात् पूर्वस्यां दिशि हे उत्तरवेदे त्वा त्वां पातु रक्षतु ॥ अथ द्वितीयो मन्त्रः ॥ प्रचेतास्त्वा रुद्रैः पश्चात् पात्विति ॥ प्रचेताः प्रकृष्टप्रज्ञो वरुणः स च रुद्रैरेकादशसंख्याकैर्गणदेवैः संयुक्तः पश्चात् पश्चिमायां दिशि त्वां पातु ॥ अथ तृतीयो मन्त्रः ॥ मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति । मनोजवा मनोवदत्यन्तवेगयुक्तो यमो देवः पितृभिः स्वर्लोकवासिदेवताविशेषैर्युक्तो दक्षिणस्यां दिशि त्वां पातु ॥ अथ चतुर्थो मन्त्रः ॥ विश्वकर्मा त्वादित्यैरुत्तरतः पात्विति ॥ विश्वकर्मा विश्वानि सर्वाणि जगदुत्पत्त्यादिविषयकर्माणि यस्यासौ विश्वकर्मा । त्वादित्यैर्द्वादशसंख्याकैर्गणदेवैः सहित उत्तरस्यां दिशि त्वां पातु ॥ उत्तरवेदिशब्दोदिता देवता यदा देवान् प्राप्नोति तदानीमसुरा देवान् हन्तुमुद्यतवन्तः समागताः । तस्मिन्नवसरे देवसेनाधिपतय इन्द्रघोषादयश्चतसृषु दिक्षु तानसुरानपाकुर्वन् । तस्मादेतैर्मन्त्रैर्दिक्चतुष्टये रक्षा प्रार्थनीया । तदेतदाह तित्तिरिः ॥ देवाꣳश्चेदुत्तरवेदिरुपावर्तीहैव विजयामह इत्यसुरा वज्रमुद्यम्य देवानभ्यायन्त । तानिन्द्रघोषो वसुभिः पुरस्तादपनुदतेत्यादि ॥ १ ॥ कात्यायनः ॥ बहिर्वेदिशेषं निषिञ्चतीदमहं तप्तं वारिति ॥ पाठस्तु ॥ इदमहं तप्तं वार्बहिर्धा यज्ञान्निःसृजामीति ॥ असुरनिवारणाय येनोदकेन प्रोक्षणं कृतं तदुदकमुग्ररूपत्वात्तप्तमित्युच्यते । तादृशमिदं वाः, एतदुदकं प्रोक्षणशेषभूतम् । अहमनुष्ठाता यज्ञाद् बहिर्धा यज्ञप्रदेशाद्बाह्यप्रदेशे निःसृजामि निःसारयामि ॥ २ ॥ कात्यायनः ॥ नाभ्यां श्रोण्यंसेषु पञ्चगृहीतं जुहोत्यक्ष्णया दक्षिणेंऽसे श्रोण्याꣳ श्रोण्यामंसे मध्ये च हिरण्यं पश्यन् सिꣳहासीति प्रतिमन्त्रमिति ॥ अस्यायमर्थः । योऽयमुत्तरवेदेर्नाभ्याख्यो मध्यप्रदेशः । यौ वाग्नेयैशानप्रदेशौ वेदेरंसाख्यौ । ये च वायव्यनैर्ऋतप्रदेशरूपे श्रोण्यौ । तेषु पञ्चसु स्थानेषु जुह्वां पञ्चवारं गृहीतेनाज्येन जुहुयात् । न चैतेषु स्थानेषु क्रमेण होमः । किन्त्वक्ष्णाया वक्रत्वेन तद्यथा प्रथमं दक्षिणेंऽसे, तत उत्तरस्यां श्रोण्यां, ततो दक्षिणस्यां श्रोण्यां, तत उत्तरेंऽसे, ततो मध्ये एतेषु पञ्चसु

स्थानेषु हिरण्यं निधाय तदेतदवलोकयन् पञ्चभिर्मन्त्रैर्जुहुयादिति । तमेतं पक्रमकारमापस्तम्बो विस्पष्टमुदाजहार ॥ दक्षिणमंसमुत्तरां श्रोणिं दक्षिणामुत्तरमंसं मध्यमितीति ॥ तत्रायं प्रथममन्त्रपाठः ॥ सिꣳह्यसि स्वाहेति ॥ पुरा कदाचिदुत्तरवेदिदेवता केनापि निमित्तेन देवेभ्योऽनुपक्रम्य तदानीमसुरान् प्राप्य देवासुरसेनयोरुभयोर्मध्ये सिंहरूपं धृत्वा तस्थौ । तदाह तित्तिरिः ॥ तेभ्य उत्तरवेदिः सिंहीरूपं कृत्वोभयानन्तरापक्रम्यातिष्ठदिति ॥ तदेतदभिप्रेत्याऽस्मिन् मन्त्रे सिंहीत्युच्यते । हे उत्तरवेदे, त्वं सिंह्यसि । सिंहरूपा भवसि । तादृश्यै तुभ्यं स्वाहा हविस्त्वास्तु ॥ अथ द्वितीयमन्त्रः ॥ सिꣳह्यस्यादित्यवनिः स्वाहेति ॥ आदित्यान् वनुते सम्भजते प्रीणयतीति आदित्यवनिः । अन्यत् पूर्ववत् ॥ अथ तृतीयः ॥ सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहेति ॥ ब्राह्मणजातिक्षत्रियजात्योः प्रीणयितृत्वमत्र विशेषः ॥ अथ चतुर्थः ॥ सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहेति ॥ पुत्रपौत्रादिरूपायाः शोभनप्रजायाः सुवर्णरजतादिधनपुष्टेश्च संपादनमत्र विशेषः ॥ अथ पञ्चमः ॥ सिꣳह्यस्यावह देवान् यजमानाय स्वाहेति ॥ यजमानोपकारार्थं देवानस्मिन् कर्मण्यानयेत् । एतावानत्र विशेषः ॥ कात्यायनः ॥ भूतेभ्यस्त्वेति स्रुचमुद्यच्छतीति ॥ होमशेषाज्ययुक्ते हे जुहु, त्वा भूतेभ्यः जरायुजाण्डजादिचतुर्विधभूतग्रामप्रीत्यर्थमुद्यच्छामीति शेषः । तमेतं मन्त्रार्थं विनियोगपुरःसरं तित्तिरिर्विस्पष्टं दर्शयति ॥ भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषां तद्भागधेयं तानेव तेन प्रीणामीति ॥ ३ ॥ कात्यायनः ॥ नाभिं पैतुद्रवैः परिदधाति पूर्ववद् ध्रुवोऽसीति प्रतिमन्त्रमिति ॥ पैतुद्रुशब्देन देवदारुवृक्षविशेष उच्यते । तदीयैः परिधिभिरुत्तरवेदेर्मध्यदेशरूपामुत्तरनाभिं परिदध्यात् । यथा दर्शपूर्णमासेष्टौ पश्चिमदक्षिणोत्तरादिक्षु मध्यमदक्षिणोत्तरपरिधयः प्रक्षिप्तास्तद्वदित्यभिप्रेत्य पूर्ववदित्युक्तम् ॥ तत्रायं प्रथमो मन्त्रः ॥ ध्रुवोऽसि पृथिवीं दृꣳहेति ॥ मध्यमपरिधे त्वं ध्रुवः स्थिरोऽसि । अतः पृथिवीं दृꣳह दृढीकुरु ॥ अथ द्वितीयः ॥ ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति । दक्षिणपरिधे त्वं ध्रुवे स्थिरे क्षियति निवसतीति ध्रुवक्षित् । तादृशोऽसि । तस्मादन्तरिक्षं दृढीकुरु ॥ अथ तृतीयः ॥ अच्युतक्षिदसि दिवं दृꣳहेति । अच्युते विनाशरहिते पक्षे क्षियति निवसतीति अच्युतक्षित् । हे उत्तरपरिधे तादृशोऽसि । तस्मात् त्वं द्युलोकं दृढीकुरु ॥ कात्यायनः ॥ अग्नेर्भस्मेति निवपति गुग्गुलुसुगन्धितेजनवृष्णेस्तुका इति ॥ गुग्गुलु-

शब्देन धूपार्थं द्रव्यमुच्यते । सुगन्धितेजनशब्देन तृणविशेषमूलानि । वृष्णेस्तुकस्य विसंबन्धिरोमोच्यते ॥ पाठस्तु ॥ अग्नेर्भस्मास्यग्नेः पुरीषमसीति ॥ हे गुग्गुलप्रभृतिसंभारसमूह त्वम् । उत्तरवेदिगतस्याग्नेर्भस्म भासकमसि । तथा तस्याग्नेः पुरीषं पूरकमसि । तदेतदग्निपूरकत्वमसिद्धमित्येतत्तित्तिरिर्दर्शयति । अग्नेर्वैतत्पुरीषं यत्संभारा इति॥४॥ इति पञ्चमेऽध्याये चतुर्थोऽनुवाकः॥५॥४॥

चतुर्थे उत्तरवेदिप्रोक्षणादिसंस्कारमन्त्रा उक्ताः ॥ पञ्चमे हविर्धानाख्यमण्डपनिर्माणमन्त्रा उच्यन्ते ॥ अस्ति तावत् प्राचीनवंशाख्या काचिच्छाला तस्यामाहवनीयाद्यग्नित्रयमैष्टिकवेदिश्च वर्तते । तस्याः शालायाः पुरतः षट्त्रिंशत्पददीर्घा सौमिकवेदिर्निर्मातव्या । तस्या वेद्या अग्रभागे पूर्वानुवाकद्वयोक्तोत्तरवेदिः । ततः पश्चान्मध्यभागे हविर्धानाख्यमण्डपो निर्मातव्यः । ततोऽपि पश्चात् सदोऽभिधाना काचिच्छाला निर्मातव्या । तस्याः स्थाने प्राचीनशालायाः पुरतो दक्षिणोत्तरभागयोर्हविर्धाननामके द्वे शकटे स्थापिते भवतः । तच्छकटद्वयं पुरतः प्रवर्त्य तदावरकत्वेन हविर्धानाख्यमण्डपो निर्मातव्यः । तत्र शकटद्वय सावित्रमन्त्रहोमादूर्ध्वं प्रवर्तनीयम् । तदाह तित्तिरिः ॥ सावित्र्यर्चा हुत्वा हविर्धाने प्रवर्तयतीति ॥ तमेतं होमं विधत्ते कात्यायनः ॥ चतुर्गृहीतं शालाद्वार्ये जुहोति । युञ्जत इति । सगार्हपत्येति ॥ प्राचीनशालायाः द्वारसमीपे पूर्वसिद्ध आहवनीयो वर्तते । तस्मिन् जुहोति । स च पूर्वमाहवनीयोऽपि सन्नुत्तरवेद्याख्येऽन्यस्मिन्नाहवनीये निष्पन्ने सति तदपेक्षया स्वयं गार्हपत्यो भवतीत्यर्थः ॥पाठस्तु॥ युञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । विहोत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिरिति ॥ विप्रस्य ब्राह्मणस्य यजमानस्य संबन्धिनो विप्रा ब्राह्मणा ऋत्विजो मनो युञ्जते लौकिकचिन्ताभ्यो मनो निवार्य यज्ञचिन्तायां तन्मयं नियमयन्ति । ततो, धिय इन्द्रियाण्यपि यज्ञार्थेषु नियमयन्ति ।

कीदृशस्य । बृहतो विपश्चितः । अधीतवेदत्वाद् बृहत्त्वम् । अर्थाभिज्ञत्वाद् विपश्चित्त्वम् । कीदृशा विप्राः । विहोत्रा होमकर्तारः । तदिदं विप्राणां मनोनियमादिसामर्थ्यमेक इद्विदेक एव सर्जकः । कीदृशः एकः, वयुनाविद् । सर्वज्ञ इत्यर्थः । नचैकस्य सर्वसृष्टौ विस्मेतव्यम् । यतः सवितुः प्रेरकस्यान्तर्यामिणो देवस्य परिष्टुतिः । सर्ववेदोक्तस्तुतिः । मही महती । तथाचाऽथर्वणिका अधीयते ॥ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति । वाजसनेयिनश्च ॥

स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याऽधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्चेति ॥ श्वेताश्वतराश्च ॥ परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति ॥ १ ॥ कात्यायनः ॥ दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोतीदं विष्णुरिति । दक्षिणशकटसम्बन्धिदक्षिणचक्रस्य मार्गे हिरण्यं निधाय तस्मिन्नेव होमः ॥ पाठस्तु ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूळ्हमस्यपांसुरे स्वाहेति ॥ विष्णुस्त्रिविक्रमावतारं धृत्वा इदं विश्वं विभज्य क्रमते स्म । भूमावेकपदम् । अन्तरिक्षे द्वितीयम् । दिवि तृतीयमित्येवं त्रेधा पदं निदधे । पांसवो भूम्यादिलोकरूपा यस्य पदस्य सन्ति तत्पांसुरम् । अस्य विष्णोस्तस्मिन् पदे विश्वं समूढं सम्यगन्तर्भूतम् । स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ २ ॥ कात्यायनः ॥ स्रुवस्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावतीति पूर्ववदिति । यथा दक्षिणशकटसम्बन्धि दक्षिणचक्रमार्गेऽध्वर्युर्हुतवान् । तथोत्तरशकटसम्बन्ध्युत्तरचक्रमार्गे प्रतिप्रस्थाता जुहुयादित्यर्थः ॥ पाठस्तु ॥ इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या । व्यस्कभ्ना रोदसी विष्ण एते दाधर्थ पृथिवीमभितो मयूखैः स्वाहेति ॥ हे द्यावापृथिव्यौ युवां मनवे मन्वानाय यजमानाय, इरावती अन्नवत्यौ । धेनुमती हि बहुधेनुयुक्ते च भूतं भवतम् । किञ्च, सूयवसिनी । शोभनैर्यवसैरभ्यवहार्यैर्युक्ते । दशस्या यज्ञसाधनानां दात्र्यौ भवतम् । हे विष्णो, एते रोदसी द्यावापृथिव्यौ व्यस्कभ्नाः विभज्याश्रया स्तम्भितवानसि । किञ्च, तां पृथिवीं मयूखैः स्वकीयतेजोरूपैर्नानाजीवैर्वराहाद्यनेकावतारैर्वा अभितो दाधर्थ सर्वतो धारितवानसि । स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ ३ ॥ कात्यायनः ॥ दक्षिणया द्वाराऽऽनीता पत्नी पाणिभ्यां शेषं प्रतिगृह्याक्षधुराव-नक्ति पराग्देवश्रुताविताति ॥ प्रतिप्रस्थात्रा समानीता पत्नी होमशेषेणाज्येन अक्षस्योभावग्रभागौ सकृदञ्ज्यात् ॥ पाठस्तु ॥ देवश्रुतौ देवेष्वाघोषतमिति ॥ हे देवश्रुतौ देवसभायां प्रसिद्धावक्षाग्रभागौ युवां, यजमानोऽयं यक्ष्यतीति देवेष्वाघोषतमुच्चध्वनिना कथयतम् ॥ कात्यायनः ॥ प्राची प्रेतमिति वाचयतीति ॥ यदा हविर्धानाख्यशकटे प्रवर्त्येते तदा यजमानं वाचयेत् ॥ पाठस्तु ॥ प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जिह्वरतमिति ॥ हे उभे शकटे युवां प्राची प्राङ्मुखे प्रेतं प्रकर्षेण गच्छतम् । कीदृशे अध्वरं कल्पयन्ती इदं कर्म समर्थं कुर्वाणे । किञ्चोर्ध्वमुपरिवर्ति देवान् प्रति यज्ञं

नयतं प्रापयतम् । मा जिह्वरतं, मा कुटिले भवतम् । ह्वृ कौटिल्य इति धातुः ॥ ४ ॥ कात्यायनः ॥ स्वं गोष्ठमिति च सर्जनीति । अस्यायमर्थः । प्रवर्त्यमानयोः शकटयोरक्षे सर्जनं ध्वनिं कुर्वति सति, स्वं गोष्ठमिति यजमानं वाचयेत् । चकारो मन्त्रद्वयवचनसमुच्चयार्थ इति ॥ पाठस्तु ॥ स्वं गोष्ठमावदतं देवी दुर्ये आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टमिति ॥ दुर्यशब्दो गृहवाची । गृहा वै दुर्या इति श्रुत्यन्तरात् । तेन शब्देन गृहसदृशो शकटे लक्ष्येते । हे दुर्ये देवी, गृहसदृशशकटद्वयरूपे देवते स्वं गोष्ठं स्वकीयं गोष्ठस्थानम् । आवदतं सर्वतः कथयतम् । योऽयमक्षशब्दस्तेन शब्देन यजमानस्य गृहं बहूनां गवां स्थानं यथा भवति तथा कथयतमित्यर्थः । योऽयमक्ष उभयतो बद्धो भवति सोऽयं वरुणदेवरूपो वाक्पारुष्येण दुर्वाग्वर्तते । तथाचान्यत्र श्रूयते । वरुणो वा एष दुर्वागुभयतो बद्धो यदक्ष इति । तस्माच्छापरूपदुर्वाक्परिहारायाशीर्वादरूपं सुवाक्यमनेन मन्त्रेण प्रार्थितम् । एतदेवाभिप्रेत्य तैत्तिरीया मन्त्रमन्यथा पठन्ति । सुवाग्देवदुर्यां आवदेति ॥ कात्यायनः ॥ पश्चादुत्तरवेदे त्रिषु प्रक्रमेषु मत्या वाऽनभ्यस्तेति मन्त्रयतेऽत्र रमेथामितीति ॥ अनभ्यस्तप्रवर्तनं परित्यज्य स्थापिते शकटे उभे मन्त्रयेत् । कुत्र स्थापिते इति चेत् । उच्यते । पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेष्वित्येकः पक्षः । मत्या चेत्यपरः पक्षः । यत्र स्थापनीये इति स्वस्य मतिस्तत्रेत्यर्थः ॥ पाठस्तु ॥ अत्र रमेथां वर्ष्मन् पृथिव्या इति ॥ हे शकटे, युवां पृथिव्यां वर्ष्मन् भूमेः शरीरभूते अत्र अस्मिन् देवयजनप्रदेशे रमेथां क्रीडां कुरुतम् । देवयजनस्य भूमेः शरीरत्वमाह तित्तिरिः ॥ वर्ष्मन् ह्येतत् पृथिव्या यद्देवयजनमिति ॥ ५ ॥ कात्यायनः ॥ दक्षिणमुपस्तभ्नाति विष्णोर्नुकमिति ॥ दक्षिणशकटस्याग्रं वोढुम् । आधारभूतं काष्ठं स्थापयेदित्यर्थः ॥ पाठस्तु ॥ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाᳪसि । योऽअस्कभायदुत्तरᳪ सधस्थं विचक्रमाणस्त्रेधोरुगाय इति ॥ नुकमित्यव्ययं कर्मवाचकम् । विष्णोर्वीर्याणि कर्माणि प्रवोचं प्रब्रवीमि । कानि तानि कर्माणीत्युच्यन्ते । यो विष्णुः पार्थिवानि रजांसि परमाणून् विममे निर्मितवान् । परिगणितवांश्च । पुनरपि यो विष्णुरुत्तरमुपरितनं सधस्थं देवानां सहवासस्थानं द्युलोकरूपमस्कभायत् । यथाऽसौ न पतति तथा स्तम्भितवान् । पुनरपि त्रेधा विचक्रमाणः त्रिषु लोकेषु पदत्रयं निदधौ । उरुगायः उरुभिर्महद्भिरभिर्गीयते च ॥ का-

स्यायनः ॥ दक्षिणतः स्थूणामुपनिहन्ति विष्णवे त्वेति ॥ दक्षिणशकटाग्रग्रहणाय यत्काष्ठं स्थापितं तद्भूमौ निखन्यात्। हे काष्ठ, विष्णवे हविर्धानशकटाऽभिमानिविष्णुप्रीत्यर्थं, त्वां निखनामीति शेषः ॥ ६ ॥ कात्यायनः ॥ दिवो वेत्युत्तरां प्रतिप्रस्थातोत्तरस्थूणा पूर्ववदिति ॥ यथाऽध्वर्युर्दक्षिणशकटं मन्त्रेणोपष्टभ्य विष्णवे त्वेति स्थूणां निखातवान् । एवं प्रतिप्रस्थातोत्तरशकटे कुर्यादित्यर्थः ॥ पाठस्तु ॥ दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् । उभा हि हस्ता वसुना पृणस्वाप्रयच्छदक्षिणादोत सव्याद्विष्णवे त्वेति । हे विष्णो द्युलोकाद्वा, भूलोकाद्वा महर्लोकाद्वा, उरोर्विस्तीर्णादन्तरिक्षलोकाद्वा समानीतेन वसुना द्रव्येण उभा हि हस्ता स्वकीयौ हस्तावुभावपि पृणस्व पूरयस्व । ततो धनपूर्णाद्दक्षिणात् सव्याच्च हस्तात् प्रयच्छ बहुकृत्व आवृत्त्या प्रकृष्टं मणिमुक्तादि धनमस्मभ्यं देहि । विष्णवे त्वेत्ययं मन्त्रः पूर्ववत् ॥ ७ ॥ कात्यायनः ॥ प्र तद्विष्णुरिति वाचयतीति ॥ पाठस्तु ॥ प्र तद्विष्णुःस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वेति ॥ यस्य विष्णोः उरुषु प्रभूतेषु त्रिषु त्रिक्रमणेषु पादप्रक्षेपणस्थानेषु विश्वानि सर्वाणि भुवनानि अधिक्षियन्ति अधिवसन्ति । तत् सः प्रसिद्धो विष्णुः वीर्येण साधारणभूतेन वीरकर्मादिना प्रस्तवते । प्रस्तूयते । तत्र दृष्टान्तः। गिरिष्ठाः पर्वते स्थितः कुचरः कुत्सितप्राणिभक्षकः बिभेत्यस्मादिति भीमो भयङ्करः । मृगो न सिंह इव वीर्येण स्तूयते तद्वत् ॥८॥ कात्यायनः॥ विष्णो रराटमिति॥ वाचयतीत्यनुवर्तते। असीति मन्त्रशेषः। हविर्धानाख्ये पूर्वोक्ते द्वे शकटे दक्षिणोत्तरभागयोः स्थापयित्वा तदावरकत्वेन परितो हविर्धानं रूपं मण्डपं कुर्यात् । स च मण्डपो विष्णुदेवताकत्वाद्विष्णुरित्युपचर्यते । विष्णोश्च मूर्तिमतस्य सर्वावयवसद्भावाल्ललाटस्योऽवयवोऽस्ति । तद्वद्धविर्धानमण्डपस्यापि पूर्वद्वारवर्तिस्तम्भयोर्मध्ये काचिदर्भमयमालाभारत्वं त्वं विष्णोर्विष्णुमूर्तित्वेनोपचारितस्य हविर्धानमण्डपस्य रराटमसि ललाटस्थानीयो भवसि ॥ कात्यायनः ॥ विष्णोः श्नप्त्रे स्थ इत्युच्छ्रायापिति ॥ येयं रराटी तस्यामूर्ध्वं स्थापितायामेतं मन्त्रं वाचयेत् । बौधायनस्तु विस्पष्टमेतन्मन्त्रविनियोगमाह ॥ विष्णोः श्नप्त्रे स्थ इति । रराटयामन्तौ व्यस्यति संमृशतीत्येक इति ॥ व्यस्यति विभज्य प्रक्षिपतीत्यर्थः । हे रराट्यौ युवां विष्णोर्विष्णुनामकस्य हविर्धानमण्डपस्य श्नप्त्रे स्थः ओष्ठसम्बन्धिपक्षे प्रव-

यथाखातं प्रतिमन्त्रमिति ॥ खननक्रमेण चतुर्षु गर्तेषु यजमानस्य हस्तस्पर्शं चतुर्भिर्मन्त्रैः कारयेत् ॥ तत्रायं प्रथमः ॥ स्वराळसि सपत्नहेति ॥ हे प्रथमगर्त, त्वं स्वराळसि स्वयमेव राजमानोऽसि । अतः सपत्नहा शत्रुघाती भवेति शेषः ॥ अथ द्वितीयः ॥ सत्रराळभिमातिहेति ॥ सत्रेषु द्वादशाहादिषु राजत इति सत्रराट् अभिमातिहा शत्रुघाती ॥ अथ तृतीयः ॥ जनराळसि रक्षोहेति ॥ जनेषु यजमानेषु राजत इति जनराट् रक्षोहा यज्ञविनाशकराक्षसघाती ॥ अथ तुरीयः ॥ सर्वराळस्यमित्रहेति ॥ सर्वेषु राजत इति सर्वराट् । अमित्रहा शत्रुघाती ॥ ३ ॥ कात्यायनः ॥ प्रोक्षत्येतान् रक्षोहण इति । भेदे मन्त्रावृत्तिरिति ॥ एतांश्चतुरो गर्तान्मन्त्रेण प्रोक्षेत् । तस्य च मन्त्रस्य गर्तभेदे सत्यावृत्तिः कर्तव्या ॥ पाठस्तु ॥ रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति । वैष्णवान् विष्णुदेवताकान् गर्तान् प्रोक्षामि कीदृशान् रक्षोहणो राक्षसहन्तॄन् वलगहनः। अभिचारसाधनहन्तॄन् ॥ कात्यायनः ॥ अवनयनेऽवस्तरणे चेति ॥ गर्तेषु प्रोक्षणशेषोदकसेचनमवनयनम् । दर्भैश्छादनमवस्तरणम् । तयोर्द्वयोः क्रिययोरपि गर्तभेदान्मन्त्रावृत्तिर्द्रष्टव्या ॥ तत्राऽवनयनमन्त्रः ॥ रक्षोहणो वलगहनोऽवनयामि वैष्णवानिति ॥ अवनयामि सिञ्चामि । अन्यत् पूर्ववत् ॥ अथाऽवस्तरणमन्त्रः ॥ रक्षोहणो वलगहनोऽवस्तृणामि वैष्णवानिति ॥ अवस्तृणामि दर्भैराच्छादयामि ॥ अन्यत् पूर्ववत् ॥ कात्यायनः ॥ अधिषवणफलके द्व्यङ्गुलान्तरेऽरत्निमात्रे सतृण्णे इवोपदधाति, पर्यूहति च रक्षोहणावितीति ॥ ययोः फलकयोरुपरि सोमोऽभिषूयते । ते द्वे अधिषवणफलके । तयोरुभयोर्मध्यमं द्व्यङ्गुलव्यवहिते । ते चारत्निप्रमाणे अमतृण्णे इव दृढबन्धनरहिते ईषद्बन्धनोपेते तादृशी फलके चतुर्णां गर्तानाम् उपरि स्थापयेत् । तथा परितो मृदाच्छिद्य पिधानं कुर्यात् ॥ ४ ॥ तत्रायमुपधानमन्त्रः ॥ रक्षोहणौ वलगहना उपदधामि वैष्णवी इति ॥ यावधिषवणफलकविशेषौ तौ रक्षोहणौ वलगहनौ च वलगविनाशकौ, वैष्णवी विष्णुदेवताकौ उपदधामि द्वयोर्गर्तयोरुपरि एकैकं फलकं स्थापयामि ॥ अथ पर्यूहणमन्त्रः ॥ रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इति ॥ पर्यूहामि मृदोपरितश्छादयामि । अन्यत् पूर्ववत् ॥ कात्यायनः ॥ तयोश्चर्माधिषवणं परिकृत्तं सर्वरोहितं निदधाति वैष्णवमसीति ॥ यस्मिँश्चर्मणि सोमोऽभिषूयते तदधिषवणाख्यं तस्य चर्मणोऽग्रभागः परितश्छिन्नो भवति। सर्वमपि लोहितवर्णं तादृशं चर्म तयोः फलकयोरुपरि स्थापयेत् । हे चर्म, त्वं

वैष्णवमसि यज्ञरक्षकविष्णुसंबन्धि भवसि॥कात्यायनः ॥ तस्मिन् ग्रावाणः पञ्च वैष्णवाः स्थेतीति ॥ निदधातीत्यनुवर्तते । तस्मिँश्चर्मणि सोमाधिषवहेतुभूतान् पञ्चसंख्याकान् पाषाणानवस्थापयेत् । हे पाषाणाः,यूयं वैष्णवाः स्थ यज्ञरक्षकविष्णुसम्बन्धिनो भवथ ॥ ५ ॥ इति पञ्चमाध्याये षष्ठोऽनुवाकः ॥ ५ ॥ ६ ॥

षष्ठे उपरवनिर्माणमन्त्रा उक्ताः ॥ सप्तमे सदोनामकमण्डपस्य हविर्धानप्राचीनवंशयोर्मध्यवर्तिनो निर्माणाय मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ औदुम्बरीं मिनोति यजमानमात्रीं यूपवच्छेदेऽभ्यादि करोत्यवस्तरणादिवदिति ॥ उदुम्बरवृक्षादुत्पन्ना काञ्चिच्छाखा सदोमण्डपमध्ये निखनेत् । सा च शाखा यजमानदेहपरिमिता सती खननात् पूर्वं यूपवद् भूमौ चषिता यथा यूपस्यावटखनितुम् अभ्रिस्वीकारमारभ्य दर्भोपस्तरणपर्यन्तास्तत्तन्मन्त्रैरनुष्ठितास्तद्वदत्राप्यनुतिष्ठेदित्यर्थः ॥ यूपावटे प्रदेशे मन्त्रविनियोगः कात्यायनेनैवमभिहितः ॥ देवस्य त्वेत्यभ्रिमादायेति ॥

पाठस्तु ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नार्यसीति ॥ पूर्वोऽनुवाके व्याख्यातम् ॥ कात्यायनः ॥ अवटं परिलिखति इदमहमिति ॥ पाठस्तु ॥ इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि ॥ एतदपि पूर्वोऽनुवाके व्याख्यातम् ॥ कात्यायनः ॥ यवोऽसीत्यप्सु यवानोप्येति ॥ पाठस्तु ॥ यवोऽसि यवयास्मद् द्वेषो यवयारातीरिति ॥ हे धान्यविशेष, त्वं यवोऽसि मिश्रणभूतस्य यवनस्य कर्ता भवसि । तत् तस्मात् कारणाद् द्वेषो द्वेष्टॄन् शत्रून् अस्मद्यवय अस्मत्तः पृथक् कुरु । तथाऽरातीः अस्मदीयं धनमपहर्तुं पुनरस्मभ्यमदातॄनपि यवय पृथक्कुरु ॥ कात्यायनः ॥ प्रोक्षत्यऽग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रमिति ॥ तत्रायं प्रथमो मन्त्रः ॥ दिवे त्वेति ॥ हे औदुम्बर्यग्रभाग, त्वा दिवे द्युलोकप्रीत्यर्थं प्रोक्षामीति शेषः ॥ अथ द्वितीयः ॥ अन्तरिक्षाय त्वेति ॥ हे मध्यमभाग त्वामन्तरिक्षलोकप्रीत्यर्थं प्रोक्षामि ॥ अथ तृतीयः ॥ पृथिव्यै त्वेति ॥ हे मूलभाग त्वां पृथिवीप्रीत्यर्थं प्रोक्षामि ॥ १ ॥ कात्यायनः ॥ अवटे शेषमासिञ्चति । शुन्धन्तामिति ॥ पाठस्तु ॥ शुन्धन्ताँल्लोकाः पितृषदना इति ॥ पितरः सीदन्ति येषु लोकेषु ते पितृषदना लोकाः शुन्धन्ताम् अनेनोदकसेचनेन शुद्धा भवन्तु । खननेनोत्पन्नस्य क्रौर्यस्य शान्त्यर्थम् इदमुदकसेचनम् । तदाह तित्तिरिः ॥ क्रूरमिव वा एतत्करोति यत्खनत्यपोऽवनयति शान्त्या इति ॥ कात्यायनः ॥ बर्हिंषि

प्राच्युदञ्चि च भास्यति पितृषदनमसीतीति ॥ तस्मिन्नवटे प्रागग्रानुदग्रांश्च दर्भानास्तृणीत । पितरः सीदन्त्युपविशन्ति यस्मिंस्तत् पितृषदनम् । हे बर्हिस्त्वं तथाविधमसि ॥ कात्यायनः ॥ उदिवमित्युच्छ्रयतीति ॥ उच्छ्रयणं मूर्ध्नाग्रत्वेन स्थापनम् ॥ पाठस्तु ॥ उदिवᳪ स्तभानान्तरिक्षं पृण दृᳪहस्व पृथिव्यामिति ॥ हे औदुम्बरि, त्वं दिवं द्युलोकम् उत्तभान ऊर्ध्वं स्थित्वा यथा न पतति तथा द्युलोकं स्तम्भय । अन्तरिक्षं पृण सर्वतः पूरय । पृथिव्यां दृᳪहस्व दृढा भव । यद्वा पृथिवीं दृढीकुरु ॥ २ ॥ कात्यायनः ॥ द्युतान इति मिनोति पर्यूहणाद्युपसेचनान्तं कृत्वेति ॥ पर्यूहणमारभ्योपसेचनपर्यन्तं यथा यूपे कृतं तथात्रापि कुर्यात् । तस्मिन्नवटे यूपं खनेत् ॥ पाठस्तु ॥ द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणेति ॥ हे औदुम्बरि त्वा त्वां द्युतानो दीप्यमानो मारुतो वायुर्ध्रुवेण स्थैर्येण धर्मणा धारणेन मिनोतु । डुमिञ् प्रक्षेपण इति धातुः । तथा मित्रावरुणावेतन्नामकौ देवौ प्रक्षिपतामिति शेषः ॥ कात्यायनः ॥ पर्यूहणाद्युपसेचनान्तं कृत्वेति ॥ पर्यूहणमारभ्य उपसेचनपर्यन्तं यथा यूपे कृतं तथाऽत्रापि कुर्यादित्यर्थः । तत्र यूपस्थानप्रदेशे मन्त्रविनियोगः कात्यानेनैवमभिहितः । ब्रह्मवनि त्वेति पशुभिः पर्यूहतीति ॥ पाठस्तु ॥ ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामीति ॥ हे औदुम्बरि, त्वा त्वां पर्यूहामि परितो मृत्तिकां परिक्षिपामि । कीदृशीं त्वाम् । ब्रह्मवनि । ब्राह्मणजातिं वनस्पतिं सम्भजत इति ब्रह्मवनिः । क्षत्रियजातिं सम्भजत इति क्षत्रवनिः । रायो धनस्य पुष्टिं सम्भजत इति रायस्पोषवनिः । सर्वत्र सुपां सुलुगिति विभक्तेर्लुक् । शाखान्तरेऽपि स्पष्टमाम्नायते ॥ ब्रह्मवनिं त्वा क्षत्रवनिᳪ सुप्रजावनिᳪ रायस्पोषवनिं पर्यूहामीति ॥ ३ ॥ कात्यायनः ॥ ब्रह्म दृᳪहेति मैत्रावरुणदण्डेन समन्तत्रिः पर्यूहतीति ॥ परितो दृढीकुर्यादित्यर्थः ॥ पाठस्तु ॥ ब्रह्म दृᳪह क्षत्र दृᳪहायुर्दृᳪह प्रजां दृᳪहेति । हे औदुम्बरि, ब्राह्मणजातिं क्षत्रियजातिमायुष्यं पुत्रादिरूपां प्रजां च दृढीकुरु ॥ कात्यायनः ॥ ध्रुवासीति वाचयत्यौदुम्बरीमारभ्येति ॥ आरम्भणं स्पर्शनम् ॥ पाठस्तु ॥ ध्रुवासि ध्रुवोऽस्मिन् यजमान आयतने भूयादिति ॥ हे औदुम्बरि त्वं ध्रुवासि स्थिरा भवसि । त्वमिव यजमानोऽस्मिँल्लोके स्वकीय आयतने ध्रुवो भूयात् । स्थिरो भवतु ॥ कात्यायनः ॥ विशाखे जुहोति घृतेन द्यावापृथिवी इति ॥ औदुम्बर्याः सम्बन्धिनि यस्मिन्

प्रदेशे द्विविधशाखोत्पत्तिस्तत्र जुहुयात् ॥ पाठस्तु ॥ घृतेन द्यावापृथिवी पूर्येथामितीति ॥ हूयमानेन घृतेन द्यावापृथिव्यौ सर्वतः पूरिते भवेताम् ॥ कात्यायनः ॥ इन्द्रस्य छदिरिति मध्यमं छदिरारोप्येति । औदुम्बरीनिखननादूर्ध्वं सदोनामकं मण्डपं निर्माय तस्योपरि प्रावरणार्थं मध्यमं कटमारोपयेत् ॥ पाठस्तु ॥ इन्द्रस्य छदिरसि विश्वजनस्य छायेति ॥ छदिःशब्देन तृणनिर्मितः कट उच्यते । हे तृणनिर्मित, त्वम् इन्द्रस्य छदिरसि । इन्द्रसम्बन्धिकटो भवसि । अतस्त्वां प्रावरणाय सदोमध्यमवर्तिनो विश्वजनस्य यजमानलिङ्गरूपस्य सर्वप्राणिनश्छाया भूयादिति शेषः । सदस इन्द्रदेवताकत्वेन त्वदीयच्छदिष इन्द्रसम्बन्धित्वम् ॥ ४ ॥ कात्यायनः ॥ परि त्वेति परिवार्येति ॥ परितः कुड्यवदावरणं कृत्वेत्यर्थः ॥ पाठस्तु ॥ परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टय इति ॥ इन्द्रः सदोऽभिमानी गिर्वणाः । हे गिर्वणः, इमाः स्तोत्रशस्त्ररूपा गिरस्त्वां सर्वतः कटरूपेण परिभवन्तु वेष्टयन्तु । कीदृश्यः दीर्घायुषं त्वामनु त्वमपि वृद्धिमत्यः । किञ्च जुष्टयोऽस्मत्सेवास्तव जुष्टाः प्रिया भवन्तु ॥ ५ ॥ कात्यायनः ॥ परिषीवणग्रन्थ्यभिमर्शनान्यैन्द्रैरिति ॥ इन्द्रदेवताकैस्त्रिभिर्मन्त्रैः परिषीवणादित्रयं कुर्यात् ॥ तत्रायं प्रथमः ॥ इन्द्रस्य स्यूरसीति ॥ हे रज्जो त्वं सदोऽभिमानिदेवस्येन्द्रस्य सम्बन्धिनी सती स्यूरसि ग्रन्थिसिद्ध्यर्थं स्यूता भवसि ॥ अथ द्वितीयः ॥ इन्द्रस्य ध्रुवोऽसीति ॥ हे ग्रन्थे त्वम् । इन्द्रसम्बन्धी भूत्वा स्थिरो भवसि ॥ अथ तृतीयः ॥ ऐन्द्रमसीति ॥ हे सदस्त्वम् इन्द्रसम्बन्धि भवसि ॥ कात्यायनः ॥ हविर्धानापरान्तमुत्तरेणाग्नीध्रमग्न्यगारं मित्वाय वैश्वदेवमसीत्यालभत इति ॥ हविर्धानमण्डपस्यापरान्तो वायव्यकोणस्तस्योत्तरभागे किञ्चिदाग्नीध्रनामकमग्निस्थानं कृत्वा तस्य स्पर्शनं कुर्यात् । हे आग्नीध्र, त्वं वैश्वदेवमसि सर्वदेवसंबन्धी भवसि ॥६॥ इति पञ्चमेऽध्याये सप्तमोऽनुवाकः ॥५॥७॥

सप्तमे सदोनिर्माणमन्त्रा उक्ताः ॥ अष्टमे धिष्ण्यनिर्माणमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ धिष्ण्यानि निर्वपति विभूरसीति प्रतिमन्त्रमिति ॥ अग्नीनामाश्रयभूता मृत्तिकया निर्मिता स्वल्पवेदिका धिष्ण्यानि इत्युच्यन्ते । चात्वाले खातया मृत्तिकया धिष्ण्यानि निर्वपेत् । तदाह तित्तिरिः ॥ चात्वाला धिष्ण्यानुपवपतीति ॥ तत्राय धिष्ण्यार्थः प्रथमो मन्त्रः ॥ विभूरसि प्रवाहण इति ॥ विभूशब्दप्रवाहणशब्दावाग्नीध्रधिष्ण्यस्य नामनी । ते वै द्विनामान इति कण्वेन

भूत ऊनातिरिक्तस्येत्यादिको मन्त्रभागः । यद्यपि कात्यायनो, रौद्रेणेति स-र्वेष्वित्युवाच, न न्यूनातिरिक्तस्येति तथापि रौद्रेणेत्यस्याङ्गस्योपलक्षणत्वादूना-ऽतिरिक्तस्येत्यादिकः सर्वोऽपि मन्त्राणामुक्तानां शेष इति द्रष्टव्यम् ॥ पाठस्तु ॥ ऊनातिरिक्तस्य प्रतिष्ठा । अग्नयः सगराः सगरा स्थ सगरेण नाम्ना रौद्रेणानी-केन पात माग्नयः पिपृत माग्नयो नमो वोऽस्तु मा मा हिꣳसिष्टेति ॥ वि-भूरसीत्यादिभिः प्रतिपादिता ये धिष्ण्यरूपा अग्नयस्ते सर्वे कर्मणि ऊनाति-रिक्तस्य न्यूनातिरिक्तांशस्य प्रतिष्ठा स्थितिहेतवः संपूर्तिकारिणः। विहितस्यैकदे-शस्य परित्यागे कर्म न्यूनं भवति । अधिकस्यापि कस्यचिदनुष्ठानेऽतिरिक्तं भवति । तदुभयविधदोषपरिहारेण संपूर्तिमेतेऽग्नयः कुर्वन्तीत्येतेषां प्रतिष्ठा । ते चाऽग्नयः सगराः समानस्तुतयः।गृ स्तुताविति धातुः। सर्वेषां द्विनामत्वात् समान-स्तुतित्वम्। हे अग्नयः, यूयं सगरेण नाम्ना सगर इत्यनेन शब्देन सर्वे व्यवह्रियमा-णत्वात् सगराः स्थ सगरशब्दाभिधेया भवथ । ते यूयम् अग्नयो रौद्रेणानीकेन शत्रुविनाशकत्वादुग्रेण भवदीयेन मा पात मां रक्षत । हे अग्नयो, मा पिपृत धनादिभिर्मां पूरयत । वो युष्मभ्यम् । नमो वोऽस्तु । नमस्कारो भवतु । मा मा हिंसिष्ट । अनुष्ठातारं मां मा बाधिष्ट ॥ ५ ॥ इति पञ्चमाध्यायेऽष्टमो-ऽनुवाकः ॥ ५ ॥ ८ ॥

बलमसि । तस्मै वरूथं तुभ्यं इदं हुतमस्तु । शालामुखीयो योऽग्निर्यश्च तस्याग्नेः समीपे स्थापितः सोमस्तदुभयमाग्नीध्रादिप्रदेशेषु नीत्वा पश्चादग्नीषोमीयपशुरारब्धव्यः । ततः सोमं नेतुं तत्रादिश्यासावाज्याहुतिर्हुता ॥ कात्यायनः ॥ जुषाणो अप्तुरिति द्वितीयामिति ॥ जुहोतीत्यनुवर्तते ॥ पाठस्तु ॥ जुषाणो अप्तुराज्यस्य वेतु स्वाहेति ॥ हे सोम, त्वं जुषाणोऽस्मासु प्रीतिमान् रससामर्थ्यनाप्तुरल्पदेहः सन्नाज्यस्य वेतु आज्यं पिब, तदेवेदं हुतमस्तु ॥ ॥ १ ॥ कात्यायनः ॥ अग्ने नयेति वाचयतीति ॥ पाठस्तु ॥ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेमेति ॥ हे अग्ने, हे देव, विश्वानि वयुनानि विद्वान् सर्वान्मार्गानभिजानानस्त्वमस्माननुष्ठातॄन् राये धनलाभाय सुपथा नय शोभनमार्गेण प्रापय । जुहुराणं कुटिलं फलप्रतिबन्धकं यदेनः पापमस्ति तत् सर्वम् । अस्मद् युयुधि अनुष्ठातृभ्यः पृथक् कुरु । ते तुभ्यं भूयिष्ठामतिबहुलां नमउक्तिं नमस्कारविषयां वाचं विधेम सम्पादयामः ॥ २ ॥ कात्यायनः ॥ उत्तरेण सदो हृत्वाग्नीध्रेऽग्निं निदधाति ग्रावद्रोणकलशसोमपात्राणि वाऽयं न इति जुहोतीति ॥ शालामुखीयमग्निं ग्रावादीनि सदस उत्तरभागे नीत्वाऽग्नीध्रमण्डपे निधाय तत्रत्यो धिष्ण्यगते ग्रावाज्येन जुहुयात् ॥ पाठस्तु ॥ अयन्नोऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुर एतु प्रभिन्दन् । अयं वाजाञ्जयतु वाजसाता अय॰ शत्रूञ्जयतु जर्हृषाणः स्वाहेति ॥ अयमग्निर्नोऽस्माकं वरिवो धनं कृणोतु करोतु । अयमेवाग्निर्मृधः सङ्ग्रामान् पुरः अग्रतः प्रभिन्दन् वैरिणो विदारयन्नेतु गच्छतु । अयमेवाग्निर्वाजसातौ सङ्ग्रामे वाजान् शत्रुसम्बन्धीन्यन्नान्यस्मभ्यं दातुं जयतु । ततोऽयमेवाग्निर्जर्हृषाणः अत्यर्थं हृष्यन् शत्रून् जयतु ॥ ३ ॥ कात्यायनः ॥ उरुविष्ण इति जुहोतीति ॥ पूर्वमन्त्रेणाग्नीध्रीये होमः । अनेन त्वाहवनीये ॥ पाठस्तु ॥ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेति ॥ हे विष्णो व्यापिन्नाहवनीयास्मदनुग्रहार्थम् । उरु विक्रमस्व । शत्रुषु बहुलं पराक्रमं कुरु । नोऽस्माकं क्षयाय निवासार्थम् उरु कृधि बहुधनाधिकं संपादय । घृतेन ज्वालोद्भवाद् घृतयोनिः । हे घृतयोने, हूयमानमिदं घृतं पिब । यज्ञपतिं च यजमानं प्रतिर अतिशयेन वर्धय ॥ ४ ॥ कात्यायनः ॥ दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन् सोमं निदधाति देव सवितरिति ॥ दक्षिणे

शकटे कृष्णाजिनस्याऽऽस्तरणं कृत्वा तस्मिन् सोमं निदध्यात् ॥ पाठस्तु ॥ देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्निति ॥ हे सवितः, सर्वस्य प्रेरक देव, एष सोमस्ते तवार्पितः । तं तादृशं सोमं रक्ष पालय । मा त्वा दभन् एवम्भूतस्य सोमस्य पालारं त्वाम् । असुरा मा हिंसिषुः ॥ कात्यायनः ॥ एत त्वमिति विसृज्योपतिष्ठत इति ॥ कृष्णाजिने स्थापितं बद्धं सोमं विसृज्योपस्थानं कुर्यात् ॥ पाठस्तु ॥ एत त्वं देव सोमदेवो देवाꣳऽउपागाः । इदमहं मनुष्यान्त्सह रायस्पोषेणेति ॥ हे सोमदेव, त्वं देवः सन् भवदीयान् देवान् एत इदानीमुपागाः । प्राप्तोऽसि । अहं मनुष्यो यजमानो मदीयान्मनुष्यानिदमिदानीं सह रायस्पोषेण पश्वाद्धनेन सार्धं प्राप्तोऽस्मि ॥ कात्यायनः ॥ स्वाहा निरिति निष्क्रम्येति ॥ हविर्धानमण्डपान्निर्गत्येत्यर्थः ॥ पाठस्तु ॥ स्वाहा निर्वरुणस्य पाशान्मुच्य इति ॥ स्वाहा सोमरूपमन्नं देवेभ्यो दत्तमस्तु । अनेन सोमप्रदानेन अहं वरुणस्य पाशान्निर्मुच्ये निर्मुक्तोऽस्मि ॥ कात्यायनः ॥ अग्ने व्रतपा इत्याहवनीये समिधमाधायेति ॥ पाठस्तु ॥ अग्ने व्रतपास्त्वे व्रतपाः । या तव तनूर्मय्यभूदेषा सा त्वयि या मम तनूस्त्वय्यभूदियꣳ सा मयि । यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरमꣳस्तानु तपस्तपस्पतिरिति ॥ हे अग्ने, व्रतपाः स्वभावतः सर्वेषां व्रतानां पालकोऽसि । तस्मादिदानीमपि त्वमेव व्रतपाः । त्वं मदीयस्य व्रतस्य पालको भवेति शेषः । शाखान्तरे तु त्वमित्येव पठितम् । अग्ने व्रतपते त्वं व्रतानां पतिरसीति पूर्वत्रापत्य इत्यनुवाके यजमानोऽग्निशरीरस्वशरीरयोर्व्यत्ययं कृत्वा स्वकीयव्रतपालनं प्रार्थयामास । इदानीं व्रतस्य पालितत्वात् तं व्यत्ययं परिहृत्य स्वशरीरस्वीकाराभिप्रायेणाग्निव्रतपाः—तव तनूरित्यादिमन्त्रभागं पठति ॥ हेऽग्ने व्रतपालनप्रार्थनकाले तव सम्बन्धिनी या तनूर्मय्यवस्थिता सैषा तनूरद्य त्वय्यवतिष्ठताम् । हे व्रतपते, हे व्रतपालकाग्ने, नौ व्रतानि आवयोः कर्माणि यथायथं स्वस्वसम्बन्धमनतिक्रम्याऽवतिष्ठतामिति शेषः । अनुष्ठानरूपं व्रतं ममास्तु तत्पालनरूपं व्रतं तवास्तु इत्यर्थः । मे दीक्षां मदीयां दीक्षां दीक्षार्थं नियमं दीक्षापतिर्दीक्षायाः पालकोऽग्निस्त्वममंस्त अनुमतवानङ्गीकृतवानित्यर्थः । तपस्पतिस्तपसः पालकोऽग्निस्तपोऽनु मदीयं तपोऽनुमतवान् ॥ ५ ॥ ६ ॥ ७ ॥ इति पञ्चमाध्याये नवमोऽनुवाकः ॥ ९ ॥ ९ ॥

नवमे वैसर्जनहोमादिमन्त्रा उक्ताः ॥ दशमे यूपसंपादनमन्त्रा उच्य-

न्ते ॥ कात्यायनः ॥ गृहेषु यूपाहुतिं जुहोति चतुर्गृहीतम् स्रुवेणोरु विष्ण-विगीति ॥ स्वगृहेऽवस्थाय चतुर्वारं गृहीतमाज्यं स्रुवेण जुहुयात् । सेयं यूपाहुतिः ॥ पाठस्तु ॥ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेति ॥ पूर्वानुवाके व्याख्यातः ॥१॥ कात्यायनः ॥ आज्यशेषमादाय तक्षा गच्छति । यूपमभिमृश्यत्यन्यानितिप्राङ् तिष्ठन्नभिमन्त्रयते इति ॥ यूपस्य तक्षणार्थं गत्वा यूपमभिमृशेदभिमन्त्रयेद्वा ॥ पाठस्तु ॥ अत्यन्यांऽअगान्नान्यांऽउपागामर्वाक्त्वा परेभ्यः परोवरेभ्यः । तं त्वा जुषामहे देववनस्पते देवयज्यायै । देवास्त्वा देवयज्यायै जुषन्तामिति ॥ वृक्षा द्विविधाः— यूपा अयूपाश्च । पलाशखदिरादयो यूपाः । निम्बजम्बीरादयस्त्वयूपाः । हे पुरोवर्तियूपवृक्ष, त्वत्तोऽन्यान्काँश्चिद्यूप्यानपि समदेशजन्मादिलक्षणरहितानत्यगाम् । अन्याँस्त्वयूपान्नोपागाम् । कीदृशम् अर्वाक् परेभ्यः उत्कृष्टेभ्यो लक्षणेभ्यः मत्यासन्नम् तल्लक्षणयुक्तमित्यर्थः । पुनः कीदृशम् । परोवरेभ्यः अत्यन्तनिकृष्टेभ्यो लक्षणेभ्यो दूरवर्तिनं तद्रहितमित्यर्थः । किञ्च, हे वनस्पते, हे देव, वस्य पालक, दीप्यमानवृक्ष, तं तादृशं त्वां देवयज्यायै देवयागार्थं जुषामहे वयं सेवामहे । देवा अपि देवयागार्थं त्वां सेवन्ताम् ॥ कात्यायनः ॥ स्रुवेणोपस्पृशति विष्णवे त्वेति॥हे यूपवृक्ष, त्वा त्वां विष्णवे यज्ञार्थमुपस्पृशामीति शेषः । यज्ञो वै विष्णुरिति श्रुतेः ॥ २ ॥ ३ ॥ कात्यायनः ॥ ओषध इति कुशतरुणं तिरस्कृत्येति॥यूपवृक्षस्य कुशमन्तर्द्धानं कुर्यात्, त्रायस्वेतिमन्त्रशेषः । हे ओषधे त्रायस्व मां स्वधितिभयाद्वृक्ष ॥ कात्यायनः ॥ स्वधित इति परशुना प्रहरतीति ॥पाठस्तु॥ स्वधिते मैनम् हिंसीरिति ॥ हे स्वधिते, हे परशो, एनं यूपं मा हिंसीः मा वधीः ॥ कात्यायनः ॥ दिवं मा लेखीरिति पतन्तमभिमन्त्रयत इति ॥ पाठस्तु ॥ दिवं मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्या सम्भवेति ॥ हे यूपवृक्ष, त्वं पतन् दिवं द्युलोकं मा लेखीः मा हिंसीःअन्तरिक्षलोकं च मा हिंसीः । पृथिव्या सम्भव सह सङ्गतो भव । यूपस्य वज्ररूपत्वाद् अतो लोकानां शान्तिराशास्यत इत्यभिप्रायः ॥ ४ ॥ कात्यायनः ॥ अयम् हि त्वेति शोधनमभिमन्त्रणशेषो वेति ॥ अनेन मन्त्रेण यूपं शोधयेत् । पूर्वमन्त्रेण सहाभिमन्त्रयेद्वा ॥ पाठस्तु ॥ अयम् हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति ॥ हि यस्माद्, हे छिन्नवृक्ष, तेतिजानस्तीक्ष्णोऽयं स्वधितिः कुठारस्त्वा त्वां महते सौभगाय दर्शनीयत्वाय तिर्यक्कृता-

स्वोच्छेदनेन भणितायं प्रकृष्टं यूपत्वं प्रापयामास । ततस्तादृशेन त्वया छेदनात्र भेतव्यम् ॥ कात्यायनः ॥ अतस्त्वमित्याव्रश्चने जुहोति यूपवश्चेति ॥ पाठस्तु ॥ अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेमेति ॥ हे दीप्यमान वनस्पते, त्वम् अतोऽस्मात् स्थाणोः शतवल्शो बह्वङ्कुरः शतशाखो विरोह विशेषेण जायस्व । एवञ्च सहस्रवल्शाः पुत्रपौत्रादिभिर्बहुशाखोपेता विशेषेण रुहेम । प्रजायेमहीति यजमानेनाशास्यत इत्यभिप्रायः ॥ ९ ॥

इति पञ्चमाध्याये दशमोऽनुवाकः ॥ ९ ॥ १० ॥

अथ विनियोगसंग्रहः—

अथ सौमिकवेद्यर्थमन्त्राणां प्रतिपादके ॥
पञ्चमेऽध्याय एतस्मिन्ननुवाका दशेरिताः ॥ १ ॥
आतिथ्यादिस्तथा तानूनप्त्रमुत्तरवेदिका ॥
तत्संस्कारा हविर्धानं ततश्चोपरि वा सदः ॥
धिष्ण्यवैसर्जनं यूप इत्यर्था अनुवाकगाः ॥ २ ॥

इति श्रीमद्राजाऽधिराज-परमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसꣳहिताभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

# अथ शुक्लयजुर्वेदकाण्वसंहिताभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

सौमिकवेदिप्रधाने पञ्चमेऽध्याये आतिथ्यामारभ्य यूपनिर्माणमन्त्रा उक्ताः ॥ अथाग्नीषोमीयपशुप्रधाने षष्ठे यूपसंस्कारमारभ्य सोमाभिषवोद्योगपर्यन्ता मन्त्रा उच्यन्ते ॥ तत्रास्मिन् प्रथमानुवाके यूपसंस्कारमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ देवस्य त्वेत्यभ्रिमादाय यूपावटं परिलिखति इदमहमिति । यवोऽसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि दिवेति प्रतिमन्त्रमवटे शेषमासिञ्चति शुन्धन्तामिति । बर्हींषि प्राञ्च्युदञ्चि च प्रास्यति पितृषदनमसीति ॥ एतेषां मन्त्राणां पाठस्तु—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नार्यसीदमहꣳ रक्षसो ग्रीवाऽअपि कृन्तामि ॥ यवोऽसि यवयास्मद्द्वेषो यवयारातीः । दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा । शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसीति ॥ एते मन्त्राः पूर्वत्र औदुम्बरीविषये यथा व्याख्यातास्तद्वदत्रापि यूपविषये व्याख्यातव्याः ॥ १ ॥ कात्यायनः ॥ प्रथमं शकलं चाग्रेणीरसीति ॥ यूपावटे शकलं निक्षिपेदित्यर्थः ॥ पाठस्तु ॥ अग्रेणीरसि स्वावेश उन्नेतॄणामेतस्य वित्तादधि त्वा स्थास्यतीति ॥ हे यूपशकल, स्वावेशः शोभन आवेशो यूपावस्थितिलक्षणो यस्मिन् तादृशस्त्वम् । यूपस्य त्रयो नेतारः प्रथमशकलः स्वरुश्चषालश्चेति । तेषामूर्ध्वनेतॄणां मध्ये अग्रे प्रथमं नीयत इत्यग्रेणीरसि । यूपस्य प्रथमावयवभूतो भवसीत्यर्थः । किञ्च, त्वा त्वां यस्माद् कर्मणि अध्वर्युरधिष्ठास्यति स्थापयिष्यति । त्वम् एतस्यैतत् कर्म वित्ताद् विद्धि ॥ कात्यायनः ॥ देवस्त्वेत्यनक्तीति ॥ यूपमिति शेषः ॥ पाठस्तु ॥ देवस्त्वा सविता मध्वानक्त्विति ॥ हे यूप, त्वा त्वा सविता प्रेरको देवो मध्वा मधुरेणाज्येनानक्तु ॥ कात्यायनः ॥ चषालमुभयतोऽक्तं प्रतिमुञ्चति सुपिप्पलाभ्य इतीति ॥ अधस्तादुपरिष्टादाज्येन सिक्तं यूपस्याग्रेऽवस्थापयेत् ॥ पाठस्तु ॥ सुपिप्पलाभ्यस्त्वौषधीभ्य इति ॥ हे चषाल, त्वा त्वां सुपिप्पलाभ्यः शोभनफलोपेताभ्यः औषधीभ्यो यूपस्याग्रे प्रतिमुञ्चामीति शेषः ॥ कात्यायनः ॥ दिवमग्रेणेत्युच्छ्रयतीति ॥ उन्नतं कुर्यात् ॥ पाठस्तु ॥ दिवमग्रेणास्पृक्ष

कुर्यादित्यर्थः ॥ कात्यायनः ॥ देवस्य त्वेति यूप इति ॥ पशुं बध्नीयादिति शेषः ॥ पाठस्तु ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। अग्नीषोमाभ्यां जुष्टं नियुनज्मीति ॥ अग्नीषोमदेवताभ्यां जुष्टमभिरुचितं पशुं नियुनज्मि पशुं बध्नामि शिष्टं व्याख्यातम् ॥ कात्यायनः ॥ अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षतीति ॥ पाठस्तु ॥ अद्भ्यस्त्वौषधीभ्यः प्रोक्षाम्यनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः। अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति ॥ हे पशो, त्वामद्भिरोषधीभिश्च प्रोक्षामि मेध्यं करोमि। दर्भैरपामुत्पूतत्वादस्त्योषधीनामपि प्रोक्षणसाधनत्वम्। त्वमातृणीकृताभ्यां तृणोदकाभ्यां पशोरुत्पन्नत्वात् तेनोभयेन शुक्लमिति तित्तिरिरप्याह ॥ अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः सम्भवति यत् पशुरिति ॥ किञ्च, हे पशो, एवं प्रोक्ष्यमाणं त्वा माता भूमिः अनुमन्यताम्। तथा पिता द्यौरनुमन्यताम्। एवमुत्तरत्रानुमन्यतामिति प्रत्येकं सम्बध्यते। भ्राता समानजन्मा सगर्भ्यः समानगर्भे उदरे भवः सोदरः सहैव व्याख्यातः इति सखा सुहृत्। समानयूथे भवः सयूथ्यः। अग्नीषोमाभ्याम् एवम्भूतं त्वां जुष्टमभिरुचितं प्रोक्षामि ॥ १ ॥ २ ॥ ३ ॥ कात्यायनः ॥ अपां पेरुरित्यस्य उपगृह्णातीति ॥ पशोर्मुखे उदकं ग्राहयेत्। असीति मन्त्रशेषः। हे पशो, त्वम् अपां पेरुरसि। पेरुः पानशीलः। उदकपानशीलो भवसि ॥ कात्यायनः ॥ आपो देवीरित्यधस्तादुपोक्षतीति ॥ पशोरधोभागं प्रोक्षयेत् ॥ पाठस्तु ॥ आपो देवीः स्वदन्तु। स्वात्तं चित्सदेवहविरिति ॥ हे पशो, त्वाम् आपो देवीः अबूपाः देव्यः स्वदन्तु आस्वादयन्तु। स्वात्तं स्वकीयतया आत्तं, चित् अतिस्वादु सत्। देवहविः। देवानामेव योग्यं हविर्भूयात्। अद्भ्यस्त्वेत्यतन्मन्त्रत्रयेणावश्यमनुप्रेयमिनीति तित्तिरिराह ॥ उपरिष्टात् प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्युत्तरत एवैनं मेध्यं करोत्यधस्तादुपोक्षति सर्वत एवैनं मेध्यं करोतीति ॥ ४ ॥ कात्यायनः ॥ उत्तराघारमाघार्य पशुं पूर्वं समनक्ति। ललाटांसश्रोणिषु सं त इति प्रतिमन्त्रमिति ॥ ललाटे तावदयं मन्त्रः ॥ पाठस्तु ॥ सं ते प्राणो वातेन गच्छतामिति ॥ हे पशो ते तव प्राणो वातेन वायुना सगच्छताम्। अंसयोरयं मन्त्रः ॥ समङ्गानि यजत्रैरिति ॥ अंसाद्यङ्गानि यजत्रैर्यागैः सङ्गच्छताम्। श्रोण्योरयं मन्त्रः ॥ सं यजमान आशिषेति ॥ अथ यजमानो दीर्घेणाऽऽयुषा संगच्छताम् ॥ ५ ॥ कात्यायनः ॥

आहर शाखां समाहर यूपशकलमाहरस्त्युक्तोऽभौ जुहग्रे ताभ्यां पशोर्ललाटमुपस्पृशानि घृतेनाक्ताविति ॥ अध्वर्युरितरं प्रति, पलाशशाखां यूपशकलं च समाहरेति ब्रूयात् । ततः समाहृतौ तावुभौ जुह्वाग्रभागे आज्येनाक्ताभ्यां ताभ्यां पशोर्ललाटमुपस्पृशेत् ॥ पाठस्तु ॥ घृतेनाक्तौ पशुं त्रायेथामिति ॥ हे शाखे यूपशकल, युवामुभौ घृतेनाक्तौ सन्तौ पशुमेनं त्रायेथां पालयेथाम् ॥ ६ ॥ कात्यायनः ॥ रेवति यजमाने इति वाचयति ॥ पाठस्तु ॥ रेवति यजमाने प्रियं धा आविश । उरोरन्तरिक्षात् सजूर्देवेन वातेन । अस्य हविषस्त्मना यज समस्य तन्वा भवेति ॥ रेवतीशब्दो धनवती वाग्देवतामाचष्टे ॥ वाग् वै देवतेति श्रुतिः । हे रेवति वाग्देवते, यजमानेऽस्मिन् प्रियमभिमेतं धाः धेहि । आविश ज्ञानप्रदानेन यजमानं प्रविश । हे रेवति, वातेन वायुना देवेन सजूः समानप्रीतिर्भूत्वा उरोर्विस्तीर्णादन्तरिक्षाद्यजमानं गोपायेति शेषः । किञ्च, अस्य पशुलक्षणस्य हविषः त्मना आत्मना यज आत्मना यजमानस्य पशोस्तन्वा शरीरेण संभव । हे रेवति, यजमानरूपेण आत्मरूपेण पशुरूपेण च यजेत्यर्थः ॥७॥ कात्यायनः ॥ तृणमुपास्य वर्षो वर्षीयसीति ॥ निहननीयस्य पशोर्भूमिस्पर्शपरिहारार्थमग्रस्तादभूमौ प्रक्षिपेत् ॥ पाठस्तु ॥ वर्षो वर्षीयसि यज्ञे यज्ञपतिं धा इति ॥ हे वर्षो, वृष्टिजन्ये तृणदेवते, वर्षीयसि विस्तीर्णतरे यज्ञे यज्ञपतिं यजमानं धाः । धेहि ॥ कात्यायनः ॥ स्वाहा देवेभ्य इति जुहोतीति ॥ पशुसञ्ज्ञपनात् प्राक्कालीनोऽयं होमः ॥ कात्यायनः ॥ देवेभ्यः स्वाहा जुहोतीति ॥ मन्त्रयोरनयोः सत्यप्यर्थैक्ये पाठभेदस्य तात्पर्यं तित्तिरिराह ॥ पुरस्तात् स्वाहाकृतयो अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेति ॥ कात्यायनः ॥ नियोजनीं चात्वाले प्रास्यति माहिर्भूरिति ॥ नितरां योजनं नियोजनं बन्धनम् । तद्धेतुभूतां रज्जुं चात्वाले प्रक्षिपेत् ॥ पाठस्तु ॥ माहिर्भूर्मा पृदाकुरिति ॥ हे रज्जो, त्वम् अहिः सर्पाकारो माभूर्मा भूयाः । पृदाकुरजगरोऽपि मा भूयाः ॥८॥ इति षष्ठाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

द्वितीये पशुप्रकरणादिमन्त्रा उक्ताः ॥ तृतीये संज्ञप्तपश्वाख्यहविःसंस्कारमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ पात्नेजनहस्तां वाचयति नमस्त आतानेतीति ॥ पादप्रक्षालने तु पशुशुद्ध्यर्था आपः पान्नेजनशब्देनोच्यन्ते । तदुदकधारणं पात्रं पान्नेजनं, तद्धस्ते यस्याः पत्न्याः सा पान्नेजनहस्ता । ताम् ऋत्विग्यदासनयानपत्नि तदामीमेत मन्त्रं वाचयेत् ॥ पाठस्तु ॥ नमस्त आताना-

ऽनर्वा प्रेहि । घृतस्यकुल्याउपऋतस्य पथ्या अपदेवीरापःशुद्धावोढ्वᳪसुपरिविष्टा देवेषुसुपरिविष्टा वयं परिवेष्टारो भूयास्मेति ॥ आसमन्तात्तन्यत इत्याततो यज्ञः । हे याज्ञायज्ञ, ते तुभ्यं नमः । नमस्कारोऽस्तु । त्वम् अनर्वा शत्रुरहितः सन् प्रेहि समाप्तिपर्यन्तं प्रकर्षेणागच्छ । इमं मन्त्रभागं शत्रुरहितार्थमिति तित्तिरिराह । अनर्वा प्रेहीत्याह भ्रातृव्यो वा अभ्रातृव्यापनुत्त्या इति ॥ घृतस्य कुल्याः घृतनदीः उपगच्छ । किञ्च, ऋतस्य यज्ञस्य पथ्याः पथि भवास्ता नदीरुपप्रेहीति सम्बन्धः । अत्र बहुघृतमाहुतमित्यभिप्रायः । एवं यज्ञं स्तुत्वेदानीमापः स्तूयन्ते । हे सुपरिविष्टाः पात्रेषु पूरिता देवीः । हे देव्य आपः, यूयं स्वभावतः संस्कारतश्च शुद्धाः सत्यो देवेषु विषयभूतेषु यज्ञं वोढुम् । वह प्रापणे । वहत । देवेषु मध्येऽवस्थिताः परिवेष्टारस्तेषां देवानां परिवेषणकर्तारो भूयास्म ॥ १ ॥ २ ॥ कात्यायनः ॥ पशोः प्राणान् शुन्धति पत्नी मुखनासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान् संहत्य वाचं ते शुन्धामीति प्रतिमन्त्रमिति ॥ पशुसम्बन्धीनि प्राणस्थानानि मुखादिच्छिद्राणि पत्नी तत्तन्मन्त्रेण शोधयेत् । वाचं ते शुन्धामीत्यादि चरित्राᳪस्ते शुन्धामीत्यन्ता अष्टौ मन्त्राः ॥ तेषां पाठस्तु ॥ वाचं ते शुन्धामि प्राणं ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रं ते शुन्धामि मेढ्रं ते शुन्धामि पायुं ते शुन्धामि चरित्राᳪस्ते शुन्धामीति ॥ हे पशो, ते तव सम्बन्धिनी वाचं वागिन्द्रियं शुन्धामि । शुद्धं करोमि । तथा त्वदीयं पञ्चवृत्तिकं प्राणं शुन्धामि । तथा चक्षुरिन्द्रियं, श्रोत्रेन्द्रियं, नाभिच्छिद्रं, गुह्येन्द्रियं, चरित्रान् चरणसाधनभूतान् पादान् । एवंविधानि त्वदीयानि सर्वेन्द्रियाणि शुन्धामि ॥ ३ ॥ कात्यायनः ॥ शेषेण यजमानश्च शिरःप्रभृत्यभिषिञ्चतीति ॥ पत्न्या पशववयवजातं येनोदकेन शोधितं तेनोदकशेषेणाध्वर्युयजमानौ पशोः शिरआद्यङ्गान्यनुक्रमेण सिञ्चेताम् । तदुच्यते ॥ कात्यायनः ॥ मनस्त इति शिर इति ॥ मनस्त आप्यायतामित्यनेन मन्त्रेण शिर अनुसिञ्चेतामित्यर्थः ॥ पाठस्तु ॥ मनस्त आप्यायतां वाक् त आप्यायतां प्राणस्त आप्यायतां चक्षुस्त आप्यायताᳪ श्रोत्रं त आप्यायतामिति ॥ हे पशो, ते त्वदीयं मन आप्यायतां शाम्यतु । एवं त्वदीयानि वाक्प्राणचक्षुःश्रोत्राणि शाम्यन्त्वित्यर्थः ॥ कात्यायनः ॥ यत्ते क्रूरमिसङ्गानीति ॥ मनःप्रभृतीनां मध्ये यान्यवशिष्टान्यङ्गानि तान्यवसिञ्चेताम् ॥ पाठस्तु ॥ यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्ते निष्ट्यायतां तत्ते शुध्यत्विति ॥ हे पशो, ते तव यद् पन्धनमुखनिरोधादि-

कं क्रूरमस्माभिः कृतं, यच्च छेदादिकमास्थितं कर्तुमुपस्थितं तत् सर्वमाप्यायतां शाम्यतु । किञ्च तत्सर्वं तव छ्यायतां स्तोकं भवतु । तत्सर्वं शुद्धं भवतु ॥ कात्यायनः ॥ शमहोभ्य इति पश्चात् पशोर्निषिञ्चन इति ॥ पशोर्जघनभागमध्वर्युयजमानौ अभिषिञ्चेताम् ॥ पाठस्तु ॥ शमहोभ्यः ॥ दिवसादिकालविशेषेभ्यः शं सुखमस्माकं पशोर्वा भूयादिति शेषः ॥ ४ ॥ कात्यायनः ॥ अग्रेण नाभिं तृणं निदध्यात्येषध इति ॥ नाभेरग्रे दर्भतृणं निदध्यात् । त्रायस्वेति मन्त्रशेषः ॥ कात्यायनः ॥ स्वधित इति प्रज्ञातयाभिनिधाय स्थितेति ॥ पूर्वप्रसिद्धां स्वधितिं तृणस्योपरिस्थापयित्वा तया प्रसिद्धया स्वधितः नाभिं छिन्द्यात् ॥ पाठस्तु ॥ स्वधिते मैनᳬहिᳬसीरिति ॥ एनं पशुम् । अन्यन्मन्त्रद्वयेऽपि पूर्वं इव व्याख्यातम् ॥ कात्यायनः ॥ अग्रᳬ सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामितीति ॥ यत् तृणं नाभेरग्रे स्थापितं तस्य तृणस्याग्रं वामहस्तेन धृत्वा दक्षिणहस्तेन मूलं धृत्वा अग्रमूलद्वयं छेदनान्निष्पन्नेन रक्तेनाञ्ज्यात् । भागोऽसीति मन्त्रशेषः । हे लोहिताक्ततृण, त्वं रक्षसां भागोऽसि ॥ कात्यायनः ॥ निरस्तमित्यपास्यतीति ॥ लोहिताक्ततृणं परित्यजेत् । रक्ष इति मन्त्रशेषः । यज्ञविघातकं रक्षोऽस्ति तन्निरस्तं परित्यक्तम् ॥ ५ ॥ कात्यायनः ॥ इदमहमित्यभितिष्ठतीति ॥ यजमान इति शेषः । परित्यक्तं तृणम् । अभित आक्रम्य यजमानस्तिष्ठेत् ॥ पाठस्तु ॥ इदमहᳬ रक्षोभितिष्ठामीदमहᳬ रक्षोऽवबाधे । इदमहᳬ रक्षोऽधमं तमो नयामीति । तृणरूपं रक्षः अध्वर्युणा निरस्तं, तदिदं रक्षः अहं यजमानोऽभितः पादेनाक्रम्य तिष्ठामि । न केवलं स्थितिमात्रं, किन्तु अहम् इदं रक्षः अववाधे अवाचीनं यथा भवति तथा नाशयामि । अहम् इदं रक्षः अधमम् अत्यन्तं निकृष्टं तमो नयामि नरकं प्रापयामि ॥ ६ ॥ कात्यायनः ॥ वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णौति, घृतेन द्यावापृथिवी इति । उदरदेशेऽवस्थितो वपाख्यो यो मांसविशेषः तां श्रपयतीति वपाश्रपणी वपामुदरदेशात् पृथक्कृत्य वपासदृशतया वपाश्रपण्यवच्छादयेत् । प्रोर्णुयामीति मन्त्रशेषः ॥ हे द्यावापृथिवी द्युलोकभूलोकसदृश्यौ वपाश्रपण्यौ भवदीयस्वरूपं घृतेनाज्यसमानया वपया प्रोर्णुयामाच्छादयतम् ॥ कात्यायनः ॥ तृणाग्रं चाध्वर्युर्बर्हिषो वेरितीति ॥ अध्वर्युर्बर्हिषोऽग्रभागम् । आहवनीये प्रास्यतीति शेषः । तथा बौधायनोऽप्याह ॥ आहवनीयस्यान्तिमेष्वङ्गारेषु यैः प्रतितप्यमाना ये बर्हिषोऽग्रमुपास्य-

तीति ॥ स्तोकानामिति मन्त्रशेषः । हे वायो वपायास्तोकानां वपासम्बन्धिनां संघातमिति शेषः । वेः तृप्तिं पिबेत्यर्थः ॥ कात्यायनः ॥ वपां स्रुवेणाभिघारयति जुषाणो अग्निरितीति ॥ पाठस्तु ॥ जुषाणो अग्निराज्यस्य वेतु स्वाहेति ॥ जुषाणः सेवमानः आहवनीयोऽग्निः, आज्यस्याज्यं वेतु पिबतु स्वाहा हुतमस्तु ॥ कात्यायनः ॥ वपाश्रपण्यावनुप्रास्यति । प्राचीं विशाखीं प्रतीचीमितराम्, स्वाहाकृतेऽग्नीति ॥ द्वयोः श्रपण्योर्मध्ये या विशाखा विविधशाखा विगतशाखा वा तामाहवनीयस्य प्राग्भाग इतरां प्रत्यग्भागे प्रक्षिपेत् । तथाच बौधायनः । आहवनीये वपाश्रपणी प्रहरेत् । तथेति स्वाहोर्ध्वनभसं मारुतं गच्छतामिति । प्राचीं द्विशाखां प्रतीचीम् एकशूलामिति ॥ पाठस्तु ॥ स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतामिति ॥ हे वपाश्रपण्यौ, स्वाहाकृते स्वाहाकारेण प्राप्ते युवाम् । ऊर्ध्वनभसम् । ऊर्ध्वं नभः आकाशो यस्य तादृशं वायुं गच्छतं प्राप्नुतम् ॥ ७ ॥ इति षष्ठेऽध्याये तृतीयोऽनुवाकः ॥ ६ ॥ ३ ॥

तृतीयेऽनुवाके संज्ञप्तपशुप्रोक्षणपवित्रसंस्कारमन्त्रा उक्ताः । चतुर्थे वसाहोमो विधीयते ॥ कात्यायनः ॥ सं ते मन इति हृदयमभिघारयेति ॥ हृदयमांसं पृषदाज्येनाभिघारयेत् ॥ पाठस्तु ॥ सं ते मनो मनसा सं प्राणः प्राणेन गच्छतामिति । हे हृदय, ते पशोस्तव मनो देवानां मनसा संगच्छताम् । त्वदीयः प्राणोऽपि देवानां प्राणेन संगच्छतामस्तु ॥ कात्यायनः ॥ रेळसीति वसां गृह्णीतेति ॥ मांसपाकभाण्डे स्थितमस्नेहात्मको द्रवविशेषो वसा, तां गृह्णीयात् ॥ पाठस्तु ॥ रेळस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन् । वातस्य त्वा ध्राज्यै पूष्णो रंह्या ऊष्मणो व्यथिषदिति ॥ हे वसे, त्वं रेळसि । रिषतिर्हिंसार्थः । हिंसिता भवसि । तस्मादाहवनीयोऽग्निस्त्वा श्रीणातु आश्रयतु स्वीकरोतु । आपश्च त्वा समरिणन् सम्यक् प्राप्नुवन्तु । तव दोषो मा भूत् । हे वसे त्वा दधीमीति शेषः । किमर्थं वातस्य वायोर्ध्राज्यै गत्यै, पूष्ण आदित्यस्य रंह्यै गत्यै । रंहतिर्गतिकर्मा । वाय्वादित्ययोरप्रतिहतगमनसिद्ध्यर्थं त्वां दधामीत्यर्थः । ऊष्मणः ऊष्मान्तरितं तदर्थं त्वां गृह्णामीति । विशेषेणाधिपयेन सीदतीति व्यथिषत् । यमाद्रूपं हविः तथाविधं भवसीत्यर्थः ॥ कात्यायनः ॥ प्रयुतमिति संसृजति पार्श्वेनेति ॥ पार्श्वगतेन मांसेन मिश्रीकुर्यात् । पार्श्वेन वसाहोमं प्रयौतीति श्रुत्यन्तरात् । द्वेष इति मन्त्रशेषः । द्विष अग्नीतौ । वसापार्श्वमांसयोः परस्परं मिश्रणेन यदमिषमस्ति तद्भयोः सकाशात् प्रयुतं

पृथग्भूतं भवतु ॥ १ ॥ २ ॥ कात्यायनः ॥ वसैकदेशं जुहोति घृतं घृतपावान इतीति ॥ स्वीकृतायाः वसायाः एकभागं जुहुयात् ॥पाठस्तु॥ घृतं घृतपावानः पिबत वसां वसापावानः पिबत । अन्तरिक्षस्य हविरसि स्वाहेति ॥ हे घृतपावानः । पा पाने इत्यस्य रूपम् । घृतस्य पातार उपभोक्तारो यूयं घृतं द्रवरूपं हविः पिबत । हे वसायाः पातारो देवता अत्रत्यं वसारूपमिदं हविः पिबत । हे पशो, त्वम् अन्तरिक्षवासिनो देवगणस्य हविरसि ॥ ३ ॥ कात्यायनः ॥ दिशो व्याघारयति दिश इति प्रतिमन्त्रमितीति ॥ जुहुयादित्यर्थः ॥ पाठस्तु ॥ दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहेति ॥ वसाशेषेण सर्वाभ्यः प्राच्यादिदिग्भ्यो, दिश इत्यादिमन्त्रषट्केन होमं कुर्यात् ॥ कात्यायनः ॥ ऐन्द्रः प्राण इति पशुं संमृशतीति ॥ पशुरूपं हविः संस्पृशेत् ॥पाठस्तु॥ ऐन्द्रः प्राणोऽअङ्गे अङ्गे निदीध्यदैन्द्र उदानो अङ्गे अङ्गे निदीधे । देव त्वष्टर्भूरि ते सꣳसमेतु सलक्ष्मा यद्विषुरूपं भवाति । देवत्रायन्तमवसे सखायोऽनुत्वामातापितरो मदन्त्विति ॥ ऐन्द्रः इन्द्रसंबन्धी प्राणवायुः अङ्गे अङ्गे पशोः सर्वेष्वङ्गेषु निधीतो निहितः । तथा इन्द्रसंबन्धी उदानवायुः पशोः सर्वेष्वङ्गेषु निक्षिप्तः । हे त्वष्टः, त्वष्टृनामक देव यत्पशोरङ्गजातं सलक्ष्म समानलक्षणं सत् छेदने विषुरूपं सर्वतो व्यापितेजोरूपं भवाति भवति । तत्सर्वं तवानुग्रहेण भूरि बहुल । अस्यतं, समित्येकीभावे, एकीकृत्य समेतं संगच्छताम् । हे पशो, देवत्रायन्तं देवेषु गच्छन्तं त्वां सखाय इतरे पशवो मातापितरश्च अनुमदन्तु । हर्षं कुर्वन्तु । अवसे स्वन्मुखेन स्वर्गप्राप्त्या स्वकुलं सर्वमवतु ॥ ४ ॥ ५ ॥ इति षष्ठाध्याये चतुर्थोऽनुवाकः ॥ ६ ॥ ४ ॥

चतुर्थे वसाहोममन्त्रा उक्ताः ॥ पञ्चमे गुदकाण्डेनोपयड्संज्ञका होमा उच्यन्ते ॥ कात्यायनः ॥ गुदतृतीयस्य परिच्छेदमनुयाजेषु अनुसमुद्रं गच्छेति प्रतिमन्त्रं प्रतिवषट्कारं हुत्वेति ॥ गुदकाण्डस्य तृतीयभागमेकादशधा तिर्यक्छित्त्वा अनुयाजानामेकैकस्मिन् वषट्कारे सति समुद्रं गच्छ स्वाहेति एतदादिभिरग्निं वैश्वानरं गच्छ स्वाहेत्येतदन्तैरेकादशभिर्मन्त्रैरेकैकं गुदकाण्डभागं प्रतिप्रस्थाता जुहुयात् ॥ एतेषां पाठस्तु ॥ समुद्रं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहा । अन्तरिक्षं गच्छ स्वाहा । मित्रावरुणौ गच्छ स्वाहा । अहोरात्रे गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा । द्यावापृथिवी गच्छ स्वाहा सोमं गच्छ स्वाहा । यज्ञं गच्छ स्वाहा नभो दिव्यं गच्छ स्वाहा । अग्निं

वैश्वानरं गच्छ स्वाहेति ॥ हे हविस्त्वं समुद्रादिनामकान् देवान् गच्छ प्राप्नु-हि । सुहुतमस्तु ॥ कात्यायनः ॥ मनो इति मुखोपस्पर्शनमिति ॥ अथ यज्ञ-होमान्ते मुखमुपस्पृशेत् । हार्द्येछेति मन्त्रशेषः । हे समुद्रादिदेवताः, समुद्रहृदः सम्बन्धिहृदयात् हार्दं मे मदीय मनः यच्छ नियच्छीहि ॥ १ ॥ कात्यायनः ॥ स्वरुं जुहोति दिवं ते धूम इतीति ॥ पाठस्तु ॥ दिवं ते धूमो गच्छत्वन्तरिक्षं ज्योतिः पृथिवीं भस्मना पृण स्वाहेति ॥ हे स्वरो, ते तव सम्बन्धी धूमो दिवं द्युलोकं गच्छतु । तव भस्मना पृथिवीं भूलोकम् । आपृण समन्तात् पूरय ॥ २ ॥ कात्यायनः ॥ शुष्कार्द्रसन्ध्यो हृदयशूलमुपगूहति । मापो मौषधीरिति ॥ आलब्धस्य पशोः हृदयस्यपाकसदानार्थं यः शूलो विहितः तं शुष्कार्द्रभूमदेशयोः सन्धौ निगूहेत् ॥ पाठस्तु ॥ मापो मौषधीर्हिꣳसीरिति ॥ हे हृदयशूल, त्वम् । आपो देवता मा हिंसीः मा वधीः ॥ कात्यायनः ॥ धाम्नो धाम्नः सुमित्रिया न इत्युपस्पृशन्त्यप इति ॥ आभ्यां मन्त्राभ्यां मार्जयेरन् ॥ पाठस्तु ॥ धाम्नो धाम्नो राजꣳस्ततो वरुण नो मुञ्च । यदाहु-रघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च । सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु । योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । इदमापः प्रवहत यत्किञ्च दुरितं मयि । यच्चाहमभिदुद्रोह यच्चाशेपऽउतानृतमिति ॥ हे राजन् वरुण धाम्नो धाम्नो यस्मात् त्वदीयपाशसमन्वितात् स्थानाद् वयं भीताः । ततस्तस्मात् स्थानात्सः अस्मान् मुञ्च मोचय । किञ्च, हे वरुण भवदाद्याः सर्वा देवता अघ्न्याः अहन्तव्याः। पूजनीया इत्यर्थः । इति यदाहुः ब्रह्मवादिनो वदन्ति इत्येवं सति अस्माकमिष्टपरिहारार्थं वयं ता देवताः शपामहे । ततस्तस्मात् पापात्, हे वरुण, नः अस्मान्मुञ्च । अब्देवता ओषधयश्च नोऽस्माकं सुमित्रियाः सन्तु । सुमित्रेषु योग्याः भवन्तु । यः शत्रुरस्मान् द्वेष्टि यं च वयं द्विष्मः । द्वेषं कुर्मः । तस्मादुभयात्मका ये शत्रवस्तेषाम् आपः ओषधयश्च नो दुर्मित्रियाः सन्तु । अमित्रत्वेनावस्थिता भवन्तु । हे आपः, इदं पशुसंज्ञपननिमित्त पापं वहत अपनयत । यत्किञ्चिद् दुरितम् अभिशापादिरूपं पापं मयि स्थितं तदपनयत । वा अथवा यत्प्राणिमात्रम्, अहमभिदुद्रोह हिंसां कृतवानस्मि । उत वाऽहं यदनृतम् अनृतवादिनं यमपराधिनं शेपे शापं कृतवानस्मि । हे आपः, तदेतद्द्रोहादिकृतं पापम् अपनयत ॥ ३ ॥ ४ ॥ ५ ॥
इति षष्ठाध्याये पञ्चमोऽनुवाकः ॥ ६ ॥ ५ ॥

पञ्चमे शुद्रकाण्डहोमो वर्णितः । एतावताग्नीषोमीयः पशुः समाप्तः । अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञकानाम् अपामुपादानं षष्ठेऽभिधीयते ॥ कात्यायनः ॥ वसतीवरीग्रहणं हविष्मतीरितीति ॥ सोमाभिषवणसाधनभूता वसतीवरीसंज्ञका अपो गृह्णीयात् ॥ पाठस्तु ॥ हविष्मतीरिमा आपो हविष्मां आविवासति । हविष्मां देवो अध्वरो हविष्मां अस्तु सूर्य इति ॥ हविष्मान् हविषा संयुक्तो यजमानः हविष्मतीः हविषा सोमेन युक्ता इमा वसतीवरीः अपः आविवासति परिचरति । ततो देवो द्योतमानो अध्वरो यागोऽपि स्वशरीरनिष्पत्त्यर्थं हविष्मान् भवतु । किञ्च सूर्योऽपि देवो यजमानस्य फलदानाय स्वसंतृप्त्यर्थं हविष्मान् हविःसंपन्नो भवतु ॥ १ ॥ कात्यायनः ॥ अग्नेर्व इति निदधाति । शालाद्वार्यमपरेणेति ॥ नूतनगार्हपत्यस्य पश्चिमभागे वसतीवरीसंज्ञका आपो निदध्यात् ॥ पाठस्तु ॥ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीति ॥ हे वसतीवर्यः, वो युष्मान् अपन्नगृहस्य अविनश्वरगृहस्य शालामुखीयाग्नेः सदसि समीपस्थाने सादयामि स्थापयामि ॥ कात्यायनः ॥ दक्षिणस्यामुत्तरवेदिश्रोण्यां निदधातीन्द्राग्न्योरितीति ॥ शालामुखीयाग्नेः पश्चिमभागे स्थापिता वसतीवरीरादायोत्तरवेदेर्दक्षिणश्रोण्यां निदध्यात् । भागधेयी स्थेति मन्त्रशेषः । हे वसतीवर्यो, यूयम् इन्द्राग्न्योरिन्द्राग्निदेवतयोर्भागधेयीस्थ भागधेय्यो भागरूपा भवथ ॥ कात्यायनः ॥ उत्तरस्यां पूर्ववन्मित्रावरुणयोरिति वेति ॥ दक्षिणश्रोण्यां स्थिता वसतीवरीः पुनरप्यादाय पूर्वमन्त्रेण वाऽनेन मन्त्रेण वा उत्तरश्रोण्यां निदध्यात् । भागधेयी स्थेति मन्त्रशेषः । हे वसतीवरीसंज्ञका आपो, यूयं मित्रावरुणदेवतयोर्भागरूपा भवथ ॥ कात्यायनः ॥ विश्वेषां देवानामित्याग्नीध्र इति ॥ उत्तरस्यां वसतीवरीः पुनरप्यादायाग्नीध्रमण्डपे निदध्यात् ॥ पाठस्तु ॥ विश्वेषां देवानां भागधेयी स्थ । अमूर्या उपसूर्ये याभिर्वा सूर्यः सह ता नो हिन्वन्त्वध्वरमिति ॥ हे वसतीवर्यो, यूयं सर्वेषां देवानां भागरूपा भवथ । इदानीमभिनयेन दर्शयन्नाह । याः प्रसिद्धाः अमूः ईदृग्भूता वसतीवर्याख्या आपः उपसूर्ये सूर्यसमीपे स्थिताः । सूर्योऽपि ताभिरद्भिः सह गच्छति । ता आपो नः अस्मदीयमध्वरं यज्ञं हिन्वन्तु प्रीणयन्तु ॥ ॥ २ ॥ ३ ॥ इति षष्ठाध्याये षष्ठोऽनुवाकः ॥ ६ ॥ ६ ॥

षष्ठे सोमाभिषवार्थानां वसतीवरीणां ग्रहणमुक्तम् ॥ सप्तमेऽभिषोतव्यस्य सोमस्योपाहरणादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ ईषान्तरेणार्द्धसोमप-

सप्तमे सोमोपाहरणादिमन्त्रा उक्ताः ॥ अष्टमे सोमाभिषवोऽभिधीयते ॥ कात्यायनः ॥ देवस्य त्वेत्यद्रिमादायेति ॥ अद्रिशब्देन सोमाभिषवहेतुः पाषाणोऽभिधीयते । तमादद्यात् ॥ पाठस्तु ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे रावासि गभीरमिममध्वरं कृधीन्द्राय सुषूतमम् । उत्तमेन पविनोर्जस्वन्तं मधुमन्तं पयस्वन्तमिति ॥ देवस्य त्वेत्यादिकं पूर्वं व्याख्यातम् । हे अभिषवसाधन पाषाण, त्वं रावा । रा दाने इत्यस्य रूपम् । आहुतीनां दक्षिणानां च रावा दाता भवसि । ततः गम्भीरमिमं मदीयमध्वरं यज्ञं कृधि कुरु । उत्तमेनोत्कृष्टेन पविना वज्रसदृशेन त्वया अहं सोममीदृशं करोमि । कीदृशम् । इन्द्रायेन्द्रार्थं सुषूतमम् । तकारलोपश्छान्दसो, दीर्घत्वम् । सुष्ठु अभिषुततमम् ऊर्जस्वन्तं स्वादुत्वोपेतं पयस्वन्तं पयोविशेषवन्तम् । एवं सोमं करोमीत्यर्थः ॥ कात्यायनः ॥ निग्राभ्यासु वाचयति निग्राभ्या स्थेति ॥ अभिषोतव्यस्य सोमस्य सेचनीया आपो निग्राभ्या इत्युच्यन्ते । तासु गृह्यमाणासु यजमानं वाचयेत् ॥ पाठस्तु ॥ निग्राभ्या स्थ देवश्रुतास्तर्पयत मा । मनो मे तर्पयत वाचं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत । आत्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्निति ॥ हे आपो, यूयं निग्राह्या स्थ । अस्माभिर्नितरां ग्रहीतव्या भवथ । देवश्रुता देवेषु प्रख्याता यूयं मा मां तर्पयत प्रीतं कुरुत । हे आपो मदीयानि मनःप्रभृतीनि इन्द्रियाणि तर्पयत आत्मानं शरीरं प्रजां पुत्रादिसंपत्तिं पशून् गणान् मनुष्यसंघांश्च तर्पयत । मे मदीयगणा मनुष्यसंघा मा वितृषन् मदीयद्रव्यदानेन पूरिताः सन्तो विच्छिन्नतृष्णा मा भूवन् । अनुरक्तगणोऽहं भवेयमिति यजमान आशास्त इत्यर्थः ॥ १ ॥ २ ॥ कात्यायनः ॥ सोमं मिमीत इन्द्राय त्वा वसुमते रुद्रवते इति पञ्चकृत्वः प्रतिमन्त्रमिति ॥ अभिषोतव्यस्य सोमस्येन्द्राय त्वेत्यादिभिः पञ्चभिर्मन्त्रैः पञ्चवारं यथा भवति तथा मानमियत्तां कुर्यात् ॥ तत्रायं प्रथमो मन्त्रः ॥ इन्द्राय त्वा वसुमते रुद्रवत इति ॥ हे सोम त्वा त्वाम् इन्द्रायेन्द्रार्थम् इमे । कीदृशायेन्द्राय वसुमते वसुसंज्ञकप्रातःसवनदेवतावते । रुद्रवते रुद्रनामकमाध्यन्दिनसवनदेवतावते ॥ अथ द्वितीयः ॥ इन्द्राय त्वादित्यवत इति ॥ आदित्यवते तृतीयसवनदेवतावते इन्द्राय हे सोम त्वामिमे ॥ अथ तृतीयः ॥ इन्द्राय त्वाभिमातिघ्न इति ॥ अभिमातिः शत्रुस्तं हन्ति इत्यभिमातिहा इन्द्रस्तस्मै, हे सोम, त्वामिमे ॥

अथ तुरीयः ॥ श्येनाय त्वा सोमभृत इति । श्येनाय पक्षिरूपाय गायत्र्यात्मने सोमभृते सोमधारकाय । यद्वा, सोमभृते सोमहृते । हृग्रहोर्भश्छन्दसीति हकारस्य भकारः । तादृशायेन्द्राय, हे सोम, त्वामिमे ॥ अथ पञ्चमः ॥ अग्नये त्वा रायस्पोषद इति ॥ रायस्पोषस्य धनपोषस्य दात्रे अग्नये । हे सोम त्वामिमे ॥ ३ ॥ कात्यायनः ॥ यत्त इति मिथालम्भनमिति ॥ इयत्तां कृतस्य सोमस्य संस्पर्शनं कुर्यात् ॥ पाठस्तु ॥ यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरा अन्तरिक्षे । तेनास्मै यजमानायोरु राये कृध्यधिदात्रे वोच इति ॥ हे सोम त्रिषु लोकेषु ते त्वदीयं ज्योतिर्यदस्ति तेन ज्योतिषाऽस्मै यजमानाय राये चतुर्थी तृतीयार्थे । राया धनेन समृद्धमुरु विस्तीर्णं स्थानं कृधि । किञ्च, अधिकोऽयं यजमानो भवति । दात्रे वोचः फलप्रदायेन्द्राय ब्रूहि ॥ ४ ॥ कात्यायनः ॥ श्वात्रा स्थेत्यासिञ्चतीति ॥ पाठस्तु ॥ श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीः । ता देवीर्देवत्रेमं यज्ञं नयतोपहूताः सोमस्य पिबतेति । हे आपो, यूयमेवंविधाः स्थ । किंविधाः । श्वात्राः कारिण्यः वृत्रतुरो वृत्रघातिन्यः । राधो धनमुद्गिरन्तीति राधोगूर्ता धनाभिवर्षिण्यः । अमृतस्य सोमस्य पत्नीः पालयित्र्यः । हे देवीर्देव्यः, आपः, तथाविधा यूयं देवत्रा देवान् प्रतीमं यज्ञं नयत प्रापयत । किञ्च, यूयमुपहूताः अनुज्ञाताः सत्यः सोमस्य सोमं पिबत ॥ ५ ॥ कात्यायनः ॥ मा भेर्मेति प्रहरतीति । अभिषुणुयादित्यर्थः ॥ पाठस्तु ॥ मा भेर्मा संविक्था ऊर्जं धत्स्व धिषणे वीड्वी सती वीळयेथामूर्जं दधाथाम् । पाप्मा हतो, न सोम इति । हे सोम, त्वं मा भेः मा भैषीः । मा संविक्थाः कम्पनं मा कृथाः । यतो देवतर्पणार्थमहं त्वामभिषुणोमि । अत ऊर्जं धत्स्व संधेहि । एवं सोमं मंत्रेणोक्त्वेदानीं द्यावापृथिव्यौ संबोधयति । हे धिषणे द्यावापृथिव्यौ युवां वीड्वी सती । वीळुशब्दो दृढवचनः । दृढे सत्यावात्मानं वीळयेथां दृढीकुरुतम् । किञ्च, ऊर्जं रसं दधाथाम् । अनेनैव अस्य स्तुतेन ग्राव्णा यजमानस्य पाप्मा हतः, न तु सोमो हतः ॥ ६ ॥ कात्यायनः ॥ निग्राभं वाचयति होतृचमसेऽप्सुनिर्णयनबधाय प्रागपागितीति ॥ प्रागादिमन्त्रः सोमग्रहणे तु निग्राभ इत्युच्यते । होतृचमसे सोमांशूनवस्थाप्यैतन्मन्त्रं यजमानं वाचयेत् ॥ पाठस्तु ॥ प्रागपागुदगधराक् सर्वतस्त्वा दिश आधावन्तु । अम्ब निष्परसमरीर्विदां । त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच इति ॥ हे सोम, त्वा त्वां प्रागादयो दिशः

सर्वतः सर्वस्मात् स्वस्वप्रदेशात् आधावन्तु । आभिमुख्येनागच्छन्तु । परस्परं किं भाषमाणा आधावन्त्विति । तदाह । हे अम्ब, हे मातर्निष्परस्वैः स्वैर्भागैः सोमं पूरयेति वदन्त्यः । किञ्च, एवंविधं सोमम् अरीः आगच्छन्त्यो दिशः संविदाम् । छान्दसं रूपम् । संविदन्तु सम्यग्जानन्तु । हे शविष्ठ, अतिशयेन बलवन्निन्द्र देवो दीप्यमानस्त्वं मर्त्यं मनुष्यं यजमानं मर्शसिषः मर्शसि । हे मघवन् धनवन् इन्द्र, मर्डिता यजमानस्य सुखयिता त्वदन्यो नास्ति । अतोऽहं ते वचस्त्वमेव सुखयितेत्येवंरूपं त्वदीयं वचनं ब्रवीमि ॥ ७ ॥ ८ ॥ इति षष्ठाऽध्यायेऽष्टमोऽनुवाकः ॥ ६ ॥ ८ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराज-परमेश्वरवैदिकमार्गप्रवर्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

# अथ शुक्लयजुर्वेदकाण्वसंहिताभाष्ये सप्तमोऽध्यायः ॥ ७ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

षष्ठाध्याये यूपसंस्कारादिसोमाभिषवपर्यन्ता मन्त्रा उक्ताः ॥ सप्तमे ग्रहग्रहणमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ उपांशुं गृह्णाति । वाचस्पतये देवो देवेभ्यो मधुमतीरितीति । मन्त्रत्रयस्य प्रतीकोपादानात् तत्रैकैकेन मन्त्रेणोपांशुमेकैकवारं गृह्णीयात् ॥ पाठस्तु ॥ वाचस्पतये पवस्व वृष्णो अꣳशुभ्यां गभस्तिपूत इति ॥ हे सोम, पतये पालकदेवार्थं वृष्णः वर्षितुस्तव सम्बन्धिभ्यामंशुभ्यां गभस्तिपूतः । अध्वर्युबाहुभ्यां पूतः सन् वाचःसम्बन्धिना मन्त्रेण पवस्व शुद्धो भव ॥ अथ द्वितीयः ॥ देवो देवेभ्यः पवस्व येषां भागोऽसीति ॥ हे सोम, त्वं येषां देवानाम्भागो भवसि तेभ्यो देवेभ्यो देवो दीप्यमानः सन् पवस्व ॥ अथ तृतीयः ॥ मधुमतीर्न इषस्कृधीति । हे सोम त्वं नोऽस्मदीयानीषोऽन्नानि मधुमतीः मधुररसोपेतानि कृधि कुरु ॥ १ ॥ कात्यायनः ॥ यत्त इत्यात्तान् सोमे निदधातीति ॥ स्वीकृतान् तानंशून् सोमे स्थापयेत् ॥ पाठस्तु ॥ यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति ॥ हे सोम, ते तव अदाभ्यम् अहिंस्यं जागृवि जागरणशीलं यन्नामास्ति । हे सोम, तस्मै तन्नामवते तुभ्यं सोमाय स्वाहा दत्तमस्तु ॥ कात्यायनः ॥ स्वाहेत्युक्त्वोर्वन्तरिक्षमिति निष्क्रमणमिति ॥ स्वाहेत्येतदक्षरद्वयमुक्त्वा निष्क्रमेत् ॥ पाठस्तु ॥ स्वाहोर्वन्तरिक्षमन्वेमीति । उरु विस्तीर्णमन्तरिक्षमन्वेम्यनुगच्छामि ॥ कात्यायनः ॥ स्वांकृत इति हुत्वा पात्रमुपमार्ष्टीति । होमं कृत्वा पात्रोपमार्जनं कुर्यात् ॥ पाठस्तु ॥ स्वांकृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः। पार्थिवेभ्यः । मनस्त्वाष्टु स्वाहा त्वा सुभवः सूर्यायेति ॥ हे प्राणरूपोपांशुग्रह, त्वं स्वांकृतोऽसि । मया स्वीकृतो भवसि । कीदृशाय देवजन्मनि च स्थितेभ्यः सर्वेभ्य इन्द्रियेभ्यो हिताय मनस्त्वाष्टु त्वामष्टु व्याप्नोतु। सुभवः स्वयमुत्पन्नो यः प्राणः, हे उपांशुग्रह तादृग्रूपं त्वां ग्राहैः प्राणरूपायादित्याय स्वाहाकारेण जुहोमि । सूर्यस्य प्राणरूपत्वमाथर्वणिकैराम्नातम् । आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनञ्चाक्षुषं प्राणमनुगृह्णान इति ॥ स्वांकृतशब्देन प्राणरूपस्य ग्रहस्य स्वाधीनत्वं

विवक्षितम् । दिव्यपार्थिवशब्दाभ्यां च जन्मद्वयं विवक्षितमिति तित्तिरि-
र्दर्शयति ॥ स्वां कृतोऽसीत्याह । प्राणमेव सम्नवत् । विश्वेभ्यस्त्वेन्द्रियेभ्यो देवेभ्यः
पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणान् दधातीति ॥ कात्या-
यनः ॥ प्रथमे परिधावुत्तानं पाणिं प्राघुपमार्ष्टि देवेभ्यस्त्वेतीति ॥ पश्चिम-
भागेऽवस्थितो यः परिधिस्तस्मिन् पाणिमूर्ध्वाभिमुखं कृत्वा प्रागभिमुखं
यथा भवति तथोपमार्जनं कुर्यात् ॥ पाठस्तु ॥ देवेभ्यस्त्वा मरीचिपेभ्य इति॥
हे लेप, त्वां मरीचिपेभ्यः मरीचिपालकेभ्यो देवेभ्यः परिधौ मार्ज्मि ॥ का-
त्यायनः ॥ वासउरोबाहुषु श्लिष्टमंशुमभिचरन् जुहुयात् ॥ देवांशावितीति
वस्त्रोरुबाहुषु यः सोमांशुः संश्लिष्टस्तमभिचरञ्जुहुयात् ॥ पाठस्तु ॥ देवाꣳशो
यस्मै त्वेळे । तत्सत्यमुपरिप्लुता भङ्गेन हतोऽसौ फडिति ॥ हे देवांशो दीप्य-
मानसोमांशो यस्मै वधाय त्वामीळे ईळिरध्येषणाकर्मा । त्वां प्रार्थयामि ।
तद्वधकर्म सत्यमस्तीति शेषः । उपरिप्लुता, प्लुतिर्गत्यर्थः । उपर्यागतेन भङ्गेन
आमर्दैन, असाविति देवदत्तादिनामनिर्देशः । असौ द्वेष्यो हतो निहतः, फट्
विशीर्णो भवेत् । ञिफला विशरण इति धातोः क्विबन्तस्य फडित्येतद् रूपम् ।
छन्दसि दलयोरभेदः । अभिचारे स्वीकारस्य स्थाने फडिति प्रयुज्यते ।
वषट् पश्चे फडुभ्यादे हुं द्वेष्ये पौष्टिके स्वधेति वचनात् ॥ कात्यायनः ॥
प्राणाय त्वेति पात्रासादनमिति ॥ खरस्य यस्मिन् दक्षिणप्रदेशे पूर्वमुपांशुपात्रं
स्थापितम् इदानीं तत्रैव स्थापयेत् । हे उपांशुपात्र, प्राणदेवतासंतोषार्थं त्वा-
मासादयामीति शेषः ॥ कात्यायनः ॥ उपांशुसवनं पाणिना प्रमृज्योदक्
व्यानाय त्वेति ॥ उपांशुसवनार्थं येन पाषाणेन सोमोऽभिषुतः स उपांशु-
सवनः । तं पाणिना प्रमार्जनं कृत्वा उदगभिमुखं यथा भवति तथाऽऽसा-
दयेत् । हे उपांशुसवन, व्यानदेवतार्थं त्वामासादयामीति ॥ २ ॥ ३ ॥ इति
सप्तमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

प्रथमेऽनुवाके उपांशुग्रहार्था मन्त्रा उक्ताः ॥ द्वितीयेऽन्तर्यामग्रहार्था मन्त्रा
उच्यन्ते॥कात्यायनः॥ उदितेऽन्तर्यामग्रहणं उपयाम गृहीत इत्युपांशु वदतीति ॥
सूर्योदयादुत्तरकाले अन्तर्यामग्रहं गृह्णीयात् । उपांशुग्रहे येन मन्त्रेण यत् कर्मानुष्ठि-
तम् अन्तर्यामग्रहणानन्तरं तेन मन्त्रेण तत्कर्मानुतिष्ठेत्॥पाठस्तु॥उपयाम गृहीतो-
ऽस्यन्तर्यच्छ मघवन् पाहि सोमम् । उरुष्य रायो वेषो यजस्वेति । अन्तस्ते द्यावा-
पृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् । सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघ-

यन् मादयस्वेति ॥ उपयामपतीत्युपयामो ग्रहस्तेन गृह्यते । उपयामगृहीतः । हे सोमरस, त्वं तादृशो भवसि । हे मघवन् धनवन्निन्द्र, त्वं तादृशं ग्रहपात्रम् । अन्तर्यच्छ धावापृथिव्योऽन्तर्धानं व्यवधानं यथा भवति तथा नियमय । ततः सोमं पालय । तथा रायो धनानि अवोरुष्व आभिमुख्येनागत्य रक्ष इषोऽन्नानि यजस्व देहि । ते तवानुग्रहात् द्यावापृथिवी द्यावापृथिव्यौ अन्तर्दधामि व्यवधायिके करोमि । किञ्च, उरु विस्तीर्णमन्तरिक्षम् अन्तर्दधामि । हे मघवन्निन्द्र अवरैः सर्वैर्देवैः सजूः समानप्रीतियुक्तः सन्नन्तर्यामे ग्रहे मादयस्व स त्वं हृष्टः सन्नन्यानपि हर्षय ॥ स्वाहाकारमुक्त्वा निष्कामेत् ॥ स्वाहोर्वन्तरिक्ष-मन्वेमि इत्ययं पूर्वं व्याख्यातः । अथ होमं कृत्वा पात्रं प्रमृज्यात् ॥ पाठस्तु ॥ स्वां कृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः । मनस्त्वाष्टु स्वाहा त्वा स्वभवः सूर्याय इति ॥ पूर्ववद् व्याख्येयम् । अपरिधौ पाण्युपमार्जनमन्त्रो देवेभ्यस्त्वा मरीचिपेभ्य इति । पूर्ववद् व्याख्यातः ॥ कात्यायनः ॥ उदानाय त्वेति पात्रासादनमिति ॥ अन्तर्यामग्रहः पूर्वस्मिन् स्थाने स्थितः । इदानीं तस्मिन्नेवासादयेत् ॥ हे अन्तर्यामग्रह, त्वामुदानदेवतासन्तोषार्थमासादयामीति शेषः ॥ १ ॥ २ ॥ इति सप्तमाध्याये द्वितीयोऽनुवाकः ॥ ७ ॥२॥

द्वितीयेऽन्तर्यामग्रह उक्तः ॥ तृतीये ऐन्द्रवायवग्रह उच्यते ॥ कात्यायनः ॥ ऐन्द्रवायवं गृह्णात्यावायवितीति ॥ ऐन्द्रवायवग्रहे वायुदेवतार्थं सोमं गृह्णीयात् ॥ पाठस्तु ॥ आवायो भूष शुचिपा उपनः सहस्रं ते नियुतो विश्ववार । उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वेति ॥ हे वायो, त्वम् आगत्य भूष ग्रहानलंकुरु । हे शुचिपाः, पवित्रस्य सोमस्य पातः, नोऽस्मानुपागच्छ । हे विश्ववार, विश्वव्यापक, ते तव, सहस्रं ते नियुतः । नियुत इति वायोरश्वस्य नाम । अश्वानां सहस्रं तवास्ति । त्वदीयम् अश्वसहस्रं नितरां युतः । ते अन्धः अन्नं मद्यं मदनीयम्, उपो उप अयामि उपगमयामि पूर्वपेयं प्रथमं वषट्कारलक्षणं प्रथमं पानीयं भागं, हे देव, दधिषे धारयसि । वायवे त्वेति । देवता देवाः । वायवे त्वा गृह्णामीति शेषः । उप समीपं गमयामीत्यन्वयः । हे सोमरस, त्वां वायुदेवतायै गृह्णातीति शेषः ॥ १ ॥ कात्यायनः ॥ अपगृह्य पुनरिन्द्रवायू इतीति ॥ पूर्वमैन्द्रवायवग्रहे वायुदेवताकं सोमं गृहीत्वा इदानीं तस्मिन्नेव ग्रहे इन्द्रवायुदेवताकं गृह्णीयादिति शेषः ॥ पाठस्तु ॥ इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि ।

उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वैष ते योनिः सजोषोभ्यां त्वेति ॥ हे इन्द्रवायू युष्मदर्थम् इमे सोमाः सुताः अभिषुताः । तां पयोभिरेतैः सोमरसरूपैरन्नैर्निमित्तरूपैरुप समीपे आगतम् आगच्छतम् । हि यस्मादिन्दवः सोमरसा वाम् उशन्ति । कामयन्ते । तस्मादागच्छतमिति पूर्ववदन्वयः । हे सोमरस, त्वम् उपयामग्रहेण गृहीतो भवसि । वायवे वायुदेवतार्थमिन्द्रवायुभ्याम् इन्द्रवायुदेवतार्थं त्वां गृह्णामीति शेषः । हे पात्र स्वरस्यैकदेशस्तद्योनिस्तव स्थानम् । अतोऽत्र सजोषोभ्यां समानप्रीतिभ्यामिन्द्रवायुभ्यां त्वां सादयामीति शेषः । द्विदैवत्यग्रहाणां मध्ये ऐन्द्रवायवग्रहस्य प्राथम्यं वाग्वा एषा यदैन्द्रवायव इत्यादिवाक्यजातेन तित्तिरिणा बहुधा प्रपञ्चितम् ॥ २ ॥ इति सप्तमाध्याये तृतीयोऽनुवाकः ॥ ७ ॥ ३ ॥

तृतीये ऐन्द्रवायवग्रह उक्तः ॥ चतुर्थे मैत्रावरुणग्रह उच्यते ॥ कात्यायनः ॥ मैत्रावरुणमयं त्वामितीति ॥ मित्रावरुणदेवतार्थं पात्रे सोमं गृह्णीयात् ॥ पाठस्तु ॥ अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति ॥ हे ऋतावृधा यज्ञस्य वर्धकौ-मित्रावरुणौ वां युवयोरर्थाय अयं सोमः सुतः । यस्मादभिषुतस्तस्मादिहास्मिन् यज्ञे ममेव यजमानानां मध्ये ममैव हवमाह्वानं श्रुतं युवां शृणुतम् । हे सोमरस, त्वं मैत्रावरुणग्रहपात्रेण गृहीतो भवसि, त्वां मित्रावरुणदेवताभ्यां गृह्णामीति शेषः ॥ १ ॥ कात्यायनः ॥ पयसा श्रीणाति येनं कुशान्तर्धाय राया वयमित्येवं सर्वत्र श्रयणेष्विति ॥ मैत्रावरुणग्रहपात्रे कुशद्वयव्यवधानं कृत्वा तत्रस्थं सोमरसं क्षीरेण मिश्रीकुर्यात् । एवं यत्र यत्र श्रयणानि सन्ति तेषु सर्वेष्वेवं कुर्यादित्यर्थः ॥ पाठस्तु ॥ राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः । तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् । एष ते योनिरृतायुभ्यां त्वेति ॥ देवा इन्द्रादयो हव्येन हविषा यथा हृष्यन्ति गावो यवसेन यथा हृष्यन्ति । तथा वयं राया धनेन ससवांसः सम्भक्ताः । वन षण सम्भक्तावित्यस्य रूपम् । धनसंपन्नाः सन्तो मदेम हृष्टाः स्याम । हे मित्रावरुणौ, यां युवां नोऽस्मभ्यं विश्वाहा सर्वदा, तां तथाभूतां धेनुं धत्तं दत्तम् । कीदृशीम् । अनपस्फुरन्तीं तां धेनुमित्यर्थः । ऋतायुभ्यां यज्ञमिच्छद्भ्यां मित्रावरुणाभ्यां, स्पष्टमन्यत् ॥

एवंविधस्य सोमरसस्य क्षीरमेलनं, मिश्रं देव अयुयोजत्यादिवाक्यजातेन तित्तिरिणा

स्पष्टीकृतम् ॥ २ ॥ इति सप्तमाध्याये चतुर्थोऽनुवाकः ॥ ७ ॥ ४ ॥ ॥ ॥

चतुर्थे मैत्रावरुणग्रह उक्तः ॥ पञ्चमे आश्विनग्रह उच्यते ॥ कात्यायनः ॥ या वामित्याश्विनमिति ॥ गृह्णीयादिति शेषः ॥ पाठस्तु ॥ या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वेति ॥ हे अश्विना, अश्विनौ देवौ, वां युवयोर्या कशा। कशेति वाङ्नाम। या वाग् मधुमती मधु ब्रह्म तद्वती ॥ मधुब्राह्मणोपनिषत्प्रशमायुक्ता, सूनृतावती प्रियवचनोपेता, तया वाचाऽस्मदीयं यज्ञं मिमिक्षतं सेक्तुमिच्छतं निष्पादयतमित्यर्थः । माध्वीभ्यां मधुब्राह्मणं यावश्विनावधीयेते ताभ्यामश्विभ्यां त्वां सोमं सादयामि । शिष्टं स्पष्टम् ॥ १ ॥ इति सप्तमाध्याये पञ्चमोऽनुवाकः ॥ ७ ॥ ५ ॥

पञ्चमे आश्विनग्रह उक्तः ॥ षष्ठे शुक्रग्रह उच्यते ॥ कात्यायनः ॥ शुक्रं तं प्रत्नथेति ॥ शुक्रग्रहं गृह्णीयात् ॥ पाठस्तु—

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ स्वर्विदम् । प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्धसे । उपयामगृहीतोऽसि शण्डाय त्वा । एष ते योनिर्वीरतां पाहीति । प्रत्नथेत्याद्यौ थाप्रत्यय उपमार्थः । हे इन्द्र, त्वां प्रत्नाः पुरातना भृग्वादयो यथाऽस्तुवन् । पूर्वथा पूर्वे साध्यादयो यथा । विश्वथा विश्वे ऋषयः ऋषिपुत्रा वा । इमथा इदानीन्तना जना यथा । तथा वय त्वा स्तुम इत्यर्थः । कीदृशमिन्द्रं ज्येष्ठतातिम् । स्वार्थे तातिप्रत्ययः । बर्हिषदं यागे सन्निहितत्वेन तिष्ठन्तम् । स्वर्विदं यजमानाय दातव्यं स्वर्गं वेत्तीति स्वर्वित् तम् । हे इन्द्र, यस्त्वं प्रतीचीनं प्रतिगमनमस्मत्प्रतिकूलं वृजनं वर्जनीयम् आलस्याश्रद्धादिकं दोहसे रिक्तीकरोषि विनाशयसि तादृशं त्वां स्तुमः । यासु क्रियासु धुनिं त्वदनुग्रहात् शत्रुं कम्पयन्तम् आशुं क्षिप्रकारिणं जयन्तं सम्यगनुष्ठानेन यजमानान्तराण्यतिशयानम् एनं यजमानम् अनु सोमपानेन स्तुत्या वर्धयसे । तासु क्रियासु तमिन्द्रं स्तुमः । हे शुक्रग्रह, त्वमुपयामगृहीतोऽसि शुक्रपुत्राय षण्डनामकाय त्वा गृह्णामि । एष असादेशः तव स्थानं, त्वं यजमानस्य वीरतां पाहि । कर्मशूरत्वं च पालय ॥ कात्यायनः ॥ शुक्रामन्थिभ्यां च चरतः ॥ शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता प्रोक्षिताप्रोक्षितौ यूपशकलावादायापिधानं प्रोक्षिताभ्यामवमार्जनमप्रोक्षिताभ्यामिति ॥ शुक्रामन्थिग्रहाभ्यां यथाक्रमेणाध्वर्युप्रतिप्रस्थातारावनुतिष्ठेताम् । तत्प्रकार उच्यते,

प्रोक्षिताभ्यां द्वाभ्यां यूपशकलाभ्यां सह प्रोक्षणरहितौ द्वौ यूपशकलौ स्वीकृत्य यथाक्रमेण तयोर्ग्रहयोः प्रोक्षिताभ्यां शकलाभ्याम् आच्छादनं कृत्वा अप्रोक्षिताभ्यां शकलाभ्याम् अपमार्जनं कुर्यात्॥तत्र शुक्रग्रहस्यापामार्जनमन्त्रः कात्यायनेन विनियुज्यते ॥ अपमृष्टः षण्ड-इत्यध्वर्युरिति ॥ अध्वर्युः पूर्वसूक्तेन प्रोक्षितशकलेनाच्छादनं कृत्वा अप्रोक्षितशकलेनापमृज्यात् । षण्डनामकोऽसुरपुरोहितः शुक्रपुत्रोऽपमृष्टः । अपमार्जनीकृतः ॥ कात्यायनः ॥ देवास्त्वेति निष्क्रामितो यथालिङ्गमिति ॥ अध्वर्युप्रतिप्रस्थातारौ यथाक्रमेण शुक्रमन्थीग्रहौ तत्तदद्रव्यवाचकमन्त्रलिङ्गमनतिक्रम्य निर्गच्छेताम् । तत्र शुक्रपदवाचकमन्त्रपाठः ॥ देवास्त्वा शुक्रपाः प्रणयन्त्विति । शुक्रनामकग्रहस्थं सोमं पिबन्तीति शुक्रपाः देवाः।हे शुक्रग्रह, त्वां प्रणयन्तु यजमानस्यान्नं प्रापयन्तु ॥ कात्यायनः ॥ अपरेणोत्तरवेदिमरत्नी सन्धायोत्तरवेदिश्रोण्यां निदधतो विसृजन्तौ दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थाता अनाधृष्टासीतीति ॥ अध्वर्युप्रतिप्रस्थातारावुत्तरवेदेः पश्चिमभागे अरत्न्याः संमेलनं कृत्वा ततस्तयोर्विसर्जनङ्कुर्वन्तौ यथाक्रमेणोत्तरश्रोण्योरुभयोर्ग्रहस्थापनं कुर्याताम् । अनाधृष्टा अनुपहिंसिता भवसि ॥ कात्यायनः ॥ सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युरितीति॥ अध्वर्युर्यूपस्य दक्षिणप्रदेशं गच्छेत् ॥पाठस्तु॥ सुवीरो वीरान् प्रजनयन् परीह्यभिरायस्पोषेण यजमानमिति ॥ हे शुक्र, त्वं सुवीरः शोभनशौर्योपेतः सन् वीरान् यजमानस्य शौर्योपेतान् भृत्यादीन् प्रजनयन् उत्पादयन् रायस्पोषेण धनस्य पुष्ट्या यजमानमभिलक्ष्य परीहि परितो गच्छ ॥ कात्यायनः ॥ अपरेण यूपम् अरत्नी सन्धत्तः सञ्जग्मान इति यथालिङ्गमिति ॥ यूपस्य पश्चिमभागे अध्वर्युप्रतिप्रस्थातारौ तत्तद्ग्रहवाचकपदलिङ्गमनतिक्रम्यारत्न्योः सन्धानं कुर्याताम् ॥ तत्राध्वर्युमन्त्रपाठः ॥ संजग्मानो दिवापृथिव्या शुक्रः शुक्रशोचिषेति ॥ शुक्रनामको ग्रहः द्युलोकभूलोकाभ्यां संजग्मानः सङ्गच्छमानः शुक्रशोचिषा शुद्धदीप्त्या यूयं बिभर्तीति शेषः ॥ कात्यायनः ॥ निरस्तः षण्ड इत्यध्वर्युरिति ॥ अध्वर्युरप्रोक्षितं यूपशकलं निरस्येत् । षण्डनामकः शुक्रपुत्रोऽसुरपुरोहितो निरस्तः यज्ञाद् बहिर्निक्षिप्तः॥ कात्यायनः ॥ शुक्रस्याधिष्ठानमध्वर्युरिति ॥ अध्वर्युराहवनीये प्रोक्षितं यूपशकलं प्रक्षिपेत् । अमीति मन्त्रशेषः ॥ १ ॥ २ ॥कात्यायनः॥ अच्छिन्नस्येति जपित्वेति ॥ अध्वर्युः-शकलप्रक्षेपानन्तरं जपेत् ॥ पाठस्तु ॥ अच्छिन्नस्य ते

देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्यामेति ॥ हे दीप्यमान सोम, अच्छिन्नस्याऽनवखण्डितस्य ते तव ददितारः स्याम । देवतासन्तुष्ट्यर्थं भूयो भूयो दातारो भवेम ॥ कात्यायनः ॥ उभयतो यूपं प्रत्यङ्मुखौ प्रत्यङ्मुखौ जुहुतः । सा प्रथमेत्यध्वर्युः प्रथममिति ॥ अध्वर्युप्रतिप्रस्थातारौ यूपस्योभयपार्श्वयोः पश्चिमाऽभिमुखौ स्थित्वा जुहुयाताम् । तत्राऽध्वर्युः प्रथमं जुहुयात् ॥पाठस्तु॥ सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रोऽअग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोत स्वाहेति ॥ यस्येन्द्रस्य या संस्कृतिः समीचीना कृतिर्विश्ववारा सर्वैर्देवैर्वरणीया सा प्रथमा देवानां मध्ये मुख्या स प्रथमो मुख्यः । स एवेन्द्रवरुणमित्राग्नयः चिकित्वान् चेतनाविशेषवान् बृहस्पतिरपि स एवेन्द्र एव । हे ऋत्विजस्तस्मै तादृशेन्द्राय सुतमभिषुतं सोममाभिमुख्येन जुहुत स्वाहाकारेण होमं कुरुत ॥ कात्यायनः ॥ तृपन्त्विति जपतीति ॥ होमानन्तरं जपेत् ॥ पाठस्तु ॥ तृपन्तु होत्रा मधोर्यत् स्विष्टं यत् सुभृतं यत्स्वाहेति ॥ मधोर्मधुरोपेतस्य सोमस्य यद्रसरूपं द्रव्यं स्विष्टं सुष्ठ्वपेक्षितं यत् सुभृतं सुष्ठु सम्भृतं यत् स्वाहाकृतं तादृशं रसरूपं द्रव्यं दृष्ट्वा होत्रा यष्टव्या देवतास्तृप्यन्तु ॥ ३ ॥ ४ ॥ इति सप्तमाऽध्याये षष्ठोऽनुवाकः ॥ ७ ॥ ६ ॥

षष्ठे शुक्रग्रह उक्तः ॥ सप्तमेऽनुवाके मन्थिग्रह उच्यते ॥ कात्यायनः ॥ मन्थिनमयं वेन इतीति ॥ मन्थिग्रहं गृह्णीयात् ॥ पाठस्तु ॥ अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपाꣳसङ्गमे सूर्यस्य शिशुं न विप्रा मतिभीरिहन्ति उपयामगृहीतोऽसि मर्काय त्वेति ॥ अयमितीन्द्रो निर्दिश्यते । वेनः कान्तोऽभीष्टः । विनि कान्ताविरयस्माद्धातोरुत्पन्नत्वात् । पृश्निरादित्यस्तस्य गर्भभूता आपः । तथाचान्यत्र मन्त्रोत्तराभ्यामयमर्थः श्रूयते ॥ केमा आपो अनिमिषन्तो यदितो यान्ति सम्प्रीति प्रश्नः ॥ आपः सूर्ये समाहिता अभ्राण्यपः प्रपद्यन्त इत्युत्तरम् ॥ अयं वेनः पृश्निगर्भाश्च उदयन् आपो वर्षतीत्यर्थः । कीदृशोऽयं ज्योतिर्जरायुः विद्युल्लक्षणं तेजो जरायुवद्वेष्टनं यस्यासौ ज्योतिर्जरायुः । कुत्र स्थितः । रजसो विमाने रजस उदकस्य विमाने निर्माणस्थाने अन्तरिक्षे अवस्थितः । अपां सूर्ये गर्भीभावः कथं सम्पन्न इति चेत् । अत्रोच्यते । विप्रा मेधाविनः ऋत्विजः अपां सूर्यस्य च सङ्गमे निमित्तभूते सति इममिन्द्रं शिशुं न । स्तनन्धयन्तं शिशुमिव लालयन्तम् । मतिभिर्मन्त्रमहिताभिराहुतिभिर्लिहन्ति यजन्तीत्यर्थः ॥आहुतिदेवताभिरिमा आपो नी-

यन्ते । एतदेवाभिप्रेत्य श्रूयते ॥ भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नय इति ॥ हे सोमरस, त्वम् । उपयामगृहीतोऽसि । उपयाममतीत्युपयामो ग्रहत्वेन गृहीतो भवसि मर्कः शुक्रपुत्रोऽसुरपुरोहितस्तस्मै त्वां गृह्णामीति शेषः ॥१॥ कात्यायनः ॥ सक्तुभिः श्रीणात्येनं मनोनयेष्विवतीति ॥ एनं मन्थिग्रहं यवमयैः पिष्टैर्मिश्रीकुर्यात् ॥ पाठस्तु ॥ मनोनयेषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता । आपः शर्याभिस्तुविनृम्णोऽअस्या श्रीणीतादिशं गभस्तौ । एष ते योनिः प्रजाः पाहीति ॥ विपश्चितो मेधाविनोऽध्वर्यवो, येषु हवनेषु सोमयागेषु शच्या कर्मणा निमित्तभूतेन मनोनय इव तिग्मं तीक्ष्णं क्षिप्रं व्याप्नुवन्ति । तथा हे शुक्रमन्थिनौ, द्रवन्तौ गच्छन्तौ युवां वनुथो युष्मदीयं होमं व्याप्नुथः । तेषु होमेषु कर्तव्येषु यः तुविनृम्णो बहुधनयुक्तो बहुदक्षिणोपेतोऽस्ति । अस्य गभस्तौ हस्ते स्थितस्य मन्थिग्रहस्य आदिशं प्रदिशं शर्याभिः स्वाङ्गुलीभिः आश्रीणीत । आश्रयं कुर्वीत । हे मन्थिग्रह, ते तव एष प्रदेशः । प्रजाः पाहि यजमानसम्बन्धिनीः प्रजाः पालय ॥ कात्यायनः ॥ अपमृष्टो मर्क इति प्रतिप्रस्थातेति ॥ प्रोक्षितेन यूपशकलेनाच्छादनं कृत्वा अप्रोक्षितेन शकलेनापामार्जनं कुर्यात् । मर्कनामकोऽसुरपुरोहितोऽपाजनीकृतः ॥ कात्यायनः ॥ देवास्त्वेतीति प्रतिप्रस्थाता निष्क्रामेत् ॥पाठस्तु॥ देवास्त्वा मन्थिपाः प्रणयन्त्विति ॥ हे मन्थिग्रह, त्वां, मन्थिग्रहं पिबन्तीति मन्थिपाः देवाः प्रणयन्तु । यजमानस्थानं प्रापयन्तु । अनाधृष्टासीति मन्त्रो विनियोगपुरःसरं पूर्वं व्याख्यातः ॥ कात्यायनः ॥ सुप्रजा इति प्रतिप्रस्थाता यूपस्योत्तरमिति ॥ प्रतिप्रस्थाता यूपस्योत्तरप्रदेशं गच्छेत् ॥ पाठस्तु ॥ सुप्रजाः प्रजाः प्रजनयन् परीह्यभिरायस्पोषेण यजमानमिति ॥ हे मन्थिग्रह, सुप्रजाः शोभनप्रजास्त्वं यजमानसम्बन्धिनीः प्रजाः प्रजनयन् रायस्पोषेण सह यजमानमागच्छ । अरत्नीसन्धाने विनियुक्तस्य प्रतिप्रस्थातृसम्बन्धिनो मन्त्रस्य ॥ पाठस्तु ॥ सञ्जग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषेति ॥ मन्थिनामको ग्रहो द्युलोकाभ्यां सञ्जग्मानः सङ्गच्छमानः, मन्थिशोचिषा मन्थिनः स्वदीप्त्या शुक्रं बिभर्तीति शेषः ॥ कात्यायनः ॥ निरस्तो मर्क इति प्रतिप्रस्थातेति ॥ प्रतिप्रस्थाता अप्रोक्षितं यूपशकलं निरस्येत् । मर्कनामकोऽसुरपुरोहितो निरस्तो निराकृतः ॥ कात्यायनः ॥ मन्थिन इति प्रतिप्रस्थातेति ॥ प्रतिप्रस्थाता प्रोक्षितं यूपशकलमाहवनीये प्रक्षिपेत् ॥२॥३॥ पाठस्तु ॥ अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्यामेति॥

पूर्ववद् व्याख्येयम् ॥ कात्यायनः ॥ समनु प्रतिप्रस्थातेति ॥ प्रतिप्रस्थाता तं होमं कुर्वाणमध्वर्युमनुसृत्य जुहुयात् ॥ पाठस्तु ॥ सा प्रथमा सꣳस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रोऽग्निः।स प्रथमो बृहस्पतिश्चिकित्वाꣳस्तस्मा इन्द्राय सुतमाजुहोत स्वाहेति ॥ पूर्ववद् व्याख्येयम् ॥ कात्यायनः॥तृपन्त्विति जपति ॥ तृपन्तु होत्रा मधोर्यास्स्विष्टं यत्सुप्रीतं यत्स्वाहेति॥ अयमपि व्याख्यातः ॥ ४ ॥ ५ ॥ इति सप्तमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥ ७ ॥

सप्तमेऽनुवाके मन्थिग्रह उक्तः ॥ अष्टमे आग्रयण उच्यते ॥कात्यायनः॥ आग्रयणं द्रुयोर्द्वारयोः ये देवास इतीति ॥ धाराद्वये क्षरति सति आग्रयणनामकं ग्रहं गृह्णीयात् ॥ पाठस्तु ॥ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादशस्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् । उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः । पाहि यज्ञं पाहि यज्ञपतिम् । विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाह्यभिसवनानि पाहीति ॥ हे देवासः देवाः, ये यूयं दिवि द्युलोके महिनेति त्रिषु स्थानेषु सम्बद्ध्यते । महिना महिम्ना स्वस्वमाहात्म्येन एकादश स्थ एकादशसंख्याका भवथ। तथा पृथिव्यामधि एकादश स्थ एकादशसंख्याका भवथ । तथाऽप्सुक्षित अन्तरिक्षे निवसथ एकादशसंख्याका भवथ । ते सर्वे देवा यूयं यज्ञं यजमानीयमिममाग्रयणग्रहं जुषध्वम् । हे आग्रयणग्रह, त्वम् उपयामेन पात्रेण स्वीकृतो भवसि। आग्रयणोऽसि । आग्रयणनामा भवसि । सुष्ठु अग्रं श्रैष्ठ्यं तस्य प्रापकः । स्वाग्रयण, तादृश, त्वं यज्ञं पाहि रक्ष । यज्ञपतिं यजमानं च रक्ष । विष्णुः यज्ञरूपी देव इन्द्रियेण स्वसामर्थ्येन त्वां पातु । त्वमपि तादृशं विष्णुं पालय। अभितः प्रातरादीनि सवनानि पालय ॥ कात्यायनः ॥ त्रिर्हिङ्कृत्य सोमः पवत इतीति ॥ हिङ्कारत्रयं कृत्वा जपेदिति शेषः ॥ पाठस्तु ॥ सोमः पवते सोमः पवते सोमः पवते अस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्मैसुन्वते यजमानाय पवते । इष ऊर्जे पवतेऽद्भ्य ओषधीभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवते । विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति ॥ सोमः पवते । पवतिर्गत्यर्थः । सोमो गच्छति । सोमः पवते इति त्रिरावृत्तिरादरार्था। अस्मै ब्रह्मणे ब्राह्मणजातिमीत्यर्थं पवते सोमो गच्छति स्वकीये कर्मणि प्रवर्तत इत्यर्थः । तथा क्षत्रियजातिमीत्यर्थं पवते । अस्मै सुन्वते सोमाभिषवं कुर्वते यजमानाय कर्मसिद्ध्यर्थं पवते इषे अन्नाय

ऊर्जे रसाय च पवते। अन्नयो हृष्ट्यर्थम्, ओषधीभ्यो व्रीहियवादिसिद्ध्यर्थं च पवते। द्यावापृथिवीभ्यां द्युलोकभूलोकप्रीणनार्थं पवते। किमत्र बहुनोक्तेन। सुभूताय सर्वेषां साधुभवनाय पवते। ब्रह्मवर्चसाय ब्राह्मणानां विशिष्टवर्चोऽभिवृद्ध्यर्थं पवते। हे आग्रयणग्रह, त्वां सर्वदेवतार्थमीसर्थं गृह्णामीति शेषः। एष स्वरमदेशस्तव स्थानम्। सर्वेभ्यो देवेभ्यस्त्वामासादयामीति शेषः ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ इति सप्तमाध्यायेऽष्टमोऽनुवाकः ॥ ७ ॥ ८ ॥

अष्टमेऽनुवाके आग्रयणग्रह उक्तः ॥ नवमे उक्थ्यग्रह उच्यते ॥ कात्यायनः ॥ उक्थ्यमुपयामगृहीत इतीति ॥ उक्थ्यग्रहं गृह्णीयात् ॥ पाठस्तु ॥ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवं गृह्णामि। यत्त इन्द्रबृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरुक्थेभ्यस्त्वा। देवेभ्यस्त्वा देवायुवं गृह्णामि यज्ञस्यायुषे मित्रावरुणाभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे। इन्द्राय त्वा देवायुवं गृह्णामि यज्ञस्यायुषऽइन्द्राग्निभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे। इन्द्राय त्वा देवायुवं गृह्णामि यज्ञस्यायुष इन्द्रावरुणाभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे। इन्द्राबृहस्पतिभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे। इन्द्राविष्णुभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुष इतीति ॥ हे सोम त्वमुपयामेन पात्रेण गृहीतो भवसि। हे उक्थ्यग्रह, उक्थ्यायुवं शस्त्रं कामयत इत्युक्थ्यायुश्छान्दसो दीर्घः। तादृशं त्वामिन्द्राय गृह्णामि स्वीकरोमि। कीदृशायेन्द्राय बृहद्वते बृहत्सामवान्। बृहत्साममियायेसर्थः। वयस्वते वयः सोमरूपमन्नं तद्वते। हे इन्द्र, यत्ते बृहद्वयो महदन्नं सोमरूपमस्ति तस्मै तत्पानाऽर्थं त्वां मार्थय इति शेषः। हे सोम, विष्णुदेवतार्थं त्वां गृह्णामि। एष स्वरमदेशः तव स्थानम् उक्थेभ्यस्त्वां सादयामि। देवेभ्यो देवानामर्थाय देवायुवं देवान् कामयमानं त्वां गृह्णामि। किमर्थं यज्ञस्यायुषे यज्ञस्य सम्पूर्णतया समाप्तिरायुर्यस्य च फलपर्यन्ततयाऽवस्थानं च आयुस्तस्मै त्वां गृह्णामीसर्थः। मित्रादिदेवतार्थं देवायुवं त्वां गृह्णामि। शिष्टं स्पष्टम् ॥ १ ॥ २ ॥ इति सप्तमाध्याये नवमोऽनुवाकः ॥ ७ ॥ ९ ॥

नवमे उक्थ्यग्रह उक्तः ॥ दशमे ध्रुवग्रह उच्यते ॥ कात्यायनः ॥ ध्रुवं मूर्धानं दिव इति ॥ ध्रुवनामकं ग्रहं गृह्णीयात् ॥ पाठस्तु ॥ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृतऽआजातमग्निम्। कविꣳसम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः। उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां

ध्रुव नमोऽच्युतानामच्युतक्षित्तमः । एष ते योनिर्वैश्वानराय त्वेति ॥ वयं वैश्वानरनामकमग्निं स्तुम इति शेषः। कीदृशमग्निं दिवोमूर्धानं शिरोवदुन्नतप्रदेशे सूर्यरूपेणावस्थाय द्युलोकस्य भासकम्। अरतिं पृथिव्याः। रतिरुपरतिस्तद्रहितम्। न हि पृथिव्या उपरि कदाचिदप्यग्निरुपरमते। किन्तु दाहकपाककमकाशैः सर्वाननुगृह्णन् सर्वदा वर्तते। ऋते यज्ञनिमित्ते, आजातम्। आभिमुख्येनारण्योरुत्पन्नम्। कविं स्वभक्ताननुग्रहीतुमभिज्ञं, सम्राजं सम्यग् दीप्यमानम्। जनानां यजमानानामतिथिं हविर्भिः सत्कारयोग्यमासन् = ईदृशस्याग्नेरास्ये मुखे होतुं देवाः पात्रं सोमग्रहरसरूपमाजनयन्त सर्वत ऐन्द्रवायवादिस्थानेषूत्पादितवन्तः । हे सोम, त्वमुपयामेन पात्रेण - गृहीतो भवसि। हे ग्रह, त्वं ग्रहनामकोऽसि । कीदृशस्त्वं ध्रुवक्षितिः ।-क्षि निवासगत्योः। स्थिरनिवासः । आवैश्वदेवीशंसनमवस्थानात् । ध्रुवाणामादित्यास्थाल्यादीनां मध्ये ध्रुवतमः। अतिशयेन स्थिरः। अच्युतानां च्युतिरहितानां सरणशून्यानाम् च्युतक्षितीनामपि मध्ये अच्युतक्षित्तमः । अच्युते क्षियन्ति निवसन्तीत्यच्युतक्षितः। तेषां श्रेष्ठोऽसि। एष खरप्रदेशस्तवस्थानम्। वैश्वानराग्नये त्वां सादयामि ॥ १ ॥ २ ॥ कात्यायनः ॥ सर्वमासिञ्चतीति ॥ ध्रुवपात्रस्थं सर्वं सोमं होतृचमसेऽवसिञ्चेत्॥पाठस्तु॥ ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामि।अथान इन्द्र इद्विशोऽसपत्नाः समनसस्करादिति ॥ ध्रुवेणैकाग्रेण मनसा मन्त्रोच्चारणया वाचा ध्रुवं ध्रुवग्रहेऽवस्थितं सोममवनयामि होतृचमसेऽवसिञ्चामि। अथानन्तरम्। इन्द्र इदिति। इन्द्र एव नोऽस्माकं विशः प्रजाः असपत्नाः सपत्नरहिताः शत्रुशून्याः, समनसः स्थिरमनस्काश्च करत् करोतु ॥ ३ ॥ इति सप्तमाध्याये दशमोऽनुवाकः ॥ ७ ॥ १० ॥ दशमेऽनुवाके ध्रुवग्रह उक्तः ॥ एकादशे विप्रुषां होम उच्यते ॥ कात्यायनः ॥ यस्त इति विप्रुषां होमं जुहुयादध्वर्युर्वेति ॥ प्रतिप्रस्थात्रुद्गात्रादिसहितोऽध्वर्युः केवलो वा विप्रुषां होमं जुहुयात् ॥ पाठस्तु ॥ यस्ते द्रप्स स्कन्दति यस्ते अꣳशुर्ग्रावच्युतो धिषणयोरुपस्थात्। अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतꣳ स्वाहेति ॥ हे सोम, ते त्वदीयो यो द्रप्सो रसो रसैकदेशः स्कन्दति भूमावन्यत्र वा पतति, ते त्वदीयो योऽꣳशुः ग्रावच्युतः ग्राव्णः सकाशात्पतितः। योऽधिषणयोरधिषवणफलकयोरुपस्थात् तत्सङ्गात् पतितो योऽꣳशुरध्वर्योर्वा पवित्राद्वा परिस्कन्दति। मनसा वषट्कृतं तं तादृशं ते तव त्वदीयमꣳशुं स्वाहा-

कारेण जुहोमि ॥ कात्यायनः ॥ वेदितृणेऽध्वर्युरादत्ते मह्ना उदञ्चो गच्छन् अन्यतरतृणं चात्वाले मास्यति देवानामितीति ॥ अध्वर्युर्वेद्यन्तर्गतं तृणद्वयं स्वीकृत्य बहिःपवमानार्थं मतिप्रस्थात्रुद्गात्रादिसहितः पङ्क्तीभूत उदङ्मुखो भूत्वा तयोरेकं तृणं चात्वाले प्रक्षिपेत् ॥ पाठस्तु ॥ देवानामुत्क्रमणमसीति॥हे चात्वाल, यस्माद्देवास्त्वत्प्रकाशात् स्वर्गं गामुत्क्रामन्ति तस्मात्त्वं देवानामुत्क्रमणमसि ॥१॥ इति सप्तमाध्याये एकादशोऽनुवाकः ॥७॥११॥

एकादशानुवाके विप्रुषां होम उक्तः । द्वादशे ऋतुग्रहा उच्यन्ते ॥ कात्यायनः ॥ ऋतुग्रहैः प्रचरतो द्रोणकलशादुपयामगृहीतोऽसि मधवे त्वेति ॥ द्वादशप्रतिमन्त्रमध्वर्योः पूर्वः पूर्वो मन्त्र उत्तर उत्तरः प्रतिप्रस्थातुरिति ॥ अध्वर्युःप्रतिप्रस्थाता चोभौ ऋतुग्रहैर्द्वादशभिरनुतिष्ठतः।उपयामेत्याद्यो द्वादश मन्त्राः । तत्र षट्सु मन्त्रयुग्मेषु पूर्वः पूर्वो मन्त्रोऽध्वर्योरुत्तर उत्तरः प्रतिप्रस्थातुरिति मन्त्रविवेकः । तत्रायं प्रथमो मन्त्रः ॥ उपयामगृहीतोऽसि मधवे त्वेति ॥ हे सोम, त्वम् उपयामयतीत्युपयामो ग्रहः । तेन गृहीतो भवसि त्वां मधवे एतत्संज्ञकाय चैत्रमासाय त्वां गृह्णामि ॥ अथ द्वितीयः ॥ उपयामगृहीतोऽसि माधवाय त्वेति ॥ वैशाखाय त्वां गृह्णामि ॥ अथ तृतीयः ॥ उपयामगृहीतोऽसि शुक्राय त्वेति ॥ ज्येष्ठाभिमानिदेवतायै त्वां गृह्णामि ॥ अथ चतुर्थः ॥ उपयामगृहीतोऽसि शुचये त्वेति ॥ शुचये आषाढमासाय त्वां गृह्णामि ॥ अथ पञ्चमो मन्त्रः ॥ उपयामगृहीतोऽसि नभसे त्वेति ॥ श्रावणमासाय त्वां गृह्णामि ॥ अथ षष्ठः ॥ उपयामगृहीतोऽसि नभस्याय त्वेति ॥ नभस्याय एतत्संज्ञकाय भाद्रपदमासाय त्वां गृह्णामि ॥ अथ सप्तमः ॥ उपयामगृहीतोऽसीषे त्वेति ॥ आश्वयुजमासाय सोम त्वां गृह्णामि ॥ अथाष्टमः ॥ उपयामगृहीतोऽस्यूर्जे त्वेति ॥ ऊर्जे एतन्नामकाय कार्तिकमासाय सोम त्वां गृह्णामि ॥ अथ नवमः ॥ उपयामगृहीतोऽसि सहसे त्वेति ॥ सहसे मार्गशीर्षमासाय सोम त्वां गृह्णामि ॥ अथ दशमः ॥ उपयामगृहीतोऽसि सहस्याय त्वेति ॥ सहस्यनाम्ने पुष्यमासाय सोम त्वां गृह्णामि ॥ अथैकादशः ॥ उपयामगृहीतोऽसि तपसे त्वेति ॥ तपःसंज्ञकाय माघमासाय सोम त्वां गृह्णामि ॥ अथ द्वादशः ॥ उपयामगृहीतोऽसि तपस्याय त्वेति ॥ तपस्याय फाल्गुनमासाय सोम त्वां गृह्णामि ॥ कात्यायनः ॥ त्रयोदशं गृह्णीयादिच्छन्नुपयामगृहीतोऽस्यꣳहसस्पतये त्वेति॥ त्रयोदशग्रहे अनुष्ठातुर्यदीच्छा स्यात्तर्हि अध्वर्युस्त्रयोदशग्रहं गृह्णीयात्।

यदि नेच्छा स्यात्तर्हि न गृह्णीयादित्यैच्छिको विकल्पः । अंहसस्पतये । अंह-तेर्गतिकर्मणः सन्प्रसर्पणस्य रूपम् । अंहसां गतीनां पतिश्चपोदशमासः आदित्यगतिवशेन जायते । तस्मै, हे सोम, त्वम् उपयामेन पात्रेण गृहीतोऽसि । तादृशं त्वां गृह्णामीति शेषः ॥१॥ इति सप्तमाध्याये द्वादशोऽनुवाकः ॥७॥१२॥

द्वादशे ऋतुग्रहा उक्ताः । त्रयोदशेऽनुवाके ऐन्द्राग्नग्रह उच्यते ॥ का-त्यायनः ॥ ऐन्द्राग्नं ग्रहं गृह्णाति मतिमस्यातेन्द्राग्नी इतीति ॥ मतिमस्याता इन्द्राग्निदेवताकं ग्रहं गृह्णीयात् ॥ पाठस्तु ॥ इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो-वरेण्यम् । अस्य पातं धियेषिता । उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वेति ॥ हे इन्द्राग्नी, सुतं सुतमभिषुतं सोमं प्रत्यागतम् आगच्छतम् । कीदृशं सोमं, गीर्भिः स्तुतिरूपाभिर्वाग्भिर्युक्तमिति शेषः । नभो नभः स्थितैः स्वर्गस्थितैरादित्यैर्देवैर्वरेण्यं प्रार्थनीयम् अस्य सोमस्य सम्बन्धिनं स्वकीयमंशं पातम् । सुतं पिबतम् ॥ कीदृशौ धियाऽस्मद्बुद्ध्येषितौ प्रार्थि-तौ । हे सोम, उपयामेन ग्रहेण गृहीतो भवति । हे ग्रह, इन्द्राग्निभ्यां त्वां गृह्णामि । एष खरः तव स्थानम् । इन्द्राग्निभ्यां त्वां सादयामि ॥ १ ॥ इति सप्तमाध्याये त्रयोदशोऽनुवाकः ॥ १० ॥ १३ ॥

त्रयोदशेऽनुवाके ऐन्द्राग्नग्रह उक्तः ॥ चतुर्दशे स एवोच्यते ॥ तत्रायं विकल्पितो मन्त्र आम्नातः ॥ आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुष-क् । येषामिन्द्रो युवा सखा । उपयामगृहीतोऽस्यग्नीन्द्राभ्यां त्वैष ते योनि-रग्नीन्द्राभ्यां त्वेति ॥ ये यजमाना अग्निम् आ इन्धते आदीपयन्ते । घेति अनर्थको निपातः । ये चाऽऽनुषक् आनुपूर्व्येण बर्हिस्तृणन्ति । येषां युवा । जरामृत्युरहित इन्द्रः सखा मित्रलक्षणो भवति । हे सोम, तेषां सम्बन्धिनि यज्ञे उपयामेन ग्रहेण स्वीकृतो भवसि । त्वामग्नीन्द्रदेवतार्थं गृह्णामि । एष खरप्रदेशस्तव स्थानम् । त्वां सादयामीति शेषः ॥ १ ॥ इति सप्तमाध्याये चतुर्दशोऽनुवाकः ॥ ७ ॥ १४ ॥

चतुर्दशे ऐन्द्राग्नग्रहस्य विकल्पितो मन्त्र उक्तः ॥ पञ्चदशे विश्वेदेवग्रह उच्यते ॥ कात्यायनः ॥ वैश्वदेवं गृह्णाति । शुक्रपात्रेण द्रोणकलशादन्वारब्धे ओमास इतीति ॥ अध्वर्युर्यजमानेन स्पृष्टेऽस्पृष्टे वा सति द्रोणकलशात् स-काशाच्छुक्रपात्रेण वैश्वदेवं सोमं गृह्णीयात् ॥ पाठस्तु ॥ ओमासश्चर्षणीधृतो विश्वेदेवास आगत । दाश्वाꣳसो दाशुषः सुतम् । उपयामगृहीतोऽसि

विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति ॥ हे विश्वेदेवाः, आगत अगच्छत। कीदृशाः, ओमासो रक्षितारः। चर्षणीधृतो मनुष्यपोषकाः। अनिष्टं निर्वाणं रक्षणम् । इष्टं प्राणपोषणम् । सुतम् अभिषुतं सोमं दाश्वो दत्तवतो यजमानस्य दाश्वांसः फलपूर्वं दत्तवन्तः । अन्यत् स्पष्टम् ॥ १ ॥ इति सप्तमाध्याये पञ्चदशोऽनुवाकः ॥ ७ ॥ १५ ॥

षोडशोऽपि स एवोच्यते ॥ पञ्चदशे वैश्वदेवग्रह उक्तः ॥ तत्रायं विकल्पितो मन्त्र आम्नातः ॥ विश्वेदेवास आगत शृणुता म इमꣳ हवम् । एदं बर्हिर्निषीदत । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति ॥ हे विश्वेदेवाः, यूयम् आगत अस्मद्यज्ञं प्रत्यागच्छत । आगत्य मे मदीयमिमं हवमाह्वानं शृणुत । श्रुत्वा च इदं मदीयम् इदं बर्हिषि आनिषीदत। शिष्टं स्पष्टम् ॥१॥ इति सप्तमाध्याये षोडशोऽनुवाकः ॥७॥१६॥

षोडशेऽनुवाके वैश्वदेवग्रहस्य वैकल्पिको मन्त्र उक्तः ॥ एतावन्तः प्रातःसवनग्रहाः समाप्ताः ॥ अथ सप्तदशमारभ्य माध्यन्दिनसवनग्रहा उच्यन्ते । तत्र तत्र ये मरुत्वतीयग्रहाः, तेषां माध्यन्दिनप्रयोगं तित्तिरिराह । माध्यन्दिने सवने मरुत्वतीया गृह्यन्ते इति ॥ तेषु त्रिषु प्रथमाह ॥ कात्यायनः ॥ मरुत्वतीयं मृत्पात्रेणेन्द्रमरुत्व इतीति ॥ मृत्पात्रेण गृह्णीयात् ॥ पाठस्तु ॥ इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य । तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वत इति ॥ मरुतो नाम देवा अस्य सन्तीति मरुत्वान् । तस्य सम्बोधनं, हे मरुत्वः । मतुवसो रु सम्बुद्धौ छन्दसीति रुत्वम् । ताद्दृशेन्द्र, त्वम् इहास्मदीये यज्ञे सोमं पाहि । पिब । यथा शार्याते । शर्यातिर्नाम कश्चिद्राजा तस्य सम्बन्धिनि यज्ञे सुतस्याभिषुतस्य सोमस्यांशमपिबः पीतवानसि । तद्वत् । हे शूरेन्द्र प्रणीत्या प्रणयेनानुज्ञया सुयज्ञाः कल्याणयज्ञाः पूर्वे कवयस्तव शर्मणि सुखे निमित्तभूते सति आविवासं परिचरन्ति तद्वद्वयमपि यजमान इत्यर्थः। स्पष्टमन्यत् ॥१॥ इति सप्तमाध्याये सप्तदशोऽनुवाकः ॥७॥१७॥

अथाष्टादशे मरुत्वतीयग्रहमाह ॥ कात्यायनः ॥ मरुत्वतीयग्रहणं मरुत्वन्तमितीति ॥ मरुत्वतीयं ग्रहं गृह्णीयात् ॥ पाठस्तु ॥ मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम् । विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वत-

इति ॥ इहास्मदीययज्ञे तमिन्द्रं हुवेम । वयमाह्वयाम । कीदृशमिन्द्रम्, मरुद्गणोपेतम्, वृषभं जलवर्षितारम् । वाजयन्तं कामानां वर्षयितारम् । विश्वासाहं विश्वं पालयितुं सहिष्णुम् । अनलसमित्यर्थः । सहोदां बलप्रदम् । शिष्टं स्पष्टम् ॥ १ ॥ इति सप्तमाध्यायेऽष्टादशोऽनुवाकः ॥ ७ ॥ १८ ॥

एकोनविंशे मरुत्वतीयमाह ॥ कात्यायनः ॥ ऋत्पात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोऽसि मरुतामोजस इतीति ॥ त्वेति मन्त्रशेषः ॥ हे मरुत्वतीयग्रह मरुताम् ओजसे बलाय त्वां गृह्णामीति शेषः ॥ १ ॥ इति सप्तमाध्याये एकोनविंशोऽनुवाकः ॥ ७ ॥ १९ ॥

विंशेऽपि स एव मरुत्वतीयमाह ॥ तत्रायं विकल्पितो मन्त्रः ॥ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् जहि शत्रूँरपमृधो नुदस्वाथाभयं कृणुहि विश्वतो नः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वत इति ॥ हे इन्द्र, त्वं सजोषाः सह जोषसा प्रीत्या सहितः । सगणः वस्वादिगणोपेतः । मरुद्भिरेकोनपञ्चाशन्मरुद्गणैः सह एव सपरिवारः सन् सोमं पिब । अनेन सोमपानेन, हे शूर विक्रान्त, इन्द्र, विद्वान् सर्वं जानन्, वृत्रहा वृत्रं शत्रुं हन्तीति वृत्रहा भविष्यसि । ततः शत्रून् जहि छिन्धि । मृधः संग्रामाद्ये हतावशिष्टाः शत्रवस्तानपनुदस्व अस्मान् अहत्वा पलायनार्थं प्रेरय स्वप्राणदानं कुर्वित्यर्थः । अथानन्तरं नोऽस्माकम् अभयं विश्वतः सर्वतः कृणुहि कुरु । स्पष्टमन्यत् ॥१॥ सप्तमाध्याये विंशोऽनुवाकः ॥ ७ ॥ २० ॥

सप्तदशादिविंशान्तेषु अनुवाकेषु मरुत्वतीयग्रहा उक्ताः । एकविंशे महेन्द्रग्रह उच्यते ॥ कात्यायनः ॥ माहेन्द्रं ग्रहं गृह्णाति वैश्वदेववन्महाँ इन्द्र इतीति ॥ यथा वैश्वदेवग्रहः शुक्रपात्रेण गृहीतः । तथा माहेन्द्रग्रहं तेनैव गृह्णीयात् ॥ पाठस्तु ॥ महाँ२ इन्द्रो नृवदाचर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वेति । अयं महानिन्द्रो नृवन्मनुष्यवदाचर्षणिप्राः । चर्षणयो मनुष्यास्तान् प्राति तदभीष्टभोग्यैः पूरयतीति चर्षणिप्राः यथा राजामात्यादिमनुष्यः सेवकानभीष्टभोगैरापूरयति तद्वत् । उतापि चायं द्वयोः प्रकृतिविकृतिरूपयोः सोमयागयोर्वृद्धिर्यस्येति द्विबर्हा अमिनः सहोभिः बलैरमित उपायाऽरहितः अस्मद्र्यक् अस्मत्सदृशः । वावृधे वृद्धिं प्राप्तः । यथा

यपमस्यानुग्रहाद् यद्वृद्धि आप्ताः तथैवाऽयपस्मदीयैर्हविर्भिर्वृद्धिः । एतदेव प्रपञ्च्यते । वीर्याय सामर्थ्यसिद्धये । कर्तृभिर्यजमानैरयं शुक्रोऽभूव शुष्मो वर्द्धितोऽभूत् । कीदृशी तस्याभिवृद्धिः । उरुर्यशसा विपुलः । पृथुर्बलेन विस्तृतः । स्पष्टमन्यत् ॥ १ ॥ इति सप्तमाध्याये एकविंशोऽनुवाकः ॥ ७ ॥ २१ ॥

एकविंशे माहेन्द्रग्रह उक्तः । द्वाविंशेऽनुवाके तस्यैव विकल्पितं मन्त्रान्तरमेवमाम्नायते ॥ पाठस्तु ॥ महाँऽइन्द्रो यऽओजसा पर्जन्यो वृष्टिमाँ२ इव । स्तोमैर्वत्सस्य वावृधे । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वेति ॥ वृष्टिमान् वृष्ट्यभिमानी पर्जन्यः इन्द्रदेव इव य इन्द्रः, ओजसा बलेन महान् स इन्द्रो वत्सस्थानीयस्य यजमानस्य स्तोमैः स्तोत्रैर्वावृधे वर्द्धताम् । हे सोम त्वम् उपयामपतीत्युपयामो ग्रहः । तेन गृहीतो भवसि । हे ग्रह, त्वां महेन्द्रदेवतार्थं गृह्णामीति शेषः । एष खरप्रदेशः तव स्थानम् । त्वां महेन्द्राय सादयामीति शेषः ॥ १ ॥ इति सप्तमाध्याये द्वाविंशोऽनुवाकः ॥ ७ ॥ २२ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराज–परमेश्वरवैदिकमार्गप्रवर्तक–श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये सप्तमोऽध्यायः ॥ ७ ॥

# अथ शुक्लयजुर्वेदकाण्वसंहिताभाष्ये अष्टमोऽध्यायः ॥ ८ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

सप्तमाध्याये उपांशुग्रहादिसवनद्वयगतमन्त्रा उक्ताः ॥ अष्टमाध्याये तार्तीयसवनगतादित्यग्रहादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ आदित्यं ग्रहं गृह्णाति सरस्वतेभ्यः कदाचनेतीति ॥ गृहीतहोमशेषाः सरस्रवाः । तेभ्यः सकाशादादित्यग्रहं गृह्णीयात् ॥ पाठस्तु ॥ कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यत आदित्येभ्यस्त्वेति ॥ हे इन्द्र त्वं कदाचन कदाचिदपि स्तरीर्हिंसको न भवसि । किन्तु दाशुषे षष्ठ्यर्थे चतुर्थी । हविर्दत्तवतो यजमानस्य हवींषि सश्चसि सेवसे । कुत्र उपोपेन्नु यजमानस्यात्यन्तसमीप एव । हे मघवन् धनवन् इन्द्र, भूय इन्नु पुनरेव च देवस्य तदवदानं देयं हविः पृच्यते । सम्बध्यते । यजमानेन हविर्दीयत इत्यर्थः । हे ग्रह, आदित्येभ्यो देवेभ्यस्त्वां गृह्णामीति शेषः । अत्रेन्द्रनामभिरऽप्यादित्य एव स्तूयते ॥ १ ॥ कात्यायनः ॥ पुनः कदाच नेतीति ॥ गृह्णीयादिति शेषः ॥ पाठस्तु ॥ कदाच न प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्यसवनं त इन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वेति ॥ नशब्दो निषेधार्थः । युच्छिधातुः प्रमादार्थः । हे इन्द्र, त्वं कदाचिदपि न प्रमाद्यसि । किन्तु वर्तमानं भावि चेत्युभे यजमानस्य जन्मनी पासि नितरां पालयसि । तृतीयमित्यस्मिन् वर्णव्यत्ययेन तुरीयशब्दः प्रयुक्तः । हे आदित्य, तृतीयं सवनं ते त्वदीयम् । तस्मिन् सवने इन्द्रियाभिवृद्धिकारणमऽमृतसमानं हविः दिवि द्युलोकसमाने आतस्थौ । आभिमुख्येन स्थितम् । स्पष्टमन्यत् ॥ २ ॥ कात्यायनः ॥ दध्ना श्रीणात्येनं यज्ञो देवानामितीति ॥ एतमादित्यग्रहं दध्ना मिश्रितं कुर्यात् ॥ पाठस्तु ॥ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वेति ॥ यज्ञो देवानामादित्यानां सुम्नं सुखं कर्तुं प्रत्येति । आदित्यासो आदित्या यूयं मृळयन्तः अस्माकं सुखयितारो भवत । वो युष्माकं या सुमतिः शोभनबुद्धिः भक्तानुग्रहपरा सा अर्वाची अस्मदभिमुखी आववृत्यात् आवर्तताम् । पुनरपि सैव विशेष्यते । अंहोर्हननशीलस्य पापिनोऽपि चित् चेत्

या सुमतिः वरिवो धनं तद्ददातीति, तत्रातिशयेन वेत्त्रीलब्ध्री वा वरिवोविदत्तरा। असत् । भवेत् । सा सुमतिरस्मदभिमुखी सती आववृत्यादिति सम्बन्धः । हे सोम, त्वामादित्येभ्यो देवेभ्यो दध्ना मिश्रयामीति शेषः ॥ कात्यायनः ॥ उपांशुसवनेन मिश्रयति विवस्वा आदित्येतीति ॥ उपांशुग्रहार्थं येन पाषाणेन सोमोऽभिपूयते । तादृशेन पाषाणेन एनं ग्रहं मिश्रीकुर्यात् ॥ पाठस्तु ॥ विवस्वाआदित्यैष ते सोमपीथस्तस्मिन्मत्स्वेति ॥ हे आदित्य, त्वं तमांसि विवासयतीति विवस्वान् विशिष्टधनवान् वा । एष पात्रस्थस्ते तव सोमपीथः पातव्यः सोमस्तस्मिन्मत्स्व तृप्तिं कुरु ॥ ३॥ इत्यष्टमाध्याये प्रथमोऽनुवाकः॥८॥१॥

प्रथमेऽनुवाके आदित्यग्रह उक्तः ॥ द्वितीये सोमविशेषावेक्षणमुच्यते ॥ कात्यायनः ॥ श्रदस्मै इत्येतमवेक्षते पत्नीति ॥ पत्नी एतं सोमविशेषं पश्येत् ॥ पाठस्तु ॥ श्रदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः। पुमान् पुत्रो जायते विन्दते वस्वधाऽविश्वाहारप एधते गृहे ॥ इति ॥ हे नरो नेतारः, ऋत्विग्यजमानपत्नयो यूयम् आशीर्दा सुब्लोपश्छान्दसः । आशिषो दातारः । ते यूयम् अस्मै वचसे आशीर्वचनाय श्रद्दधातन श्रद्धां कुरुत । आस्तिक्यबुद्धिं कुरुतेत्यर्थः । दम्पती पतिपत्न्यौ पत्नीयजमानौ वामं वननीयसम्बन्धि भजनीयं यज्ञफलम् अश्नुतः प्राप्नुतः । किञ्च, इहैव पुमान् पुंस्त्वधर्मसम्पन्नः पुत्रो जायते, वसु धनं विन्दते लभते । अधाऽनन्तरं विश्वाहा सर्वदा यः पापरहितः सन् गृहे एधते वर्धते ॥ १ ॥ इत्यष्टमे द्वितीयोऽनुवाकः ॥ ८॥२॥

द्वितीये सोमविशेषावेक्षणमुक्तम् ॥ तृतीये सावित्रग्रह उच्यते ॥ कात्यायनः ॥ उपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येतीति ॥ उपांशुग्रहान्तर्यामग्रहयोरेकतरेण सावित्रग्रहं गृह्णीयात् ॥ पाठस्तु ॥ वाममद्य सवितर्वाममुश्वो दिवे दिवे । वाममस्मभ्यꣳ सावीः । वामस्य हि क्षयस्य देवभूरेरया धिया वामभाज स्यामेति ॥ हे सवितः, सर्वस्य प्रेरयितर्देव, अद्यास्मिन् दिने अस्मभ्यं वामं वननीयं कर्मफलं सावीः प्रेरय देहीत्यर्थः । श्वोऽपि समनन्तरदिने वामं सावीः । दिवे दिवे तत ऊर्ध्वं दिने दिने वामं सावीः । हि यस्मात् कारणात्, हे देव, वामस्य वननीयस्य भूरेर्विस्तीर्णस्य क्षयस्य स्वर्गनिवाससिद्धये अयाऽनया धिया श्रद्धायुक्तया बुद्ध्या वामभाजः स्याम वननीयकर्मानुष्ठानिनो भवेम । तस्मादस्मभ्यं वननीयं कर्मफलं प्रेरयतीतिसम्बन्धः ॥ १ ॥ इत्यष्टमाध्याये तृतीयोऽनुवाकः ॥ ८ ॥ ३ ॥

तृतीयेऽनुवाके सावित्रग्रह उक्तः । चतुर्थेऽनुवाके तस्यैव विकल्पितो मन्त्र आम्नायते ॥ उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनो मयि धेहि। जिन्व यज्ञपतिं भगाय सवित्रे त्वेति ॥ हे सोम, त्वम् उपयामेन ग्रहेण गृहीतो भवसि । हे ग्रह, त्वं सावित्रोऽसि । सवितृदेवत्योऽसि । चनः अन्नं धत्त इति चनोधाः । अन्नस्य धारयिता भवसि । चनो मयि धेहि स्थापय यज्ञं जिन्व प्रीणय यज्ञपतिं यजमानं तर्पय । भगाय ऐश्वर्यगुणयुक्ताय । ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः * ज्ञानवैराग्ययोश्चैव षण्णां भग इतीर्यते इति । तादृशाय सवित्रे सर्वप्राणिनां प्रसवकर्त्रे देवाय त्वां गृह्णामीति शेषः ॥ १ ॥ इत्यष्टमाध्याये चतुर्थोऽनुवाकः ॥ ८ ॥ ४ ॥

चतुर्थेऽनुवाके सावित्रग्रहस्य वैकल्पिको मन्त्र उक्तः ॥ पञ्चमे वैश्वदेवग्रह उच्यते ॥ कात्यायनः ॥ महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्माऽसीति ॥ वैश्वदेवग्रहं गृह्णीयात् ॥ पाठस्तु ॥ उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षाय नमः । विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति ॥ हे वैश्वदेवग्रह, त्वं सुशर्मासि शोभनं शर्म सुखं यस्य तादृशो भवसि । सुष्ठु प्रतिष्ठानं पात्रे स्थितिर्यस्य तादृशोऽसि बृहदुक्षाय बृहन्महाँश्चाऽसौ उक्षः सेक्ता चेति बृहदुक्षः । प्रजापतिर्वै बृहदुक्ष इति श्रुतेः । तादृशाय जगदुत्पादयित्रे विश्वदेवात्मकाय प्रजापतये । नम इत्यन्ननाम । सोमाख्यमन्नं गृह्णामीत्यर्थः । स्पष्टमन्यत् ॥ १ ॥ इत्यष्टमाध्याये पञ्चमोऽनुवाकः ॥ ८ ॥ ५ ॥

पञ्चमेऽनुवाके महावैश्वदेवग्रह उक्तः । षष्ठे पात्नीवतग्रह उच्यते ॥ कात्यायनः ॥ उपयामगृहीतोऽसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णातीति ॥ प्रतिप्रस्थाता पात्नीवताख्यं ग्रहमुपांश्वन्तर्यामपात्रयोरेकतरेण गृह्णीयात् ॥ पाठस्तु ॥ उपयामगृहीतोऽसि बृहस्पतिसुतस्य ते देवसोम । इन्द इन्द्रियावतः पत्नीवतो ग्रहाँऽऋध्यासमिति ॥ हे इन्दो क्लेदनरूपदेव दीप्यमानसोम, बृहस्पतिसुतस्य बृहतो यज्ञाख्यकर्मणः पत्या पालयित्रा यजमानेनाभिषुतस्य ते तव सम्बन्धी उपांशुप्रभृतीन् पात्रविशेषान् ऋध्यासम् । कीदृशान् इन्द्रियावतो वीर्यवतः । पत्नीवतः पत्नीयुक्तान् । शिष्टं स्पष्टम् ॥ १ ॥ कात्यायनः ॥ प्रचरणीशेषेण श्रीणात्यग्नेम्नइ परस्तादितीति ॥ प्रचरणीपात्रे अवशिष्टेनोदकेन पात्नीवतं ग्रहं मिश्रीकुर्यात् ॥ पाठस्तु ॥ अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिता स । अहꣳ सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा

यत इति ॥ अत्र मन्त्रद्रष्टा स्वस्य सर्वगतपरमात्मरूपमभिमेत्य ब्रूते । अहं परमात्मरूपः सन् परस्तादुपरितनद्युलोकादौ अवस्तादधस्तनभूलोकादौ तिष्ठामीति शेषः । यदन्तरिक्षं मध्यवर्तिलोकरूपमस्ति तद्रु तदेव मे देहधारिणो मम पिता सवितृवत् प्रतिपालको बभूव । अहं परमात्मरूपः सन्, उभयत उपरिष्टादधस्ताच्च स्थित्वा सूर्यं ददर्श दृष्टवानस्मि । यद्वस्तु देवानामिन्द्रादीनां हृदये परमं गुहा अत्यन्तगोप्यम् अस्ति तदेवाऽहमस्मि ॥ कात्यायनः ॥ अग्ने वाक्पत्नीत्युत्तरार्द्धे जुहोतीति । आहवनीयस्योत्तरभागे जुहुयात् ॥ पाठस्तु ॥ अग्ने वाक् पत्नि सजूर्देवेन त्वष्ट्रा । सोमं पिब स्वाहेति ॥ हे वाक् वागभिमानिनि, हे पत्नि पत्नीवन्नग्ने, त्वष्ट्रा देवेन सह सजूः समानप्रीतिः सन् सोमं पिब स्वाहा सुहुतमस्तु ॥२॥३॥ कात्यायनः ॥ उद्गातृवत् पत्नीं सदः प्रवेश्यापरेणोत्तरत उपविष्टामुद्गातारं समीक्षयति प्रजापतिर्वृषासीतीति ॥ पूर्वमुद्गातुर्यथा सदःप्रवेशन तथा पत्नीं सदः प्रवेशयित्वा पश्चिमोत्तरदिशोर्मध्ये स्थिता तामुद्गात्रा समीक्षयेत् । पत्नी उद्गातारं पश्येदित्यर्थः ॥ पाठस्तु ॥ प्रजापतिर्वृषाऽसि रेतोधा रेतो मयि धेहि । प्रजापतेस्ते वृष्णो रेतोधसो रेतोधा मशीयेति ॥ प्रजापतिः प्रजानां पालकः त्वं वृषासि सेक्ता भवसि । रेतोधा रेतसो वीर्यस्य धारयिताऽसि । एवंगुणयुक्तस्त्वं रेतो वीर्यं मयि धेहि स्थापय तदनन्तरं वृष्णः वीर्यस्य सेक्तुः रेतोधसो रेतसो धारयितुः प्रजापतेस्ते तवानुग्रहाद् रेतोधां रेतसो धारयितारं प्रजोत्पादनसमर्थं पुत्रम् अशीय प्राप्नुयाम् ॥ ४ ॥ इत्यष्टमाध्याये षष्ठोऽनुवाकः ॥ ८ ॥ ६ ॥

षष्ठेऽनुवाके पात्नीवतग्रहग्रहणमुक्तम् ॥ सप्तमे हारियोजनग्रह उच्यते ॥ कात्यायनः ॥ द्रोणकलशे हारियोजनग्रहमुपयामगृहीतोऽसि हरिरसीति ॥ द्रोणकलशस्थं सोमं हारियोजनग्रहे गृह्णीयात् ॥ पाठस्तु ॥ उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वेति ॥ हे सोम, त्वं हरिः हरितवर्णोऽसि । हे ग्रह, त्वं हारियोजनः । हारी इन्द्राश्वौ तौ येन प्रयुज्येते इति हारियोजनः इन्द्रः । तत्सम्बन्धी भवसि । सोम त्वा हरिभ्यां गृह्णामीति शेषः ॥ कात्यायनः ॥ धानाश्चावपति हर्योर्धाना स्थेति ॥ भ्रष्टयवान् हारियोजनग्रहे निदध्यात् ॥ पाठस्तु ॥ हर्योर्धाना स्थ सह सोमा इन्द्रायेति ॥ सहसोमाः सोमेन सहिता धाना भ्रष्टयवा इन्द्रायेन्द्रस्य हर्योरश्वयोर्भवन्ति ॥ १ ॥ कात्यायनः ॥ यस्ते देव सोमाश्वसनिरिति प्राणभक्षं भक्षयित्वेति ॥ प्राणधारणार्थं यो भक्षः तं

भक्षयेत् ॥ पाठस्तु ॥ यस्ते देव सोमाश्वसनिर्भक्षो यो गोसनिः तस्य त इष्टयजुषस्तुतस्तोमस्य शस्तोक्थस्योपहूत उपहूतस्य भक्षयामीति ॥ हे देव दीप्यमान सोम, ते त्वदीयो यो भक्षः अश्वसनिः अश्वानां दाता, यो भक्षो गवां दाता तस्य तादृशस्य ते त्वदीयं तादृशं भक्षम् उपहूतः अभ्यनुज्ञातोऽहं भक्षयामि । कीदृशस्य ते । इष्टयजुषः । इष्टानि यजूंषि यस्य स इष्टयजुस्तस्य, स्तुतस्तोमस्य उद्गातृभिस्तुतानि स्तोत्राणि यस्य स तथोक्तः, तस्य । होतृभिः शस्तानि उक्थानि शस्त्राणि यस्य स शस्तोक्थः तस्य । उपहूतस्याभ्यनुज्ञातस्य ॥ २ ॥ इत्यष्टमाध्याये सप्तमोऽनुवाकः ॥ ८ ॥ ७ ॥

सप्तमे प्राणभक्षग्रह उक्तः । अष्टमे षोडशी ग्रह उच्यते ॥ कात्यायनः ॥ षोडशिनं खादिरेण चतुस्स्रक्तिनाऽऽतिष्ठ युक्ष्वाहीति वेति॥आतिष्ठ वृत्रहन्नित्यं युक्ष्वाहिकेशिनेत्यनयोरन्यतरं मन्त्रमुच्चारयन् खादिरवृक्षनिर्मितेन चतुरस्रेण पात्रेण षोडशिग्रहं गृह्णीयादिति शेषः । तयोरेकतरपाठस्तु ॥ युक्ष्वाहिकेशिना हरी वृषणा कक्ष्यप्रा । अथान इन्द्र सोमपा गिरामुपश्रुतिं चर । उपयामगृहीतोऽसीन्द्राय त्वा षोळशिन एष ते योनिरिन्द्राय त्वा षोळशिन इति॥हे इन्द्र, हि यस्मात् कारणात् हरी हरितवर्णौ त्वदीयावश्वौ, युक्ष्व रथेन संयोजय । कीदृशौ हरी। केशिना केशिनौ महत्केसरौ वृषणा वृषणौ सेचनसमर्थौ । कक्ष्यप्रा,कक्षे भव कक्ष्यः। अश्वसन्नाहरज्जुस्तया पूर्यते सम्बध्यत इति कक्ष्यप्रौ । अथानन्तरं सोमपाः सोमपानं कुर्वन् नोऽस्मदीयानां गिराम् ऋग्यजुःसामलक्षणानां वाचामुपश्रुतिम् उपश्रवणं चर गच्छ प्राप्नुहि । शृण्वित्यर्थः । षोडशिने षोडशो ग्रहोऽस्यास्तीति षोडशी तादृशेन्द्राय, हे ग्रह, तादृशं त्वां गृह्णामीति शेषः । शिष्टं स्पष्टम् ॥ १ ॥ अथान्यतरपाठस्तु ॥ आतिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोळशिन एष ते योनिरिन्द्राय त्वा षोळशिन इति॥ हे वृत्रहन्निन्द्र, ते त्वदीयौ हरी अश्वौ ब्रह्मणा त्वयीलक्षणेन मन्त्रेण युक्ता रथेन संयुक्तौ, अतस्त्वं रथमातिष्ठ आरोहणं कुरु । किञ्च ग्रावा, अयं सोमाभिषवपाषाणस्ते रथमारूढस्य तव मनो वग्नुना । वग्नुरिति वाङ्नामसु पठितः । वाचा श्रवणीयेनाभिषवशब्देन सुष्ठु अर्वाचीनम् अस्मद्यज्ञाभिमुखं कृणोतु करोतु ॥ १ ॥ इत्यष्टमाध्यायेऽष्टमनवमानुवाकौ ॥ ८ ॥ ८ — ९ ॥

अष्टमनवमयोः षोडशिग्रह उक्तः । दशमे तस्यैव वैकल्पिकमन्त्र आम्नातः ॥

इन्द्रमिद्धरी वहतो ऽप्रतिधृष्टशवसम् । ऋषीणां च स्तुतीरुपयज्ञं च मानुषा-णाम् । उपयामगृहीतोऽसीन्द्राय त्वा षोळशिन एष ते योनिरिन्द्राय त्वा षोळशिन इति॥ हे हरी इन्द्रस्याश्वौ युवामप्रतिधृष्टशवसम् । प्रतिधर्षयितुं शक्यं प्रतिधृष्टं न प्रतिधृष्टमप्रतिधृष्टं तादृशं शवो बलं यस्य सः । तमिन्द्रमिन्द्रमेवम् । ऋषीणां वसिष्ठादीनां स्तुतीः उपसमीपं मानुषाणां यजमानानां च यज्ञसमीपं वहतः प्रापयतः ॥ १ ॥ इत्यष्टमाध्याये दशमोऽनुवाकः ॥ ८ ॥ १० ॥

दशमे षोडशिग्रहस्य वैकल्पिकमन्त्र उक्तः । एकादशे तस्योपस्थानमुच्यते कात्यायनः ॥ उपस्थायैनं यस्मान्न जात इतीति षोडशीग्रहमुपतिष्ठेत् ॥ पाठस्तु ॥यस्मान्न जातः परोऽअन्यो अस्ति यऽआविवेश भुवनानि विश्वा । प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतींषि सचते सषोळशीति ॥ यस्माद् पुरुषात् अन्यो व्यतिरिक्तः पर उत्कृष्टो देवादिर्जातः सम्भूतो नास्ति । यो विश्वानि सर्वाणि भूतजातानि आविवेश अन्तर्यामिरूपेण प्रविष्टवान् । प्रजापतिश्च उत्पन्नानां प्रजाना पालकः । प्रजया प्रजारूपेण संरराणः सम्यग् रममाणः त्रीणि ज्योतींꣳषि विषयज्ञापकानि अग्निवाय्वादित्यलक्षणानि सचते सेवते । स्वतेजसा ज्योतिषां सेवनं जडज्योतिषामुज्ज्वलत्वं करोतीत्यर्थः । येन सूर्यस्तपति तेजसेद्ध इत्यादिश्रुतेः । य एवंरूपः स एव षोडशी षोडश-कलात्मकलिङ्गशरीरोपहितोऽसौ सर्वव्यवहाराश्रयो भवतीत्येवं षोडशिग्रहरूप इति स्तूयते ॥ १ ॥ इत्यष्टमाध्याये एकादशोऽनुवाकः ॥ ८ ॥ ११ ॥

एकादशे षोडशीग्रहोपस्थानमुक्तम् । द्वादशे तस्य भक्षणमुच्यते ॥ कात्यायनः ॥ इन्द्रश्च सम्राळिति भक्षणमिति ॥ पाठस्तु ॥इन्द्रश्च सम्राड् वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् । तयोरहमनुभक्षं भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहेति॥ यो वाजपेययाजी स सम्राट् । षडैश्वर्ययुक्तः इन्द्रश्च राजा राजसूययाजी वरुणश्च । राजा वै राजसूयेनेष्ट्वा भवति । सम्राड् वाजपेयेनेति श्रुतेः । ताविन्द्रावरुणौ, हे षोडशीग्रह, ते त्वदीयमेनं सोममग्रे प्रथमं भक्ष्य चक्रतुः कृतवन्तौ । तयोरिन्द्रवरुणयोः सम्बन्धिनं भक्ष्यमनु पश्चादहं भक्ष्यं भक्षयन् सोमं भक्षयामि । जुषाणा मदीयेन भक्षणेन सेवमाना वाग्देवी सरस्वती प्राणेन प्राणदेवतया सह सोमस्य भक्ष्येण तृप्यतु तृप्ता भवतु । स्वाहा सुहुतमस्तु ॥१॥ इत्यष्टमाध्याये द्वादशोऽनुवाकः ॥८॥१२॥

द्वादशे षोडशिग्रहस्य भक्षणमुक्तम् ॥ त्रयोदशादिषु चतुर्ष्वनुवाकेषु

अतिग्राह्या उच्यन्ते ॥कात्यायनः॥ पृष्ठ्यः षळहस्तत्रातिग्राह्यग्रहणं ऽग्रे पूर्वोऽग्ने पवस्वोत्तिष्ठन्दृश्मित्यन्त्रहमेकैकमग्ने वर्चस्विन्निन्द्रौजस्विन्त्सूर्य भ्राजस्वीति भक्षणमिति॥ अस्ति कश्चित् पृष्ठ्यः षडहाख्यः क्रतुः।स तु षड्भिरहोभिर्नि-ष्पाद्यः । तत्र पूर्वस्मिन्नहन्यग्ने क्रमेणाग्ने पवस्वेत्यादिभिस्त्रिभिर्मन्त्रैरतिग्राह्यान् गृह्णीयात् । तथैवाग्ने वर्चस्विन्नित्यादित्रिभिर्मन्त्रैस्तत्तद्ग्रहशेषं भक्षयेत् । तत्र योऽयं प्रथमातिग्राह्यग्रहणार्थोऽग्ने पवस्वेति मन्त्रस्तेन सह विकल्पयितुमन्यः कश्चिद्ग्रहणमन्त्रो भक्षणमन्त्रश्चाम्नातः ॥ तयोः पाठस्तु ॥ अग्न आयूंषि पवस आसुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम् । उपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे। अग्ने वर्चस्विन् वर्चस्वांस्त्वं देवेष्वसि। वर्चस्वानहं मनुष्येषु भूयासमिति ॥ हे अग्ने आयूंषि पवसे गमय । अस्मान् अतिदीर्घकालजीवनमानयेत्यर्थः । किञ्च, नोऽस्मभ्यम् ऊर्जं विशिष्टं क्षीरादि-रसम् ईषमन्नं वा सुव प्रेरय । देहीत्यर्थः । दुच्छुनामस्माकं दौर्गत्यम् आरे दूरे एव बाधस्व विनाशय । उपयामवतीत्युपयामो ग्रहः।हे सोम, त्वं तेन गृहीतो-ऽसि। हे ग्रह, त्वां तेजस्विनेऽग्नये गृह्णामीति शेषः । एष खरप्रदेशस्तव स्था-नम् । तस्मिन्निमित्यर्थ त्वां सादयामीति शेषः । हे वर्चस्वन्नतिविशिष्टतेजः-सम्पन्नाग्ने, त्वं देवेष्विन्द्रादिषु मध्ये वर्चस्वानतिदीप्तिमानसि । अतस्त्व-त्प्रसादादहमपि मनुष्येषु मध्ये वर्चस्वान् ब्रह्मवर्चससम्पन्नो भूयासम् ॥ १ ॥ इत्यष्टमाध्याये त्रयोदशोऽनुवाकः ॥ ८ ॥ १३ ॥

त्रयोदशे प्रथमातिग्राह्यस्य वैकल्पिकौ ग्रहणभक्षणमन्त्रौ उक्तौ॥ चतुर्दशे सूत्रोक्तौ ग्रहणमन्त्रावुच्येते ॥ तयोः पाठस्तु ॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयिपोषम् । उपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे। अग्ने वर्चस्विन् वर्चस्वांस्त्वं देवेष्वसि । वर्चस्वानहं मनुष्येषु भूयासमिति ॥ हे अग्ने स्वपाः, अप इति कर्मनाम । शोभनकर्मा त्वम् अस्मे अस्मभ्यं सुवीर्यं शोभनसामर्थ्योपेतम् । ब्रह्मवर्चो ब्रह्मवर्चसं पवस्व गमय। किं कुर्वन् । मयि यजमाने । रयिं धनं पोषं पुष्टिं च दधद् धारयन् । स्थापय-न्नित्यर्थः । अन्यद्व्याख्यातम् ॥१॥ इत्यष्टमाध्याये चतुर्दशोऽनुवाकः ॥८॥१४॥

चतुर्दशेऽनुवाके प्रथमातिग्राह्यस्य ग्रहणभक्षणमन्त्रावुक्तौ ॥ पञ्चदशे द्वि-तीयातिग्राह्यस्य ग्रहणभक्षणमन्त्रावुच्येते॥ तयोः पाठस्तु ॥ उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः।सोममिन्द्रचमू सुतम् । उपयामगृहीतोऽसीन्द्राय त्वौजसे

एष ते योनिरिन्द्राय त्वौजसे। इन्द्रौजस्वन्नोजस्वाऽस्त्वं देवेष्वसि। ओजस्वान् अहं मनुष्येषु भूयासमिति ॥ हे इन्द्र, त्वमोजसा बलेन सुहोतिष्ठँश्चमू चम्वौ अधिषवणचर्मणीत्यर्थः । सुतमभिषुतं सोमं पीत्वी पीत्वा शिप्रे हनू अवेपयः वेपनं कम्पनमकरोः । हे ग्रह ओजस्वन्, इन्द्राय त्वां गृह्णामि सादयामि चेति शेषः। हे ओजस्वन् ओजो बलं तद्वदिन्द्र, त्वं देवेषु मध्ये यथा ओजस्वान् विशिष्टबलसम्पन्नोऽसि तथाऽप्यहं त्वत्प्रसादान्मनुष्येषु मध्ये ओजस्वान् भूयासम् ॥ १ ॥ इत्यष्टमाध्याये पञ्चदशोऽनुवाकः ॥ ८ ॥ १५ ॥

पञ्चदशे द्वितीयातिग्राह्यग्रहणभक्षणमन्त्रावुक्तौ ॥ षोडशेऽनुवाके तृतीयाऽतिग्राह्यस्य ग्रहणभक्षणमन्त्रौ उच्येते ॥ तयोः पाठस्तु ॥ अदृश्रमस्य केतवो विरश्मयो जनाँऽअनु । भ्राजन्तो अग्नयो यथा । उपयामगृहीतोऽसि सूर्याय त्वा भ्राज एष ते योनिः सूर्याय त्वा भ्राजे। सूर्य भ्राजस्वन् भ्राजस्वाऽस्त्वं देवेष्वसि । भ्राजस्वानहं मनुष्येषु भूयासमिति । अस्य सूर्यस्य केतवः प्रज्ञालक्षणरश्मयः किरणा जनान् अनुसर्वान् प्राणिनोऽनुगता अदृश्रं विशेषेण दृश्यन्ते । दृशिधातोश्छान्दसं रूपम् । तत्र दृष्टान्तः । भ्राजन्तो ज्वलन्तोऽग्नयो यथा जनानुगता दृश्यन्ते तद्वद् भ्राजे भ्राजति इति भ्राट् तस्मै सूर्याय, हे ग्रह, त्वां गृह्णामि। भ्राजे सूर्याय त्वां सादयामि च । हे भ्राजस्वन् सूर्य, त्वं देवेषु मध्ये यथा भ्राजस्वन् भ्राजिष्णोऽसि । तथाऽप्यहं मनुष्येषु मध्ये भ्राजस्वान् भूयासम् ॥ १ ॥ इत्यष्टमाध्याये षोडशोऽनुवाकः ॥ ८ ॥ १६ ॥

षोडशेऽनुवाके तृतीयातिग्राह्यग्रहणभक्षणमन्त्रावुक्तौ ॥ सप्तदशे गवामयनाऽऽख्यस्य संवत्सरसत्रस्य विषुवन्नामके मध्यमे निर्सौर्यपशूपालम्भादूर्ध्वमतिग्राह्यग्रहणमुच्यते ॥ कात्यायनः ॥ सौर्यं उपालभ्य उदुत्यमिति अतिग्राह्यग्रहणमिति ॥ पाठस्तु ॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राज एष ते योनिः सूर्याय त्वा भ्राजे । सूर्य भ्राजस्वन् भ्राजस्वाऽस्त्वं देवेष्वसि । भ्राजस्वानहं मनुष्येषु भूयासमिति ॥ जातवेदसं जातानां वेदितारं जातप्रज्ञं वा देवं देवनशीलम् । एवं गुणविशिष्टं महानुभावं सूर्यं केतवः प्रज्ञापका रश्मयः अश्वा वा उद्वहन्ति। उदयाचलादुद्गमयन्ति। किमर्थं, विश्वाय, षष्ठ्यर्थे चतुर्थी विश्वस्य सर्वस्य जगतो दृशे दर्शनाय । प्रसिद्धमन्यत् ॥ अथ भक्षणमन्त्रपाठः ॥ अतिग्राह्यान्तरेष्विव लक्षणमन्त्रस्यास्य पृथगाम्नातत्वाचद्वदनात्येतेन मन्त्रेण भक्षणं

प्राप्तम् । तथापि कात्यायनेन भक्षवर्जमिति भक्षणस्य निषिद्धत्वान्मन्त्राम्नात-
वैयर्थ्यपरिहाराय होमानन्तरमयं मन्त्रो जाप्य इत्यभिप्रायः। अक्षरार्थस्तु पूर्ववद्-
योज्यः ॥ १ ॥ इत्यष्टमाध्याये सप्तदशोऽनुवाकः ॥ ८ ॥ १७ ॥

सप्तदशे विपुवत्सौर्यातिग्राह्यातिग्रहणभक्षणमन्त्रावुक्तौ । अष्टादशे तत्रैव
विकल्पितौ ग्रहभक्षणमन्त्रावाम्नातौ ॥ तयोः पाठस्तु ॥ चित्रं देवानामुदगा-
दनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्राद्यावा पृथिवीऽअन्तरिक्षꣳ सूर्य आत्मा
जगतस्तस्थुषश्च । उपयामगृहीतोऽसि सूर्याय त्वा भ्राज एष ते योनिः सूर्याय
त्वा भ्राजे॥ सूर्य भ्राजस्वन् भ्राजस्वाꣳस्त्वं देवेष्वसि । भ्राजस्वानहं मनुष्येषु
भूयासमिति ॥ चित्रं रक्तश्वेतादिविविधवर्णानां देवानां रश्मीनामनीकं सैन्य-
सदृशमण्डलम् उदगात् उदयच्छत् । कीदृशं मित्रादिदेवोपलक्षितस्य कृत्स्नस्य
प्राणजातस्येन्द्रियाधिष्ठातृत्वाच्चक्षुःस्थानीयम् । तन्मण्डलस्थः सूर्यो जगतो
जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा । स च लोकत्रयमाप्राः सर्वतः पूरि-
तवान्। उपयामगृहीतोऽसीत्यादि व्याख्यातं समानार्थम् ॥१॥ इत्यष्टमाध्याये-
ऽष्टादशोऽनुवाकः ॥ ८ ॥ १८ ॥

अष्टादशे विपुवत्सौर्यातिग्राह्यस्य विकल्पितौ ग्रहभक्षणमन्त्रावुक्तौ । गवा-
मयनस्योपान्त्ये महाव्रताख्येऽहनि प्राजापत्यपशूपालम्भादूर्ध्वं यो ग्रहो विहित-
स्तस्य तस्य वैकल्पिकग्रहणमन्त्रा एकोनविंशादिष्वनुवाकेषूच्यन्ते । का-
त्यायनः ॥ ग्रहं गृह्णाति विन इन्द्र इति । वाचस्पतिं विश्वकर्माणमिति वेति ॥
प्रथममन्त्रपाठस्तु ॥ वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्माँ-
ऽअभिदासत्यधरं गमया तमः । उपयामगृहीतोऽसीन्द्राय त्वा विमृध एष ते
योनिरिन्द्राय त्वा विमृध इति॥ हे इन्द्र, नोऽस्माकं मृधः शत्रून् विशेषेण ज-
हि। किञ्च । अस्मान्मारयितुं पृतन्यतः सेनामिच्छतः शत्रून् नीचा न्यग्भूतान्
यच्छ उपरतान् कुरु । यश्चान्योऽस्मानभिदासति उपक्षयति । तं शत्रुमधरं
निकृष्टं तमो नरकं गमय प्रापय । विशिष्टसंग्रामयते इन्द्राय, हे ग्रह, त्वां
गृह्णामीति शेषः। शिष्टं स्पष्टम्॥१॥ इत्यष्टमाध्याये एकोनविंशोऽनुवाकः॥८॥१९॥

एकोनविंशे महाव्रताख्येऽहनि विहितस्य ग्रहस्य ग्रहणमन्त्र उक्तः ।
विंशे तत्रैव विकल्पितो द्वितीयो ग्रहणमन्त्र उच्यते ॥ पाठस्तु ॥ वाचस्पतिं
विश्वकर्माणमूतये मनोजुवं वाजे अद्याहुवेम । स नो विश्वानि हवनानि
जोषद्विश्वशंभूरवसे साधुकर्मा । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष

ते योनिरिन्द्राय त्वा विश्वकर्मण इति ॥ वाचस्पतिं वाचां पालयितारम्। विश्वकर्माणं विश्वानि समस्तजगदुत्पत्त्यादिकर्माणि यस्य स तथोक्तः । तं मनोजवं जूरिति जवनाम । मनसो जूरिव जव इव जवो यस्य स मनोजूस्तादृशमिन्द्रम् अवसे । अन्ननाम । अन्नसमृद्ध्यै । वाजे महाव्रतीयलक्षणेऽन्नविषये अद्यास्मिन् अहनि ऊतये रक्षणाय हुवेम । आह्वयामः । स इन्द्रो नोऽस्माकं विश्वानि हवनानि सर्वाण्याह्वानानि अवसे अन्नाय अन्नसमृद्ध्यै रक्षणाय वा जोषत् । जुषताम् । युष्मदाह्वानं साधु साध्विति सेवताम् । कीदृश इन्द्रः । विश्वशम्भूः विश्वस्य शं सुखमस्माद्भवतीति विश्वशम्भूः । साधुकर्मा समीचीनकर्मा । शिष्टं समानम् ॥ १ ॥ इत्यष्टमाध्याये विंशोऽनुवाकः ॥ ८ ॥ २० ॥

विंशे महाव्रताख्ये द्वितीयो वैकल्पिको ग्रहणमन्त्र उक्तः । एकविंशे तत्रैव वैकल्पिको ग्रहणमन्त्र उच्यते ॥ पाठस्तु ॥ विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु । उपयामगृहीतोसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मण इति ॥ हे विश्वकर्मन्निन्द्र, त्वं महाव्रतीयलक्षणेन हविषा वावृधानः अतिशयेन वर्धमानः स्वयं त्वं पृथिवीं भूलोकम् उतापि त्वां द्युलोकं यजस्व यजनं पूजनं कुरुष्व । एवंविधत्वदीयकर्म दृष्ट्वा अन्ये तव सपत्नाः शत्रवो भीताः शत्रवो मुह्यन्तु । संमोहं गच्छन्तु। इहास्मिन् कर्मणि अस्माकं समग्रधनसम्पन्नः सूरिः पण्डितोऽस्तु । अन्यद् गतम् ॥१॥ इत्यष्टमाध्याये एकविंशोऽनुवाकः ॥ ८ ॥ २१ ॥

एकविंशे तृतीयो वैकल्पिकग्रहणमन्त्र उक्तः ॥ द्वाविंशे तत्रैवान्यो वैकल्पिको ग्रहणमन्त्र आम्नातः ॥ पाठस्तु ॥ विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मण इति ॥ हे विश्वकर्मन्, त्वं वर्धनेन हविषा इन्द्रं त्रातारं जगतो रक्षकम् अकृणोः कृतवानसि । किञ्च युद्धार्हो युध्यः । न युध्यः अयुध्यः । तम् इन्द्रमयुध्यम् अप्रतिभटमकरोरित्यर्थः। तस्मै तादृशेन्द्राय पूर्वीः पूर्वे विशिष्टादयो विशः सर्वाः प्रजाः समनमन्त सम्यक्कृताः । अयमिन्द्र उद्गूर्णबलो विविधेषु कार्येषु आह्वयत इति विहव्यं तादृशो यथा येन प्रकारेण असत् स्यात्तथा तस्मै समनमन्तेति सम्बन्धः । अन्यद् गतम् ॥ १ ॥ इत्यष्टमाध्याये द्वाविंशो

ऽनुवाकः ॥ ८ ॥ २२ ॥

एकोनविंशादिषु चतुर्ष्वनुवाकेषु गवामयनस्योपान्ते महाव्रताख्येऽहनि वैकल्पिका ग्रहोपादानमन्त्रा उक्ताः । त्रयोविंशे अदाभ्यग्रहस्य मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ अदाभ्यं गृह्णात्यासिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनंशूनवधायाग्नये त्वा गायत्रच्छन्दसमिति प्रतिमन्त्रम् उपयामः सर्वत्राविशेषादिति ॥ औदुम्बरपात्रे वसतीवर्याख्या अप आनीय तस्मिंस्त्रिस्रः सोमलताः प्रक्षिप्य, अग्नये त्वेति त्रिभिर्मन्त्रैः क्रमेणादाभ्यं गृह्णाति । उपयामगृहीतोऽसीत्येतत् त्रिष्वपि मन्त्रेष्वादावनुषञ्जनीयम् । सर्वत्रोपस्त्वादाम्नातस्येति सूत्राऽभिप्रायः ॥ तत्र प्रथममन्त्रपाठस्तु ॥ उपयामगृहीतोऽस्यग्नये त्वा गायत्रच्छन्दसं गृह्णामीति ॥ हे सोम, त्वम् उपयामेन ग्रहेण गृहीतोऽसि । हे ग्रह, अग्नये अग्निप्रीत्यर्थं गायत्रीछन्दसं गायत्री छन्दो यस्य तादृशं त्वां गृह्णामि ॥ द्वितीयमन्त्रपाठस्तु ॥ इन्द्राय त्वा त्रिष्टुप्छन्दसं गृह्णामीति ॥ हे ग्रह, त्रिष्टुप्छन्दसं त्वां गृह्णामि ॥ तृतीयमन्त्रपाठस्तु ॥ विश्वेभ्यो देवेभ्यो जगतीछन्दसं गृह्णामीति ॥ जगती छन्दो यस्य ग्रहस्य तादृशं त्वा ग्रहं गृह्णामि ॥ १ ॥ कात्यायनः ॥ अनुष्टुप् इत्युक्तेति ॥ एवं मन्त्रमुच्चारयेत् ॥ अभिगर इति मन्त्रशेषः । हे सोम ते तवानुष्टुप्छन्द अभिगर इत्यर्थः ॥ कात्यायनः ॥ आधूनोत्यंशुभिर्प्रेशीनां त्वेति गच्छन्नाहवनीयमिति ॥ आहवनीयस्य समीपं गच्छन्नंशुभिरदाभ्यग्रहस्थान्युदकानि चालयेत् ॥ पाठस्तु ॥ प्रेशीनां त्वापत्मन्नाधूनोमि कुकूननानां त्वापत्मन्नाधूनोमि भन्दनानां त्वापत्मन्नाधूनोमि मध्वन्तमानां त्वापत्मन्नाधूनोमि । शुक्रं त्वा शुक्र आधूनोम्यह्नो रूपे सूर्यस्य रश्मिषु । ककुहं रूपं वृषभस्य रोचते बृहत्सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः । यत्ते सोमादाभ्यं नाम जागृवि तस्मै त्वा गृह्णामीति । प्रेशीनां प्रजतो मेघस्योदरे शेरत इति प्रेशयो मेघोदरस्था आपस्तासां कुकूननानां कुशब्दमस्पर्थं कुर्वतः शब्दं कुर्वाणा नमन्ति महीभवन्तीति कुकूनना मेघ आपस्तासां च । भन्दनानाम् । भदि कल्याणे सुखे च । कल्याणकारिण्यः सुखकारिण्यो वा भन्दना आपस्तासां च । मध्वन्तमानां मधुवत् स्वादुतमानाम् । एवम्भूतानामपां पत्मन् पतने, हे सोम, त्वामाधूनोमि । कम्पयामि । किञ्च । शुक्रं शुद्धमक्लिष्टकर्माणं त्वां शुक्रे अक्लिष्टकर्मणि शुद्धे निग्राभ्यलक्षणे, उदके आधूनोमि अह्नो रूपे दिवसस्य रूपे सूर्यस्य रश्मिषु, हे सोम, त्वाम् आधूनोमि । हे सोम,

वृषभस्य श्रेष्ठस्य तव ककुहं ककुभं छान्दसो हकारः । ककुभमिति महन्नामसु पठितम् । महद्रूपम् । यद्वा ककुभो दिशो व्यापि रोचते दीप्यते बृहन् महान् सोम एव सोमस्य पुरोगाः पुरोगामी शुक्रस्य शुद्धस्य सोमस्य तव शुक्रस्तेजस्वी आदित्यः पुरोगाः पुरोगामी यस्मादेवं तस्मात्, हे सोम, ते त्वदीयं अदाभ्यमनुपहिंसितं जागृवि जागरणशीलं यन्नामास्ति तस्मै त्वा गृह्णामि ॥ कात्यायनः ॥ तस्मै त इति जुहोतीति ॥ पाठस्तु ॥ तस्मै ते सोम सोमाय स्वाहेति ॥ हे सोम, तादृशाय सोमाय ते तुभ्यं हुतमस्तु ॥ २ ॥ ३ ॥ कात्यायनः ॥ अंशून् सोमे निदधात्युशिक्त्वमिति प्रतिमन्त्रमिति ॥ उशिक्त्वमिति मन्त्रत्रयेणाऽंशून् सोमे स्थापयेत् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ उशिक्त्वं देव सोमाग्नेः प्रियं पाथोऽपीहीति ॥ हे दीप्यमान सोम, उशिक् कामयमानस्त्वं अग्नेः प्रियं पाथोऽन्नमपीहि ॥ द्वितीयमन्त्रपाठस्तु ॥ वशी त्वं देव सोमेन्द्रस्य प्रियं पाथोऽपीहि इति ॥ हे दीप्यमान सोम वशी त्वमिन्द्रस्य प्रियमन्नं प्राप्नुहि ॥ तृतीयमन्त्रपाठस्तु ॥ अस्मत्सखा त्वं देव सोम विश्वेषां देवानां प्रियं पाथोऽपीहि इति ॥ हे दीप्यमान सोम अस्मत्सखीभूतः त्वं विश्वेषां देवानाम् अभिरुचितमन्नं प्राप्नुहि ॥४॥ इत्यष्टमाध्याये त्रयोविंशोऽनुवाकः॥८॥२३॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयेत् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये अष्टमोऽध्यायः ॥ ८ ॥

# अथ शुक्लयजुर्वेदकाण्वमन्त्रभाष्ये नवमोऽध्यायः ॥ ९ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अष्टमे तृतीयसवनसम्बन्धिनामादित्यग्रहादीनां षोडशयतिग्राह्यादीनां ग्रहणाऽऽसादनमन्त्रा उक्ताः । नवमे उपांश्वन्तर्यामादीनां ग्रहाणामवेक्षणमन्त्रा दाक्षिणहोमादिमन्त्राश्चोच्यन्ते ॥ कात्यायनः ॥ ग्रहानवेक्षयति यथागृहीतमप्रकाशान् वाचयन् प्राणाय म इति प्रतिमन्त्रमुपांशुसवनं द्वितीयमाश्विनं षष्ठं शुक्रामन्थिनौ युगपदिति ॥ अयमर्थः ॥ ज्ञातिमियाननूचानान् यजमानानप्रकाशाख्यान् प्राणाय म इत्यादिमन्त्रान् वाचयेत् । प्रतिमन्त्रग्रहणक्रमेणोपांश्वादीन् दर्शयति । उपांशुसवनाख्यो ग्रावा द्वितीयो भवति । बहिष्पवमानोत्तरकाले चाश्विनषष्ठो भवति । शुक्रामन्थिनौ द्वौ ग्रहौ मन्त्रगतद्विवचनलिङ्गेन युगपदवेक्षणीयाविति ॥ उपांशुग्रहावेक्षणमन्त्रपाठः ॥ प्राणाय मे वर्चोदा वर्चसे पवस्वेति ॥ हे उपांशुग्रह, यस्त्वं मे मदीयाय प्राणाय वर्चोदाः । वर्चसो बलस्य दाता भवसि । स त्वं मदीयाय वर्चसे ब्रह्मवर्चसार्थं पवस्व शुद्धो भव ॥ अथोपांशुसवनान्तर्यामैन्द्रवायवग्रहाणामवेक्षणमन्त्रपाठः ॥ व्यानाय मे वर्चोदा वर्चसे पवस्व । उदानाय मे वर्चोदा वर्चसे पवस्व । वाचे मे वर्चोदा वर्चसे पवस्वेति ॥ स्पष्टार्थः ॥ १ ॥ अथ मैत्रावरुणग्रहावेक्षणमन्त्रपाठः ॥ क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्वेति ॥ क्रतुः संकल्पो मदीयः कामः । तस्य समृद्धिर्दक्षः दक्षिणा ताभ्यां, क्रतुदक्षाभ्यां हे मैत्रावरुणग्रह, यस्त्वं बलप्रदाताऽसि स त्वं मदीयाय ब्रह्मवर्चसार्थं पूतो भव ॥ अथाश्विनावेक्षणमन्त्रपाठः ॥ श्रोत्राय मे वर्चोदा वर्चसे पवस्वेति ॥ स्पष्टार्थः ॥ अथ शुक्रामन्थिग्रहावेक्षणमन्त्रपाठः ॥ चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथामिति ॥ हे शुक्रामन्थिग्रहौ यौ युवां मदीयाभ्यां चक्षुर्भ्यां दीप्तिप्रदातारौ स्थः । तौ युवां मदीयब्रह्मवर्चसार्थं शुद्धौ भवतम् ॥ २ ॥ अथ आग्रयणोक्थ्यध्रुवग्रहावेक्षणमन्त्रपाठः ॥ आत्मने मे वर्चोदा वर्चसे पवस्वौजसे मे वर्चोदा वर्चसे पवस्वायुषे मे वर्चोदा वर्चसे पवस्वेति ॥ कात्यायनः ॥ पूतभृदाहवनीयौ च विश्वाभ्यो म इति ॥ चशब्दो युगपदित्यस्यानुकर्षणार्थः । वाचयन्नवेक्षतेत्यनुवर्तते । पूर्वं पूतभृदा-

हवनीयाख्यौ पवमानग्रहावनेन मन्त्रेण दर्शयेदित्यर्थः ॥ विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथामिति ॥ हे पूतभृदाहवनीयौ, सर्वाभ्यः प्रजाभ्यो वर्चोदसौ दीप्तिप्रदातारौ युवां मदीयाय ब्रह्मवर्चसाय पवेथां प्रवर्तेथाम् ॥३॥ कात्यायनः ॥ कोऽसीति द्रोणकलशमवेक्षयेदिति शेषः ॥ पाठस्तु ॥ कोऽसि कतमोऽसि कस्यासि को नामासि । यस्य ते नाम मन्महि यं त्वा सोमेनातीतृपामेति । हे द्रोणकलश, त्वं कः प्रजापतिरसि कतमोऽसि । अत्यतिशयेन प्रजापतिरसि । कस्य प्रजापतेरनन्यभूतोऽसि । अत एव तव कः प्रजापतिरिति नामासि । यस्य द्रोणकलशरूपप्रजापतेस्ते तव नाम नामधेयं मन्महि । वयं जानीम । द्रोणकलशरूप त्वां सोमेनातीतृपाम तर्पितवन्तः । त्वं तादृशो भवसीत्यर्थः ॥ ४ ॥ कात्यायनः ॥ भूर्भुवः स्वरिति जपतीति । उपांश्वादिग्रहावेक्षणानन्तरं भूर्भुवः स्वरिति मन्त्रं जपेत् ॥ पाठस्तु ॥ भूर्भुवः स्वः सुप्रजाः प्रजया भूयासम् । सुवीरो वीरैः सुपोषः पोषैरिति ॥ अयं मन्त्रस्तृतीयेऽध्याये व्याख्यातः ॥ इति नवमेऽध्याये प्रथमोऽनुवाकः ॥ ९ ॥ १ ॥

प्रथमेऽनुवाके उपांश्वादिग्रहावेक्षणमन्त्रा उक्ताः ॥ द्वितीये दाक्षिणहोमादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ शालाद्वार्ये दाक्षिणहोमो वासःप्रबद्धं हिरण्यं हवन्यामवधाय चतुर्गृहीतमुदुत्यमिति ॥ वाससि प्रबद्धं सुवर्णं स्रुचि चतुर्गृहीताज्यायां प्रक्षिप्योदुत्यमित्यनेन शालामुखीयेऽग्नौ दाक्षिणहोमं जुहुयात् ॥ पाठस्तु ॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यमिति ॥ केतवो रश्मयस्त्वां जातवेदसं तमग्निसदृशं सूर्यम् उद्वहन्ति ऊर्ध्वंसदृशमेव नयन्ति । किमर्थं विश्वाय कृत्स्नस्य जगतः सूर्यं दृशे द्रष्टुम् ॥१॥ कात्यायनः ॥ चित्रं देवानामिति द्वितीयायामिति ॥ उदुत्यमिति यथा प्रथमाहुतिः शालामुखीये हुता तदपेक्षयैषाऽऽहुतिर्द्वितीया । तां तस्मिन्नेवाग्नौ जुहुयादिति शेषः ॥ पाठस्तु ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आ प्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्चेति ॥ चित्रं रक्तश्वेतादिविविधवर्णं देवानां रश्मीनाम् अनीकं सैन्यसदृशं मण्डलमुदगादुदपच्छत् । कीदृशम् । मित्रादिदेवोपलक्षितस्य कृत्स्नस्य प्राणिजातस्येन्द्रियाऽभिमानित्वाच्चक्षुःस्थानीयम् तन्मण्डलस्थः सूर्यो जगन्मण्डलस्य तस्थुषः स्थावरस्य चात्मा सन् लोकत्रयमाप्राः सर्वतः पूरितवान् ॥ कात्यायनः ॥ आग्नीध्रेऽग्ने नयेतीति ॥ आग्नीध्रमण्डपस्थे अग्नौ जुहुयादिति शेषः ॥ पाठस्तु ॥ अग्ने नय

सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेमेति ॥ हे अग्ने, पारलौकिकधनप्राप्त्यर्थम्, अस्मान् सुपथा शोभनमार्गेण नय प्रापय। देव, त्वं विश्वानि वयुनानि सर्वान् मार्गान् विद्वान् । जानासि । जुहुराणं कुटिलमेनः पापमस्मत्तो युयोधि वियोजय। ते तुभ्यं भूयिष्ठां नमउक्तिं नमस्कारोक्तिं विधेम कुर्वाम ॥ २ ॥ ३ ॥ कात्यायनः ॥ अयन्न इत्यपरमश्वं तं चेद्युक्तं दद्यात् । अयुक्तं वेति ॥ रथादौ नियुक्तं केवलं वाऽश्वं यदि दक्षिणात्वेन दद्यात् । अयं न इत्यपरामाहुतिं आग्नीध्रे जुहुयात् ॥ पाठस्तु ॥ अयं नोऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुर एतु प्रभिन्दन्। अयं वाजाञ् जयतु वाजसाता अयᳪ शत्रूञ् जयतुजर्हृषाणः स्वाहेति ॥ अयमग्निर्नोऽस्माकं वरिवो धनं कृणोतु । अयमेवाग्निर्मृधः । संग्रामाः पुरः पुरतः प्रभिन्दन् वैरिणो विदारयन्नेतु गच्छतु । अयमेवाग्निर्वाजानन्नानि शत्रुसंबन्धीनि जयतु स्ववशं कृत्वा तान्यस्मभ्यं ददात्वित्यर्थः । वाजसातौ संग्रामेऽयमेवाग्निर्जर्हृषाणः अत्यन्तं हृष्यन् शत्रून् जयतु स्वाहा हुतमस्तु ॥४॥ कात्यायनः ॥ सहिरण्यो यजमानः शालाद्वारि पूर्वे तिष्ठन्नभिमन्त्रयते। दक्षिणा बर्हिर्वेदि तिष्ठन्नभिमन्त्रयते । दक्षिणा बहिर्वेदितिष्ठन्त्येतीति दक्षिणतो रूपेण व इतीति । हिरण्यं धारयन् यजमानः प्राग्वंशस्य पुरस्तात् स्थित्वा महावेदेर्दक्षिणतोऽपि बहिस्थिता दक्षिणार्था गाः अभिमन्त्रयेत ॥ पाठस्तु ॥ रूपेण वा रूपमभ्यागां तुथो वो विश्ववेदा विभजतु । ऋतस्य पथा प्रेत चन्द्रदक्षिणा इति॥ हे दक्षिणाः, रूपेणानेनोद्धृतहिरण्येन सह वो वेदेर्दक्षिणभागेऽवस्थितानां युष्माकं रूपमभ्यागाम् आभिमुख्येन प्राप्नोमि । विश्वं वेत्ति वेदयतीति वा विश्ववेदाः सर्वज्ञः । तुथनामको देवो वो युष्मान् विभजतु। ऋत्विजां यथार्हं विभागं करोतु । ऋतस्य प्रस्तुतस्य यज्ञस्य पथा मार्गेण चन्द्रदक्षिणाः । चन्द्रं हिरण्यं दक्षिणार्थं प्रधानद्रव्यं यजमानहस्तगतं यासां दक्षिणानां ता यूयं प्रेत गच्छत ॥ ५ ॥ कात्यायनः ॥ वि स्वरिति । दक्षिणत इति ॥ सदो गच्छेति शेषः ॥ पाठस्तु ॥ वि स्वः पश्य व्यन्तरिक्षमिति॥ स्वः स्वर्गं देवयानमार्गं विशेषेण पश्य । अन्तरिक्षं अन्तरिक्षलोकं पितृयानं मार्गं विपश्य ॥ कात्यायनः ॥ यतस्वसदस्यैरिति सदस्यानितिप्रेक्षतेति शेषः। सदसि सभायां साधवः सदस्याः तैर्दक्षिणाभिः पूरितैः सह यतस्व यज्ञं प्रति यत्नं कुरु ॥ कात्यायनः ॥ ब्राह्मणमद्येत्याग्नीध्रगमनमिति॥ आग्नीध्रमण्डपस्थितमृत्विजं गच्छेत्॥पाठस्तु॥ब्राह्मणमद्य

विदेय पितृमन्तं पैतृमत्यमृषिमार्षेयꣳसुधातुदक्षिणमिति॥ आगर्भमारभ्य षोडशवर्षपर्यन्तं शिक्षयन्ती माता यस्य स तं मातृमन्तमित्यर्थः । अभिहितं शिक्षकः पिता विद्यते यस्य स पितृमान् तादृशम् । यस्य पितामहप्रभृतयो विरूपाताः श्रोत्रियाः स पैतृमत्यस्तथाविधम् ऋषिं मन्त्रद्रष्टारम् आर्षेयं जात्या पूर्वैश्च विरूपातं शोभनो धातुः सर्वधातुभ्य उत्तमं हिरण्यं दक्षिणा यस्यासौ सुधातुदक्षिणस्त्वमेवंगुणविशिष्टं ब्राह्मणमद्यास्मिन् दिने विदेय लभेय॥६॥ कात्यायनः उपविश्य हिरण्यमस्मै ददात्यस्मद्राता इतीति ॥ यजमानः स्वयमाग्नीध्रमण्डप उपविश्य तत्रोपविष्टायाऽस्मा आग्नीध्राय सदस्याय च हिरण्यं दद्यात् ॥ पाठस्तु ॥ अस्मद्राता देवत्रा गच्छप्रदातारमाविशेति ॥ हे दक्षिणे त्वमस्मद्राता अस्माभिः राता दत्ता सती देवत्रा देवान् प्रति गच्छ । देवानभ्येत्य तेषां तृप्तिं सम्पाद्य यज्ञफलं साधयन्ती प्रदातार प्रकर्षेण दक्षिणाया दातारं यजमानमाविश ॥ कात्यायनः ॥ अग्नये त्वेति हिरण्यं प्रति गृह्णीत इति ॥ आग्नीध्रसदस्यावुभौ यजमानेन दत्तं हिरण्यमनेन प्रतिगृह्णीयाताम् ॥ पाठस्तु ॥ अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमश्यात् । आयुर्दात्र एधि मयो मह्यं प्रतिग्रहीत्र इति ॥ हे दक्षिणे हिरण्यरूपा त्वा त्वाम् अग्नये अग्निरूपाय मह्यं वरुणो ददातु दद्यात् । स प्रतिगृह्णन् अमृतत्वं विनाशराहित्यम् अश्यात् प्राप्नुयात् । दक्षिणायाः प्रदात्रे यजमानाय आयुः शतसंवत्सरपर्यन्तं दीर्घायुष्यमेधि । प्रतिग्रहीत्रे मह्यं मयः सुखमेधि भव ॥ कात्यायनः ॥ रुद्राय त्वेति गामिति ॥ प्रतिगृह्णीयादिति शेषः ॥ पाठस्तु ॥ रुद्राय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमश्यात्। प्राणो दात्र एधि मयो मह्यं प्रतिग्रहीत्र इति ॥ हे गो, त्वा रुद्ररूपाय मह्यं वरुणो ददातु स प्रतिग्रहीता अमृतत्वं प्राप्नुयात् । दात्रे यजमानाय प्राणः प्राणरूप एधि । तव प्रतिग्रहीत्रे मह्यं मयः सुखमेधि ॥ कात्यायनः ॥ बृहस्पतये त्वेति वास इति ॥ प्रतिगृह्णीयादिति शेषः ॥ पाठस्तु॥ बृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमश्यात् । त्वग्दात्र एधि मयो मह्यं प्रतिग्रहीत्र इति ॥ हे वासस्त्वां बृहस्पतिरूपाय मह्यं वरुणो ददातु । सोऽमृतत्वमश्यात् प्राप्नुयात् । त्वगिन्द्रियं यजमानाय । तव प्रतिग्रहीत्रे मह्यं मयः सुखम् एधि भव ॥ ७ ॥ ८ ॥ कात्यायनः ॥ यमाय त्वेत्यश्वमिति ॥ प्रतिगृह्णीयात् ॥ केचिदश्वस्थाने अन्नमिच्छन्ति ॥ पाठस्तु ॥ यमाय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमश्यात् । वयोदात्र एधि मयो मह्यं प्रतिग्रहीत्र इति ॥ यमरूपायास्माय मह्यं

मश्वमश्वं वा त्वां वरुणो दद्यात् । योऽनेन विधिना प्रतिगृह्णाति सोऽमृतत्व-मश्यात् । माप्नुयात् । वयोऽश्वमश्वं वा दात्रे यजमानाय पृथि भव प्रतिग्र-हीत्रे मह्यं सुख भव ॥ कात्यायनः ॥ कोऽदादित्यन्यदिच्छतो मन्त्रवचनमिति ॥ हिरण्यगवादिव्यतिरिक्तम् अन्यद्रव्यं प्रतिजिघृक्षुः । कोऽदादित्यनेन मन्त्रेण प्रतिगृह्णीयात्॥पाठस्तु॥कोऽदात् कस्मा अदात्कामोऽदात् कामायादात्।कामो दाता कामः प्रतिग्रहीता कामैतत्ते तव कामसता भुनजामहा इति ॥ दातुर्दाना-ऽभिमानाभावाय प्रतिग्रहदोषाभावाय च दातृप्रतिग्रहीतारौ देहेन्द्रियादिसङ्घाते विवेचयति।तत्र कः कस्मा इति प्रश्नद्वयम्।तयोरुत्तरम्। कामः कामायेति। नाहं प्रतीग्रहीता, न त्वं दाता। किन्तु। हे दातस्तव कामः कामाभिमानी देवः कामाय मदीयाय कामाभिमानिदेवायैवाऽदात् । दत्तवान् । तदेव स्पष्टयति । कामो दातेत्यादिना । यत एवमतो हे काम, एतद्दीयमानं द्रव्यं ते तव, हे काम, वयं तु तव सम्बन्धिना सता विद्यमानेन भोगजातेन भुनजामहै । भुञ्जामहि ॥९॥ इति नवमेऽध्याये द्वितीयोऽनुवाकः ॥ ९ ॥ २ ॥

द्वितीयेऽनुवाके दाक्षिणहोमादिमन्त्रा उक्ताः ॥ तृतीयेऽनुवाके समिष्ट-यजुराख्यो होमो निरूप्यते ॥ कात्यायनः ॥ समिन्द्र इति नव समिष्टयजूंपि प्रतिमन्त्रमिति ॥ समिन्द्रेणेत्यादिभिर्नवभिर्मन्त्रैः समिष्टयजुराख्या नवाहुतीर्जु-हुयात् ॥ तत्र प्रथममन्त्रपाठः ॥ समिन्द्र णो मनसा नेषि गोभिः सꣳसूरिभिर्मघ-वन्त्सꣳस्वस्त्या । सं ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳ सुमतौ यज्ञियानामि-ति ॥ हे इन्द्र त्वमनुग्रहयुक्तेन मनसा नोऽस्मान् गोभिः स्तुतिलक्षणाभिर्वाग्भि-र्गवादिभिर्वा सन्नेषि सन्नय संयोजय । हे मघवन् विशिष्टधनसम्पन्नेन्द्र सूरिभिः पण्डितैर्होतृप्रमुखैः संयोजय । स्वस्त्या क्षेमेण संयोजय । ब्रह्मणा वेदेन अर्थ-ज्ञानसहितेन देवकृतं देवार्थं कर्म यदस्ति तेन संयोजय । यज्ञियानां यज्ञसम्ब-न्धिनां देवाना सुमतौ सुमत्या अनुग्रहबुद्ध्या संयोजय ॥ १ ॥ अथ द्वितीयः ॥ सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति ॥ वर्चसा ब्रह्मवर्चसेन समगन्महि वयं सङ्गता भवाम।तथा पयसा क्षीरादिरसेन समगन्महीत्यनुवर्तते । तनूभिरनुष्ठान-क्षमैः शरीरावयवैः समगन्महि । शिवेन समीचीनेन कर्मश्रद्धायुक्तेन मनसा समगन्महि । किञ्च, सुदत्रस्त्वष्टा शोभनदानोपेतस्त्वष्टृनामको देवो रायो धनानि विदधातु सम्पादयतु । तन्वः शरीरस्यास्मदीयस्य यद्विलिष्टं विशेषेण

न्यूनमङ्गं यदस्ति तदिति शेषः । अनुमार्ष्टु न्यूनत्वपरिहारेणानुकूलं कृत्वा शोधयतु ॥ २ ॥ अथ तृतीयः ॥ धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपा देवोऽअग्निः । त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधात्विति ॥ धाता सविता प्रजापतिरग्निस्त्वष्टा विष्णुश्चेत्येते षट् देवा नोऽस्माकमिदं हविर्जुषन्तां सेवन्ताम् । कीदृशो धाता रातिर्दानशीलः । कीदृशः प्रजापतिर्निधिपाः महापद्मशङ्खपद्मादिनामकानां नवानां निधीनां पालयिता । कीदृशोऽग्निर्देवो दीप्यमानः सोऽयं देवगणो यजमानसम्बन्धिन्या प्रजया सह संरराणः सम्यग्रममाणः यजमानाय द्रविणं दधातु प्रयच्छतु ॥ ३ ॥ अथ तुरीयः ॥ सुगा वो देवाः सदना अकर्म यऽआजग्मेदꣳसवनं जुषाणाः । भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनीति ॥ हे देवा, ये भवन्त इदं सवनमिमं ये जुषाणाः सेवमानाः । आजग्म आजग्मुः । तेषां वो युष्माकं अस्मिन् यज्ञे सुगाः सुगमनीयानि सदना सदनानि अकर्म वयमकार्ष्म । हे वसवो निवासहेतवो, हवींषि भरमाणा जोषयन्तो वहमाना रथादिभिश्च नयन्तो यूयम् अस्मे अस्मासु वसूनि धनानि धत्त स्थापय ॥ ४ ॥ अथ पञ्चमः ॥ याऽआवह उशतो देव देवाꣳस्तान् प्रेरय स्वेऽअग्ने सधस्थे । जक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽसुं घर्मꣳस्वरा तिष्ठतानुस्वरेति ॥ हे अग्ने, हवींषि कामयमानान् यान् देवानावह आहूतवानसि । तान् देवान् स्वे स्वकीये सधस्थे सहनिवासस्थाने प्रेरय एवम्भूत, हे देवा यूयं जक्षिवाꣳसः सवनीयपुरोडाशान् भक्षितवन्तः । पपिवाꣳसः सोमपानं कृतवन्तश्च विश्वे सर्वे यूयम् अनुयजं समाप्त्यनन्तरम् असुं हिरण्यगर्भप्राणलक्षणं वायुं वायुमण्डलमित्यर्थः । घर्मम् आदित्यमण्डलं वा स्वः द्युलोकं वा प्रातिष्ठत आगच्छत । यस्य यस्य यत्र यत्र गृहाः सन्ति तास्तानातिष्ठतेत्यर्थः ॥ ५ ॥ अथ षष्ठः ॥ वयꣳहि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह । ऋधगया ऋधगुता शमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वानिति ॥ हि यस्मात् कारणादिहास्मिन् दिने अस्मिन् यज्ञे प्रयति वर्तमाने सति होतारं देवानामाह्वातारं होमनिष्पादकं वा त्वां वयमवृणीमहि वृतवन्तः । तस्मात् कारणाद् ऋधक् समृद्धं यथा भवति तथा अयाः अयाजा इष्टवानसि । यज्ञं कारितवानित्यर्थः । उताऽपि च । ऋधक् समृद्धिं प्रजानन् अवगच्छन्... शमिष्ठाः । विघ्नशान्तिकमकार्षीः । अतस्त्वं विद्वान् उपयाहि ॥ ६ ॥ अथ सप्तमः ॥ देवा गातुविदो गातुमित्त्वा गातुमित । मनसस्पत इमं देवयज्ञꣳस्वाहा

वाते धा इति ॥ कै गै रै शब्द इति धातुः । गीयन्ते नानाविधैर्वैदिक-शब्दैः प्रतिपाद्यन्त इति गातुर्यज्ञः । तं विदन्ति जानन्तीति गातुविदः । तादृशाः हे देवाः, गातुमित्वाऽस्मदीयो यज्ञः प्रवृत्त इति विदित्वा । एतिधातोर्गत्यर्थस्य ज्ञानार्थत्वमुपचर्यते । *गातुमित यज्ञं गच्छत । यद्वा गातुर्गन्तव्यो मार्गः ।* अस्मदीयेन यज्ञेन तुष्टाः सन्तः स्वकीयमार्गं गच्छत । हे मनसस्पते,यष्टुमस्मदीयस्य मनसः प्रेरणेन पालक परमेश्वर, इममनुष्ठितं यज्ञं स्वाहा त्वद्धस्ते ददामि । त्वं च वाते वायुरूपे देवे धाः धेहि स्थापय ॥ अथाऽष्टम ॥ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वांयोनिं गच्छ स्वाहेति ॥ हे यज्ञ, त्वमाप्त्यर्थं यज्ञनामकं विष्णुं गच्छ । फलप्रदानार्थं यज्ञपतिं यजमानं गच्छ स्वनिष्पत्त्यर्थं स्वां योनिं स्वकारणभूतां वायोः क्रियाशक्तिं गच्छ । स्वाहा सुहुतमस्तु ॥ अथ नवमः ॥ एष ते यज्ञो यज्ञपते सह सूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहेति ॥ हे यजमान, एषोऽनुष्ठीयमानस्ते त्वदीयो यज्ञः सूक्तवाकैःस्तोत्रैःसहितः, सर्ववीरः सोमपशुसवनीयचरुपुरोडाशा वीरा इत्युच्यन्ते । तादृशाः सर्वे वीरा यस्य स तथोक्तः । य एवम्भूतस्तं यज्ञं जुषस्व स्वाहा सुहुतमस्तु ॥ इति नवमाध्याये तृतीयोऽनुवाकः ॥ ९ ॥ ३ ॥

तृतीयेऽनुवाके समिष्टयजुर्होमोऽभिहितः ॥ चतुर्थेऽवभृथो वर्ण्यते ॥ कात्यायनः ॥ कृष्णविषाणमेखले चात्वाले प्रास्यति माहिर्भूर्मा पृदाकुरिति ॥ यजमानहस्तं बद्ध्वा कृष्णविषाणाया च मध्येबद्धाशरमयीमेखलाउभे विस्रंस्य चात्वाले प्रक्षिपेत् ॥ पाठस्तु ॥ माहिर्भूर्मा पृदाकुरिति ॥ अहिः सर्पो माभूर्मा भूयाः । पृदाकुरजगरः सर्पविशेषः । सोऽपि मा भूयाः ॥ कात्यायनः ॥ उरु ँ हीति वाचयति ॥ अवभृथार्थं जिगमिषुरध्वर्युर्यजमानं वाचयेत् ॥ पाठस्तु ॥ उरु ँ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवे-ऽकरुतापवक्ता हृदयाविधश्चिदिति ॥ उशब्दोऽवधारणे । वरुण एव राजा सूर्याय सूर्यस्यान्वेतवै अनुक्रमेण गन्तुमपदे निरालम्बेऽन्तरिक्षेउरुं पन्था विस्तीर्णमार्गं हि यस्माच्चकार तस्मादस्माकमपि पादा प्रतिधातवे पादं प्रक्षेप्तु मार्गम् अकः करोतु । उताऽपि च यः शत्रुरपवक्ता निन्दकः यश्च हृदयाविधो हृदयोपलक्षितं शरीरं तापयति । चिच्छब्दः समुच्चये । सोऽपि प्रतिबन्धमकृत्वा मार्गं करोत्वित्यर्थः ॥ कात्यायनः ॥ नमो वरुणायेति वाचयत्यपोऽवक्रामयन्निति । अवभृथस्नानार्थां आपः प्रवेशयन् यजमानं वाचयेत् ॥ पाठस्तु ॥ नमो वरुणायाभिष्ठितो वरुणस्य पाश इति ॥ वरुणस्य पाशः अभिष्ठितः ।

आक्रान्तः । तस्मै वरुणाय नमस्कारोऽस्त्विति शेषः ॥ १ ॥ कात्यायनः ॥ मास्य समिधं चतुर्गृहीतेनाज्येनाग्नेरनीकमिति ॥ अप्सु काश्चित् समिधं प्रक्षिप्य चतुर्गृहीतेनाज्येन ताम् अभिजुहुयात् ॥ पाठस्तु ॥ अग्नेरनीकमप आविवेशापांनपात्प्रतिरक्षन्नसुर्यम् । दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहेति ॥ अग्नेरनीकं मुखम् अपः उदकान्याभिमुख्येन विवेश । हे अपांनपात् । एतन्नामकाग्ने । दमे दमे तत्तद्यज्ञगृहे असुर्यम् असुरैः कृतं प्रतिरक्षन् समिधं यक्षि । समिधः सङ्गतिं कुरु । अनन्तरं हे अग्ने, ते तव जिह्वा ज्वाला घृतं प्रति उच्चरण्यत् । उद्युक्ता भवतु स्वाहा । सुहुतमस्तु ॥ २ ॥ कात्यायनः ॥ समुद्रे त इत्यृजीषकुम्भं प्लावयतीति ॥ गतसारः सोम ऋजीषः । तेन पूर्णं कुम्भमप्सु प्रक्षिपेत् ॥ पाठस्तु ॥ समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुताऽऽपः ॥ यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत् स्वाहेति ॥ हे सोम, ते तव हृदयं समुद्रे समुद्रसमानास्वप्सु अन्तर्मध्ये प्रतितिष्ठत्विति शेषः । ओषधीरोषधयस्त्वां सम्यग्विशन्तु । उत अपि चापो विशन्तु । हे यज्ञपते, यज्ञस्य पालक, यज्ञस्य यजनीयं त्वा सूक्तोक्तौ शोभनवचनोच्चारणेन नमोवाके नमस्कारवचनेन विधेम स्थापयाम ॥ यस्मादेवं तस्मात् स्वाहा सुहुतमस्तु ॥ ॥ ३ ॥ कात्यायनः ॥ देवीराप इति विसृज्योपतिष्ठत इति ॥ ऋजीषं विसृज्य उपस्थानं कुर्यात् ॥ पाठस्तु ॥ देवीराप एष वो गर्भस्तꣳ सुप्रीतꣳ सुभृतं बिभृत । देव सोमैष ते लोकः परि च वक्षि शं च वक्षीति ॥ देवीः । हे आपो देव्यः युष्माकम् एष सोमो गर्भस्थानीयः । तं तादृशं सोमं सुप्रीतं शोभनप्रीतियुक्तं सुभृतं सुपुष्टं बिभृत । धारयत । हे दीप्यमान सोम, ते तव एष वक्ष्यो लोकः स्थानं तत्रावस्थितस्त्वं परितः समन्तात् शं सुखं वक्षि अस्मान् प्रति वह प्रापय । अस्मत्तः सर्वान् सुखं प्रापय । चशब्द इतरेतरसमुच्चयार्थः ॥ कात्यायनः ॥ अवभृथेति मज्जयतीति । यजमानं स्नापयेत् ॥ पाठस्तु ॥ अवभृथ निचुंपुण निचेरुरसि निचुंपुण ॥ अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देवरिषस्पाहीति ॥ अवाचीनानि पात्राणि जलमध्ये ह्रियन्ते यस्मिन् यज्ञविशेषे सोऽयमवभृथः । हे अवभृथ, त्वं निचुम्पुण नितरां मन्दं गच्छ । चुपि मन्दायां गतौ इति धातुः । निचेरुरसि नितरां चरणशीलोऽसि तथाऽप्यत्र निचुम्पुण नितरां मन्दं गच्छ । किं प्रयोजनमित्युच्यते । देवैर्द्योतनाऽऽत्मकैरस्मदीयैरिन्द्रियैर्देवकृतं हविः स्वामिषु देवेषु कृतमेनः पापं यदस्ति

तदवयासिषमस्मिञ्जलेऽहमवनीतवानस्मि । तथा मर्त्यैर्मनुष्यैरस्मत्सहायभूतै-र्ऋत्विग्भिर्मर्त्यकृतं मर्त्येषु मनुष्येषु यज्ञदर्शनार्थमागतेषु कृतमवज्ञारूपं यदेनो-ऽस्ति तदप्यहमवयासिषमित्यनुवर्तते। इदमस्माभिः परित्यक्तमेनो यथा त्वां न प्राप्नोति, तथा, हे यज्ञ, मन्दं गच्छेत्यभिप्रायः । हे देव, अवभृथाख्य यज्ञ त्वं पुरुराव्णः । रा दान इति धातुः । बहुविधविरुद्धफलदायिनो रिषाद्धवात् पाहि पालय । ऋषिर्हिंसार्थे । विरुद्धफलदायी वधस्त्वत्प्रसादादस्माकं मा भूदित्यर्थः ॥ कात्यायनः ॥ आहवनीये समिदाधानं देवानाᳬ समिदसीति ॥ स्नानानन्तरमाहवनीयसमीपं गत्वा तस्मिन् समिधमादध्यात्। देवानां सम्बन्धि-नी समिदिन्धनमसि ॥ ४ ॥ इति नवमेऽध्याये चतुर्थोऽनुवाकः ॥ ९ ॥ ४ ॥

चतुर्थेऽवभृथो निरूपितः ॥ अनुबन्ध्या यदि गर्भिणी स्यात् तत्र प्राय-श्चित्तिः पञ्चमेऽनुवाके निरूप्यते ॥ कात्यायनः ॥ निरुह्यमाणमभिमन्त्रयते । एजतु दशमास्य इतीति ॥ यद्यनुबन्ध्या वशा गर्भिणी तदाविशसनकाले मातुः सकाशात् पृथक्क्रियमाणं गर्भमभिमन्त्रयेत ॥ पाठस्तु ॥ एजतु दश-मास्यो गर्भो जरायुणा सह । यथायं वायुरेजति यथा समुद्र एजत्येवायं दश-मास्यो अस्रज्जरायुणा सहेति ॥ जरायुर्गर्भवेष्टनं तेन सह एजतु कम्पनं चलनं करोतु । एजृ कम्पन इति धातुः । यथा येन प्रकारेणायं वायुरेजति चलति। यथा समुद्रश्चलति। एवमयं दशमास्यः सम्पूर्णावयवो गर्भो जरायुणा सह अस्रत् निर्गच्छतु ॥ १ ॥ कात्यायनः ॥ अवदानान्यनुजुहोति यस्यास्त इति ॥ वशावदानानि प्रथमं हुत्वा पश्चाद् गर्भं जुहुयात् ॥ पाठस्तु ॥ यस्यास्ते यज्ञियो गर्भो यस्या योनिर्हिरण्ययी। अङ्गान्यह्रुता यस्य तं मात्रा समजीगमᳬ स्वाहेति॥ यस्या वशाया अनुबन्ध्याया गर्भो यज्ञियो यज्ञार्हः। यस्यास्तव योनिर्हिरण्ययी तादृशीं त्वां गर्भं सङ्गमयामीति शेषः। यस्य गर्भस्याङ्गानि अह्रुता अह्रुतानि अनवखण्डितानि। तं गर्भं मात्रा अनुबन्ध्यालक्षणया जनन्या समजीगमं सङ्गम-यामि स्वाहेति होमार्थः ॥ २ ॥ कात्यायनः ॥ प्रतिप्रस्थाता प्रचरण्यां सर्व-मेवमवद्यति स्विष्टकृद्धोमे स्वीकृते सति जुहुयात् ॥ पाठस्तु । पुरुदस्मो विषु-रूप इन्दुरन्तर्महिमानञ्ज धीरः । एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानुप्रथन्ताᳬ स्वाहेति ॥ इन्दुः क्लेदनरूपः। सोमसदृशो गर्भो महिमानं मह-त्त्वमानञ्ज व्यक्तिं करोतु । कीदृशः पुरुदस्मो बहुदानयुक्तः। विषुरूपो बहु-रूपोऽन्तरुदरेऽवस्थितः। धीरो मेधावी इत्थंरूपं महिमानमानञ्जेत्यर्थः। भुव-

नानि भूतजातानि अनुमथन्तां वशाया गर्भं मरुधातं कुर्वन्तु। इयं वशा चतुष्पदा सती कथमेकपद्यादिभिरुच्यते। यदा वशासम्बन्धिन्यां वपायां जुहुयात् तदा एकपदी। यदू यदाङ्गैर्यागस्तदा द्विपदी यदौपयद्धोमः कृतस्तदा त्रिपदी। यदा पत्नीसंयाजैर्जुहुयात् तदा चतुष्पदी चतुर्भिः पदैर्युक्ता वा। एवं स्वपदैर्गर्भसम्बन्धिभिश्च पादैरष्टापदी एवम्भूतां वशां गणयित्वा अनुमथन्तामिति सम्बन्धः। स्वाहा सुहुतमस्तु ॥ ३ ॥ कात्यायनः ॥ समिष्टयजुरन्ते तदा शामित्र एव जुहुयात्। तिष्ठन्मरुतः स्वाहाकृत्येति। यदि यजमानः। शापाद्बिभीयात् तदा समिष्टयजुर्होमानन्तरं शामित्रेऽग्नावेव गर्भं जुहुयात्। मन्त्रान्ते स्वाहाकारोऽपि न कर्तव्य इति ॥ पाठस्तु ॥ मरुतो यस्य हि क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः॥ हे देवा, दिवो विमहसः। द्युलोकस्य सम्बन्धिना विशिष्टेन महसा तेजसा युक्ता हे मरुतः, यूयं यस्ययजमानस्य क्षये यज्ञगृहे पाथः पानं कुरुथ। पा पान इत्यस्य छान्दसं रूपम्। हि यस्मादेवं तस्मात् स यजमानाख्यो जनः, सुगोपातमः सुगोप्तृतमो भवति। युष्मद्युक्तानां न भयमस्तीत्यर्थः ॥४॥ कात्यायनः ॥ महीद्यौरित्यङ्गारैरभ्यूहतीति ॥ शामित्रे प्रक्षिप्तं गर्भमङ्गारैः मच्छादयेत् ॥ पाठस्तु ॥ मही द्यौः पृथिवीचन इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः ॥ मही महती द्यौर्द्युलोकः पृथिवी भूलोकश्च नोऽस्मदीयमिमं यज्ञं मिमिक्षतां सिञ्चताम्। भरीमभिर्भरणैर्हिरण्यधान्यादिभिः स्वैः स्वैर्भागैर्नोऽस्मदीयगृहं पिपृतात् परिपूरयतु ॥ ५ ॥ इति नवमेऽध्याये पञ्चमोऽनुवाकः ॥ ९ ॥ ५ ॥

पञ्चमेऽनुबन्ध्यावपशोर्गर्भे सति प्रायश्चित्तमन्त्रा उक्ताः ॥ षष्ठे त्वहर्गणसंबन्धिनो मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ द्रोणकलशमेनामाघ्रापयत्याजिघ्रेतीति ॥ गर्भत्रिरात्रे गोसहस्रं दक्षिणा। तत्र सहस्रसंख्यापूरणी रोहिणी धेनुः। तां द्रोणकलशमाघ्रापयेत् ॥पाठस्तु॥ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः॥ पुनरूर्जा निवर्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिरिति ॥ महीति गोनाम। हे महि, हे धेनो, त्वं कलशं द्रोणकलशाख्यं पात्रम् आजिघ्राभिमुख्येनाघ्राणं कुरु। किञ्च। हे धेनो, त्वाम् इन्दवः सोमाः आविशन्तु। ऊर्जा विशिष्टरसेन पयोभूतेनास्मान् पुनर्निवर्तस्व। मयैवं या त्वं स्तुता सा त्वं नोऽस्माकं सहस्रं सहस्रसंख्याकं धेनुं धुक्ष्व देहीत्यर्थः। किञ्चातस्त्वत्प्रसादादुरुधारा बहुपयोयुक्ता पयस्वती धेनुर्मा मां पुनराविशतात्।

आगच्छत्वित्यर्थः । तथा रयिर्धनमपि माम् आविशतात् ॥ १ ॥ कात्यायनः ॥ इव्ये काम्य इति दक्षिणेऽस्याः कर्णे यजमानो जपतीति ॥ पूर्वोक्तायां धेनोर्दक्षिणे कर्णे यजमानो जपेत् ॥ पाठस्तु ॥ इव्ये काम्यऽइळे रन्ते चन्द्रे ज्योतेऽदिते सरस्वति महि विश्रुति । एता तेऽअघ्न्ये नामानि देवेषु मा सुकृतं ब्रूतादिति ॥ सर्वैराहूयत इति इव्या । सर्वैः काम्यत इति काम्या । सर्वैः स्तूयत इतिइळा । सर्वं रमयतीति रन्ता । आह्लादयतीति चन्द्रा । ज्वलति प्रकाशयतीति ज्योता । आदितिरनवखण्डिता । सरस्वतीति सरः क्षीरं तद्वती सरस्वती । मही महती । विश्रूयत इति विश्रुतिः । अहन्तव्येत्यघ्न्या । एवम्भूते हे धेनो, त्वदीयान्येतानि नामान्यतिशययुक्तानि ॥ एवम्भूतैर्नामभिरभिहिता सती देवेषु देवेभ्यः सुष्ठु कर्म करोतीति सुकृत् । तादृशं मा ब्रूता ब्रूहि ॥ २ ॥ कात्यायनः॥ शाला द्वार्येऽन्वारब्धेष्विह रतिरिति जुहोतीति ॥ तत्रोत्थानं सर्वेषु यजमानेषु परस्परं स्पृष्टेषु सत्सु इदानीन्तनगार्हपत्येजुहुयात्॥पाठस्तु॥ इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहेति॥हे गावो, युष्मदीया रातिः रमणमिह यजमानेषु स्यात् अस्मिन्नेव यूयं रमध्वम् । युष्माकमिह यजमानेषु धृतिः स्यात् स्वकीयानामपि धृतिरिहैव स्यात् । स्वाहा सुहुतमस्तु ॥ कात्यायनः ॥ उपसृजन्निति ॥ तत्रैवैतां द्वितीयामाहुतिं जुहुयात् ॥ पाठस्तु ॥ उपसृजं धरुणं मात्रे धरुणो मातरं धयन्त्रायस्पोषमस्मासु दीधरत् स्वाहेति ॥ धरुणो धारयिताऽग्निर्मात्रे धरुणं मातुः पृथिव्या धारयितारं पितरं दिवम् उपसृजन् समीपं प्रापयन् मातरं पृथिवीं धयन् स्वयं पिबन् तत्रोत्पन्नं हविर्भक्षयन्नित्यर्थः। अस्मासु रायस्पोषं पशुधनादिपुष्टिं दीधरत् । अत्यन्तं धारयतु । स्वाहेति होमार्थः ॥ ३ ॥ कात्यायनः ॥ यजमान आत्मानं स्तुवीताऽगन्म ज्योतिरिति ॥ पाठस्तु ॥ अगन्म ज्योतिरमृता अभूम दिवं पृथिव्या अध्यारुहाम । अविदाम देवान्त्स्वर्ज्योतिरिति ॥ यजमाना वयं ज्योतिरादित्यलक्षणं अगन्म प्राप्ताः । ततः, अमृता अमरणधर्मा अभूम । पृथिव्याः सकाशाद्दिवं द्युलोकमध्यारुहाम । देवानिन्द्रादीन् अविदाम पश्याम । ज्योतिःस्वरूपं स्वः स्वर्गं पश्याम ॥ ४ ॥ कात्यायनः ॥ युवं तमिति दक्षिणस्याधोऽक्षमिति ॥ पत्नीत्यनुवर्तते । सर्वे यजमाना अक्षस्याधोभागं प्रतिगच्छेयुः ॥ पाठस्तु ॥ युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं तमिद्धतं वज्रेण तं तमिद्धतम् । दूरे चत्ताय छन्त्सद्गहनं यदिनक्षदस्माकᳪं शत्रून् परिशूर विश्वतो दर्मा

दर्शीष्ट विश्वत इति ॥ पुरोयुधौ शत्रूणां पुरतो युद्धस्य कर्तारौ । इन्द्रापर्वता इन्द्रापर्वतौ युवं युवां यः शत्रुर्नोऽस्माद् पृतन्याद् संग्रामात् तं शत्रुं युद्धं कारयेत् तम् अपहतं युवां विनाशयतम् । किञ्च, तं तमित् । तं तत्समानमेव सर्वमपि शत्रुं विनाशयतम् । तत्रापि विशेष्यते । वज्राख्येनाऽऽयुधेन तं तमेव शत्रुं विनाशयतम् । हे शूरेन्द्र, त्वदीयो वज्रः सद्महनम् अत्यन्तगम्भीरं वनं प्रवेशयामीतियद्यदा दूरेचत्ताय दूरादागताय शत्रवे कामयते तदा इनक्षत् तं शत्रुं व्याप्नुयात् । ततो दर्मा दारणशीलो वज्रोऽस्माकमस्मदीयान् विश्वतः सर्वतः आगतान् विश्वतः सर्वान् शत्रून् परिदर्शीष्ट परितो विदार्य दर्शयति स्म ॥ कात्यायनः ॥ वाग्विसर्जनं भूर्भुवः स्वरिति ॥ वाचो विसर्जनं कुर्यादित्यर्थः ॥ पाठस्तु ॥ भूर्भुवः स्वः सुप्रजाः प्रजया भूयासम् । सुवीरो वीरैः सुपोषः पोषैरिति ॥ व्याख्यातोऽयं मन्त्रः ॥ ९ ॥ इति नवमेऽध्याये षष्ठोऽनुवाकः ॥ ९ ॥ ६ ॥

षष्ठे अहर्गणसम्बन्धिनो मन्त्रा उक्ताः ॥ सप्तमे तु सोमसम्बन्धिनो नैमित्तिका मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ परमेष्ठ्यादींश्चतुस्त्रिंशतं जुहुयात् ॥ तत्र प्रथममन्त्रपाठः ॥ परमेष्ठ्यभिधीत इति ॥ यदा सोमो यजमानेनाभिधीतः परमेष्ठीति नाम्नाभिधीयते ॥ अथ द्वितीयः ॥ प्रजापतिर्वाचि व्याहृतायामिति ॥ सोमेन यक्ष्ये इति वचस्युच्चारिते सति सोमः प्रजापतिनामको भवति ॥ अथ तृतीयः॥अन्धो अच्छेत इति॥यदा सोमः, अच्छम् आभिमुख्यमितः प्राप्तः तदा अन्धो भवति॥अथ चतुर्थः॥सविता सन्यामिति॥सन्यां सोमस्य सम्भक्तौ सत्यां सोमः सवितृनामको भवति ॥ अथ पञ्चमः॥विश्वकर्मा दीक्षायामिति॥ दीक्षायां सत्यां विश्वकर्मेत्युच्यते ॥ अथ षष्ठः ॥ पूषा सोमक्रयण्यामिति ॥ सोमक्रये सति पूषेत्यभिधीयते ॥ १ ॥ अथ सप्तमः ॥ इन्द्रश्च मरुतश्च क्रयायोपोत्थित इति॥यदा सोमक्रयार्थमुत्तिष्ठेत् तदा सोम इन्द्रनामको मरुन्नामकश्च भवति ॥ अथाऽष्टमः ॥ असुरः पण्यमान इति ॥ यदा सोमो यजमानेन पण्यते तदाऽसुरनाम्नाऽभिधीयते ॥ अथ नवमः ॥ मित्रः क्रीत इति ॥ यदा सोमो यजमानेन क्रीयते तदाऽसौ मित्रो भवति ॥२॥ अथ दशमः ॥ विष्णुः शिपिविष्टः ॥ शिपिर्यज्ञः । तत्र प्रविष्टः ॥ अथैकादशः ॥ ऊरा आसन्नो विष्णुर्नरन्धिष इति॥ऊरौ उत्सङ्ग आसन्न उत्सङ्गं प्राप्तः सोमो विष्णुर्नरन्धिषो भवति ॥ अथ द्वादशः ॥ प्रोह्यमाणः सोम आगत इति ॥ यदा आगतः सोमः

मीयते तदा सोमनामा भवति ॥ अथ त्रयोदशः ॥ वरुण आसन्द्यामासन्न इति ॥ यदा सोम आसन्द्यामासन्नस्तदा वरुणो भवति ॥ ३ ॥ अथ चतुर्दशः ॥ अग्निराग्नीध्र इति ॥ सोमो यदाग्नीध्रे वर्तते तदाग्निरित्यभिधीयते ॥ अथ पञ्चदशः ॥ इन्द्रो हविर्द्धाने इति ॥ हविर्द्धाने वर्तमानः सोम इन्द्रो भवति ॥ अथ षोडशः ॥ अथर्वोपावह्रियमाण इति ॥ यदा सोम उपावह्रियते तदाऽथर्वो भवति ॥ अथ सप्तदशः ॥ विश्वेदेवा अंशुषु न्युप्यमानेष्विति ॥ अंशुषु न्युप्यमानेषु सत्सु विश्वेदेवा एतन्नामको भवति ॥ ४ ॥ अथाऽष्टादशः ॥ विष्णुराप्रीतपाः इति ॥ आप्रीतपाः सोमो विष्णुर्भवति ॥ अथैकोनविंशः ॥ आप्याय्यमानो यम इति ॥ आप्याय्यमानः सोमो यमो भवति ॥ अथ विंशः ॥ सूयमानो विष्णुः संभ्रियमाण इति ॥ यदा सोमोऽभिषूयते संभ्रियते च तदा विष्णुर्भवति ॥ अथैकविंशः ॥ वायुः पूयमान इति ॥ पूयमानः सोमो वायुर्भवति ॥ अथ द्वाविंशः ॥ शुक्रः पूत इति ॥ पूतः सोमः शुक्रो भवति ॥ ५ ॥ अथ त्रयोविंशः ॥ शुक्रः क्षीरश्रीरिति ॥ क्षीरेण संमिश्रितः सोमः शुक्रो भवति ॥ अथ चतुर्विंशः ॥ मन्थी सक्तुश्रीरिति । सक्तुभिः संमिश्रितः सोमो मन्थी भवति ॥ अथ पञ्चविंशः ॥ विश्वेदेवाश्चमसेषून्नीत इति ॥ चमसेषून्नीतः सोमो विश्वेदेवा इति भवति ॥ अथ षड्विंशः ॥ असुर्होमायोद्यत इति ॥ यदा सोमाय निष्कासितस्तदा असुर्भवति ॥ ६ ॥ अथ सप्तविंशः ॥ रुद्रो हूयमान इति ॥ यदा सोमो हूयते तदा रुद्रो भवति ॥ अथाऽष्टाविंशः ॥ वातोऽभ्यावृत्त इति ॥ यजमानेनाभ्यावृत्तः सोमो वातनामा भवति ॥ अथैकोनत्रिंशः ॥ नृचक्षाः प्रतिख्यात इति ॥ प्रतिख्यातः सोमो नृचक्षा इति भवति ॥ अथ त्रिंशः ॥ भक्षः पीत इति ॥ पीतः सोमो भक्षो भवति ॥ अथैकत्रिंशः ॥ पितरो नाराशंसाः साद्यमान इति ॥ यदा सोमः साद्यते तदा पितरो नाराशंसा भवति ॥ अथ द्वात्रिंशः ॥ सिन्धुरवभृथायोद्यत इति ॥ अवभृथार्थं यदा सोम उद्यतस्तदा सिन्धुर्भवति ॥ अथ त्रयस्त्रिंशः ॥ समुद्रोऽभ्यवह्रियमाण इति ॥ यदा सोमोऽभ्यवह्रियते तदा समुद्रो भवति ॥ अथ चतुस्त्रिंशः ॥ सलिलः प्रप्लुतः इति ॥ यदा सोमः प्रप्लुतोऽप्सु निमग्नस्तदा सलिलो भवति ॥ ७ ॥ कात्यायनः ॥ स्फ्यमभिमृशति । ययोरोजसेति ॥ पाठस्तु ॥ ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूताविति ॥ ययोर्विष्णुवरुणयोरोजसा बलेन रजांसि लोकाः स्क-

भिता स्कम्भितानि स्तम्भितानि । किञ्च वीर्येभिर्वीरतमा अत्यन्तवीरौ शविष्ठा शविष्ठौ बलवन्तौ यौ विष्णुवरुणौ या पत्येते परसैन्येषु पततः सहोभिर्बलैरमतीता अप्रतिगमनावनन्यसाध्यौ विष्णुवरुणावित्युभावस्मदीयो यज्ञः पूर्वहूतौ पूर्वमाह्वाने अगन् अगच्छत्॥ तत्रैव विकल्पितो द्वितीयो मन्त्रः ॥ देवान् दिवमगन् यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन् यज्ञस्ततो मा द्रविणमष्टु । पितॄन् पृथिवीमगन् यज्ञस्ततो मा द्रविणमष्टु यं कञ्च लोकमगन् यज्ञस्ततो मे भद्रमभूत् इति ॥ अयं यज्ञो देवान् आतिवाहिकान् वाय्वादीन् प्राप्य दिवं द्युलोकमगन् अगच्छत् । ततस्तत्र स्थिताद्यज्ञाद्, मां द्रविणं विशिष्टभोगसाधनरूपं धनमष्टु व्याप्नोतु । अनेन सुकृतिनामारोहक्रममभिधायेदानीमवरोहक्रममाह । ततो द्युलोकादवरोहणकाले अन्तरिक्षलोकमागत्य मनुष्यानयनम् । यज्ञो मनुष्यलोकमागच्छत्तत्रस्थिताद्यज्ञाद्, मां द्रविणं व्याप्नोतु । दक्षिणायने गमनागमनमाह। अयं यज्ञो धूमादिमार्गेण पितॄन् प्राप्य पृथिवीमागच्छत्। तत्रस्थिताद्यज्ञान्मां द्रविणं प्राप्नोतु । यं कमपि लोकम् अयं यज्ञोऽगच्छत् । ततस्तस्माद्यज्ञो मम भद्रं कल्याणमभूत् । भूयाद् इति यजमानेनाशास्यते ॥८॥९॥

इति नवमेऽध्याये नवमोऽनुवाकः ॥ ९ ॥ ९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक—श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये नवमोऽध्यायः ॥ ९ ॥

# अथ शुक्लयजुर्वेदकाण्वमन्त्रभाष्ये दशमोऽध्यायः ॥ १० ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

चतुर्थाध्यायमारभ्य नवमान्तेषु षट्स्वध्यायेषु सोमयागमन्त्रास्तदीयप्रासङ्गिकमन्त्राश्च निरूपिताः ॥ दशमाध्याये वाजपेयिका मन्त्रा निरूप्यन्ते ॥ तत्र प्रथमेऽनुवाके सवितृप्रेरणार्था मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ देवसवितरिति जुहोतीति ॥ वाजपेयसम्बन्धि कर्म प्रारभमाणः प्रथममनेन जुहुयात् ॥ पाठस्तु ॥ देवसवितः प्रसुव यज्ञं प्रसुवेमं भगाय । दिव्यो गन्धर्वः केतपाः केतन्नः पुनातु वाचस्पतिर्नो अद्य वाजꣳ स्वदत्विति ॥ हे सवितः देव सर्वस्य प्रेरकान्तर्यामिन् यज्ञं वाजपेयलक्षणं यागं प्रसुव प्रवर्तय । इमं यजमानं भगाय भजनीयायानुष्ठानरूपायैश्वर्याय प्रसुव प्रेरय । किञ्च त्वत्प्रसादादादित्यो दिवि भवो गन्धर्वो गवां रश्मीनां धारयिता केतपाः ॥ केतशब्देनात्राऽन्नमुच्यते । अन्नस्य पालयिता । सूर्यमण्डलवर्ती देवो नोऽस्माकं केतमन्नं पुनातु शोधयतु । वाचस्पतिः प्रजापतिरपि त्वत्प्रसादादस्मान् दिने दिने नोऽस्मदीयं वाजं हविर्लक्षणमन्नं स्वदतु ॥ १ ॥ कात्यायनः ॥ पञ्च चैन्द्रान् ध्रुवसदमिति प्रतिमन्त्रमिति ॥ इन्द्रदेवताकान् पञ्चग्रहान् ध्रुवसदमित्यादिभिः पञ्चभिर्मन्त्रैः क्रमेण गृह्णीयादिति शेषः ॥ तत्र प्रथममन्त्रपाठः ॥ ध्रुवसदं त्वा नृषदं मनःसदम् । उपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति ॥ हे सोम, त्वम् उपयामवतीत्युपयामो ग्रहस्तेन गृहीतोऽसि । इन्द्राय जुष्टं प्रियं त्वां गृह्णामि । कीदृशं त्वां ध्रुवसदम् । ध्रुवे स्थिरलक्षणे ग्रहे सीदतीति ध्रुवसदं, नृषु मनुष्येषु सीदतीति नृषदं, मनसि सीदतीति मनःसदम् । तादृशम् । एष त इत्यासादनमन्त्रः । हे ग्रह एष खरप्रदेशस्तव स्थानम् । इन्द्राय प्रियतमं त्वा सादयामीति शेषः ॥ २ ॥ अथ द्वितीयः ॥ अप्सुषदं त्वा घृतसदं व्योमसदम् । उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति ॥ तदुदकघृतान्तरिक्षेषु सीदन्तं त्वां गृह्णामि । शेषो व्याख्यातसमानार्थः ॥ अथ तृतीयः ॥ पृथिविसदं त्वान्तरिक्षसदम् । दिविसदं देवसदं नाकसदम् । उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष

ते योनिरिन्द्राय त्वा जुष्टतममिति ॥ स्पष्टार्थः ॥ ३ ॥ अथ चतुर्थः ॥ अपा॑रसमुद्वयस॑ सूर्ये सन्त॑ समाहितम् । अपा॑ रसस्य यो रसस्तं वो गृह्णाम्युत्तमम् । उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति ॥ हे तुरीयग्रह अपां रसस्य उदकस्य सारभूतः सोमवल्लीरूपेण परिणतो यो रसोऽस्ति तस्यापि रसस्य यो रसः सारभूतस्तं तादृशम्, उत्तमम् उत्कृष्टतमं रसं वो युष्मदर्थं गृह्णामि । व इति मजार्थे बहुवचनम् । अपा॑रसम् । उदकस्य सारम् । उद्वयसम् । उद्गतं वयोऽन्नं यस्य तं सूर्ये सन्तं सम्यगाहितम् । शिष्टं स्पष्टम् ॥ अथ पञ्चमः ॥ ग्रहा ऊर्जाहुतयो व्यन्तो विप्राय मतिम् । तेषां विशिमियाणां वोऽहमिषमूर्ज॑ समग्रभम् । उपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति ॥ हे ग्रहाः, ऊर्जमन्नं येनाह्वयन्ति त ऊर्जाहुतयः । ये यूयं विप्राय मेधाविने मतिं विशिष्टबुद्धिं, व्यन्तः । विलिङ्गस्य गतिकर्मणो धातोः शत्रन्तस्य व्यन्त इति रूपम् । व्यन्तोऽवगच्छन्तोऽनुजानन्त इत्यर्थः । विशिमियाणां विविधानि शिमाणि हनूस्थानीयानि पानाग्राणि तत्तत्पर्यन्ता विशिमियास्तादृशानां तेषां वो युष्माकं सम्बन्धिनम् । इषमन्नमूर्जं रसमहं समग्रभं समग्रहं सम्यग्गृह्णामि । उपयामगृहीत इति व्याख्यातम् ॥ कात्यायनः ॥ उपर्यक्षमध्वर्युर्धारयत्यधो नेष्टा संपृचस्थेतीति ॥ अध्वर्युरुपर्यक्षं सोमग्रहं धारयेत् । नेष्टा अधोऽक्षं सुराग्रहं धारयेत् ॥ पाठस्तु ॥ संपृचस्थ सं मा भद्रेण पृङ्क्त । विपृचस्थ वि मा पाप्मना पृङ्क्तेति ॥ हे ग्रहाः, यूयं संपृचस्थ । संपृक्ताः संसृष्टा भवथ । यत एवमतो मा मां भद्रेण भन्दनीयेन कल्याणेन संपृङ्क्त संसृजत । यतो यूयं विपृचस्थ विगतान्यसंमार्गा भवथ । अतो मा मां पाप्मना विपृङ्क्त वियोजयत ॥ इति दशमेऽध्याये प्रथमोऽनुवाकः ॥ ॥ ॥ ॥ प्रथमे सवितृप्रेरणार्था मन्त्रा उक्ताः ॥ द्वितीयेऽनुवाके रथारोहणादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ इन्द्रस्य वज्र इति रथापहरणमिति ॥ रथमाहरेत् ॥ पाठस्तु ॥ इन्द्रस्य वज्रोऽसि वाजसास्त्वयायं वाज॑सेदिति ॥ हे रथाभिमानिदेव, त्वमिन्द्रस्य वज्रसमो भवसि । वज्रभूतेन त्वया यजमानो वाजमन्नं सेत् । सनुयात् । संभजत् । अतस्त्वं वाजस्यान्नस्य दाता भवसि ॥ कात्यायनः ॥ दक्षिणेन चात्वालं आवर्तयति वाजस्येति धूर्गृहीतमिति ॥ चात्वालस्य दक्षिणभागे धूर्गृहीतं रथम् आवर्तयेत् ॥ पाठस्तु ॥ वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवन॑

माविवेश तस्याञ्चो देवः सविता धर्मसा विपगिति ॥ वाजस्यामस्य प्रसवेऽनुज्ञायामेव वर्तमाना वयं मातरं जगतो निर्मात्रीं महीं महनीयामदितिमदीनाम् अखण्डितां वा भूमिं नाम प्रसिद्धं यथा भवति तथा वचसा मन्त्रेण करामहे । करवामहे स्तुम इत्यर्थः । यस्यां भूमाविदं विश्वं सर्वं भुवनं भूतजातमाविवेश तस्यां भूमावेव नोऽस्माकं धर्म धारणमवस्थानं सविता देवः सा विपक्। पू प्रसव इति धातोर्विचि कृते तदेतद्रूपम् । प्रसवमनुज्ञां करोतु ॥१॥ ॥कात्यायनः॥ अश्वान् प्रोक्षयत्यपोऽवनीयमानान् स्नातानागतानप्स्वन्तारिति देवीराप इति वा समुच्चयो वेति । स्नानार्थमप उद्दिश्य नीयमानान् स्नातान् आगतान् वाश्वान् अप्स्वन्तरमृतमिति मन्त्रेण वा, देवीराप इति मन्त्रेणवा एतन्मन्त्रद्वयेन वा प्रोक्षयेत॥तत्र देवीराप इत्यस्य मन्त्रस्य पाठः॥ देवीरापो अपां नपाद्यो व ऊर्मिः मतूर्तिः । ककुन्मान् वाजसास्तेनायं वाजꣳ सेदिति ॥ हे आपो देव्यो, वो युष्मदीयो य ऊर्मिः कल्लोलः अपान्नपात् अपामपत्यं गर्भभूत इत्यर्थः । कीदृशः मतूर्तिः । प्रकर्षेण त्वरणशीलः । ककुच्छब्देन वृषभस्य उन्नतप्रदेश उच्यते । अत्र कल्लोलः । तत्साम्यादुदकनिचयैः संयुक्तबहलोद्गतोदकसङ्घातवान् ककुन्मानित्युच्यते । वाजसा अन्नस्य दाता य एवंविशिष्टस्तेन अपां विशिष्टरूपेणायमश्वः प्रोक्षितः सन् वाजमन्नं सेत् सम्भजेत् ॥ २ ॥ अथ द्वितीयः प्रोक्षणमन्त्रः ॥ अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिभिः । अश्वा भवत वाजिन इति । अप्सूदकेषु मध्ये । अमृतं सारभूतमपां स्वरूपं यदस्ति तेनापां सारभूतेनाश्वाः संभूताः।अतोऽश्वानां भेषजमारोग्यकरं पुष्टिकरं चौषधं यदस्ति तदप्स्वेव प्रतिष्ठितमिति शेषः।उताऽपि च अपामुदकानां प्रशस्तिभिः प्रशंसनैः स्तोत्रैर्वाजिनोऽन्नवन्तो वेगवन्तो वाऽश्वा यूयमेव स्तुता भवत ॥ ३ ॥ कात्यायनः ॥ दक्षिणं युनक्ति वातो वेतीति ॥ दक्षिणप्रदेशे प्रथममश्वं योजयेत् ॥ पाठस्तु ॥ वातो वा वो मनो वा गन्धर्वाः सप्तविꣳशतिः । ते अग्रेऽश्वमयुञ्जꣳस्ते अस्मिञ्जवमादधुरिति ॥ अत्र वाशब्दः समुच्चयार्थः।वातो वायुश्च मनश्च गन्धर्वाः सप्तविꣳशतिः सप्तविंशतिसंख्यायुक्तानि नक्षत्राणि च ते एते वातप्रभृतयः । सर्वे अग्रे पूर्वं वयं युष्मान् । बहुवचनं पूजार्थम् । अश्वं त्वामयुञ्जन् रथे योजितवन्तः । ते च पुनरस्मिन्नश्वे त्वयि जवमतिवेगयुक्तं बलमादधुः स्थापितवन्तः ॥ कात्यायनः ॥ उत्तरं वातरꣳहा इतीति ॥ वामभागे द्वितीयमश्वं योजयेत् ॥ पाठस्तु ॥ वातरꣳहा भव वाजिन्

युज्यमान इन्द्रस्येव दक्षिणः श्रियैधि । युञ्जन्तु त्वा मरुतो विश्ववेदसऽआ ते त्वष्टा पत्सु जवं दधात्विति । हे वाजिन् वेगवन् अश्व युज्यमानादुत्तरभागे नियुज्यमानस्त्वं वातरंहा वायुवद्वेगयुक्तो भव । दक्षिणो दक्षिणभागे स्थितोऽश्वमिन्द्रस्याश्व इव श्रिया शोभया युक्त एधि भव । विश्ववेदसः सर्वज्ञा मरुतः, त्वा त्वां युञ्जन्तु । नियुञ्जन्तु । किञ्च, त्वष्टा त्वष्टृनामको देवः, हे अश्व ते तव पत्सु पादेषु जवं वेगमादधातु स्थापयतु ॥ कात्यायनः ॥ दक्षिणा-प्रष्टिं जवो यस्त इति ॥ व्यवहितयोरीषयोर्मध्ये प्रष्टिनामकं तृतीयमश्वं योजयेत् ॥ पाठस्तु ॥ जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीतो अचरच्च वाते । तेन नो वाजिन् बलवान् बलेन वाजजिच्चैधि समने च पारयिष्णुरिति ॥ हे वाजिन्, अश्व, ते तव गुहा गुहायां हृदयप्रदेशे यो जवो वेगो निहितो-ऽवस्थापितः । श्येने श्येनाख्ये पक्षिणि यो जवः परीतः प्राप्तः । वाते वायौ यो जवः अचरत् । हे वाजिंस्तेन बलेन बलवांस्त्वं नोऽस्माकं वाजजित् । वाजस्यान्नस्य जेता एधि । अन्नस्य धाता भवेत्यर्थः । समने सङ्ग्रामे च पार-यिष्णुः पारङ्गमनशीलो भव ॥ कात्यायनः ॥ बार्हस्पत्यमेनानाघ्रापयति वाजिन इतीति ॥ एनानश्वान् बृहस्पतिदेवताकं चरुमाघ्रापयेत् ॥ पाठस्तु ॥ वाजिनो वाज-जितो वाजꣳसरिष्यन्तः । बृहस्पतेर्भागमवजिघ्रतेति ॥ वाजजितोऽन्नस्य जेतारो वाजमन्नं सरिष्यन्तो वाजिनोऽश्वा यूयं बृहस्पतेर्भागं चरुम् अवजिघ्रत । आघ्राणं कुरुत ॥ इति दशमेऽध्याये द्वितीयोऽनुवाकः ॥ १० ॥ २ ॥

द्वितीये रथाहरणादिमन्त्रा उक्ताः । तृतीयेऽनुवाके रथचक्रादिरोहणमन्त्रा उच्यन्ते कात्यायनः ॥ देवस्य वयमिति ब्रह्मा रथचक्रमारोहत्युत्करं नाभिमात्रे स्थाणौ स्थितमिति ॥ उत्करप्रदेशे निखातस्य नाभिप्रमाणस्य काष्ठस्याग्रे स्थिरं रथ-चक्रं ब्रह्मा ऋत्विगारोहयेत् ॥ पाठस्तु ॥ देवस्य वयꣳ सवितुः सवे सत्यसवसः । बृहस्पतेरुत्तमं नाकꣳ रुहेमेन्द्रस्योत्तमं नाकꣳ रुहेमेति ॥ सत्यसवसः सत्यप्रसवस्य सत्याभ्यनुज्ञानस्य सवितुः । सर्वप्रेरकस्य देवस्य सवे अभ्यनुज्ञायां वर्तमाना वयं बृहस्पतेः संबन्धि उत्तममुत्कृष्टं नाकं स्वर्गं रुहेम आरुहेम स्वर्गारोहणं क-रवाम । तथेन्द्रस्योत्तमं स्वर्गमरुहेम ॥ कात्यायनः ॥ देवस्य वयमिति यजुर्मन्त्र-युक्तमारोहति यजमान इति ॥ मन्त्रयुक्तं रथं यजमान आरोहेत् ॥ पाठस्तु ॥ देवस्य वयꣳ सवितुः सवे सत्यसवसः । बृहस्पतेरुत्तमं नाकमरुहामेन्द्रस्यो-त्तमं नाकरुहामेति ॥ सत्याभ्यनुज्ञानस्य सवितुर्देवस्य प्रसवे वर्तमाना वयं बृह-

स्यतेरिन्द्रस्य च संबन्धि उत्तमं स्वर्गमरुहाम आरुहेम ॥ १ ॥ कात्यायनः ॥ बृहस्पते वाजंजियेकदुन्दुभिमाहन्तीति॥ सप्तदशसु दुन्दुभिषु मध्ये प्रथमं मुख्यं दुन्दुभिमाहन्यात् ॥ पाठस्तु ॥ बृहस्पते वाजं जय बृहस्पतये वाचं वदत । बृहस्पतिं वाचं जापयत । इन्द्र वाजं जयेन्द्राय वाचं वदत । इन्द्रं वाजं जापयत । एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपत । अजीजपत बृहस्पतिं वाचं वनस्पतयो विमुच्यध्वमिति॥ हे बृहस्पते देव, त्वं वाजमन्नं जय। हे दुन्दुभयो, यूयं बृहस्पतये अर्थाय इत्थम्भूतां वाचं वदत यूयं ब्रूत । बृहस्पतिं वाजमन्नं जापयत। उद्वादयत। जप जल्प व्यक्तायां वाचि। हे इन्द्र वाजं जय। इन्द्रायेन्द्रार्थम् इत्थम्भूतां वाचं वदत। वाजं जेष्यामीति। इन्द्रं वाजं जापयत। उद्वादयत। दुन्दुभिमवहरति। हे दुन्दुभयः, वो युष्माकं संबन्धिनी सा संवाक् सत्या तथ्या यथार्थवादिनी अभूत् । बृहस्पतिं वाजमन्नं यथावाचा अजीजपत जेष्यामीत्युद्वादितवन्तः । वो युष्मदीया सैषा समीचीना वाक् सत्या यथार्थवादिन्यभूत् । हे वनस्पतयो यूयं विकाराः यूयं यस्मादन्नं जेष्यामीतिवदन्तो बृहस्पतिमजीजपत वाजजितं कृतवन्तस्तस्माद्वाचं विमुच्यध्वं वाग्विमोचनं कुरुत ॥ २ ॥ ३ ॥ ४ ॥ कात्यायनः ॥ ब्रह्मारोहति । देवस्य वयमिति ॥ रथचक्रात् सकाशादवरोहेत् ॥ पाठस्तु ॥ देवस्य वय᳚ सवितुः सवे सत्यसवसः । बृहस्पतेर्वाजजितो वाजं जेष्मेति ॥ सत्यसवसः सत्यप्रसवस्य सवितुर्देवस्य सवे अभ्यनुज्ञायां वर्तमानाय यं वाजजितो वाजमन्नं जयतीति वाजजित् । तस्य बृहस्पतेः सम्बन्धि वाजमन्नं जेष्म वयं जितवन्तः ॥ ५ ॥ कात्यायनः ॥ वाजिन इति वाचयति॥ यजमानं वाचयेत् ॥ पाठस्तु ॥ वाजिनो वाजं जयताध्वनस्कभ्नन्तः । योजना मिमानाः काष्ठां गच्छतेति ॥ हे वाजिनः शीघ्रगामिनोऽश्वा यूयं वाजमन्नं जयत वशीकुरुत । किञ्च, अध्वनो मार्गात् । स्कभ्नन्तः । स्तम्भयन्तः पीडयन्तो योजना योजनानि मिमानाः परिच्छिन्दन्तः । शीघ्रगत्याल्पानीव कुर्वन्तो यूयं काष्ठामध्वसमाप्तिं लक्ष्यस्थानं गच्छत प्राप्नुत ॥ ६ ॥ कात्यायनः ॥ एष स्य इति प्रत्यृचं जुहोत्यनुमन्त्रयते इति चेति ॥ एष स्य वाजी उत स्मेत्येतन्मन्त्रद्वयेन जुहुयादनुमन्त्रणं वा कुर्यात् ॥ तत्राद्यमन्त्रपाठः ॥ एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धोऽअपि कक्ष आसनि । क्रतुं दधिक्रा अनु सन्तवीत्वत् पथामङ्का᳚स्यन्वापनीफणदिति ॥ ग्रीवायां कक्षे आस्ये च तत्तदुचितरज्जुविशेषैर्बद्ध एष स्य वाजी सोऽयमश्वः क्षिपणिं तुरण्यति कशां

त्वरयति बहुधा बहुत्वादयं भञ्जयितुम् इतस्ततो न गच्छति । कशायास्त्वरया शीघ्रं धावतीत्यर्थः । दधिक्राः धारकान्मार्गविरोधकान् पाषाणादीनभ्यतिक्रमत् । क्रतुं सादिनोऽभिप्रायम् अनुसन्तवीत्वत् सम्यगनुसन्दधानः पथां मार्गाणामङ्कांसि लक्षणानि कुटिलानि निम्नोन्नतानि वा । अन्वापनीफणत् । अनुक्रमेण ऋजुत्वं समत्वं वाऽऽपादयन् तुरण्यतीति पूर्वत्रान्वयः ॥ ७ ॥ द्वितीयमन्त्रपाठस्तु ॥ उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्द्धिनः । श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रत इति ॥ उतस्मापि च द्रवतो गच्छतस्तुरण्यतस्त्वरयतः प्रगर्द्धिनः अवधिं प्राप्तुं काङ्क्षतोऽस्य अश्वस्याङ्कसंशृङ्गारचिह्नं वस्त्रचामरादिकं परि सर्वस्मिन्नपि देहे वर्तमानमनुवाति गच्छन्तमश्वमनु उत्क्षिप्तत्वेन दृश्यमानं गच्छति । कथं किमिव । वेः पक्षिणः, पर्णं न = पक्ष इव । यथा त्वरया गच्छतः पक्षिणः पक्ष उत्क्षिप्तो गच्छन्नवलोक्यते तथा धावतोऽश्वस्यालङ्कारवस्त्रचामरादिकं विस्पष्टमवलोक्यते । पक्षिमात्रस्य पर्णमङ्कसं दृष्टान्तत्वेनाभिहितम् । शीघ्रधावने श्येनदृष्टान्त उच्यते । ध्रजतो गच्छतः श्येनस्येव स्वचामरादिकं विद्धिक्रान्तो धारकपर्वताद्यतिक्रामिणः, ऊर्जा सह असन्नबलेन सह तरित्रतो भ्रशतस्ततोऽश्वस्येति योज्यम् ॥ ॥८॥ उत्तरेण तृचेनाऽश्वांस्तौतीति ॥ तत्रेयं प्रथमा ॥ शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवा इति ॥ वाजिनोऽश्वा नोऽस्माकं शं सुखकरा भवन्तु । हवेषु आह्वानेषु सत्सु देवताता देवास्तन्यन्ते विस्तार्यन्ते यत्र स तथा देवतातौ यज्ञे मितद्रवः मितं परिमितं द्रवन्ति गच्छन्तीति मितद्रवोऽश्वाः । स्वर्काः । सुरुचः । स्वश्वना वा । अहिं सर्पं वृकम् अरण्यश्वानं रक्षाꣳसि राक्षसाँश्च जम्भयन्तः क्षोभयन्तः । सनेमीति पुराणनाम । इह तु क्षिप्रवचनम् । क्षिप्रमस्मदस्मत्तः अनमीवाः रोगान् युयवन् वियोजितवन्तस्तादृशाः शंनो भवन्त्विति सम्बन्धः ॥ ९ ॥ अथ द्वितीयः ॥ ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः । सहस्रसा मेधसाता इव त्मना महो ये धनꣳ समिथेषु जभ्रिर इति ॥ अर्वन्तो गतिकुशलाः हवनश्रुतः । आह्वानं शृण्वन्तो वाजिनोऽश्ववन्तो मितद्रवो यजमानाचित्तानुकूलतया परिमितगामिनो विश्वे सर्वेऽपि ते अश्वा नोऽस्मदीयं हवनम् आह्वानं शृण्वन्तु । सहस्रसाः सहस्रस्य महतोऽन्नादेः सनितारो दातारो येऽश्वा मेधसाता इव । मेधो यज्ञः । स यत्र सीयते

सैच्यत इति मेधसातिर्यज्ञशाला तस्यामिव समित्सु संग्रामेषु महो महद्धनं स्मना आत्मना स्वकीयबलेन जभ्रिरे । आहृतवन्तः । ते अश्वा अस्मदीयमवा-हानं शृण्वन्त्विति सम्बन्धः ॥ १० ॥ अथ तृतीयः ॥ वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरिति ॥ वाजे वाजे सर्वस्मिन्नन्ने उपस्थिते सति धनेषु चोपस्थितेषु हे वाजिनः, अश्वाः, नोऽस्मान् अवत पालयत । विप्रा मेधाविनः परिदृष्टकारिणः अमृता अमरणधर्माणः ऋतज्ञाः सत्यज्ञाः अश्वा-ऽभिमानिनो देवा यूयम् । अस्य मध्वः इदं धावनात् पूर्वं पश्चाद्धावधीप-माणं मधुसमानं नैवारं चरुं पिबत । तत् पीत्वा च मादयध्वं तृप्ता भवत । तृप्ताः सन्तो देवयानैर्देवाधिष्ठितपथिभिः मार्गैर्यात गच्छत ॥ ११ ॥ कात्यायनः ॥ नैवारमालभते तीर्थे स्थितमामावाजस्येतीति ॥ तीर्थप्रदेशे स्था-पितं नीवारसम्बन्धिनं चरुं स्पृशेत ॥ पाठस्तु ॥ आ मा वाजस्य प्रसवो ज-गम्यादेमे द्यावापृथिवी विश्वरूपे । आ मा गन्तं पितरामातरा युवमा मा सोमो अमृतत्वाय गम्यादिति ॥ वाजस्य प्रसव उत्पत्तिर्मा माम् आजगम्यात् । आ-गच्छतु । विश्वरूपे विश्वरूपात्मिके इमे द्यावापृथिवी द्यावापृथिव्यावागच्छता-म् । पितरामातरा अस्मदीयः पिता माता च युवं युवां चिरम्भावित्वान्मां प्रत्या-गतम् । किञ्च सोमश्च अमृतत्वाय मम देवजन्मने मां प्रत्यागम्यादागच्छतु ॥ १२॥ कात्यायनः ॥ यजुर्युक्तानाघ्रापयति वाजिन इतीति ॥ मन्त्रेण योजितान् अश्वान्नैवारचरुमाघ्रापयेत् ॥ वाजिनो वाजजितो वाजꣳ सरिष्यन्तः । बृहस्प-तेर्भागमवजिघ्रत निमृजाना इति ॥ हे वाजिनोऽश्वाः, वाजजितो वाजस्यान्नस्य जेतारो वाजमन्नं जेतुं सरिष्यन्तः सरन्तो गच्छन्तो निमृजानाः शुद्धिं कुर्वाणा यूयं बृहस्पतेः सम्बन्धिनं भागं चरुम् अवजिघ्रत । अवघ्राणं कुरुत ॥ १३॥ इति दशमेऽध्याये तृतीयोऽनुवाकः ॥ १० ॥ ३ ॥

तृतीयेऽनुवाके रथारोहणमन्त्रा उक्ताः ॥ चतुर्थे स्रुवाहुत्यादिमन्त्रा नि-रूप्यन्ते ॥ कात्यायनः ॥ द्वादश स्रुवाहुतीर्जुहुयादापये स्वाहेति प्रतिमन्त्रमिति ॥ आपये स्वाहेत्यादिभिर्द्वादशभिर्मन्त्रैः प्रत्येकं स्रुवेण द्वादशसंख्याका आहुतीर्जु-हुयात् ॥ तन्मन्त्रपाठस्तु ॥ आपये स्वाहा स्वापये स्वाहा विजाय स्वाहा क्रतवे स्वाहा । वसवे स्वाहाऽहर्पतये स्वाहा । अह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहाऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये

स्वाहाऽधिपये स्वाहेति ॥ अत्र संवत्सराभिमानी देवः स्तूयते । आप्नोतीत्यापिः तस्मै स्वाहा सुहुतमस्तु । सुशोभनमाप्नोतीति स्वापिस्तस्मै सुहुतमस्तु । अप्सु पुनः पुनर्जायत इत्यपिजस्तस्मै स्वाहा । क्रतुः सङ्कल्पो भोगादिविषयो यज्ञो वा तस्मै । वसवे निवासहेतवे । अह्नां वासराणां पतिरहःपतिस्तस्मै । मुह वैचित्त्ये । मुह्यतीति मुग्धस्तस्मै मुग्धाय । वैनंशिनाय विनाशसंयुक्तेषु वसतीति वैनंशिनस्तस्मै । विनंशिने नाशयुक्ताय । अन्ते अयने भवः आन्त्यायनस्तस्मै । अन्त्ये भवः । आन्त्याय । भुवने भवो भौवनस्तस्मै । तस्य पतये जगत्पालयित्रे अधिपतये सर्वेषां लोकानां स्वामिने स्वाहा सुहुतमस्तु ॥ १ ॥ कात्यायनः ॥ वाचयति वा पङ्क्तोत्तरानिति ॥ पूर्वानिति ॥ पूर्वोक्तमन्त्रान् मत्युपरितनानायुर्यज्ञेनेत्यादीनां पण्णां मन्त्राणां पृथग्यजमानं वाचयेदिति शेषः ॥ तेषां पाठस्तु ॥ आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताᳬं श्रोत्रं यज्ञेन कल्पताम् । पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतामिति ॥ मदीयमायुर्वाजपेयाख्येन यज्ञेन कल्पतां क्लृप्तं भवतु । पञ्चवृत्तिकः प्राणोऽप्यनेन यज्ञेन क्लृप्तो भवतु । चक्षुरिन्द्रियं यज्ञेन क्लृप्तं भवतु । श्रोत्रं यज्ञेन क्लृप्तमस्तु । पृष्ठं रथन्तरादिकं शरीरस्य पृष्ठं वा यज्ञेन कल्पताम् । यज्ञेन मदीयेन वाजपेयाख्येन यज्ञात्मको विष्णुः क्लृप्तो भवतु ॥ २ ॥ कात्यायनः ॥ निश्रेण्यौ यूपोच्छ्रयान्तरां दक्षिणां वाऽऽरोक्षन् जायामामन्त्रयते जाय एहि स्वो रोहावेतीति ॥ यूपस्य दक्षिणोत्तरभागयोर्निश्रेणीद्वयमुच्छ्रयेत् । तयोरेकतरायामारोहणं कुर्वन् यजमानो भार्यामामन्त्रयेत ॥ पाठस्तु ॥ जाय एहि स्वो रोहावेति ॥ हे जाये, एहि आगच्छ स्वः, स्वर्गे रोहाव आवामारोहणं करवाम ॥ कात्यायनः ॥ प्रजापतेरित्यारोहत इति ॥ पत्नीयजमानावारोहणं कुर्यातास् ॥ पाठस्तु ॥ प्रजापतेः प्रजा अभूमेति ॥ वयं प्रजापतेः सम्बन्धिन्यः प्रजाः सम्भूताः स्मः ॥ कात्यायनः ॥ स्वरिति गोधूममालभत इति ॥ गोधूमनिर्मितं चषालं स्पृशेत् ॥ पाठस्तु ॥ स्वर्देवा अगन्मेति ॥ हे देवा, वयं स्वः स्वर्गम् । अगन्म प्राप्ताः ॥ कात्यायनः ॥ शिरसा यूपमुज्जिहीते अमृता इतीति ॥ मूर्द्ध्ना यूपमुन्नमयेत् । अभूमेति मन्त्रशेषः ॥ पाठस्तु ॥ अमृता अभूमेति ॥ वयम् अमृता मरणरहिताः सम्भूताः ॥ ३ ॥ कात्यायनः ॥ अस्मे व इति दिशो वीक्षत इति ॥ पाठस्तु ॥ अस्मे वोऽअस्त्विन्द्रियमस्मे नृम्णमुत क्रतुः । अस्मे वर्चाᳬंसि सन्तु व इति ॥ अस्मे अस्मासु वो युष्मत्सम्बन्धि

इन्द्रियं सामर्थ्यम् अस्तु भवतु । नृम्णम् अस्मत्सम्बन्धिनम् अस्मे अस्मासु भवतु ।
उताऽपि क्रतुरस्मदीयो यज्ञो युष्मदर्थोऽस्तु । वो युष्मत्सम्बन्धीनि वर्चांसि
अस्मे अस्मासु सन्तु ॥ ४ ॥ कात्यायनः ॥ नमो मात्र इति भूमिमवेक्षते ॥
पाठस्तु ॥ नमो मात्रे पृथिव्या इति ॥ मात्रे मातृरूपायै पृथिव्यै नमो नमस्कारोऽस्तु ॥ कात्यायनः ॥ उत्तरवेदिमपरेणौदुम्बरीमासन्दीं व्याघ्रचर्मणास्तृणातीयन्त इतीति ॥ उत्तरवेदेः पश्चात् स्थितामुदुम्बरनिर्मितामासन्दीमजासम्बन्धिना चर्मणा स्तृणुयात् । राडिति मन्त्रशेषः ॥ पाठस्तु ॥ इयं ते राडिति ॥
ते तव इयं राट् राज्यम् ॥ कात्यायनः ॥ स्तुन्वन्तमस्यामुपवेशयति यन्तासीतीति ॥ पाठस्तु ॥ यन्तासि यमनः । ध्रुवोऽसि धरुणः । कृष्यै क्षेमाय रय्यै पोषायेति ॥ त्वं यन्ता सर्वस्य नियन्तासि यमनः स्वयं यमनकर्ता भवसि । ध्रुवः स्थिरोऽसि । धरुणो धारको भवसि । कृष्यै सकलकृष्यर्थं रय्यै पोषाय धनपुष्ट्यर्थं त्वां प्रवेशयामीति शेषः ॥ ५ ॥ इति दशमाध्याये चतुर्थोऽनुवाकः ॥१०॥४॥

चतुर्थे स्रुवाहुत्यादिमन्त्रा निरूपिताः । पञ्चमेऽनुवाकेऽन्नहोमा उच्यन्ते॥
कात्यायनः ॥ स्रुवेण सम्भृतान्जुहोति वाजस्येममिति ॥ मत्यौदुम्बरपात्रे संपादितान् सप्तदशान्नविशेषान् ॥ पाठस्तु ॥ वाजस्येमं प्रसवः सुषुवेऽग्रे सोमꣳ राजानमोषधीष्वप्सु । ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जागृयाम पुरोहिता इति ॥ वाजस्यान्नस्य प्रसव उत्पादकः प्रजापतिरग्रे सृष्ट्यादौ ओषधीष्वप्सु च भूतमिमं सोमवल्लीरूपं राजानं दीप्तिमन्तं पदार्थं सुषुवे उत्पादयामास । ताश्चौषधयश्चास्मभ्यमस्मदर्थं मधुमतीर्माधुर्योपेता भवन्तु । वयमप्यस्मिन् राष्ट्रे पुरोहिता यागानुष्ठानादौ पुरोगामिनो जागृयाम । जागरूका भूयास्म ॥ १ ॥ अथ द्वितीयः ॥ वाजस्येदं प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः । सनेमि राजा परियाति विद्वान् रयिं पुष्टिं वर्द्धयमानोऽअस्मे इति ॥
वाजस्य प्रसवः प्रजापतिरिदमनुष्ठीयमानं कर्म आबभूव । भावितवान् उत्पादितवान् । किञ्च इमा इमानि सर्वाणि भुवनानि सर्वत उत्पादितवान् । स प्रजापतिः सनेमिश्चिरतनो राजा दीप्तः सन् परितः सर्वतो याति स्वेच्छया गच्छति । विद्वान् स्वाधिकारं जानन् अस्मे अस्माकं रयिं धनं पुष्टिं वर्धयमानः अभिवृद्धिं गमयन् ॥ अथ तृतीयः ॥ वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् । अदित्सन्तं दापयति प्रजानन्त्स नो रयिꣳ सर्ववीरं नियच्छत्विति ॥ वाजस्यान्नस्य प्रसव ईश्वरः, इमां पृथिवीं

तादृशीं गायत्रीमहं लभेयम् । मित्रो देवो नवाक्षरेण त्रिवृतं स्तोममुदजयत्ता-
दृशं स्तोममहमुज्जेषम् । वरुणो देवो दशाक्षरेण छन्दसा विराजं दशाक्षरा
विराडिति प्रसिद्धमेतदभिमानिनीं देवतामुदजयत् । तथा तेनैव छन्दसा तादृशीं
विराजमहमुज्जेषम् । इन्द्र एकादशाक्षरेण छन्दसा त्रिष्टुबभिमानिनीं देवता-
मुदजयत् तथा तेनैव छन्दसा तामुज्जेषम् । विश्वेदेवा द्वादशाक्षरेण छन्दसा
जगत्यभिमानिनीं देवतां तामुत्कृष्टं जयं लब्धवन्तोऽहमपि तादृशीं जगतीमुत्कृष्टं
जयं लभेयम् । वसवो देवास्त्रयोदशाक्षरेण छन्दसा त्रयोदशं स्तोमं लब्धवन्तः ।
तत्सदृशं स्तोममहमुज्जेषम् । रुद्राश्चतुर्दशाक्षरेण छन्दसा चतुर्दशं स्तोममुदजयं-
स्तादृशं स्तोममहमुज्जेषम् । आदित्या देवाः पञ्चदशाक्षरेण छन्दसा पञ्चदशं
स्तोममुदजयँस्तादृशं स्तोममहमुज्जेषम् । अदितिर्देवमाता षोडशाक्षरेण छन्दसा
षोडशं स्तोममुदजयत् तथा तेनैव षोडशाक्षरस्तोममुज्जेषम् । प्रजापतिर्देवः
सप्तदशाक्षरेण छन्दसा सप्तदशाख्यं स्तोममुत्कृष्टं जयं लब्धवान् । तथा तेनैव
सप्तदशाक्षरेण तं तादृशं सप्तदशं स्तोममहमुज्जेषम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥
इति दशमेऽध्याये षष्ठोऽनुवाकः ॥ १० ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीबुक्कभूपालसाम्राज्य-
धुरन्धरेण सायणाचार्येण विरचिते वेदार्थप्रकाशे काण्वसंहिताभाष्ये दशमो-
ऽध्यायः ॥ १० ॥

श्रीगणेशाय नमः ।

## अथ शुक्लयजुर्वेदकाण्वसंहितायां श्रीसायणाचार्यविरचितभाष्य-सहितायां द्वितीयदशक प्रारभ्यते ।

हरिः ॐ

अथराजसूयोवरुणस्यार्षमेषतेपार्थिवमग्निनेत्रेभ्योदेवापाण्या-
ध्यायांदशाद्यानिदैवान्यग्नेसहस्व देवश्रवादेववातश्चभारतावाग्ने-
यीमनुष्टुभंसुपार्श्वोत्रीणिरक्षोघ्नानियजूंष्यपोदेवाआपीत्रिष्टु-
कृष्णऽऊर्मिलिङ्गोक्तदेवतानिसंमधुमतीरनाधृष्टाऽआपेसवितात्वा
यजमानः सोमस्यचर्माग्नये लिङ्गोक्तदेवतान्यनिभृष्टमापःसधमा-
दोवारुणी त्रिष्टुप्क्षत्रस्य चतुर्णान्तार्पपाण्ड्वाधीवासोष्णीषाणी-
द्रस्यत्वयायंधनुर्मित्रस्यबाहूरुजासिपण्णामिषवं आविःप्राजापत्यं
पराणिलिङ्गोक्तान्यवेष्टामत्युनाशनंप्राचींपञ्चानांयजमानःप्रत्यस्त-
मासुरःसोमस्य सौम्यंमृत्योरोजोसिरुक्मोहिरण्यरूपौमैत्रावरुणी-
त्रिष्टुब्यजुरंताऽवसानांसोमस्य त्वासुन्वंप्रपर्वतस्यापी त्रिष्टुब्
विष्णोस्त्रीणि लिंगोक्तानि प्रजापतेनप्राजापत्यात्रिष्टुब्ब्रह्मद्रौद्र-
मिन्द्रस्यलिङ्गोक्तदेवतानिमातेसंवरणःप्राजापत्यऐन्द्रीत्रिष्टुभमग्न-
येलिङ्गोक्तदेवतानिपृथिविमातर्भूमिर्हंसो वामदेवः सौरीःसमप-
श्वपरत्रह्माभिधायिनीमतिजगतीयजुरंतामियछतमानांवुर्गसिशा-
खेंद्रस्य बाहूंस्योनास्यासदीक्षत्रस्याधीवासःस्योनाःसुन्वंनिषसाद-
शुनःशेपो वारुणीं गायत्रींमभिभूरस्यक्षांयजमानोवाब्रह्मःस्त्वमा
मन्त्रणानिपञ्चलिङ्गोक्तदेवतानींद्रस्यस्प्योऽग्निःपृथुराग्नेयंःस्वाहा-
कृताऽअक्षा.सवित्रालिङ्गोक्तदेवतमथ चरकसौत्रामण्यश्विनोरार्ष-
मश्विभ्यांत्रीणिलिङ्गोक्तदेवतानिवायोः सौमीगायत्रीकुविदङ्ग
सुकीर्तिःकाक्षीवतऽआद्यासौम्यनिरुक्तात्रिष्टुब्युवमनुष्टुप्पुत्रमि-
यत्रिष्टुबश्विसरस्वतीन्द्रदेवत्येऽश्विसरस्वतीन्द्रदेवत्ये ॥ ११ ॥

इति सर्वानुक्रमणीये प्रथमोऽध्यायः ॥ १ ॥

ॐ एष ते । निर्ऋते भागस्तं जुषस्व स्वाहाग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा यमनेत्रेभ्यो देवेभ्यो दक्षिणसद्भ्यः स्वाहा ॥ विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरसद्भ्यः स्वाहा ॥ सोमनेत्रेभ्यो देवेभ्य उपरि-

श्रीदैत्यान्तकनरान्तकनिहन्त्रे नमः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

दशमेऽध्याये वाजपेयिका मन्त्रा निरूपिताः । एकादशे राजसूयसंबन्धिमन्त्रा निरूप्यन्ते । तत्र प्रथमानुवाके नैर्ऋतेष्ट्यादिगता मन्त्रा निरूप्यन्ते । कात्यायनः ॥ अष्टाकपालोऽनुमत्यै, शम्यायाः पश्चाद्धविष्यमवदानं स्रुवेण कृत्वा दक्षिणाग्नेरुल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्णे इरिणे वाऽग्नौ जुहोत्येष ते निर्ऋत इति । अस्यायमर्थः । पौर्णमास्यभिमानिदेवता काचिदनुमतिरित्युच्यते । तस्यै पुरोडाशोऽष्टाकपालः कर्तव्यः । तदर्थं तन्दुला इष्यन्ते । तदानीं पेषणसाधनस्य पाषाणस्याधस्तात् पश्चाद्भागे शम्याभिधः काष्ठविशेष आधारत्वेन स्थापनीयः । पेषणकाले तस्याः शम्यायाः पश्चात्पिष्यमाणं हविर्यावत्पतितं तावत्स्रुवेण प्रगृह्य दक्षिणाग्नेः सकाशादुल्मुकमादाय दक्षिणस्यां दिशि गत्वा स्वयमेव निष्पन्ने भूच्छिद्र उलूखलप्रदेशे वा स्थिते स्थापिते तस्मिन्नुल्मुकाग्नौ तं हविर्भागमेष त इति मन्त्रेण जुहुयादिति ॥ पाठस्तु ॥ राजसूयमन्त्रान् वरुणोऽपश्यत्तस्मात् सामान्येन वरुण ऋषिः । तत्रैष त इति वरुणस्यार्षं पृथिवी देवता । अतिशक्वरी छन्दः । तं भागं जुषस्व सेवस्व । स्वाहा सुहुतमस्तु । अनन्तरं चातुर्मास्यगतानि चत्वारि पर्वाणि अनुष्ठाय पश्चात् परेध्मीयनामकं कर्मानुष्ठातव्यम् । तत्र मन्त्रविनियोगमाह ॥ कात्यायनः ॥ आहवनीयं प्रतिदिशं व्यूह्य मध्ये पञ्चस्वग्निषु जुहोति । अग्निनेत्रेभ्य इति प्रतिमन्त्रमिति । पूर्वादिषु चतसृषु दिक्षु मध्यभागे चाहवनीयं पञ्चधा विभज्य तादृशेषु पञ्चस्वग्निष्वग्निनेत्रेभ्य इत्यादीनामेकैकेन मन्त्रेण स्रुवेण जुहुयात् ॥ तेषां पाठस्तु ॥ अग्निनेत्र इत्यादीनि दैव्यानि यजूंषि । अग्निनेत्रेभ्यो देवेभ्य पुरःसद्भ्यः स्वाहा । यमनेत्रेभ्यो देवेभ्यो दक्षिणसद्भ्यः स्वाहा । विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा । मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरसद्भ्यः स्वाहा । सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहेति । अग्निनेत्रेभ्यः । अग्नि-

सदूभ्योदुवस्वदूभ्यःस्वाहा ॥ १ ॥ येदेवाऽअग्निनेत्राःपुरःसदस्ते- भ्यःस्वाहायेदेवायमनेत्रादक्षिणसदस्तेभ्यःस्वाहा॥येदेवाविश्वदेव- नेत्राःपश्चात्सदस्तेभ्यःस्वाहायेदेवामित्रावरुणनेत्रावामरुन्नेत्रावो- त्तरसदस्तेभ्यःस्वाहा ॥ येदेवाःसोमनेत्राऽउपरिसदोदुवस्वन्तस्ते- भ्यःस्वाहा ॥ २ ॥ अग्नेसहस्व । पृतनाऽअभिमातीरपास्यदुष्टर- स्तरन्नरातीर्वर्चोधायज्ञवाहसि ॥ ३ ॥ देवस्यत्वा । सवितुःप्रस- वेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ उपाꣳशोर्वीर्येणजुहोमिह- तꣳरक्षःस्वाहा॥रक्षसांत्वावधायावधिष्मरक्षोमुष्यत्वावधायामु- मवधिष्म ॥ जुषाणोध्वाज्यस्यवेतुस्वाहा ॥ ४ ॥

---

नेता येषां ते अग्निनेत्रास्तेभ्यः। पुरस्तात् पूर्वस्यां दिशि सीदन्तीति पुरःसदस्तेभ्यो देवेभ्यः स्वाहा। देवानामार्पाणि। सुहुतमस्तु । यमो नेता येषां तेभ्यो दक्षिणभागेऽवस्थितेभ्यो देवेभ्यः स्वाहा सुहुतमस्तु । विश्वेदेवा नेतारो येषां तेभ्यः पश्चिमभागेऽवस्थितेभ्यो देवेभ्यः स्वाहा सुहुतमस्तु । मित्रावरुणौ नेतारौ येषां तेभ्यो वा मरुन्नेत्रेभ्यो वा उत्तरभागेऽवस्थितेभ्यो देवेभ्यः सुहुतमस्तु । सोमो नेता येषां तेभ्योदुवस्वद्भ्यः परिचर्यावद्भ्य उपरिषद्भ्यो देवेभ्यः स्वाहा सुहुतमस्तु॥१॥कात्यायनः॥समस्य ये देवा इति प्रतिमन्त्रमिति। पञ्चधाविभक्तमाहवनीयमेकीकृत्य, ये देवा इत्यादिपञ्चमन्त्राणां मध्ये एकैकमन्त्रेण जुहुयादिति । तेषां पाठस्तु ॥ ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा । ये देवा यमनेत्रा दक्षिणसदस्तेभ्यः स्वाहा । ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा। ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरसदस्तेभ्यः स्वाहा। ये देवाः सोमनेत्रा उपरिषदो दुवस्वन्तस्तेभ्यः स्वाहेति। व्याख्यातः समानार्थः ॥२॥ कात्यायनः॥ अग्ने सहस्वेत्युल्मुकादानमिति । अपामार्गहोमार्थमुल्मुकमादद्यात् ॥ पाठस्तु ॥ देवश्रवा ऋषिरग्निर्देवता अनुष्टुप् । अग्ने सहस्व पृतना अभिमातीरपास्य। दुष्टरस्तरन्नरातीर्वर्चोधा यज्ञवाहसीति । हे अग्ने त्वं पृतनाः शत्रुसंबन्धिनीः सेनाः सहस्व । अभिभव । तथाभिमातीः अभिमानिनः कर्मविघ्नकारिणः शत्रूनपास्य अपनुद । किञ्च । दुष्टरो न केनापि तर्तुं शक्यस्त्वमरातीः शत्रूँस्तरंस्तिरस्कुर्वन् यज्ञवाहसि यज्ञनिर्वाहके यजमानमिति ते वर्चोधाः अन्नं धेहि ॥३॥ कात्यायनः॥देवस्य त्वेति जुहोति। अपामार्गलक्षणं हविर्जुहुयात् ॥ पाठस्तु ॥

अपो॒ दे॒वा । मधु॑मतीरगृभ्ण॒न्नूर्ज॑स्वती राज॒स्व॒श्चिता॑नाः । या-
भि॑र्मि॒त्रावरु॑णाऽभ्यषि॑ञ्च॒न्याभि॒रिन्द्र॒मन॑य॒न्नत्यरा॑तीः ॥ १ ॥

---

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । उपाᳬशो-र्वीर्येण जुहोमि हतᳬ रक्षः स्वाहेति । उपाᳬशोरित्यादीनि त्रीणि रक्षोघ्नानि यजूᳬषि । देवस्य त्वेत्यादि । व्याख्यातः । उपाᳬशोर्नाम प्रथमग्रहस्य वीर्येण सामर्थ्येनाहं जुहोमि । अत एव राक्षसजातिर्हतं निहतम् । अनेन नष्टम् । स्वाहा । सुहुतमस्तु ॥ कात्यायनः ॥ रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोतीति । यस्यां दिशि होमं कुर्यात् तादृशीं दिशं प्रति स्रुवं प्रक्षिपेत् । वधायेति मन्त्रशेषः ॥ पाठस्तु ॥ रक्षसां त्वा वधाय । रक्षसां राक्षसानां वधार्थं त्वा त्वां, प्रास्यामीति शेषः ॥ कात्यायनः ॥ अवधिष्म इत्यायन्तीति । होमानन्तरमिमं मन्त्रमुच्चार्य प्रत्यागच्छेयुः ॥ पाठस्तु ॥ अवधिष्म रक्षोऽमुष्य त्वा वधायामुमवधिष्मेति । रक्षो राक्षसान् अवधिष्म हतवन्तः । किञ्च रक्षसां वधं कृतवन्तो वयममुष्य शत्रोर्वधाय वधार्थम् । अमुमिति शत्रुनामग्रहणम् । अमुकनामकर्तृशत्रुम् अवधिष्म ॥ कात्यायनः ॥ चतुर्गृहीते जुषाणोऽध्वाज्यस्य वेत्विति । अरण्यहविषां मध्ये रुद्रदेवतागवेधुकं चरुं हुत्वा ततश्चतुर्वारं स्वीकृतमाज्यं जुहुयादिति । स्वाहेति मन्त्रशेषः । अध्वेति विभक्तिव्यत्ययः । अध्वानं मार्गं जुषाणः सेवमानः । आज्यस्य वेतु पिबतु स्वाहेति होमार्थः ॥४॥ इत्येकादशोऽध्याये प्रथमोऽनुवाकः ॥ १ ॥

प्रथमेऽनुवाके नैर्ऋतेष्ट्यादिगता मन्त्रा उक्ताः । द्वितीये अभिषेकार्थजलविषया मन्त्रा उच्यन्ते । अभिषेचनीयस्य सोमयागस्याऽनुष्ठानं कृत्वा तदऽभिषेकार्थानि सारस्वतादीनि नानाविधान्युदकान्यानीय तेषां मध्ये प्रथमं सारस्वतजलग्रहणे विनियोगमाह ॥ कात्यायनः ॥ सारस्वतीर्गृह्णात्यपो देवा इतीति ॥ पाठस्तु ॥ अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः । याभिर्मित्रावरुणा अभ्यषिञ्चन् याभिरिन्द्रमनयन्नत्यरातीरिति । देवा मधुमतीः मधुरसोपेता ऊर्जस्वतीर्विशिष्टान्नरसवती राज्ञः सूयन्ते जनयन्तीति राजस्वः । चितानाः । देवतात्मकत्वेन चेतयमाना अपोऽगृभ्णन् गृहीतवन्तः । पुनस्ता एव विशिनष्टि । याभिरद्भिर्मित्रावरुणावभ्यषिञ्चन्मित्रावरुणयोरभिषेकं कृतवन्तः । याभिरद्भिरिन्द्रं देवराजम्,-अरातीः शत्रूनतिक्रम्य अनयन् नीतवन्तः । ता अपोऽगृभ्णन्निति पूर्वेण संबन्धः ॥ १ ॥ कात्यायनः ॥ जुहोत्युत्तरासु चतुर्गृहीतानि

वृष्णऽऊर्मि । रसिराष्ट्रदाराष्ट्रंमेदेहिस्वाहावृष्णऽऊर्मिरसिराष्ट्र-दाराष्ट्रममुष्मैदेहि ॥ वृषसेनोसिराष्ट्रदाराष्ट्रंमेदेहिस्वाहावृषसे-नोसिराष्ट्रदाराष्ट्रममुष्मैदेहि ॥ २ ॥ अर्थेतस्थ । राष्ट्रदाराष्ट्रंमे-दत्तस्वाहार्थेतस्थराष्ट्रदाराष्ट्रममुष्मैदत्त ॥ ओजस्वतीस्थराष्ट्रदा राष्ट्रंमेदत्तस्वाहौजस्वतीस्थराष्ट्रदाराष्ट्रममुष्मैदत्त ॥ आपः परि-वाहिणीस्थराष्ट्रदाराष्ट्रंमेदत्तस्वाहापःपरिवाहिणीस्थराष्ट्रदारा-ष्ट्रममुष्मैदत्त ॥ अपांपतिरसिराष्ट्रदाराष्ट्रंमेदेहिस्वाहापांपतिर-सिराष्ट्रदाराष्ट्रममुष्मैदेहि॥अपांगर्भोसिराष्ट्रदाराष्ट्रंमेदेहिस्वाहा-पांगर्भोसिराष्ट्रदाराष्ट्रममुष्मैदेहि॥ सूर्यवर्चसस्थराष्ट्रदाराष्ट्रंमे-

वृष्ण ऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिमन्त्रम् । उत्तरैरुत्तरैर्गृह्णातीति । स्वाहाकारान्तैर्वृष्ण ऊर्मिरसीतिप्रभृतिभिः पूर्वैर्मन्त्रभागैः क्रमेण चतुर्वारं गृहीतानि ऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैराज्यानि प्राह्यमाणास्वप्सु जुहुयात् । हुत्वा च ता अप उत्तरोत्तरैः स्वाहाकाररहितैर्मन्त्रभागैः क्रमेण गृह्णीयात् । तेषां मध्ये प्रथममूर्मिद्वयोदकसंबन्धिहोमग्रहणमन्त्राणां पाठः । लिङ्गोक्ता देवता । आर्षिः ॥ वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि । वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहीति ॥ वृष्णः सेचनसमर्थस्योदकस्य संबन्धी ऊर्मिस्तरङ्गस्त्वं राष्ट्रदा असि स्वभावत एव राष्ट्रप्रदो भवसि । अतो मे मह्यं राष्ट्रं राज्यं देहि स्वाहेति होमार्थः । तादृशस्त्वम् अमुष्मै अमुकनाम्ने यजमानाय मह्यं राष्ट्रं देहि । कुल्यारूपेण बहुविषयस्योपकारकत्वादेषा राष्ट्रप्रदत्वमस्तीत्युच्यते । हे ऊर्मे वृषसेनः सेचनसमर्थः । सेचना जलराशिरूपा यस्या तादृशस्त्वं स्वभावत एव राष्ट्रप्रदो भवसि । अतो मह्यं राष्ट्रं देहि । स्वाहा हविर्हुतमस्तु । तादृशस्त्वममुष्मै यजमानाय राष्ट्रं देहि । एवमुपरितना अपि मन्त्रा व्याख्येयाः ॥ २ ॥ पाठस्तु ॥ अग्मानि लिङ्गोक्तदैवतानि यजूंषि ॥ अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽर्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । ओजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देहि । अपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां गर्भो-

दत्तस्वाहासूर्यवर्चसस्थराष्ट्रदाराष्ट्रममुष्मैदत्त॥सूर्यत्वचस्थराष्ट्रदाराष्ट्रंमेदत्तस्वाहासूर्यत्वचस्थराष्ट्रदाराष्ट्रममुष्मैदत्त ॥ व्रजक्षितस्थराष्ट्रदाराष्ट्रंमेदत्तस्वाहाव्रजक्षितस्थराष्ट्रदाराष्ट्रममुष्मैदत्त॥वाशास्थराष्ट्रदाराष्ट्रंमेदत्तस्वाहावाशास्थराष्ट्रदाराष्ट्रममुष्मैदत्त ॥ मांदास्थराष्ट्रदाराष्ट्रंमेदत्तस्वाहामांदास्थराष्ट्रदाराष्ट्रममुष्मैदत्त ॥ शक्करीस्थराष्ट्रदाराष्ट्रंमेदत्तस्वाहाशक्करीस्थराष्ट्रदाराष्ट्रममुष्मैदत्त॥जनभृतस्थराष्ट्रदाराष्ट्रंमेदत्तस्वाहाजनभृतस्थराष्ट्रदाराष्ट्रममुष्मैदत्त॥विश्वभृतस्थराष्ट्रदाराष्ट्रंमेदत्तस्वाहाविश्वभृतस्थराष्ट्रदाराष्ट्रममुष्मैदत्त ॥ शैष्ठास्थराष्ट्रदाराष्ट्रंमेदत्तस्वाहाशैष्ठास्थराष्ट्रदाराष्ट्रममुष्मैदत्त ॥ आपः स्वराज्ञीस्थराष्ट्रदाराष्ट्र-

ऽसि राष्ट्रदा राष्ट्रममुष्मै देहि । सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । सूर्यत्वच स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वच स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रादा राष्ट्रममुष्मै दत्त। वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। मान्दा स्थ राष्ट्रादा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । शक्करी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्करी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । शैष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शैष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति । हे आपो अर्थं प्रयोजनमुद्दिश्य नद्यादेः सकाशाद्यज्ञदेशं यन्ति गच्छन्तीति अर्थेतस्तथाविधा यूयं राष्ट्रदाः स्थ । स्वभावतो राष्ट्रप्रदा भवथ । अतो मे मह्यं राज्यं राष्ट्रदास्तादृश्यो यूयममुकनाम्ने यजमानाय राष्ट्रं दत्त। एवं सर्वत्र मन्त्रेषु पूर्वभागा होमार्था उत्तरभागा ग्रहणार्थाः। ओजस्वतीरोजसा बलेन युक्ता ओजस्वत्यापः परिवाहिणीः परितः सर्वतो वहन्तीति परिवाहिण्य आपः । अपां पतिः समुद्रः । अपोऽन्तर्गतभूतस्त्वं राष्ट्रदाः स्वभावतोऽसि । अतो मह्यं राष्ट्रं देहि । सूर्यवर्चो दीप्तिर्यासां ताः सूर्यवर्चसः । सूर्यस्य त्वग्दीप्तिर्यासां ताः सूर्यत्वच स्थ । व्रजक्षित इति मेघनाम । अत्र उदकधारणसाम्याद् कूपे विद्यते । व्रजे क्षियन्ति निवसन्तीति व्रजक्षितः कूपस्था आपः । वाशा वश्या नीहारगता आपो नीहारोदवाहः ।

मुष्मैदत्त ॥३॥ संमधुंमती । मधुमतीभिःपृच्यन्तांमहिक्षत्रंक्षत्रियायवन्वानाः ॥ अनाधृष्टाःसीदतसहौजसामहिक्षत्रंक्षत्रियायदधतीः ॥ ४ ॥

सवितात्वा । प्रसवानांस्सुवताम्ग्निर्गृहपतीनाᳬसोमोवनस्पतीनाम्॥बृहस्पतिर्वाचइंद्रोज्यैष्ठ्यायरुद्रःपशूनांमित्रःसत्या-

---

नदीप्रवाहवन्मनुष्यादिगतिं न प्रतिबध्नाति ततो वशपत्नय ।मान्दाः गलभावान्मन्दरूपाः स्थावराः आपः शक्करीः शक्तर्यः शक्ता आपः । जनान् एता बिभ्रतीति जनभृतः । विश्वं बिभ्रतीति विश्वभृतः । शैप्राः शविष्ठा विप्रा आपः। एवं भूता आपःआपो यूयं स्वभावतो राष्ट्रमदा भवथ अतो मह्यं राज्यं प्रयच्छथ ॥ कात्यायनः ॥ आपः स्वाराज्ञीरितिमरीचीर्गृहीत्वा अञ्जलिना सर्वासु संसृजति । किरणयुक्ता, आतपदृष्टमञ्जलिना आदाय पूर्वगृहीतासु सर्वास्वप्सु संयोजयेत् ॥ पाठस्तु ॥ आपः स्वाराज्ञी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ॥ स्वाराज्ञीः स्वराज्यसम्बन्धिन्यः स्वराज्य आपो यूयं राष्ट्रप्रदा भवथ । अतोऽमुकाय मह्यं राष्ट्रं दत्त ॥ ३ ॥ कात्यायनः ॥ औदुम्बरे पात्रे सिञ्चत्येनाः संमधुमतीरिति । औदुम्बरवृक्षेण निर्मितपात्रे पूर्वसंगृहीता अप आपः सिञ्चेत् ॥ पाठस्तु ॥ अब्दैवत्या गायत्री । संमधुमतीभिर्मधुमतीभिः पृच्यन्तां महिक्षत्रं क्षत्रियाय वन्वाना इति।मधुमतीर्मधुरसोपेता आपो धूमधूममिति मधुकरोपेताभिरद्भिः संपृच्यन्तां संसृज्यन्ताम् । महि महत् क्षत्रं बलं क्षत्रियाय च राज्ञे या वन्वानाः संभजमानाः ॥ कात्यायनः ॥ मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधात्यनाधृष्टाः सीदतेति । पूर्वोक्ता अपो मैत्रावरुणाख्यधिष्ण्यस्य पूर्वभागेऽवस्थापयेत् ॥ पाठस्तु ॥ गायत्री । अनाधृष्टाः सीदत सहौजसा महि क्षत्रं क्षत्रियाय दधतीरिति ॥ हे आपः अनाधृष्टाः केनाप्यतिरस्कृता यूयमोजसा करणेन क्षत्रियाय राज्ञे महि महत् क्षत्रं बलविशेषं दधतीः दधत्यः सीदत उपविशत ॥ ४ ॥ इत्येकादशेऽध्याये द्वितीयोऽनुवाकः ॥ २ ॥

द्वितीयेऽभिषेकार्थोदकविषया मन्त्रा उक्ताः । तृतीयेऽनुवाके देवसुवासंबन्धिहविषामङ्गभूता मन्त्रा उच्यन्ते ॥ कात्यायनः॥ सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वेति । यजमानस्य दक्षिणं बाहुं गृहीत्वा, सविता त्वेत्यनुवाकं पठेत् ॥ पाठस्तु ॥ यजमानदेवत्या शक्करी यजुर्वा । ज्यैष्ठ्यायेत्यादि,

य्वरुणोधर्मपतीनाम् ॥ १ ॥ इमंदेवाऽअसपत्नᳪंसुवध्वंमहतेक्षत्रा-
यमहतेज्यैष्ठ्याय ॥ इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशे ॥ २ ॥
एषवः । कुरवोराजैषवःपंचालाराजा ॥ सोमोस्माकं ब्राह्मणानाᳪं
राजा ॥ ३ ॥

सोमस्यत्विषिः । रस्पगनये स्वाहासोमायस्वाहासवित्रेस्वाहा
ब्राह्मणानाᳪं राजेति । ततो मन्त्रः । सविता सर्वस्य प्रेरको देवः सविता त्वा
प्रसवानाᳪं सुवतामग्निर्गृहपतीनाᳪं सोमो वनस्पतीनाम् । बृहस्पतिर्वाच इन्द्रो
ज्यैष्ठ्याय रुद्रः पशूनां मित्रः सत्याय वरुणो धर्मपतीनामिति ॥ प्रसवानामभ्य-
नुज्ञानामाधिपत्य इति शेषः । त्वां वा यजमानं सुवतामभ्यनुज्ञातुं सर्वप्राणि-
नामानन्तरं करोत्वित्यर्थः । गृहपतीनां गृहोपलक्षिताग्निसाध्यसर्वकर्माधिप-
तिमाधिपत्ये स्वयं गृहपत्यभिमानी अग्निस्त्वां यजमानं सुवताम् । अदृष्टपूर्व एव
फलवन्तो वनस्पतयस्तेषामाधिपत्ये वनस्पत्यधिपतिः सोमस्त्वां यजमानमभि-
जानातु । चतुर्विधाया वाच आधिपत्ये वाचस्पतिर्बृहस्पतिस्त्वां यजमानं सु-
वताम् । इन्द्रो ज्यैष्ठ्याय ज्यैष्ठ्यभावाय सुवताम् । रुद्रो देवः पशून् अर्थाय
त्वां सुवताम्। मित्रो देवः सत्यार्थं त्वां यजमानमभ्यनुजानातु। धर्मपतीनां धर्मपरि-
पालकानाम्। आधिपत्ये धर्मपरिपालको वरुणस्त्वां यजमानमभ्यनुजानातु॥१॥
हे देवाः सवित्रादयो यूयं यजमानमसपत्नं सुवध्वं निःसपत्नो भूयादित्यभ्य-
नुजानीत । किमर्थं, महते प्रभूताय क्षत्राय क्षत्रियधर्माय महते ज्यैष्ठ्याय ज्ये-
ष्ठभावाय । अतः पूर्वं पश्चाच्चैव तत्सदृशो नास्तीत्येतदर्थम् इमं यजमानं सुव-
ध्वम् । अमुष्या इत्येतदम्युदक्षरद्वयेन यजमानस्य मातापितरावुच्येते । तयोरे-
तद्यजमानमातापित्रोरिमं यजमानं पुत्रं यथा सुवध्वं तथाऽस्य यजमानस्यैतद्-
यजमानसदृशं पुत्रमभ्यनुजानीत । किमर्थम् । अस्यै विशे । आसां सर्वासां
प्रजानां परिपालनार्थमित्यर्थः ॥ २ ॥ हे कुरवः ! वो युष्माकम् एप यजमानो
राजाऽस्तु । हे पाञ्चालाः, वो युष्माकम् एप राजाऽस्तु । ब्राह्मणानामस्माकं
सोमो राजाऽस्तु ॥ ३ ॥ इत्येकादशेऽध्याये तृतीयोऽनुवाकः ॥ ३ ॥

तृतीयेऽनुवाके देवसुवासंबन्धिहविषामङ्गभूता मन्त्रा उक्ताः ॥ चतुर्थे
राज्याभिषेकार्थं व्याघ्रचर्मास्तरणमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ व्याघ्रचर्मा-
स्तृणाति सोमस्य त्विषिरसीति । आस्तरणं कुर्यात् । असीति मन्त्रशेषः ॥
पाठस्तु॥ सोमस्यत्विषिरसीति। हे व्याघ्रसंबन्धिनि त्वक् त्वं सोमस्य त्विषिरसि

दीप्तिरपि ॥ कात्यायनः ॥ अग्नये स्वाहेति षट् जुहोति प्रतिमन्त्रमिन्द्राय स्वाहेति प्रतिमन्त्रमिति । अभिषेकात् पूर्वमग्नये स्वाहेत्यादिभिः षड्भिर्मन्त्रैः क्रमेण जुहुयात् । अभिषेकस्य पश्चादिन्द्राय स्वाहेत्यादिभिः षड्भिर्मन्त्रैः क्रमेण जुहुयात् । तेषां पाठस्तु ॥

**अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा । पूष्णे स्वाहा बृहस्पतये स्वाहा । इन्द्राय स्वाहाऽऽघोषाय स्वाहा श्लोकायस्वाहा ऽंशाय स्वाहा भगाय स्वाहार्यम्णे स्वाहेति ॥**

स्पष्टार्थः ॥ कात्यायनः ॥ ताभ्यामुत्पुनात्यपः सवितुर्व इतीति । हिरण्येन संस्कृताभ्यां पवित्राभ्यामाद्भ्यामुत्पवनं कुर्यात् ॥ पाठस्तु ॥

**सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेणपवित्रेण सूर्यस्य रश्मिभिः । अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि स्वाहा राजस्वः इति ॥**

सवितुः सर्वस्य प्रेरकस्य परमेश्वरप्रसवेभ्योऽनुज्ञायास्थितोऽहं हे आपः वो युष्मानच्छिद्रेण छिद्ररहितेन समीचीनपवित्रेण सूर्यस्य किरणैरुत्पुनामि उत्पवनं करोमि । हेउदक ! त्वमनिभृष्टं केनाप्यनाधृष्टमसि । किञ्च सोमस्याभिषेककाले दानं दत्तमसि । हे आपः तपोजाः सन्तापवतो अग्नेर्जाता यूयं वाचो बन्धुर्वाचम्बन्धुभूता भवथ । राजानं सुवते जनयंतीति राजस्वस्ता राजजनका यूयं स्वाहाकारेण पूतास्थः ॥ कात्यायनः ॥ अभिषेचनीये एता आसिंचति सधमाद इतीति । अभिषेकार्थमानीतेषु सारस्वत्यादिपूदकेषु एता उत्पूता आप आसिंचेत् ॥ ॥ पाठस्तु ॥

**सधमादो द्युम्निनीराप एता अनाधृष्टा अपस्यो वसानाः । पस्त्यासु चक्रे वरुणः सधस्थमपां शिशुर्मातृतमास्वन्तरिति ॥**

सधमादः सहमादनशीला द्युम्निनीः द्युम्निन्यः तेजोवत्यः एता या आपः सिञ्चति । किंरूपः अनाधृष्टाः केनाप्यनभिभूताः । अपस्यः कर्मयोग्याः वसानाआच्छादयन्त्यो मातृस्थानीयानामपां पुत्रस्थानीयो वरुणः । पस्त्यासु गृहस्थानीयासु मातृतमासु । अतिशयेन जगत् निर्मित्रीषु तास्वन्तर्मध्ये सधस्थं चक्रे सहास्थितं कृतवान् ॥ ॥ कात्यायनः ॥

तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रमिति । तार्प्यं घृताक्तं वस्त्रन्तरप्रभृतीनि क्रमेण परिधापयेदिति शेषः ॥ पाठस्तु ॥

**क्षत्रस्योल्बमसि क्षत्रस्य जराय्वसि क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसीति ॥**

हेतार्प्य ! त्वं क्षत्रस्य राजस्थानीस्य यजमानस्य गर्भत्वेनोपचर्यमाणस्य उल्बं आवरणभूतोसि उल्बावृत्तो गर्भ इति श्रुतेरिति हि जरायुगर्भवेष्टनं । तादृग्भूतोसि । नाभ्यां सन्नद्धो गर्भो जायत इत्युक्तत्वान्नाभिभूतोसि । योनिर्गर्भसम्भवस्थानन्तादृगसि ॥ कात्यायनः ॥ इन्द्रस्य वार्त्रघ्नमिति धनुरातनोतीति । आहन्यादसीति मन्त्रशेषः ॥ पाठस्तु ॥

**इन्द्रस्य वार्त्रघ्नमिति ॥**

हेधनुः त्वमिन्द्रस्य सम्बन्धि वृत्रो येन हन्यत इति वृत्रघ्नस्तद्धनुरसि ॥ कात्यायनः ॥ धनुः प्रयच्छति त्वयायमितीति ।/ आततज्यन्धनुः प्रदद्यात् ॥ पाठस्तु ॥

**त्वयायं वृत्रं वध्यादिति ॥**

हेधनुस्त्वयायं यजमानः वृत्रं शत्रुं वध्यात् ॥ हन्यात् ॥ कात्यायनः ॥ मित्रस्य वरुणेत्यस्य बाहुर्विमार्ष्टीति । मित्रस्य वरुणस्येति मन्त्रद्वयेन यजमानस्य दक्षिणोत्तरबाहुविमार्जनं कुर्यात् ॥ पाठस्तु ॥

**मित्रस्यासि वरुणस्यासीति ॥**

हेदक्षिणबाहो ! त्वं मित्रस्य सम्बन्धी भवसि । हेवामबाहो ! त्वं वरुणस्य सम्बन्धी भवसि ॥ कात्यायनः ॥ रुजासीति प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छतीति । रुजासीत्यादिभिर्मन्त्रैस्त्रीन् शरानादाय यजमानाय प्रयच्छेत् ॥ तेषां पाठस्तु ॥

**रुजासि द्रवासि क्षुपासीति ॥**

हेइषो ! त्वं रुजासि । रुजोभङ्ग इति धातुः । शत्रुणाम्भङ्गकरो भवसि । क्षुपासीति । क्षुपा शत्रुकदनकारीपुरसि । क्षुप विधूनन इति धातुः ॥ कात्यायनः ॥ पातैनमित्यभिमृश्यतीतियजमानमभिस्पृशेत् ॥ पाठस्तु ॥

**पातैनं प्राञ्चं पातैनं प्रत्यञ्चम्पातैनन्तिर्यञ्चन्दिग्भ्यः पातेति ॥**

हेइषवः ! प्राच पूर्वभागेवस्थितमेनं यजमानं पात पालयत । प्रत्यञ्चं

पश्चिमदिश्यवस्थितमेनं पात । तिर्यगन्तिर्यग्गतमेनं पात । पालयत ॥ कात्यायनः ॥ आविर्मर्या इति वाचयतीति ॥ पाठस्तु ॥

**आविर्मर्या आवित्तो अग्निर्गृहपतिरावित्त इन्द्रो वृद्धश्रवा आवित्तः पूषा विश्ववेदा आवित्तौ मित्रावरुणौ धृतव्रतौ । आवित्ते द्यावापृथिवी विश्वशम्भू आवित्तो दितिरुरुशर्मेति ॥**

हेमर्या ! मनुष्यऋत्विजः यूयमाविरभूत । अभ्यगन्त तिष्ठत । युष्मदनुष्ठितेन कर्मणा अग्निर्गृहपतिर्भूत्वा आवित्तोपलब्धः । इन्द्रो वृद्धश्रवाः प्रवृद्धकीर्तिर्भूत्वा आवित्तोपलब्धः पूषा देवः विश्ववेदाः सर्वज्ञो भूत्वा आवित्तः । मित्रावरुणौ देवौ धृतव्रतावबधारितकर्माणौ भूत्वा आवित्तौ ॥ तथा द्यावापृथिवी द्यावापृथिव्यौ विश्वस्य शम्भू सुखाभ्यां भवतीति विश्वशम्भू तथाविधे भूयाः । आवित्ते अदितिरदीना देवमाता । उरुशर्मा उरु महद् । शर्म शरणं सुखं वा यस्याः सा तथाविधा भूता आवित्ता लब्धा ॥

इत्येकादशेऽध्याये चतुर्थोऽनुवाकः ॥

चतुर्थेऽनुवाके राजाभिषेकार्थं व्याघ्रचर्मास्तरणमन्त्रा उक्ताः ॥ पञ्चमे दिगाक्रमणस्य मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ अवेष्टा इति लोहायसमाविश्यति केशपाशापसदे । त उपाविष्टायेति सदोन्तः स्थिताय केशसंस्कारिणे पुरुषायायोमयं लोहं निरस्येत ॥ पाठस्तु ॥

**अवेष्टा दंदशूका इति ॥**

दंदशूकाः सर्पसदृशा यज्ञविघ्नकारिणो राक्षसादयः अवेष्टा विनाशिता । अवतिरिति शेषः ॥ कात्यायनः ॥ सुर्वतमाक्रमयन् दिशः प्राचीमारोहेति वाचयति प्रतिमन्त्रमिति दिशा यथालिङ्गमिति ॥ यजमानेन्दिशामाक्रमणं कारयन्नध्वर्युरेकैकेन मन्त्रेण ॥ तत्रपाठस्तु ॥

**प्राचीमारोह गायत्री त्वावतु । रथन्तरꣳसाम त्रिवृत्स्तोमो वसन्तऋतुर्ब्रह्म द्रविणमिति ॥**

हेयजमान ! त्वं प्राचीदिशं आरोह । आक्रमस्व । तथाविधं त्वां छन्दसां मध्ये गायत्रीछन्दः अवतु रक्षतु । साम्नां मध्ये अभिताशृरनोतु मेत्यस्यामृच्युत्पन्न रथन्तराख्यं साम रक्षतु । स्तोमानांमध्ये त्रिवृत्स्तोमः पालयतु । ऋतूनां मध्ये वसन्तऋतुः पालयतु । ब्रह्म ब्राह्मणजातिस्त्वां रक्षतु त्वदीयं द्रविणन्धनं

रक्षतु । त्रिवृत्स्तोमस्य रूपं सामब्राह्मणे समाम्नातं । तिसृभ्यो हिङ्करोतीति स प्रथमया तिसृभ्यो हिङ्करोति समध्यमया तिसृभ्यो हिङ्करोति स उत्तमयोद्यतीति त्रिवृतो विष्टुतिरिति । अस्यायमर्थः । उपास्मै गायतेत्यादीनि ऋक्त्रात्मकानि त्रीणि सूक्तानि सन्ति तेषु तिसृभिर्ऋग्भिर्हिंकरोति गायेत् । काभिस्त्रिभिः प्रथमया त्रिष्वपि सूक्तेषु या या प्रथमा तया उद्गाता गायेत् । तथा सति तिसृभिर्गीतं सोऽयं प्रथमपर्यायः । द्वितीये सूक्तत्रयगतया मध्यमया गायेत् । तृतीये पर्यो सूक्तत्रयगतयोत्तमयागायेत् । अनेन प्रकारेण त्रिवृत्स्तोमसम्बन्धिनी विशिष्टास्तुतिः सम्पद्यते । सेयं स्तुतिरुद्यतीति नाम्नाभिधीयते ॥ द्वितीयमंत्रपाठस्तु ॥

दक्षिणामारोह त्रिष्टुप् त्वावतु । बृहत्साम पञ्चदशस्तोमो ग्रीष्मऋतुः क्षत्रं द्रविणमिति ॥

पूर्वन्यायेन योजनीयं । त्वामिद्धि हवामहे इत्येतस्यामृच्युत्पन्नबृहत्साम पञ्चदशस्तोमस्ते च समाम्नातः । पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिंकरोति स तिसृभिः स एकया पञ्चभ्यो हिंकरोति पञ्चपदनीः पञ्चदशस्य विष्टुतिरिति पूर्वोक्तत्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः । अन्ये तु स्तोमा एकैकैकऋचात्मकेन सूक्तेन निष्पाद्यन्ते तत्रायं क्रमः । प्रथमपर्याय आवृत्तिः सा च त्रिऋग्भिर्गायेत् । इतरे द्वे सकृत्सकृद्गायेत ॥ द्वितीयया या प्रथमा सकृत्सकृद्गायेत् । तृतीयपर्याये मध्यमा सकृद्गायेत् । सेयमेकविंशतिस्तोमसम्बन्धिनी विष्टुतिः । सप्तमप्तनीत्यभिधीयते । पञ्चदशस्तोमश्च त्वामवतु । क्षत्रं क्षत्रियजातिस्त्वामवतु । द्रविणं धनञ्च त्वामवतु । एवंतृतीयचतुर्थौ मन्त्रौ व्याख्येयौ ।

प्रतीचीमारोह जगती त्वावतु । वैरूपꣳसामसप्तदशस्तोमो वर्षाऋतुर्विट् द्रविणमिति ॥

जगती नाम छन्दः अवतु । वैरूपं साम चावतु । सप्तदशस्तोमश्चावतु । वर्षाख्यो ऋतुस्त्वामवतु । विट्वैश्यजातिस्त्वामवतु । द्रविणं धनं च त्वामवतु ॥ उदीचीनामारोहानुष्टुप्त्वावतु । वैराजꣳसामैकविꣳशः स्तोमः शरदृतुः फलं द्रविणमिति । तस्त्वा अनुष्टुबवतु । वैराजछन्दस्त्वामवतु । एकविंशस्तोमश्च त्वामवतु । शरन्नाम ऋतुश्च त्वामवतु । सर्वश्च फलरूपं द्रविणं च त्वामवतु । पञ्चममन्त्रपाठस्तु ॥

ऊर्ध्वामारोह पङ्क्तिस्त्वावतु । शाक्वररैवते सामनी त्रिण-

त्रयस्त्रिंशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणामिति ॥
वर्चः तेजोभिमानी देवो धनं रक्षतु । प्रोथदश्वैपुरो रथं इत्येतस्यामुत्पन्नं सामशाक्वरं तीर्णः सप्तमाद् इत्येतस्यां ऋच्युत्पन्नं सामरैवतन्त्रिणवस्तोम एवमाम्नातः ॥ नवभ्यो हिंकरोति स तिसृभिः सपंचभिः स एकया नवभ्यो हिंकरोति स एकया तिसृभिः पञ्चभिः नवभ्यो हिंकरोति स पञ्चभिः स एकया स तिसृभिर्वज्रो वैरिण इति । प्रथमपर्याये प्रथमान्त्रिर्गायेत् । मध्यमां पञ्चकृत्वोगायेत् । उत्तमां सकृद्गायेत् । द्वितीयपर्याये प्रथमां सकृद्गायेत् । मध्यमां त्रिर्गायेत् । तृतीयपर्याये उत्तमां पञ्चकृत्वो मध्यमांसकृद्गायेत् । उत्तमान्त्रिर्गायेत् । सोयन्त्रिरावृत्तो नवसंख्योपेतत्वात्त्रिगुणवनामको वज्रमानः त्रयस्त्रिंशस्तोम एवमाम्नातः । एकादशभ्यो हिंकरोति स तिसृभिः ससप्तभिः स एकैकादभ्यो हिंकरोति स एकया स तिसृभिः स सप्तभिः एकादशाभ्यो हिंकरोति स सप्तभिः । स एकया स तिसृभिरितो वै त्रयस्त्रिंश इति प्रथमपर्याये प्रथमां त्रिर्गायेत् । मध्यमां सप्तकृत्व उत्तमां सकृत् ॥ द्वितीयपर्याये प्रथमां सकृत् । मध्यमांत्रिरुत्तमा सप्तकृत्वस्तृतीयपर्याये प्रथमां सप्तकृत्वो मध्यमां सकृदुत्तमा त्रिः सोयन्त्रयस्त्रिंशः सर्वेषा स्तोमानामन्तः ॥ ॥ कात्यायनः ॥ ॥ पादेन सीसन्निरस्यति प्रत्यस्तमिति । नमुचेः शिरः इति मन्त्रशेषः । प्रतिसृष्टं अस्तन्निःक्षिप्तं नमुचेरसुरस्य शिरः ॥ ॥ कात्यायनः ॥ ॥ व्याघ्रचर्मारोहति । अभिषेकार्थं राजानं व्याघ्रचर्मण्यवस्थापयेत् ॥ पाठस्तु ॥

सोमस्य त्विषिरसि तव च मेत्विषिर्भूयादिति ॥

हेव्याघ्रचर्म ! त्वं सोमस्य त्विषिरसि दीप्तिरसि । ते तव यथा दीप्तिर्भवति तथा मे ममापि दीप्तिर्भूयाद् ॥ कात्यायनः ॥ रुक्ममधस्पदं कुरुते मृत्योरिति पादतले हिरण्यं कुर्यात् । पाहीति मन्त्रशेषः । हेसुवर्ण ! त्वं मृत्योः सकाशान्मां पाहि पालय ॥ कात्यायनः ॥ शिरसि नवकृत्वो रुक्मं ओजोसीति । नवसंख्यायुक्तनिष्कपरिमितं च सुवर्णं यजमानस्य शिरसि कुर्यादिति मन्त्रशेषः ॥ पाठस्तु ॥

ओजोसि सहोस्यमृतमसीति ॥

हेहिरण्य ? त्वमोजस्तेजोयुक्तमसि सहोसि बलमसि अमृतमसि प्राणबलमसि ॥ कात्यायनः ॥ बाहू उद्गृह्णाति । हिरण्यरूपा इति मन्त्रेण

मित्रोसीत्यनेन बाहूद्वयमुत्तानं कुर्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥

हिरण्यरूपा उषसो विरोक उभा इन्द्रा उदिनः सूर्यश्च । आरोहतं वरुणमित्रगर्त्तन्ततश्चक्षाथामदितिं दितिं चेति ॥

हेवरुण ! हेमित्र ! शत्रुनिवारक दक्षिणहस्तौ हिरण्यरूपौ सुवर्णखचितौ अतिशयेन भासमानौ इन्द्रौ समर्थौ । उभौ युवां गर्तं रथस्योपरिभागं गर्तसदृशमारोहतं । परकीयमाणेभ्यो रक्षितुं । पितरश्च कर्मकरत्वादिभिराच्छादिते सति रथस्योपरि भागो गर्तसदृशो भवति । आरोहणं कदा कर्तव्यमित्युच्यते । उषसः कालानन्तरं विरोकः विविधदीप्तिः सूर्यश्च उदित उदयं प्राप्तस्तदा आरोहतमित्यर्थः । ततो रथारोहणादूर्ध्वं अदितिमखण्डितां स्वसेनादितिं खण्डितां परसेनां चक्षाथां क्रमेणानुग्रहनिग्रहं दृष्ट्वा समीक्षाथां । मित्रोसिवरुणोसीति वैकल्पिकद्वितीयमन्त्रो व्याख्यातः ॥

इत्येकादशेऽध्याये पञ्चमोऽनुवाकः ॥

पञ्चमे दिगादिक्रमणादिमन्त्रा उक्ताः।षष्ठेऽनुवाकेऽभिषेकादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ स्थितं प्राङ्मन्तरोऽध्वर्युर्वा पुरस्तात्पलाशेन प्रथमं पश्चादितरो द्वितीयेन तृतीयेन मित्रो राजन्यो वैश्यश्चतुर्थेन सोमस्यत्वाद्युम्नेनेति प्रतिमन्त्रमभिषिचामीति सर्वत्र साकाङ्क्षत्वात् क्षत्राणां क्षत्रपतिरेधीति चेममायुष्येति चेति। रुक्मसहिते व्याघ्रचर्मणि अवस्थितं प्राङ्मुखं राजानं पुरोहितादयः पुरस्तादवस्थाय अभिषिचेयुः । अभिषेकजलपात्राणि चतुर्विधानि । पलाशो दुम्बरन्यग्रोधाश्वत्थानि । तत्र पलाशपात्रेण पुरोहिताध्वर्योरन्यतरः प्रथममभिषिंचेत् । उदुंबरपात्रेणाध्वर्युव्यतिरिक्ता ऋत्विजोऽभिषिचतुः । ततोन्यग्रोधपात्रेण स्वकीयो बन्धुः कश्चिदभिषिंचेत । तत अश्वत्थपात्रेण मित्रभूतः कश्चित्क्षत्रियो वैश्यश्चाभिषिचेत । चतुर्विधानामेतेषामभिषेक्तॄणां क्रमेण सोमस्याग्नेः सूर्यस्येन्द्रस्येत्येते चत्वारो मन्त्रा द्रष्टव्याः । मरुतामोजसेत्यं चतुर्थमन्त्रशेषः । अभिषिंचामीति पदमुपरितनेषु त्रिषु मन्त्रेष्वनुवर्तते । क्षत्राणामित्येतावुभौ मन्त्रशेषौ इति मन्त्रमावर्तनीयौ ॥ एतेषां पाठस्तु ॥

सोमस्य त्वा द्युम्नेनाभिषिंचाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसा । इन्द्रस्येन्द्रियेण मरुतामोजसा क्षत्राणां क्षत्रपतिरेध्यतिदिद्यून् पाहि । इमन्देवा असपत्नꣳ सुवध्वं महते क्षत्राय महते

ज्येष्ठयाय महते जानराज्यायेममुष्य पुत्रममुष्याः पुत्रमस्यै विशे । एष वः कुरवो राजैषवः पञ्चाला राजा सोमोऽस्माकं ब्राह्मणानाꣳराजेति ॥

हेयजमान ! त्वां सोमस्य दिद्युम्नेन द्योतनेन तेजसाभिषिंचामि । अग्नेर्भ्राजसा दीप्त्या त्वामभिषिंचामि । सूर्यस्य वर्चसा शोचिषा त्वामभिषिंचामि । इन्द्रस्येन्द्रियेण त्वामभिषिंचामि । मरुतामोजसा बलेन त्वामभिषिंचामि । एवं सर्वैरभिषिक्तः सन् क्षत्राणां क्षत्रपतिरेधि सर्वेषां क्षत्रियाणामधिपतिर्भव । अतिदिद्यून् । दोऽवखण्डने धातो रूपं । अवखण्डनसामर्थ्ययुक्तानतीत्यातिक्रम्यापसार्थिनं यजमानं हे देवबंध ! त्वं पाहि पालय । एष वो दियव इति श्रुतेः । यद्वा शत्रुप्रयुक्तान् सर्वान्बाणादीनपसार्य । हेयजमान ! त्वं सर्वं भुवन्पालय महते प्रभूताय जानराज्याय जनानां सम्बन्धि राज्यं जानराज्यं तदर्थं । हे देवाः इमं यजमानं सुवध्वं शिष्टं पूर्ववद्व्याख्येयं ॥ कात्यायनः ॥ अभिषेकेण प्रलिंपते प्रपर्वतस्येतीति । अभिषेकसम्बन्धोदकशेषेण प्रलेपनं कुर्यात् ॥ पाठस्तु ॥

प्रपर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः । ता आवृत्रन्नधरागुदक्ता अहिं बुध्न्यमनुरीयमाणा इति ॥

वृषभस्य वर्षणसमर्थस्य पर्वतसदृशस्य मेघस्य पृष्ठात् उपरिभावान्नावः नौयोग्याबहुला आपश्चरन्ति गच्छन्ति । कीदृश्यः स्वसिचः । स्वमात्मीयं यजमानं क्षेत्रं सिञ्चन्तीति स्वसिच इयाना आगच्छन्त्यो बाहुल्येन सर्वत्र वहन्त्यः । न हीयत इत्यहिरुत्तमाङ्गं बुध्नस्य पादस्याग्रमाबुध्न्यः शिरः प्रभृति पादाग्रपर्यन्त अनुक्रमेण रीयमाणागच्छन्त्यस्ता आपः अधाराक् अधोगता अवदृत्रन् पुनः पुनरावृत्त स्थितास्तास्तादृश्य आउदगूर्ध्वं गता आवदृत्रन् ॥ कात्यायनः ॥ चर्मणि त्रिर्विक्रमयन्ति विष्णोरिति प्रतिमन्त्रमिति । विष्णोरिति मन्त्रत्रयेण आस्तीर्णे व्याघ्रचर्मणि त्रिवारं पादप्रक्षेपणं कुर्यात् ॥ तेषां पाठस्तु ॥

विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसीति ।

यजमानस्य मम प्रथमक्रमत्वं विष्णोर्व्यापनशीलस्य जगदीश्वरस्य त्रिविक्रमावतारस्य प्रक्रमणमसि । प्रथमपदा प्रक्षेपेण जितो

भूलोकोसि । हेद्वितीयमक्रम ! त्वं विक्रान्तमसि । विष्णोर्द्वितीयपादप्रक्षेपेण जितमन्तरिक्षमसि । हेतृतीयमक्रमण ! त्वं क्रान्तं विष्णोः पराक्रमेण. जितान्त्रिविष्टपमसि । इमं मन्त्रत्रयं लोकत्रयविजये तैत्तिरीया अध्यामनन्ति । विष्णुर्विक्रमान् क्रमते विष्णुरेव भूत्वेमांल्लोकानभिजयतीति ॥ कात्यायनः ॥ शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धे प्रजापते ऽनेनेति । पूर्वं तेनाहवनीयमिदानीन्तेन गार्हपत्यं शालाद्वार्यं तस्मिञ्जुहुयात् ॥ पाठस्तु ॥

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिताबभूव । यत्कामास्तेजुहुमस्तन्नोऽ अस्तु वयं स्याम पतयो रयीणामिति ॥

हेप्रजापते ! त्वदन्यः कोऽपि पुरुषः त्वत्तः एतानि विश्वा विश्वानि सर्वाणि रूपाणि न परिबभूव परिभावितुं समर्थो नाभूत् । परिभवः सृष्टेरप्युपलक्षणं । सृष्टिसंहारयोः अशक्त इत्यर्थः । अतस्ते वयंयत्कामा जुहुमः नोऽस्माकं तत्फलमस्तु । किञ्च वयं रयीणां पतयः स्याम स्वामिनो भवेम ॥ कात्यायनः ॥ आग्नीध्रिये पालाशेन शेषाणि जुहोति रुद्र यत्त इति । पालाशपात्रेणाभिषेकशेषभूतान्युदकान्याग्नीध्रंतवन्धीनि जुहुयात् ॥ पाठस्तु ॥

रुद्र यत्ते क्रिविपरं नाम । तस्मै हुतमस्यमेष्टमसि स्वाहेति ॥

हेरुद्र ! ते तव क्रिविहिंसाकरणयोग्यं जगद्विरोधिनां हिंसाकर्तृकं सज्जनानान्तु पुरुषार्थस्य करणभूतं यन्नामास्ति तस्मै नाम्ने हुतमस्तु । अभिषेकशेषभूतं पात्रस्थमुदकं हुतमस्तु । तच्चाऽमेष्टमसि अमाशब्दोत्र गृहवाची मदीये गृहे दत्तमस्तु स्वाहेति होमार्थः ॥

इत्येकादशेऽध्याये षष्ठोनुवाकः ॥

षष्ठे ऽनुवाके अभिषेकादिमन्त्रा उक्ताः ॥ सप्तमे रथावरोहणमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ अग्निवाजपेयवद्रथमवरोहत्येति । अग्निचयनवाजपेये यथा रारोहणं कृतं तद्वदत्रापि रथमवरोहेत् ॥ पाठस्तु ॥

इन्द्रस्य वज्रोऽसीति ।

हेरथ ! इन्द्रस्य वज्रसदृशो भवसि ॥ कात्यायनः ॥ युनक्ति पूर्ववत् मित्रावरुणयोरिति । वाजपेये यथा रथसंयोजनं कृतं तद्वदत्रापिरथेऽश्वान् संयोजयेत् ॥ पाठस्तु ॥

मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति ।

प्रशास्त्रोराज्ञापयित्रोर्मित्रावरुणयोः प्रशिषा प्रशासनेन यज्ञसम्बन्धि-निमित्तरथे त्वामश्वं युनज्मि युञ्ज्याम् ॥ कात्यायनः ॥ अव्यथायै त्वेति सु-न्वन्तमारोहतीति । संयोजिते रथे यजमान आतिष्ठेत् ॥ पाठस्तु ॥

अव्यथायै त्वा स्वधायै त्वारिष्टः फल्गुन इति ॥

अरिष्टः अनुपहिंसितः फल्गुनोऽर्जुन इन्द्र इत्यर्थः अर्जुनो वै नामेन्द्र इति श्रुतेः । एवम्भूत इन्द्रः हे रथ ! त्वा त्वां अव्यथायै भयर-हिताय व्रजिनरहिताय वा आरोहयत्विति शेषः । स्वधायै अन्नरसाय त्वामारोहयतु ॥ कात्यायनः ॥ मरुतामिति दक्षिणाध्वर्युं प्रयोजयतीति । युगस्य दक्षिणभागवाहकमश्वं प्रयोजयेत् ॥ पाठस्तु ॥

मरुताम्प्रसवेन जयेति ॥

मरुतां सम्बन्धिनां प्रसवेनानुज्ञया वर्तमानोऽश्वस्त्वं अस्मच्छत्रून् जय ॥ कात्यायनः ॥ गवां मध्ये स्थापयत्यापामेति । प्रगल्भं प्रयच्छन्तमश्वं गोसमूहेऽश्वस्थापयेत् । मनसेति मन्त्रशेषः । वयं मनसा सह आपामप्राप्नवन्तः ॥ कात्यायनः ॥ धनुषोऽश्वस्पृशति गां यजमानः समिन्द्रि-येणेतीति । यजमानो धनुष्कोट्या गामुपस्पृशेत् । वयमिन्द्रियेण वीर्येण स-ङ्गताः स्म ॥ कात्यायनः ॥ पूर्वेण युपम्परीत्यान्तः पात्यदेशे स्थापयति मा न इन्द्र इतीति ॥ पाठस्तु ॥

मा न इन्द्र ते वयन्तुराषाळयुक्तासो अब्रह्मता विदसा-म । तिष्ठा रथमधिमवज्रहस्ता रश्मी देव युवसे स्वश्वानिति ।

तूर्णं सहते शत्रूनभिवतीति । तुराषाट् तस्य सम्बोधनं हेतुराषाट् ! इन्द्र ते तव स्वभूतास्ते त्वदधीनत्वेन प्रसिद्धा वयं अयुक्तासः त्वया असं-युक्ताः । अब्रह्मतापरिहृतं त्वदुद्देश्यकं कर्म तद्रहितत्वाय मा विदसाम विविधमुपक्षीणा न भवामः । किन्तु तव यष्टारः हे वज्रहस्तेन्द्र ! देव रश्मीनश्वबन्धनप्रग्रहान् स्वश्वान् शोभनानिच्छानुसारिणोऽश्वान् यच्-छसि यथे आयुवसे सर्वतो मिश्रयसि ते रथमधितिष्ठ आश्रय अस्मदाग-मनार्थमारोहेत्यर्थः ॥ कात्यायनः ॥ अग्नये गृहपतय इति चत्वारि रथवि-

मोचनीयानि जुहोति प्रतिमन्त्रमिति रथविमोचनार्हान् चतुःसंख्याकाना-
हुतिविशेषानेकैकेन मन्त्रेण जुहुयात् ॥ तेषां पाठस्तु ॥

अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहा ।
इन्द्रस्येन्द्रियाय स्वाहा मरुतामोजसे स्वाहेति ॥

गृहाधिपतयेऽग्नये स्वाहा हविर्दत्तमस्तु । वनस्पतिरूपिणे सोमाय हविर्दत्तमस्तु । इन्द्रसम्बन्धिने इन्द्रियाय अग्नये स्वाहा हविर्दत्तमस्तु । मरुतामोजसे मरुतां सम्बन्धिने ओजसे बलाय स्वाहा सुहुतमस्तु ॥ कात्यायनः ॥ भूमिमवेक्षते पृथिवि मातरितीति ॥ पाठस्तु ॥

पृथिवि मातर्मा हिꣳसीर्मोऽअहं त्वामिति ।

हेमातर्जगन्निर्मात्रि ! हे पृथिवि ! भूमे त्वं मां मा हिंसीर्हिंसां मा कार्षीः । अहमपि त्वा पृथिवीं मा हिꣳसीष्म ॥ कात्यायनः ॥ अवरोहति हꣳसः शुचिषदितीति । रथात्सकाशादवरोहणं कुर्यात् ॥ पाठस्तु ॥

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऽऋतं बृहत् इति ।

हन्ति पृथिवीमिति हंसो रथः शुचौ देवयजने रथवाहने च सीदतीति शुचिषत् । स्वस्योपरि यजमानं वासयतीति वसुः । तद्गुल्माघनवरूथेऽन्तरिक्षे सीदतीत्यन्तरिक्षसत् । होता होतृसमानस्तद्देव कथमित्युच्यते । वेद्यां सीदतीति वेदिषत् । अतिथिशब्दश्च तदपि कथमित्युच्यते । दुरोणेषु सीदतीति दुरोणसत् । यो यस्तमारोढुं नयति तस्य तस्य गृहेषु सीदतीति दुरोणसत् । नृषु मनुष्येषूपकारं कर्तुं सीदतीति नृषत् । वरे श्रेष्ठे राजगृहे सीदतीति वरसत् । ऋते यज्ञे वाजपेयादौ सीदतीति ऋतसत् । सूर्य वोढु व्योमन्याकाशे सीदतीति व्योमसत् । अप्सु योनिर्वा अश्व इति श्रुतेः । अद्भ्यो जातैरश्वैरुपेतत्वादब्जाः । गोजाः गोशब्दवाच्याद्वज्राज्जायत इति गोजाः । रथस्य वज्रजनकत्वं तैत्तिरीयैः समाम्नातम् । इन्द्रो वृत्राय वज्रं प्राहरत् । स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथं तृतीयमिति । पृष्ठवाहिरूपत्वेन ऋतं यज्ञमुद्दिश्य जातत्वादृतजाः । पाषाणसदृशेभ्यो दृढकाष्ठेभ्यो जातत्वादद्रिजाः । ईदृशो रथो बृहन्त प्रौढ राजसू-

यपत्रं सम्पादय इति शेषः ॥ कात्यायनः ॥ उपस्पृशति समाना वियदसीति। शतसंख्यानिष्कपरिमितौ रुक्मविशेषा उपस्पृशेत् ॥ पाठस्तु ॥

**इयदस्यायुरस्यायुर्मे देहि युङ्ङसि वर्चोऽसि वर्चो मे देहि इति ॥**

हेरुक्मविशेष ! त्वमियदसि । एतावत्परिमाणोऽसि । अत्र तत्परिमाणहस्तेनाभिधीयते । परिमितत्वादेव आयुःस्वरूपोऽसि । तस्मादायुर्मे यच्छ । युङ्ङसि धारयितुं योग्योऽसि । धारिते सति वर्चोऽसि तेजस्वी भवसि । अतो मे कान्ति मयच्छ ॥ कात्यायनः ॥ ऊर्गसीति शाखामुपस्पृशतीति । औदुम्बरीशाखामुपस्पृशेत् ॥ पाठस्तु ॥

**ऊर्गस्यूर्जं मयि धेहीति ।**

हे औदुम्बरि शाखे ! त्वं ऊर्गसि । अन्नरूपा भवसि । तत ऊर्जमन्नं मयि धेहि स्थापय ॥ कात्यायनः ॥ इन्द्रस्य वामित्यवहरेत् बाहू इति । पूर्वं हिरण्यरूपा उपस इति मन्त्रेण यजमानस्य बाहू उद्गृहीतौ तयोरिदानीमधस्तादुपावहरणमुच्यते ॥ पाठस्तु ॥

**इन्द्रस्य वाँ बाहू वीर्यकृता उपावहरामीति ॥**

वीर्यकृतो वीर्यकारिणः इन्द्रस्य परमैश्वर्ययुक्तस्य यजमानस्य सम्बन्धिनौ वाँ युवां बाहू उपावहरामि ।

इत्येकादशेऽध्याये सप्तमोऽनुवाकः ॥

सप्ते ऽनुवाके रथाचरणादिमन्त्रा उक्ताः ॥ अष्टमेऽनुवाके आसन्दीस्थापनादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ खादिरीमासन्दीं राजवीं व्याघ्रचर्मदेशे निदधाति स्योनासीति । रज्जोः सम्बन्धिनीं खादिरकाष्ठनिर्मितामासन्दीं व्याघ्रचर्मप्रदेशे निदध्यात् । सुषदासीति मन्त्रशेषः । हे आसन्दि ! त्वं स्योनासि सुखकारी भवसि । सुसदासि सुखेनोपवेष्टुं योग्यासि ॥ कात्यायनः ॥ अधिवासं तस्यामास्तृणाति क्षत्रस्य योनिरसीति । अस्यामासंद्यां उपर्याच्छादकं वस्त्रमास्तृणीयात् । असीति मन्त्रशेषः । हे अधिवास ! त्वं क्षत्रस्य क्षत्रियस्य योनिः । मातृवद्धारकत्वेन कारणमसि ॥ कात्यायनः ॥ सुन्वन्तमस्यामुपवेशयति स्योनामासीदेति । यजमानमासन्द्यामवस्थापयेत् ॥ पाठस्तु ॥

**स्योनामासीदसुखदामासीदक्षत्रस्य योनिमासीदेति ॥**

हेमदीयशरीर ! स्योनां सुखकारिणीमतामासन्दीं तुज्यासीद उपविश । सुखदा सुखेनोपवेष्टुं योग्यामासन्दीमामीदक्षत्रस्य कारणभूतामुपविश ॥ कात्यायनः ॥ निषमादेत्पुरोस्य लभत इति । अस्य यजमानस्योरः संस्पृशेत् ॥ पाठस्तु ॥

**निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुरिति ॥**

असौ यजमानो धृतव्रतः स्वीकृतयज्ञो वरुणोऽनिष्टनिवारको भूत्वा निषसाद । अस्यामासन्द्यामुपवेशमस्त्वासु वह्लृतुवैरिगृहेषु आगत्य साम्राज्यं कर्तुं सुक्रतुः शोभनसंकल्पो भवतु ॥ कात्यायनः ॥ अभिभूरित्यस्मै पञ्चाक्षान्प्रणिधायेति पञ्चसंख्याकान् द्यूतसाधनभूतान् कपर्दकादीन् यजमानस्य हस्ते निदध्यात् ॥ पाठस्तु ॥

**अभिभूरस्य यानामेतास्ते पञ्चदिशः कल्पन्तामिति ।**

हे अक्षदेव त्वं ते अयानां गन्युपलक्षितसत्कर्मणां अभिभूरसि । अभितो व्याप्तो भवसि । एताः प्राच्यादयो दिशः ते त्वदर्थं कल्पन्ता स्वस्य प्रयोजनसमर्था भवन्तु ॥ कात्यायनः ॥ ब्रह्मन्नित्यामन्त्रयते पञ्चर्त्विजः प्रत्याह्वयमासन्नः सविता वरुणः इन्द्रो रुद्र इति त्वं ब्रह्मासीत्यादिभिरादिनैवान्तं । प्रियं करोति च इयन्येवं नामानमिति । आसन्द्यामुपविष्टो यजमानो राजा स्वमेवार्थे भूमा उपविष्टानध्वर्युप्रभृतीश्चतुर्ऋत्विजः क्रमेण ब्रह्मन्नित्यनेन संबोधनं मध्यमैकवचनान्तपदेन पदेनामन्त्रयेत् । तास्यऋत्विजः यद्युरपञ्चमं पुरोहितमापस्यं पुरुषं प्रियंकरमित्यनेन नाम्ना संबोधयेत् । एवं पञ्चऋत्विजः संबोधने भवति ऋत्विजो मन्त्रेण प्रत्युत्तराणां चतुर्णां मन्त्राणां अन्ते त्वं ब्रह्मासीत्येवंरूपः प्रयोगभाग उत्तरभागश्चतुर्णां चतुर्विधः । सवितासि सत्यसव इति प्रथमस्य मन्त्रस्योपत्निनो भागः । द्वितीयो वरुणोसि सत्यौजा इति तृतीयस्येन्द्रस्य विशौजा इति । चतुर्थस्य रुद्रोऽसि सुशेव इति । अन्यत्वामसिशस्त्यायमर्थः । एव सम्बोध्य तेन प्रत्युत्तरे दत्ते पश्चाद्द्वितीयं सम्बोधयेत् । एवमुत्तरत्रापि । तथा सति सम्बोधनप्रत्युत्तरं योज्यं तस्य सतस्यानुष्ठानं म-

चति । आदिनेत्यस्यायमर्थः । प्रथमे प्रत्युत्तरमन्त्रः त्वं ब्रह्मासीति प्रथमभागं पठित्वा सवितेत्यादिके उत्तरभागस्तथा पठितः । एवमुत्तरमन्त्रेष्वपि त्वं ब्रह्मा असीत्येवमेव प्रथमभागे पठित्वा तदुत्तरभागान् व देदिति । तेषां मन्त्रपाठस्तु ॥

ब्रह्मं३स्त्वं ब्रह्मासि । सवितासि सत्यप्रसवो वरुणोसि सत्यौजाः । इन्द्रोसि विशौजा रुद्रोसि सुशेवः । प्रियंकर श्रेयस्कर भूयस्करेति ॥

हेब्रह्मन्! अध्वर्युरूप ब्राह्मण! ब्रह्मन् त्वं ब्रह्मासि । एवं चतुर्णामृत्विजामामन्त्रणरूपमन्त्र उक्त्वेदानीं प्रथममामन्त्रितस्यर्त्विज उत्तरं ब्रूते हे राजन् ! त्वमेव ब्रह्मासि ब्राह्मणो भवसि । न त्वहम् । कुतः । यतस्त्वमेव सवितासि । ब्राह्मणधर्मान् पालयन् अस्माकमनुष्ठानायानुज्ञातोऽसि । त्वमेव सत्यप्रसवः । अमोघानुज्ञः । अतो ब्राह्मणवर्णाश्रमधर्माणां त्वदधीनत्वात्त्वमेव ब्रह्मासि । द्वितीयमन्त्रितस्य ऋत्विजः उत्तरं ब्रूते । हेराजन् उत्तरमन्त्रस्योत्तरभागं व्याचष्टे । राजन् वरुणः अनिष्टनिवारकोसि । सत्यौजाः अमोघवीर्योऽसि । तृतीयमन्त्रितस्य ऋत्विज उत्तरं मन्त्रस्योत्तरभागं ब्रूते । हेराजंस्त्वमेव रुद्रोसि सुशेवः परमैश्वर्यवानसि विशौजा इति छान्दसं रूपं विक्षु प्रजासु ओजो बलं यस्य स विशौजास्तादृशोऽसि । चतुर्थमन्त्रस्यर्त्विज आह । हेराजंस्त्वमेव रुद्रोऽसि । सुशेवः सुष्ठु सुखे तावत् त्वमसि । पञ्चमं पुरोहितमाह प्रियं करोतीति प्रियङ्करः । तस्य सम्बोधनं । हेश्रेयस्करोतीति श्रेयस्करस्तस्य सम्बोधनं । हेश्रेयस्कर ! भूयो बहुतरं करोतीति भूयस्करः । एवम्भूतकल्याणानाम्नामाह्वयेत् ॥ कात्यायनः ॥ स्वयमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वेन्द्रस्य वज्र इतीति ॥ अध्वर्युपुरोहितयोरन्यतरः अस्मै यजमानाय स्वयं प्रयच्छेत् ॥ पाठस्तु ॥

इन्द्रस्य वज्रोऽसि तेन मेरध्येति ।

हेस्फ्य त्वमिन्द्रस्य सम्बन्धी वज्रोऽसि वज्रो वै स्फ्य इति श्रुतेः । श्रुतेर्यस्मादेवंभूतस्त्वन्तेन कारणेन मदर्थोरध्यः द्यूतस्थानं परिलेखनरूपं कार्यं साधय ॥ कात्यायनः ॥ द्यूतभूमौ हिरण्यं निधायाभिजुहोति चतुर्गृहीतेनाग्निः पृथुरितीति । द्यूतप्रदेशे हिरण्यं स्थापयित्वा तस्मिंश्चतुर्वारं गृहीतेनाज्येन जुहुयात् ॥ पाठस्तु ॥

अग्निः पृथुर्धर्मणस्पतिर्जुषाणो अग्निः पृथुर्धर्मणस्पतिः । आज्यस्य हविषो वेतु स्वाहेति ॥

होमार्थः ॥ कीदृशोऽग्निः पृथुर्देवानां मध्यत्वात्पृथुः । अग्निर्वै देवानामवम इति श्रुत्यन्तरात् । धर्मणस्पतिर्जगतो धारणस्य धर्मस्य स्वामी जुषाणः हूयमानं हविः सेवमानः । अग्निः पृथुर्धर्मणस्पतिरिति पुनः पाठः आदरार्थः ॥ कात्यायनः ॥ अक्षान्निवपति स्वाहाकृता इति ॥ घृतसाधनभूतानक्षान् स्थापयेत् ॥ पाठस्तु ॥

स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्व॰ सजातानां मध्यमेष्ठ्यायेति ॥

हेअक्षाः ! स्वाहाकृताः । स्वाहाकारपूर्विकया आहुत्या तर्पिताः संतः सजातानां सजातीयानां मध्यमेष्ठ्या मध्यमदेशे यजमानावस्थानाय सूर्यस्य रश्मिभिर्यतध्वं स्पर्द्धां कुरुत ॥

इत्येकादशेऽध्यायेऽष्टमोऽनुवाकः ॥

अष्टमे आसन्दीस्थापनादिमन्त्रा उक्ताः ॥ नवमेऽनुवाके सप्तसृपर्णाहविषाणङ्गभूता मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ सोमपानाम् संख्यापसपर्णं सपवित्रेत्यनुवाकमुक्त्वेति ॥ अनुवाकपाठस्तु ॥

सवित्राप्रसवित्रासरस्वत्यावाचा । त्वष्ट्रारूपैः पूष्णापशुभिरिन्द्रणास्मै । बृहस्पतिनाब्रह्मणावरुणेनौजसाग्निना तेजसा सोमेन राज्ञा । विष्णुनादेवतयादशम्येमंयज्ञ विष्णुमाप्यानीति ॥

प्रसवित्रा प्रसवकारिणा सवित्रा देवेन सह सर्पामीति शेषः । वाचा वाग्रूपया सरस्वत्या सह प्रसर्पामि रूपैरुपलक्षितेन त्वष्ट्रा सह पशुभिरुपलक्षितेन पूष्णा देवेन सह सर्पामि । अस्मै अनेनेन्द्रेण सह प्रसर्पामि । ब्रह्मणा ब्रह्माभिमानिना बृहस्पतिना सह प्रसर्पामि । बलवता वारुणेन सह प्रसर्पामि । तेजस्विनाग्निना सह प्रसर्पामि । यजमानेन सोमेन सह प्रसर्पामि । दशम्या दशसंख्यापूर्विकया विष्णुनामिकया देवतया सह प्रसर्पामि । इमं प्रकृतत्वेन पुरोवर्तिनं यज्ञात्मकं विष्णुमाप्यानि । प्राप्नुयाम् ।

इत्येकादशेऽध्याये नवमोऽनुवाकः॥

नवमे स८ सूर्पा हविषामङ्गभूता मन्त्रा उक्ताः॥ दशमेऽनुवाके राजसूयान्तर्गतसौत्रामणिमन्त्रा उच्यन्ते॥ कात्यायनः॥ पक्वौदनं विरूढांश्चूर्णं कृत्वाश्विभ्यां पच्यस्वेति संसृजतीति। विशेषणप्रवृद्धान्व्रीहीन् वर्द्धनास्थूलतरानित्यर्थः। तांश्चूर्णयित्वा सम्यक् पच्यमानेऽन्ने सन्धयाव॥ पाठस्तु॥

**अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति।**

अश्विभ्यामश्विनोरर्थाय पच्यस्व पाकं कुरु। सरस्वत्यै देव्यै पाकं कुरुष्व। इन्द्राय सुत्राम्णे शोभनत्राणाय। सुत्रातव्याय वा। भैषज्यं हीदं कर्तव्यम्॥ कात्यायनः॥ केशैः परिस्रुतं पुनाति वायोः पूत इति॥ पाठस्तु॥

**वायोः पूतः पवित्रेण प्रत्यङ् सोमो अतिस्रुतः। इन्द्रस्य युज्यः सखेति।**

वायोः सम्बन्धी सोमः पवित्रेण कुशमयेन पूतः शोधितः सोमः प्रत्यङ् अधोमुखः सन्। अतिस्रुतः। अतिक्रमनगतः। कीदृशः सोमः इन्द्रस्य युज्यः योगार्हः सखा सखिभूतः॥ कात्यायनः॥ गृह्णे गृह्णातीति कुविदङ्गेतीति॥ पाठस्तु॥

**कुविदङ्गयवमन्तो यवं चिद्यथादान्त्यनुपूर्वं वियूय। इहेहैषां कृणुहि भोजनानि ये बर्हिषो नम उक्तिं न जग्मुः। उपयाम गृहीतोस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे। युव८ सुराममश्विना नमुचा आसुरेसचा। विपिनाशुभस्पती इन्द्रं कर्मस्वावतम्। पुत्रमिव पितरा अश्विनो भेन्द्रावथुः काव्यैर्द८ सनाभिः। यत्सुरा मन्यपिबशचीभिः सरस्वती त्वा मघवन्नभिष्णगिति।**

अंग हेसोम! यथा केचिज्जना यवमन्तो बहुयवसम्पन्नाः सन्तः कुवित् बहुलं यवं चित्सर्वं यवमयं सस्यं अनुपूर्वम् आनुपूर्व्येण विपूय

पृथक् कृत्य दाति लुनन्ति । यथा ये यजमाना बर्हिषो यज्ञस्य नम उक्तिं नमस्कारवचनं हविर्लक्षणान्नम् च वचनम् वा न जग्मुः । न प्राप्नुवन्ति । एषां यजमानानां सम्बन्धीनि भोजनानि सभोग्यानि धनानि इह एतस्मिन् यजमाने कृणुहि कुरु । अतः अश्विसरस्वत्यादिदेवतार्थे त्वं सोम उपयामेन पात्रेण गृहीतो भवसि । अश्व्यादिदेवतार्थे त्वा सादयामीति शेषः । हेअश्विना ! अश्विनौ युव युवां नमुचौ आसुरे असुरे स्थितं सुरामं सुष्ठुरमणीयं सोमं स चासह विपिपाना विविध पिबन्तौ शुभस्पती शोभनस्य कर्मणः पालकौ कर्मसु निमित्तभूतेषु इन्द्रमवत रक्षतम् । पुत्रमिव पितरौ यथा मातापितरौ पुत्रं पालयतः । तथा उभा उभावप्यश्विनौ हेइन्द्र ! त्वा त्वाम् । आवथुः । अवतुः । पालितवन्तौ काव्यैः कवीनां मन्त्रद्रष्टृणां सम्बन्धिभिर्मन्त्रैर्दंसनाभिः कर्मभिः अश्विनाविन्द्रस्य रक्षणं कृतवन्ताविति कथमवगम्यते । तदुच्यते । यद्यस्मात् कारणात् । हेइन्द्र ! त्वं शचीभिः कर्मभिः सनमुचिवधादिकर्माणि कृत्वेत्यर्थः । सुरामं सुष्ठु रमणीयं सोमं व्यपिबः विशेषेण पानं कृतवानसि । हेमघवन् ! इन्द्र त्वा त्वा सरस्वती देवी अभिष्णक शुद्ध कृतवती तस्मादश्विनौ त्वामवतामिति सम्बन्धः ॥

इत्येकादशऽध्याये दशमोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्यविरचिते वेदार्थप्रकाशे काण्वसंहिताभाष्ये एकादशोऽध्यायः ॥ ११ ॥

# अथ शुक्लयजुर्वेदकाण्वमन्त्रभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

एकादशाध्याये राजसूयमन्त्रा निरूपिताः ॥ अथ द्वादशाध्यायप्रभृत्येकोनविंशान्तेष्वष्टस्वध्यायेष्वग्निचयनाङ्गभूता मन्त्रा निरूप्यन्ते ॥ तत्र द्वादशेऽध्याये उखासम्भरणादिमन्त्रा वर्ण्यन्ते ॥ तत्र प्रथमेऽनुवाके सावित्रहोमाभ्यादानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ अष्टगृहीतं जुहोति सकृद् गृह्णन् युञ्जान इति ॥ जुह्वामष्टवारं गृहीतमाज्यम् अजस्रं धारापातं यथा भवति तथा हस्तमुन्नतं कुर्वञ्जुहुयात् । अत्रेदं चिन्तनीयम् । युञ्जान इत्यादीनां मध्ये किमेकैकं मन्त्रमुच्चार्य जुहुयात् । अहोस्वित् सर्वान्मन्त्रानुच्चार्येति । तत्राह । द्वौ उपादयौ उभौ पक्षौ क्रमेते । तैत्तिरीये प्रदृश्येते ॥ यं कामयेत् पापीयान् स्यात् स्यादित्येकैकस्य जुहुयादाहुतीभिरेवैनं ग्रह्णाति पापीयान् भवति।अथत्यथ यो यज्ञस्यैवैषातिक्रान्तिरिति ॥ अस्यायमर्थः ॥ पापीयानतिदरिद्र इत्यर्थः । एकैकमन्त्रम् उच्चार्य होमे सति श्लेषाभावात् परस्परमपरक्ताभिराहुतिभिरेनं यजमानमपगृह्णाति । धनादपेतं करोति । ततो दरिद्रो भवति । वसीयान् वसुमत्तरः । सर्वाण्युच्चार्य होमे तु मन्त्राणां परस्परसंश्लेषादेकयैवाऽऽहुत्या यजमानमभिक्रमयति । अभिव्याप्तं करोति । ततो धनिको भवति । अपिच येयम् अभिक्रमणहेतुरेकाहुतिरेषा यज्ञस्यैवाग्निचयनरूपस्याऽभिक्रान्तिः स्वाधीनता भवति । तत्र प्रथममन्त्रपाठस्तु ॥ युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरदिति ॥ सविता सर्वस्य प्रेरकः परमेश्वरः प्रथमम् अग्निचयनविषये मनो युञ्जानः समादधानो धिया इष्टकादिविषयाणि ज्ञानानि तत्त्वाय तनित्वा विस्तार्य । अग्नेर्ज्योतिर्निचाय्य निचीयमानस्य सम्बन्धि तेजः सकलानां कर्मणां साधनभूतं निश्चित्य पृथिव्या अध्याभरत् भूमेरुपर्यानीतवान् ॥ अथ द्वितीयः ॥ युक्तेन मनसा वयं देवस्य सवितुः सवे । स्वर्गेयाय शक्त्येति ॥ सवितुर्देवस्य सवे प्रसवे वर्तमाना वयं युक्तेन इन्द्रियेभ्यो नियमितेन मनसा स्वर्गेयाय स्वर्गे लोके गीयमानस्याऽग्नेः सम्पादनाय शक्त्या यथासामर्थ्येन प्रयत्नं कुर्म इति शेषः ॥ अथ तृती-

यः ॥ युक्ताय सविता देवान्त्स्वर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तानिति ॥ सविता तानिन्द्रियविशेषान् प्रकर्षेण सुवाति । किं कृत्वा । देवान्मनसा युक्त्वाय क्रीडापरत्वेन चपलानिन्द्रियविशेषान्मनसा विषयेभ्यो युक्त्वाय नियम्य । कीदृशानिन्द्रियविशेषान् स्वर्यतः स्वर्गं गच्छतः स्वर्गप्राप्त्यर्थमुद्यतानित्यर्थः । बृहज्ज्योतिः प्रौढं चीयमानस्याग्नेस्तेजोधिया दिव करिष्यतः । तत्तदिष्टकादिविषयया प्रज्ञया द्योतमानं कर्तुमुद्यतान् ॥ अथ चतुर्थः ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । विहोत्रा दधे वयुना विदेक इन्मही देवस्य सवितुः परिष्टुतिरिति ॥ विप्रस्य ब्राह्मणस्य यजमानस्य सम्बन्धिनो विप्रा ऋत्विजो मनो युञ्जते प्रथमं स्वकीयं मनो विषयभ्यो निवर्त्य समाहितं कुर्वन्ति । उत अपि च धियः । इष्टकादिविषयाणि ज्ञानानि युञ्जते सम्पादयन्ति । कीदृशस्य विप्रस्य बृहतः । प्रभूताग्निचयनोद्योगेनाभिवृद्धस्य विपश्चितो विदुषः प्रयोगाभिज्ञस्य । कीदृशा विप्राः होत्रा होमशीलाः कर्मण्यालस्यरहिता इत्यर्थः । एक एव सविता विदधे सर्वमिदं निर्मितवान् । कीदृशः । वयुनावित् । ऋत्विग्यजमानाभिप्रायाभिज्ञः । कथमेक एव सर्वमिदं कृतवानिति न विस्मेतव्यम् । यतः सवितुर्देवस्य परिष्टुतिर्मही परितः सर्वेषु देवेषु श्रूयमाणाऽस्तु ॥ अथ पञ्चमः ॥ युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः । शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुरिति ॥ यजमानः पत्नी चेत्युभौ वां युवयोरर्थे पूर्व्यं पुरातनैर्महर्षिभिरनुष्ठितम् । ब्रह्म परिवृढमग्निचयनाख्यं कर्म नमोभिर्नमस्कारपूर्वकैरिष्टकोपधानादिभिर्युजे सम्पादयामि । तस्मिन् सम्पादिते सति सूरेः पण्डितस्य यजमानस्य श्लोकः कीर्तिर्वेतु । लोकद्वयं प्राप्नोतु । पथ्येव पथोऽनपेता पथ्या यज्ञमार्गप्रवर्तिका आहुतिर्यथा लोकद्वयं व्याप्नोति तद्वत् । अमृतस्य मरणरहितस्य प्रजापतेः पुत्रा ये देवा दिवि भवानि दिव्यानि धामानि स्थानानि आतस्थुरधिष्ठितवन्तस्ते विश्वे सर्वे देवा अस्य यजमानस्य श्लोकं शृण्वन्त्विति सम्बन्धः ॥ अथ षष्ठः ॥ यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमोजसा । यः पार्थिवानि विममे स एतशो रजांसि देवः सविता महित्वनेति ॥ यस्य सवितुः प्रयाणं प्रवृत्तिम् अन्ये सर्वे देवा अनुययुरित् एव यमनुगच्छन्त्येव । अस्य देवस्य महिमानं महत्त्वं यः ओजसा बलेन अनुययुः । यः सविता पार्थिवानि पृथिवीगतानि रजांसि

परमाणून् विममे विशेषेण गणयित्वा निश्चितवान्। स सविता देवो महित्वना महत्त्वेन एतशो व्याप्तवान्।एति सर्वत्र गच्छतीत्येतशः॥ अथ सप्तमः॥ देवसवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदत्विति॥ हे सवितर्देव प्रसुव प्रकर्षेण प्रेरय, यज्ञपतिं यजमानं च प्रसुव किमर्थं भगाय सौभाग्याय। दिव्यः दिवि स्वर्गे भवः कश्चिद्गन्धर्वः केतपूः केतं परकीयचित्ते वर्तमानं ज्ञानं पुनाति शोधयतीति केतपूः। स च नोऽस्माकं केतं चित्तवर्तिज्ञानं पुनातु भ्रान्तिपरिहारेण शोधयतु। वाचस्पतिर्नोऽस्मदीयां वाचं स्वदतु स्वादयतु॥ अथाष्टमः॥ इमन्नो देव सवितर्यज्ञं प्रणय देवाव्यꣳसखिविदꣳ सत्राजितं धनजितꣳ स्वर्जितम्। ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्तनि स्वाहेति॥ हे सवितर्देव नोऽस्मानिमं यज्ञं प्रणय प्रापय। कीदृशं देवाव्यम्। देवानामवनार्हो देवाव्यस्तम्। सखिविदं स्वनिष्पादकं यजमानं वेत्तीति सखिवित् तं सखिविदम्। सत्राणि द्वादशाहादीनि यजति वशीकरोतीति सत्राजित् तं सत्राजितम्। तानि हि चीयमानमग्निमपेक्षन्ते। धनं जयति फलरूपेण सम्पादयतीति धनजित् तं धनजितम्। स्वः स्वर्गं जयति फलत्वेन सम्पादयतीति स्वर्जित् तं स्वर्जितम्। किञ्च ऋचा स्तोमहेतुसाधनभूतया यया ऋचा स्तोमं स्तोत्रं समावृत्तिरूपं सङ्घातं वा समर्द्धय समृद्धं कुरु। गायत्रेण साम्ना सह रथन्तरं साम समर्द्धय। गायत्रसामैव वर्तनी मार्गो यस्य बृहतः साम्नस्तद्गायत्रवर्तनि गायत्रसामसहितं बृहत् साम समर्धय॥ कात्यायनः॥ देवस्य त्वेत्यभ्रिमादायेति॥ अत्राभ्रिशब्देन उभयतस्तीक्ष्णीकृतोऽरत्निप्रमाणको वैणवो दण्डविशेष उच्यते। तं गृह्णीयादित्यर्थः॥ पाठस्तु॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आददे गायत्रेण छन्दसाङ्गिरस्वत्। पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर। त्रैष्टुभेन छन्दसाङ्गिरस्वत्। अभ्रिरसि नार्यसि त्वया वयमग्निꣳशकेम खनितुम्। सधस्थ आ जागतेन छन्दसाङ्गिरस्वादिति॥ सवितुर्देवस्य प्रसवे प्रेरणे सति अश्विनोः सम्बन्धिभ्यां बाहुभ्यां पूष्णो हस्ताभ्यां साङ्गुलिभ्यां हस्ताभ्यां साधनभूताभ्यां सहायभूतेन गायत्रेण छन्दसा युक्तः सन्नाददे स्वीकरोमि। तत्र दृष्टान्तः। अङ्गिरस्वत्। अङ्गिरस ऋषयः पूर्वं यथा त्वां स्वीकृतवन्तस्तद्वत्। हे अभ्रे, त्वं पृथिव्याः सधस्थादुत्सङ्गात् पुरीष्यमग्निमाभर पुरीषशब्देन पांसुभूता शुष्का मृदुच्यते। तदर्हतीति पुरीष्यो-

ऽग्निः । मृदमादायोखां कृत्वा तस्यामग्निरेव स्थाप्यते । अतो मृदग्न्योरभे-
दोपचारेण मृदाहरणमेवाग्न्याहरणमिति विवक्षित्वा पुरीष्यमग्निमाहरेत्युच्यते।
अयं चोपचारोऽग्निचयनप्रकरणे सर्वत्रानुवर्तिष्यति । तथा त्रैष्टुभेन छन्दसा
मृदाहरणमिति । अङ्गिरस्वदिति दृष्टान्तः पूर्ववत् । अभ्रिरसि । उखां निर्मातुं
खननीया खननहेतुः काष्ठविशेषोऽसि । नार्यसि । स्त्रीरूपा चाऽसि । यद्वा न
विद्यते अरिर्यस्याश्च सेयं नारीति छान्दसं रूपम् । खननकाले पाषाणादिना
तव नास्ति कुण्ठीभाव इत्यर्थः । किञ्च त्वया युक्ता वयं सधस्थे पृथिव्या
उपसद्म आसमन्तात् अग्निं पुरीष्यं खनितुं जागतेन छन्दसा वयं शकेम शक्ता
भवेम । अङ्गिरस्वदिति पूर्ववत् ॥ कात्यायनः ॥ हस्त आधायेत्येतेनाभिमन्त्र-
यतीति ॥ पाठस्तु ॥ हस्त आधाय सविता बिभ्रदभ्रिᳬं हिरण्ययीम् । अग्ने-
र्ज्योतिर्निचाय्य पृथिव्या अध्याभरदानुष्टुभेन छन्दसाङ्गिरस्वदिति ॥ सविता
प्रेरकः परमेश्वरो हस्ते हिरण्ययीं सुवर्णमयीम् । अभ्रिम् । आधाय स्थापयि-
त्वा बिभ्रद्धारयन् । अग्नेः सम्बन्धि ज्योतिर्निचाय्य निश्चित्य पृथिव्या
अधि भूमेः सकाशादानुष्टुभेन छन्दसा आभरत् । आहृतवान् । अङ्गिरस्वदि-
ति पूर्ववत् ॥ इति द्वादशेऽध्याये प्रथमोऽनुवाकः ॥ १२ ॥ १ ॥

प्रथमेऽनुवाके सावित्रहोमाऽभ्र्यादानमन्त्रा उक्ताः ॥ द्वितीये तु मृदा-
क्रमणमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ अश्वप्रभृतीश्च प्रतृचं प्रतूर्तं युञ्जाथां
योगे योग इतीति । चशब्दादनुमन्त्रयत इत्यनुवर्तते । तृणेनाश्वगर्दभाजान्
प्रतूर्तमिति । एतासां मध्ये क्रमेणैकैकयर्चा अभिमन्त्रयते ॥ प्रथमाया ऋचः
पाठस्तु ॥ प्रतूर्तं वाजिन्नाद्रव वरिष्ठामनु संवतम् । दिवि ते जन्म परममन्तरिक्षे
तव नाभिः पृथिव्यामधियोनिरिदिति ॥ संवन्यते सम्यग्भज्यते मृद्ग्रहणा-
ऽर्थं सेव्यत इति खननयोग्या भूमिः संवत् । सा च पाषाणाद्यभावेनाति-
प्रशस्तत्वाद्वरिष्ठेत्युच्यते । हे वाजिन् शीघ्रगामिन्नश्व, वरिष्ठां संवतमनु-
लक्ष्य प्रतूर्तमाद्रव शीघ्रमागच्छ । ते तवाश्वस्य दिवि द्युलोके परमम् उत्कृष्टं
जन्म रोहितादिदेवाश्वरूपेण द्युलोके जन्म प्रसिद्धम् । रोहितेन त्वाग्निर्देवता
गमयतित्यादिवाक्यैर्हते वै देवाश्वा इति हि श्रुत्यन्तरेणाम्नातम् । तथा तव नाभि-
रन्तरिक्षे वर्तते । निपुणात्मका हि वायोरश्वास्तदीयं रथं वहन्तोऽन्तरिक्षे स-
ञ्चरन्ति । तद्रूपेणाऽस्यान्तरिक्षवर्तित्वम् । नाभिशब्देन कृत्स्नं शरीरमुपलक्ष्यते ।
इदमपि पृथिव्यामधियोनिर्भूमेरुपरि तव निवासस्थानम्। तत्तु प्रत्यक्षमेव दृश्य-

ते । एवम्महिमा त्वं शीघ्रमागच्छेति पूर्वत्रान्वयः ॥ अथ द्वितीयः ॥ युञ्जा-थाᳪ रासभं युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्तमस्मयुमिति ॥ हे वृषण्वसू यागनिष्पादनद्वारा फलाभिवर्षणनिमित्तभूतं वसु धनं ययोस्तौ तत्सम्बोधनम् । एवं भूलोके दम्पती युवं युवाम् । अस्मिन् यामे । यामो मृद्ग्रहणरूपो नियम-विशेषः । तस्मिन्निमित्तभूते सति रासभं गर्दभं युञ्जाथां बध्नीतम् । कीदृशं रासभम् । अग्निं भरन्तम् । अग्निहेतुं मृदं वोढुं समर्थम् । अस्मयुम् । अस्मान् आत्मनात्मन इच्छन्तम् । अस्मद्धितैषिणमित्यर्थः ॥ अथ तृतीयः ॥ योगे योगे तवस्तरं वाजे वाजे हवामहे । सखाय इन्द्रमूतय इति ॥ युज्यतेऽनुष्ठीयत इति योगः कर्म । योगे योगे तत्तत्कर्मणि तवस्तरं बलवत्तरम् । अजमिन्द्रम् । इन्द्रियप्रदम् ऊतये रक्षणाय वाजे वाजे तत्तदन्नप्राप्तिनिमित्तं सखायः परस्परसख्यं प्राप्ता ऋत्विग्यजमाना वयं हवामहे । आह्वयामः ॥

कात्यायनः ॥ अनुपस्पृशन्ननुक्रमयत्येतानृचः प्रतिमन्त्रं प्रतूर्वन्नुर्वन्तरिक्षं पृथिव्याः सधस्थादिति ॥ अश्वादीनां स्पर्शनमकुर्वन्नध्वर्युः प्रतूर्वन्नित्येषां क्रमेणैकैकेन मन्त्रेण एतान् अश्वादीन्मृदाक्रमणार्थं निर्गमयेत् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ प्रतूर्वन्नेह्यवक्रामन्नशस्तीरुद्रस्य गाणपत्यं मयोभूरेही-ति ॥ हे अश्व एह्यागच्छ । किं कुर्वन् प्रतूर्वन् । विरोधिनः शत्रून् हिंसन् । अशस्तीरवक्रामन् भ्रातृव्यैः क्रियमाणा अपकीर्तीर्निरास्यन् । रुद्रस्य क्रूरदेवस्य यद्गाणपत्यं प्रथममुहर्तात्त्वं तस्माद्गाणपत्यादागत्य मयोभूरस्माकं सुखं भावयन्नेवागच्छ ॥ अथ द्वितीयः ॥ उर्वन्तरिक्षं वीहि स्वस्तिगव्यूति-रभयानि कृण्वन् पूष्णा सयुजा सहेति ॥ स्वस्तीत्यविनाशी । विनाशरहितो गव्यूतिः क्रोशद्वयोपलक्षितो मार्गो यस्य स स्वस्तिगव्यूतिः । हे गर्दभ, तादृश-स्त्वं सयुजा । सहायभूतो वर्तत इति सयुक् तादृशेन पूष्णा पोषकेण सह अभयानि कृण्वन् व्याघ्रादिभ्यो भयपरिहारं कुर्वन्नुरु विस्तीर्णमन्तरिक्षं वीहि विशेषेण प्राप्नुहि ॥ अथ तृतीयः ॥ पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्व-दाभरेति ॥ हे अङ्गिरः, त्वं पृथिव्याः भूमेः सधस्थात् खनितुं योग्यात् कृत्स्नापि मृत्तिका सह तिष्ठति मिलित्वा वर्तते यत्रेति सधस्थः प्रदेशविशेष-स्तस्मात् प्रदेशात् पुरीष्यं पांसुरूपं शुष्कमृत्तिकायोग्यम् । यद्वा, पुरीष्यं पशव्यं पशुषु हितम् । पशवो वै पुरीषमिति श्रुतेः । तादृशमग्निमग्न्यवस्थान-हेतुभूतां मृदम् आभराहर । तत्र दृष्टान्तः । अङ्गिरस्वत् । यथा पूर्वमङ्गिरस

ऋपयोऽग्निमाहृतवन्तस्तद्वत् ॥ कात्यायनः ॥ अग्निपु ज्वलत्सु पिण्डं गच्छन्त्यग्निं पुरीष्यमितीति ॥ अग्निपु ज्वलितेषु सत्सु उखार्थं चतुरस्रे अग्रेऽवस्थिते मृन्मयपिण्ड प्रत्यध्वर्य्वादयो गच्छेयुः ॥ पाठस्तु ॥ अग्निं पुरीष्यमङ्गिरस्व-द्गच्छेम इतीति ॥ पुरीषार्हमग्निम् अङ्गिरस्वत् गच्छेमः । अभिगच्छाम- ॥

कात्यायनः ॥ पुरुषमीक्षते अग्निं पुरीष्यमितीति ॥ य कञ्चित् पुरुष पश्येत् ॥ पाठस्तु ॥ अग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इतीति ॥ भरिष्यामः सम्पादयामः । शेप पूर्ववत् ॥ कात्यायनः ॥ वल्मीकवपामीक्षतेऽन्वग्निरितीति ॥ वल्मीकस्य योऽवयवस्तन्तस्तेनाभिरुद्धः सेय वपा । ता छिद्रसहितां वपा स्वीकृत्य तस्याश्छिद्रेण मृन्मयपिण्डं पश्येत् ॥ पाठस्तु ॥ अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनुसूर्यस्य पुरुत्रा च रश्मीननुद्यावापृथिवी आततन्थेति ॥ अयमग्निरुषसाम् उषःकालानामग्रमुपक्रममन्वख्यदनुक्रमेण प्रकाशितवान् । जात वेत्ति वेदयतीति वा जातवेदाः अयमग्निः । प्रथमो मुख्यः सन्नहान्यख्यन्त्यख्यत् । किञ्च सूर्यस्य पुरुत्रा पुरून् बहून् रश्मीनन्वख्यत् । किञ्च द्यावापृथिव्यावुभे अप्यनुक्रमेणाततन्थ आततान सर्वतो व्याप्तवान् ॥ कात्यायनः ॥ आगत्येत्यभिमन्त्रयतेऽश्वमिति ॥ पाठस्तु ॥ आगत्य वाज्यध्वानꣳ सर्वा मृधो विधूनुते । अग्निꣳ सधस्थे महति चक्षुषा निचिकीषते इति ॥ वाजी वेगवानयमश्वः अध्वान मार्गम् आगत्य प्राप्य सर्वा मृधः पार्श्वस्थादीन् सर्वान् बाधकान् विधूनुते विकम्पयति विनाशयतीत्यर्थः । यत्र पासवः सहावतिष्ठन्ते तत्स्थान सधस्थम् । महति विस्तीर्णे सधस्थ अयमश्वश्चक्षुषा दृष्ट्वा अग्निमग्निहेतुं मृदं निचिकीषते नितरा चेयहेतु सम्पादयितुमिच्छति ॥ कात्यायनः ॥ आक्रम्येत्येतेन पिण्डमधिष्ठापयतीति ॥ आक्रम्येत्यनेन मन्त्रेण पिण्डस्योपरि अश्वस्य पादप्रक्षेपण कुर्यात् ॥ पाठस्तु ॥ आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम् । भूमेर्वृत्वाय नो ब्रूहि यतः खनेम तं वयमिति ॥ हे वाजिन्नश्व, त्व पृथिवीं भूमिमाक्रम्य पादस्पर्शेन परीक्ष्य रुचा स्वकीयेन तेजसा मानसज्ञानेनेत्यर्थः । अग्निमिच्छ अग्निहेतु मृद निश्चेतुम् । भूमेर्वृत्वाय वरण कृत्वा दृष्ट्वेत्यर्थ । नोऽस्माक ब्रूहि । अय प्रदेशोऽग्निहेतुमृद्योग्य इति कथय । यतोऽस्मात् प्रदेशात् तादृशी मृल्लभ्यते त प्रदेश वय खनेम खननमपदारण करवामः ॥ कात्यायनः ॥ द्यौस्त इति पृष्ठस्योपरि पाणिं धारयतीति ॥ अश्वस्य पृष्ठभागे संमानार्थं हस्तमवस्थापयेत् ॥ पाठस्तु ॥ द्यौस्ते पृष्ठ पृथिवी

सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिः । विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यत इति ॥ हे अश्व, द्यौर्द्युलोकस्ते तव पृष्ठं, पृथिवी भूलोकस्तव सधस्थम् अग्निना सहावस्थानम्, अन्तरिक्षलोकस्तव मध्यशरीरवर्ती जीवात्मा, समुद्रस्तव योनिर्जन्मकारणम् । अप्सुयोनिर्वा अश्व इति श्रुतेः । एवं स्तूयमानस्त्वं चक्षुषा विख्याय उखायोग्यां मृदं विलोक्य पृतन्यतः संग्रामं कर्तुमिच्छतः शत्रून् राक्षसादींस्तस्यां मृदि गूढरूपेणावस्थितानभितिष्ठ पादेनाक्रम्य विनाशय ॥ कात्यायनः ॥ अनुपस्पृशन्नुत्क्रामेत्युत्क्रामयतीति ॥ अश्वस्पर्शनमकुर्वन्नस्मात् स्थानात् तम् अश्वं निर्गमयेत् ॥ पाठस्तु ॥ उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणोदा वाजिन् । वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्या इति ॥ हे वाजिन्नश्व, द्रविणोदा धनप्रदस्त्वं मे महते सौभगायास्मद्भाग्याभिवृद्ध्यर्थमस्मादास्थानात् खननप्रदेशादुत्क्राम उद्गतो भव । वयं तु पृथिव्याः सुमतावनुग्रहे चित्ते स्याम तिष्ठेम । कीदृशा वयम् । अस्या उपस्थे पृथिव्या उपरिभागे । अग्निहेतुं मृदं खनन्तः खनितुमुद्योगं कुर्वन्तः ॥ कात्यायनः ॥ अथैनमश्वमुत्क्रान्तमभिमन्त्रयते ॥ पाठस्तु ॥ उदक्रमीद् द्रविणोदा वाज्यर्वाकः सुलोकꣳ सुकृतं पृथिव्याम् । ततः खनेम सुप्रतीकमग्निꣳ स्वो रुहाणा अधिनाकमुत्तममिति ॥ द्रविणोदाः यागकरणे धनप्रदः, वाजी तथैव अन्नप्रदः । अर्वा गमनकुशल इत्यर्थः । तादृशोऽयमश्वः, अस्मात् स्थानादुदक्रमीदुदगच्छत् । स उत्क्रान्तोऽश्वः सुकृतः आक्रमणेन विरुद्धराक्षसानपहृत्य सुष्ठु कृतं सुशोभनं लोकं खननप्रदेशं, पृथिव्याम् । आ अकः अकरोत् । ततस्तस्मात् प्रदेशादग्नियोग्यां मृदं वयं खनेम । कीदृशमग्निम् । सुप्रतीकं सुमुखम् । खनितारो वयं कीदृशाः । स्वः स्वर्गमधिरुहाणा आरोहणं कुर्वाः । कीदृशं स्वर्गं, नाकम् । कं सुखम् अकं दुःखं तद्रहितम् । उत्तमम् । उत्कृष्टम् ॥ कात्यायनः ॥ मृदमभिजुहोत्या त्वा जिघर्मीति । व्यतिषक्ताभ्याम् ऋग्भ्यामिति ॥ संश्लिष्टाभ्याम्, आ त्वा जिघर्मीति द्वाभ्याम् ऋग्भ्यां पूर्वोक्तां मृदमभिलक्ष्य जुहुयात् ॥ तत्र प्रथमाया ऋचः पाठः ॥ आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा । पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानमिति ॥ हे अग्ने, त्वामहं मनसा ध्यायन् घृतेनाज्येनाजिघर्मि आक्षारयामि दीपयामि वा । कीदृशं त्वाम् । विश्वा भुवनानि प्रतिक्षियन्तं सर्वेषु लोकेषु प्रत्येकमेव निवसन्तम् । तिरश्चा पृथुं तिर्यक्प्रमाणेन विस्तृतम् । वयसा बृहन्तं

वयउपलक्षितेन कालेन मौढम् । पृथुमिसनेन बहुदेश-व्याप्तिः । अनेन च बहुकालव्याप्तिः । स्पर्चिष्टम् अतिशयेन विविधभञ्जन गमन यस्य तादृशम् । अक्षेः श्रद्धया निक्षिप्तैर्घृतादिभिर्हविर्भिः शीघ्रमेव दृशान पुनर्वर्द्धमानतया दर्शनीयम् ॥ अथ द्वितीया ॥ आविश्वतः मत्यच जिघर्म्यरक्षसा मनसा तज्जुषेत । मर्यश्रीः स्पृहयद्वर्णोअग्निर्नाभिमृशे तन्वा जर्भुराण इति ॥ अह विश्वतः सर्वतः प्रत्यञ्च जिघर्मि अरक्षसा मनसा मत्यगात्मतया प्रतीयमानमग्निमाजिघर्मि घृतेन हविषा आक्षारयामि । सोऽप्यग्निः । अरक्षसा मनसा क्रौर्यरहितेन चित्तेन तद्घृतं जुषेत सेवताम् । अयमग्निः मर्यश्रीः । मर्त्यैर्मनुष्यैराश्रयणीया श्रीर्यस्य सः । स्पृहयद्वर्णः । यजमानैः स्पृहणीयरूपः । नाभिमृशे अभिमर्शन कर्तुं न शक्यः । कीदृशः । तन्वा शरीरेण जर्भुराणः । जृभि गात्रविनामे । इतस्ततश्च गच्छन् । ईदृशमग्निम् । आजिघर्मीति योजना ॥ कात्यायनः ॥ अभ्र्या पिण्ड त्रिः परिलिखति परिवाजपतिरिति वहिरुत्तरयेति ॥ खननसाधनभूतयाऽभ्र्या मृत्पिण्डस्य परितो रेखात्रय कुर्यात् । तत्प्रकार उच्यते । परिवाजपतिरित्येतयर्चा प्रथमा रेखा । ततो वहिस्तस्या उत्तरया पार त्वाग्न इत्यनयर्चा द्वितीया रेखा । ततोऽपि च तथा अप्युत्तरया त्वमग्न इत्यनयर्चा तृतीया रेखेति ॥ तत्र प्रथमायाः पाठः ॥ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुष इति ॥ अयमग्निर्हव्यानि परितः अक्रमीत् स्वीकृतवान् । कीदृशोऽग्निर्वाजपतिर्वाजस्यान्नस्य पालयिता । कविः क्रान्तदर्शी । किं कुर्वन् । दाशुषे हविर्दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधत् प्रयच्छन् ॥ अथ द्वितीयः ॥ परि त्वाग्ने पुर वय विप्रᳬ सहस्य धीमहि । धृषद्वर्णं दिवे दिवे भेत्तार भङ्गुरावतामिति ॥ हे सहस्य, बलन मथ्यमानोऽग्निः सहस्यः । हे तादृशाग्ने, वय त्वा परिधीमहि परितः स्वीकुर्मः । कीदृश त्वा पुरम् अपेक्षितफलाना पूरयितारं, विप्र ब्राह्मणजातिपिपालनप । देव धृषद्वर्ण दिवे दिवे प्रतिदिन भङ्गुरावता भेत्तारम् । भञ्जनीय पाप भङ्गुर, तदेपामस्तीति भङ्गुरावन्तो विघातकारिणो राक्षसादयः । तेषा विनाशयितारम् ॥ अथ तृतीयः ॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्व वनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणान्नृपते जायसे शुचिरिति ॥ हे अग्ने, त्व द्युभिः स्वर्गनिमित्तभूते तत्र तत्र यागशालासु जायसे । किञ्च त्वम् आशुशुक्षणिः । आर्द्रा भूमिं शीघ्रमेव शोषयिता जायसे । त्वमद्भ्यो वर्षधाराभ्योऽशनिरूपेण जायसे । त्वमश्मन-

स्यपि पाषाणस्योपरि पाषाणान्तरसंघट्टनेन जायसे । त्वं वनेभ्यो दावाग्निरूपेण जायसे । त्वम् ओषधीभ्यः । ओषधिकार्येभ्यो भेषजेभ्यस्त्वं जायसे । यद्वा वंशद्वयसंघर्षणादिभ्यो जायसे। नृणां नृपते सर्वेषामपि मनुष्याणां पालक त्वं गृहे गृहे शुचिः शुद्धिहेतुः सञ्जायसे । पुनर्दोहेन मृन्मपमित्यादिश्रुतिः ॥ इति द्वादशेऽध्याये द्वितीयोऽनुवाकः ॥ १२ ॥ २ ॥

द्वितीयेऽनुवाके मृदाक्रमणमन्त्रा उक्ताः ॥ तृतीये तु मृत्खननमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ अभ्या पिण्डं खनति देवस्य त्वेतीति ॥ पाठस्तु ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामि । ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम्। शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनाम इति ॥

देवस्य त्वेत्यादिर्व्याख्यातः समानार्थः । हे अग्ने, पृथिव्याः सधस्थादुपरिप्रदेशात् पुरीष्यं पांसुयोग्यमग्निं त्वाम् अङ्गिरस इव वयं खनामि । कीदृशं त्वाम् । ज्योतिष्मन्तं ज्वालायुक्तम् । सुप्रतीकं सुमुखम् । अजस्रेण भानुना निरन्तरं वर्तमानेन रश्मिना दीद्यतं प्रकाशमानम्। प्रजाभ्यः परोपकारार्थं शिवं शान्तम् । अत एवाऽहिꣳसन्तं हिंसामकुर्वन्तं, पृथिव्याः सधस्थादग्निं पुरीष्यं पशुभ्यो हितम् । अङ्गिरसा तुल्यं खनामः ॥ कात्यायनः ॥ तस्मित्यनेन तदेव शोधयेत् ॥ तत्र पाठस्तु ॥ अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम्। वर्धमानो महाँऽआ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्वेति ॥ हे पुष्करपर्ण त्वमपां पृष्ठमसि पृष्ठवदुपरिभागे वर्तमानमसि । तथा अग्नेर्योनिरसि । अग्निहेतोर्मृदः कारणमसि । तथा समुद्रमभितः पिन्वमानं समुद्रमभानस्य तडाकजलस्य परितः प्रीतिकरम् । किञ्च वर्द्धमानो महानिति लिङ्गव्यत्ययः । पुष्करे उदके आसमन्तान्महत्प्रभूतं सद्वर्द्धमानं वृद्धियुक्तमसि । एवम्भूतस्त्वं वरिम्णा वरिष्ठया दिवो मात्रया आकाशस्य परिमाणेन प्रथस्व । विस्तृतं भव ॥ कात्यायनः ॥ आलभते उभे शर्म च स्थ इतीति ॥ उभे कृष्णाजिनपुष्करपर्णे संस्पृशेत् ॥ पाठस्तु ॥ शर्म च स्थो वर्म च स्थोऽच्छिद्रे बहुले उभे । व्यचस्वती संवसाथां भृतमग्निं पुरीष्यम् । संवसाथाꣳस्वर्विदा समीची उरसा त्मना। अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमिदिति ॥ हे कृष्णाजिनपुष्करपर्णे, उभे युवां शर्म च स्थः । अग्नेः सुखकारिणी अपि भवथः । तथा वर्म

च स्थः । कवचवद्रक्षके अपि भवथः । कीदृशे अच्छिद्रे छिद्ररहिते बहुले विस्तीर्णे व्यचस्वती आच्छादनप्रकारवती पुटिकादिसदृशे इत्यर्थः । तथाविधे युवां संवसाथां सम्यगिदमाच्छादयतम् । ततः पुरीष्यमग्निं भृतं धारयतम् । किञ्च युवां रमना स्वयमेव परनिरपेक्षे सती उरसा उरःसदृशेन मदीयस्वरूपेण संवसाथां सम्यगाच्छादयतम् । कीदृशे युवाम् । स्वर्विदा स्वर्गविदा स्वर्गलाभसाधने इत्यर्थः । समीची मृदूचन्धनायानुकूले । अजस्रमिव निरन्तरमेव ज्योतिष्मन्तं तेजस्विनमग्निम् । अन्तं स्वोदरे भरिष्यन्ती धारयिष्यन्ती ॥ कात्यायनः ॥ पिण्डं पुरीष्योऽसीति पाणिभ्यां परिगृह्णातीति ॥ उखानिर्माणयोग्यं मृन्मयं पिण्डं हस्ताभ्यां गृह्णीयात् ॥ पाठस्तु ॥ पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने इति ॥ हे मृत्पिण्ड, त्वं पुरीष्योऽसि । पुरीषस्य बहुलस्य पासोर्योग्योऽसि । अत एव विश्वभरा इति । विश्वं कृत्स्नम् उखारूपं बिभर्तीति विश्वभरा । हे अग्ने, अथर्वाख्य ऋषिः प्रथमः इतरेभ्यः पूर्वभावी सन् त्वां निरमन्थत् । निःशेषेण मथितवान् । अत्रापि अथर्वणः प्रथमनिर्मथनं नाम प्रथमदर्शनमित्यभिप्रायं तैत्तिरीये दर्शयति ॥ अग्निर्देवेभ्यो निलीय तमथर्वान्वपश्यदथर्वा त्वा प्रथमो निरमन्थदग्न इत्याह य एवैनमन्वपश्यत्तेनैव सम्भरतीति ॥ कात्यायनः ॥ त्वामग्न इति षड्भिः सर्वे सकृद्धृत्वा पुष्करपर्णे निदधाति । त्वामग्न इत्यादिमन्त्रषट्केन मृन्मयं पिण्डं निःशेषमेकवारमपहृत्य पद्मपत्रे निदध्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघत इति ॥ हे अग्ने, अथर्वाख्य ऋषिः पुष्करात् अधि पद्मपत्रस्योपरि त्वा निरमन्थत। निःशेषेण मथितवान्। अत एव तैत्तिरीयैः समाम्नातम् । पुष्करपर्णे ह्येनमुपश्रितमविदन्निति ॥ कीदृशात् पुष्करात् । मूर्ध्नः उत्तमाङ्गवत्प्रशस्तात्। विश्वस्य वाघतः सर्वस्य जगतो वाहकात् । इहेति पुष्करपर्णे अग्निमथनेन यज्ञनिष्पादनद्वारेण सर्वं जगन्निर्वहति ॥ अथ द्वितीयः ॥ तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरमिति ॥ हे अग्ने अथर्वणः पुत्रो दध्यङ्नामक ऋषिः । तमु त्वा ईधे तमेव त्वां मज्वालितवान् । कीदृशं त्वा वृत्रहणं मेघनाशिनम् । पुरन्दरं रुद्ररूपेणासुरसम्बन्धिनां त्रयाणां पुराणां विदारयितारम् ॥ अथ तृतीयः ॥ तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयꣳ रणे रण इति ॥ हे अग्ने, पाथ्यनामकः कश्चिदृषिः तमु त्वा समीधे तमेव त्वां मज्वालितवान् ।

कीदृशः पाथ्यः । वृषा श्रेष्ठः । कीदृशं त्वाम् । दस्युहन्तमं तस्कराणामतिशयेन हन्तारम् । रणे रणे धनञ्जयं तेषु तेषु संग्रामेषु धनस्य जेतारम् । अथ चतुर्थः ॥ सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ । देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धा इति ॥ हे होतः होमनिष्पादकाग्ने चिकित्वान् अभिज्ञः त्वं स्व उ लोके स्वकीय एव स्थाने उत्तरवेदिरूपे सीद उपविश । यज्ञं च मे सुकृतस्य योनौ पुण्यकर्मणोपयोग्यस्थाने सादय स्थापय । देवानेति कामयत इति देवावीर्देवप्रियः । तादृशस्त्वं देवान् हविषा यजासि पूजयसि । किञ्च, हे अग्ने, त्वं यजमाने दीर्घमायुः धाः स्थापय ॥ अथ पञ्चमः ॥ नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वोऽअग्निरिति ॥ हे होतृषदने होमनिष्पादकस्य योग्यस्थाने उत्तरवेदिरूपे अग्निर्नितरामसदत्समीपे स्थितवान् । कीदृशोऽग्निर्होता । देवानामाह्वाता । विदानः स्थानाऽभिज्ञः । त्वेषो दीप्तिमान् । दीदिवान् देवेभ्यो हविषो दाता । सुदक्षः । कुशलः । अदब्धव्रतप्रमतिः । अहिंसिते कर्मणि प्रकृष्टा मतिर्यस्य स तथाविधः । वसिष्ठोऽतिशयेन वासयिता । सहस्रसंख्याकानि हवींषि पोषयतीति सहस्रम्भरः शुचिः शुद्धा होमयोग्या जिह्वा ज्वाला यस्यासौ शुचिजिह्वः ॥

अथ षष्ठः । सꣳसीदस्व महाꣳ असि शोचस्व देववीतमः । विधूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतमिति ॥ हे अग्ने, त्वमस्मिन् पुष्करपर्णे सीदस्व । सम्यगुपविश । त्वमनेन क्रतुहेतुत्वान्महानसि । देवान् वेति गच्छतीति देववीः । अतिशयेन देववीरिति देववीतमः । तादृशस्त्वं शोचस्व दीप्यस्व । हे मियेध्य मेधार्ह । प्रशस्त उत्कृष्टाग्ने । दर्शतं दर्शनीयमरुषमारोपणमत्युग्रं धूमं विशेषेण सृज ॥ इति द्वादशेऽध्याये तृतीयोऽनुवाकः ॥ १२ ॥ ३ ॥

तृतीयेऽनुवाके मृत्खननमन्त्रा उक्ताः । चतुर्थे मृदाहरणमुच्यते ॥ कात्यायनः ॥ अपः स्वभ्रेऽवनयत्यपो देवीरिति ॥ अत्र उदकान्यासिञ्चेत् ॥ पाठस्तु ॥ अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासामास्थानादुज्जिहतामोषधयः सुपिप्पला इति ॥ हे अध्वर्यो, त्वं देवीः देवनशीला अपः उपसृज अस्मिन्खातप्रदेशे आसिञ्च । कीदृशीरपः मधुमतीः मधुरसोपेताः । किमर्थम् । अयक्ष्माय प्रजाभ्यः प्रजानामारोग्याय । तासां सिक्तानामपां स्थानात् सुक्षेत्ररूपादस्मात् खननप्रदेशात् सुपिप्पलाः शोभनफलाः ओषधय आसमन्तादुज्जिहताम् । उत्पद्यताम् ॥

कात्यायनः ॥ सं त इति जलमवक्षिपतीति ॥ पाठस्तु ॥ सं ते वायुर्मातरिश्वा दधातूत्तानाया हृदयं यद्विकस्तम् । यो देवानां चरसि प्राणथेन कस्मै देव वषळस्तु तुभ्यमिति ॥ हे पृथिवि, उत्तानाया ऊर्ध्वाभिमुखेनावस्थितायास्ते तव हृदयं हृदयसदृशं खननस्थानं विकस्तम् । अवदाररूपेण विकासितं तत्स्थानं वायुः सन्दधातु पूर्वोक्तेन जलप्रक्षेपणेन तृणादिपूरणेन च वायुर्यथा पूर्वं तथा सम्यक्करोतु । कीदृशो वायुर्मातरिश्वा । मातर्यन्तरिक्षे सर्वप्राणिनां नियन्तरि परिच्छेदकारिणि शेते तिष्ठतीति मातरिश्वा । हे देव, द्योतनादिगुणयुक्त वायो, यस्त्वं देवानामग्न्यादीनां प्राणथेन प्राणभावेन चरसि व्यवहरसि तस्मै प्रजापतिरूपाय तुभ्यं वषळस्तु । वषट् भवतु ॥ कात्यायनः ॥ पुरस्तात्पश्चाद्दक्षिणउत्तरश्चास्तीर्णयोरन्तानुद्गृह्णाति सुजात इति ॥ पूर्वादिचतुर्दिक्षु प्रसारितकृष्णाजिनपुष्करपर्णयोरन्तानूर्ध्वाभिमुखं समूहेत ॥ पाठस्तु ॥ सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वरिति ॥ सुष्ठुत्पन्नोऽग्निर्ज्योतिषा स्वकीयतेजसा सह शर्म सुखं यथा भवति तथा । स्वः स्वर्गसदृशं वरूथं कृष्णाजिननिर्मितं गृहम् । आसदत् आसीदतु ॥ कात्यायनः ॥ त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासो अग्न इति ॥ त्रिगुणेन मुञ्जनिर्मितेन दाम्ना बध्नीयात् ॥

पाठस्तु ॥ वासो अग्ने विश्वरूपꣳ संव्ययस्व विभावसो इति ॥ हे विभावसो विभैव वसु दीप्तिर्वसु धनं यस्याऽसौ विभावसुस्तादृशस्त्वं हे अग्ने, विश्वरूपं बहुप्रकाररूपं वासः कृष्णाजितरूपं वस्त्रं संव्ययस्व । सम्यक्परिधानं कुरु ॥ कात्यायनः ॥ उत्तिष्ठेत् पिण्डमादायोदु तिष्ठेतीति ॥ मृत्पिण्डं स्वीकृत्य उत्तिष्ठेत् ॥ पाठस्तु ॥ उदु तिष्ठ स्वध्वराऽवा नो देव्या धिया । दृशे च भासा बृहता सुशुक्वनिराग्ने याहि सुशस्तिभिरिति ॥ हे स्वध्वर, सुष्ठुयागनिष्पादकाग्ने, उदु तिष्ठ उत्तिष्ठैव । उत्थाय च नोऽस्मान् देव्या देवनस्वभावया क्रीडापरया बुद्ध्या अव पालय । हे अग्ने, बृहता भासा प्रौढतेजसा सुशुक्वनिः सुष्ठुशुचां रश्मीनां वनिता यः सोऽयं सुशुक्वनिः । तादृशः सन् सुशस्तिभिः शोभनीयकीर्तिभिः सह दृशे सर्वैः प्राणिभिर्द्रष्टुमायाहि आगच्छ॥ कात्यायनः ॥ ऊर्ध्वबाहुः प्राचं प्रगृह्णात्यूर्ध्व ऊषु ण इतीति ॥ बाहुद्वयम्पूर्वाऽभिमुखे कृत्वा मृत्पिण्डं प्रागञ्चनं स्वीकुर्यात् ॥ ऊर्ध्व ऊषु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामह इति ॥ हे अग्ने, नोऽस्माकम् । ऊतये रक्षणाय ऊर्ध्व ऊषु तिष्ठ ऊर्ध्व एवसन्नवस्थितो भव ।

क इव । देवो न सविता । यथा देव ऊर्ध्वः सन् अस्मान् रक्षति तद्वत् । यस्त्वमूर्ध्व-स्सन् वाजस्य सनिताऽन्नस्य दाता भव । यद्यस्मात् कारणाद् अञ्जिभि-र्मोत्राभिर्व्यञ्जकैर्वाघद्भिर्हव्यवाहकैर्ऋग्भिर्विह्वयामहे । वयमेवंविधं त्वामाह्वयामः । तस्मादूर्ध्व एव तिष्ठेति पूर्वत्रान्वयः ॥ कात्यायनः ॥ अश्वप्रभृतिभिर्मन्त्रयते सजात स्थिरो भव शिवो भवेतीति । सजात इति मन्त्रत्रयेण त्रीनश्वरासभा-ऽजान् क्रमेणाभिमन्त्रयेत् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ सजातो गर्भोअसि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रः शिशुः परितमा᳚स्यक्तून् प्र मातृभ्यो अधिकानिक्रदद् गा इति ॥ हे अग्ने, स त्वं रोदस्योर्द्यावापृथिव्योर्गर्भः सन् इदानीं जातः । कीदृशस्त्वम् । चारुः पूजनीयः ॥ ओषधीषु विभृतः पूज्यमानोऽस्योषधी-षु दृश्योऽग्निरूपः सन् विशेषेण पोषितश्चित्रो नानावर्णाभिस्ताभिर्विविध-रूप इदानीमुत्पन्नत्वाच्छिशुः । अक्तूनिति लिङ्गव्यत्ययः । अक्तूनि रात्र्युप-लक्षितानि तमांसि परिहरन् तादृशस्त्वं मातृभ्य ओषध्यर्थं वाऽधिकानिक्रदत् । अधिक्रन्दन् । गाः । प्रकर्षेण गच्छेः । यथा लोके शिशुर्मातरमुद्दिश्य क्रन्दनाका-गारेण गच्छेत्तद्वदित्यर्थः ॥ अथ द्वितीयः ॥ स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्ने पुरीषवाहण इति ॥ अग्नेर्हेतुभूतं पुरीषं यो गर्दभो वहति । तादृश हे गर्दभ, इयर्ति गच्छतीत्यर्वन् गमनकुशलस्त्वं स्थिरो भव चलन-रहितः । कीदृशः । वीड्वङ्गो दृढकायः । आशुर्वेगवान् । वाजी अन्नहेतुश्च । पृथुर्विस्तीर्णपृष्ठः । सुषदोऽग्नेः सुखासनश्च । पुरीषशब्देन पांसुरूपा सुरूपा मृदुच्यते । तां वहतीति पुरीषवाहणः । तादृशश्च भव ॥ अथ तृतीयः ॥ शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभिशोचीर्मा-ऽन्तरिक्षं मा वनस्पतीनिति ॥ अङ्गिरोभिर्ऋषिभिः पूर्वं सम्पादितत्वादङ्गसौष्ठव-वत्त्वाद्वाऽयमग्निराङ्गिरः । अग्ने योऽज इत्यभिधानात् । हे अङ्गिरो, मे त्वं मानुषीभ्यो मनोः सम्बन्धिनीभ्यः प्रजाभ्यः शिवः शान्तो भव । किञ्च, त्वं द्यावापृथिव्यावभिलक्ष्य माभिशोचीः । शोकं सन्तापं माकार्षीः । तथान्तरिक्षं माभिशोचीः । तथा वनस्पतीन् माभिशोचीः ॥ कात्यायनः ॥ धारयत्येषा-मुपरिपिण्डमुपस्पृशन् प्रैतु वाजी इत्याग्निमिसश्वरासयोरिति ॥ अश्वादीनां त्रयाणाम् उपरिभागे मृन्मयं पिण्ड स्पर्शनमकुर्वन्नध्वर्युर्धारयेत् । तत्राश्वगर्दभ-योरुपरि प्रैतु वाजी इत्याग्निमित्येतद्द्वयेन मन्त्रेण धारयेत् ॥ तत्र प्रथममन्त्र-पाठस्तु ॥ प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा

पापायुषः पुरेति ॥ अयं वाजी तुरगः प्रैतु प्रकर्षेण गच्छतु । किं कुर्वन् ।
कनिक्रदत् । अत्यन्तं ह्रेषितं कुर्वन् । रासभश्च प्रैतु । नानदत् । गर्दभनादितेन
नादयन् पत्वा पतनशीलः । पुरीष्यमग्निं दाहकं भरन्नपि । आकर्मसमाप्तेः
स्वकीयादायुषः पुरा मापादि । अपमृत्युना मृतो नाभूत् ॥ अथ द्वितीयः ॥
वृषाग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियमिति ॥ वृषा वीर्येण सेचने समर्थो
गर्दभः वृषणं फलाभिवर्षणसमर्थमग्निं भरन् वहन् गच्छत्विति शेषः । कीदृश-
मग्निम् । अपां गर्भं मेघस्थानां जलानां मध्ये विद्युद्रूपम् । समुद्रियं समुद्रे
वडवाऽग्निरूपेणोत्पन्नम् ॥ कात्यायनः ॥ अग्न आयाहीत्याहृत्य खरादिति ॥
गर्दभात् सकाशान्मृत्पिण्डमाहरेत् । वीतय इति मन्त्रशेषः ॥ हे अग्ने, त्वं
वीतये प्रजननाद्यर्थम् आयाहि आगच्छ ॥ कात्यायनः ॥ छागस्य ऋतꣳ सत्यमित्य-
ऽभिधारयन्नपतीति ॥ अजस्योपरि खरादाहृतं मृत्पिण्डं धारयन् प्राग्द्वार-
पर्यन्तादागच्छेयुः ॥ पाठस्तु ॥ ऋतꣳ सत्यमृतꣳ सत्यमिति ॥ अत्र ऋतसत्य-
शब्दाभ्याम् आदित्याग्नी विवक्षितौ । तादृगुभयरूपमध्याहरामिति शेषः ।
ऋतꣳ सत्यमिति पुनर्वचनमादरार्थम् ॥ कात्यायनः ॥ पुरुषमीक्षते पूर्ववदग्निं
पुरीष्यमितीति ॥ अङ्गिरस्वद्भराम इति मन्त्रशेषः । पूर्ववद् व्याख्येयम् ॥
कात्यायनः ॥ उत्तरत आहवनीयस्योद्धूतावोक्षिते सिकतोपकीर्णे परिहृते
प्राग्द्वारे पिण्डं निदधात्योषधय इतीति ॥ आहवनीयस्योत्तरभागे यस्मिन् देशे
मृत्पिण्डो निधीयते तस्मिन् देशे उच्छिष्टादिशङ्कोपेतस्योपरितनतृणाद्युपेत-
मृद्भागस्यापसारणं कर्तव्यम् । तदेतदुद्धननं कृत्वा उदकेनावेक्ष्य सिकता प्रसार्य
तस्य देशस्य परितः प्रावरणं कृत्वा प्राग्द्वारं कुर्यात् । तस्मिन् द्वारे, ओषधय
इति द्वाभ्यां मन्त्राभ्यां मृत्पिण्डं निदध्यात् ॥ अत्र प्रथममन्त्रपाठस्तु ॥
ओषधयः प्रतिमोदध्वमग्निमेतꣳ शिवमायन्तमभ्यत्र युष्माः । व्यस्यन् विश्वा
अनिरा अमीवा निषीदन्नो अपदुर्मतिं जहीति ॥ हे ओषधयः, अत्रास्मिन् देशे
युष्मानभिमुखीकृत्य आयन्तमागच्छन्तं शिवं शान्तमेनं प्रतीयमानम् अग्निं
प्रतिमोदध्वम् । हे अग्ने, निषीदन्नस्मिन् प्रदेशे निविशमानस्त्वं विश्वाः सर्वाः
न विद्यते इरा अन्नं याभिस्ताः । अनिरा अनावृष्ट्यादयस्ता व्यस्यन् निरस्य
अमीवाः व्याधींश्च निरस्यन् नोऽस्माकं दुर्मतिं प्रमादालस्यादियुक्तां बुद्धिम्
अपजहि ॥ अथ द्वितीयः ॥ ओषधयः प्रतिगृभ्णीत पुष्पवतीः सुपिप्पलाः ।
अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासददिति ॥ पुष्पवतीः प्रशस्तपुष्पोपेताः

सुपिप्पलाः शोभनफलोपेताः, हे ओषधयः, एनमग्निं प्रतिगृभ्णीत स्वीकुरुत । अयमग्निर्वो युष्माकं ऋत्वियः। ऋतुकालीनो गर्भो भूत्वा प्रत्नं पुरातनं सधस्थं गर्भयोग्यस्थानम् आसदत् । प्राप्तवान् ॥ कात्यायनः ॥ विपाजसेति प्रमुच्यैन-मिति ॥ एनं मुञ्जयोक्त्रेण बद्धं मृत्पिण्डं विस्रंसेत् ॥ पाठस्तु ॥ विपाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षो अमीवाः । सुशर्मणो बृहतः शर्मणि स्या-मग्नेरहꣳ सुहवस्य प्रणीताविति ॥ हे अग्ने, पृथुना विस्तृतेन पाजसा बलेन शोशुचानोऽत्यन्तं दीप्यमानस्त्वं द्विषः शत्रून् रक्षो राक्षसान् अमीवा रोगांश्च विशेषेण बाधस्व । अहं सुशर्मणः शोभनसुखस्य बृहतः प्रौढस्य सुहवस्य सुखेनाह्वातुं शक्यस्याग्नेः प्रणीतौ परिचर्यायां सत्यां तस्मिन् सुखे स्यां सर्वदा-ऽवतिष्ठेयम् ॥ इति द्वादशाध्याये चतुर्थोऽनुवाकः ॥ १२ ॥ ४ ॥

चतुर्थानुवाके मृत्पिण्डाहरणमुक्तम् । पञ्चमे उखानिर्माणमुच्यते ॥ कात्यायनः ॥ आपो हि ष्ठेति पर्णकषायपक्वमुदकमासिञ्चतीति ॥ पालाशसम्भवं कषायं तैल-मुदकम् आपो हि ष्ठेति तृचेन मृन्मयपिण्डे आसिञ्चेत् ॥ तत्र प्रथमायाः पाठस्तु आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महेरणाय चक्षस इति ॥ हि-शब्द एवकारार्थः, प्रसिद्धार्थो वा । हे आपः, यूयमेव मयोभुवः स्थ । सुख-स्य पानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम् । तास्तादृश्यो यूयं नोऽस्मानूर्जे रसाय भवदीयरसभावयित्र्यो भवथ । अनुभवार्थं दधातन स्थापयत । किञ्च, महे महते रणाय रमणीयाय चक्षसे दर्शनाय दधातन अस्मात्परतः साक्षात्कार-योग्यान् कुरुतेत्यर्थः ॥ अथ द्वितीयः ॥ यो वः शिवतमो रसस्तस्य भाजय-तेह नः । उशतीरिव मातर इति ॥ वो युष्माकं शिवतमः सुखैकहेतुर्यो रसो-ऽस्ति स इहास्मिन् कर्मणि नोऽस्मान् तस्य भाजयत । तत्र दृष्टान्तः । उश-तीरिव मातरः कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयास्तन्यं पाययन्ति तद्वत् ॥ अथ तृतीयः ॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च न इति ॥ तस्मा अरं गमाम वः । अलं भृशं प्राप्नुमः । क्षयायेति षष्ठ्यर्थे चतुर्थी । प्रस्याहुतिपरिणामभूतस्य क्षयस्य निवासस्यैकदेशेन यूयं जिन्वथ तर्पयथ। किञ्च, हे आपो, यूयं नोऽस्मान् जनयथ । प्रजोत्पादनं कुरुथ॥ कात्यायनः॥ अजलोमानि सꣳसृजति । मित्रः सꣳसृज्येति ॥ पाठस्तु ॥ मित्रः सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह । सुजातं जातवेदसमयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः इति ॥ मित्र आदित्यो देवः पृथिवीं विस्तृतां द्युलोकं भूमिं च भूर्लोकं ज्योतिषा

ज्वलनाख्येन तेजसा सꣳसृज्य एकीकृतमहम् अध्वर्यवे प्रयच्छतिरिति शेषः। अह-मपि सुजातं जातवेदसम् अजलोमारूपमग्निं त्वां प्रजाभ्यः प्रजानाम् अयक्ष्माय रोगाभावाय सꣳसृजामि ॥ कात्यायनः ॥ शर्करयोरसाश्मचूर्णे रुद्राः सꣳसृ-ज्येतीति ॥ पाषाणसहिता मृत्तिका शर्करा । तथा अयःसारेण अश्मचूर्णैः संसृजेद ॥ पाठस्तु ॥ रुद्रा सꣳसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचत इति ॥ रुद्रनामकदेवाः पृथिवीम् उखानिष्पा-दकां मृदं संसृज्य बृहज्ज्योतिः प्रौढमग्निं समीधिरे सम्यग्दीपितवन्तः । तेषां रुद्राणां चायमग्निर्भानुना समानः अजस्रं निरन्तरं शुक्रो दीप्तियुक्तो देवेषु रोचते शोभते ॥ कात्यायनः ॥ सꣳसृष्टामिति संयौति ॥ सꣳसृष्टामिति मन्त्रत्रय-स्य प्रतीकमिदम् । पूर्वोक्तामजलोमशर्करादियुक्तां मृदमुखाकरणाय मृदु यथा भवति तथा हस्ताभ्यां संयवनं कुर्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणो तु तामिति ॥ पूर्वमन्त्रे रुद्रशब्देन वसवोऽप्युपलक्षिताः । अतो धीरैर्बुद्धिमद्भि-र्वसुभी रुद्रैश्च सꣳसृष्टां शर्करादिभिः संयोजितां कर्मण्याम् उखां कर्मयोग्यां मृदं मृत्तिकाम् । सिनीवाली इन्दुकलायुक्ताऽमावस्याभिमानिनी देवता । पुनरपि स्वहस्ताभ्यां तां मृदं मृद्वीं मृदुरूपां कृत्वा कृणोतु । उखां कृणोतु ॥ अथ द्वितीयः ॥ सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्योखां दधातु हस्तयोरिति ॥ सिनीवाली सुकपर्दा । कपर्देति स्त्रीणामुचितः । केशबन्धविधया शोभनः कपर्दो यस्याः सा सुकपर्दा । सुकुरीरशब्देन स्त्रीभिः शृङ्गारार्थं शिरसि धार्यमाणं कालकमुच्यते । शोभनं कुरीरं यस्याः सा सु-कुरीरा । उपनतं कुरुते यैरवयवविशेषैस्ते सर्वेऽप्युपशास्तेषा समूह औपशः । शोभन औपशो यस्याः सा स्वौपशा । हे महि, प्रौढे अदिते अखण्डनीये । अदितिरदितिर्देवमातेति यास्कवचनात् । तादृशि हे भूमे। सा सिनीवाली तुभ्यं तव हस्तयोः उखामादधातु स्थापयतु॥ अथ तृतीयः॥ उखां कृणोतु शक्त्या बाहुभ्या-मदितिर्धिया। माता पुत्रं यथोपस्थे साऽग्निं बिभर्तु गर्भ एति ॥ यामदितिर्धिया बुद्धिकौशलेन बाहुभ्यां हस्तकौशलेन चेमामुखां कृणोतु। यथा लोके माता स्वकीयं पुत्रम् उपस्थे उत्सङ्गे बिभर्ति तथेयमदितिर्गर्भे उत्सङ्गे तमग्निमाकर्मसमाप्तेर्बिभर्तु धारयतु ॥ कात्यायनः ॥ यजमान उखां करोति मृदमादाय मखस्य शिर इतीति ॥ यजमानोऽध्वर्युणा दत्तां मृदं गृहीत्वोखां कुर्यात् ॥ असीति मन्त्र-

शेषः।हे मृत्पिण्ड, त्वं मखस्य यज्ञस्य शिरः स्थानमसि ॥कात्यायनः॥ वसवस्त्वेति प्रथयतीति ॥ वसवस्त्वेत्यादिभिश्चतुर्भिर्मन्त्रैः प्रथितामुखां कुर्यात् । उखानिर्माणे तेषाम् अत्रान्तरविनियोगस्तु कात्यायनसूत्रे द्रष्टव्यः ॥ तत्र प्रथममन्त्रपाठस्तु ॥ वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वद् ध्रुवासि पृथिव्यसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानायेति ॥ हे उखे त्वां वसवो देवाः सहकारिणो गायत्रेण छन्दसा सह अङ्गिरस्वत् अङ्गिरस इव कृण्वन्तु निष्पादयन्तु । अतस्त्वं ध्रुवासि दृढासि । पृथिवीरूपा चासि।किञ्च मयि उखाकर्तरि प्रजां पुत्रादिकां धारय स्थापय । तथा रायस्पोषं धनस्य पुष्टिं च धारय । गौपत्यं गवां पतित्वं च मयि स्थापय । तथा सुवीराणां कर्म सुवीर्यम् ।तच्च मयि स्थापय। सजातान् समानोदरे जातान् भ्रातॄन् यजमानाय मह्यं धारय ॥ अथ द्वितीयः॥ रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वद् ध्रुवास्यन्तरिक्षमसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानायेति ॥ पूर्ववद् व्याख्येयम्।अथ तृतीयः ॥ आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्वद् ध्रुवासि द्यौरसि । धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानायेति ॥ पूर्ववद् व्याख्येयम् ॥ अथ चतुर्थः ॥ विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद् ध्रुवासि दिशोऽसि। धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानायेति ॥ विश्वेषां नराणां सम्बन्धिनो वैश्वानरा एवम्भूता विश्वे देवाः, हे उखे, त्वां कृण्वन्तु । अन्यत् समानम् ॥ कात्यायनः ॥ वर्तिꣳ सर्वतः करोत्यदित्यै रास्नेतीति ॥ रसनासदृशी तादृशी गलतः रेखा वर्तिस्ताम् उखायाम् उत्तरभागे सर्वतः कुर्यात् । असीति मन्त्रशेषः । हे रज्जो, त्वम् अदित्यै भूमिरूपाया उखाया रास्नासि काञ्चीगुणस्थानीयरशना भवसि ॥ कात्यायनः ॥ बिलं विगृह्णात्यदितिष्ट इतीति ॥ उखाया अन्तश्छिद्रं कुर्यात् ॥ पाठस्तु ॥ अदितिष्टे बिलं गृभ्णात्विति ॥ हे उखे, ते तव बिलम् अन्तश्छिद्रमदितिर्भूमिर्गृभ्णातु करोतु ॥ कात्यायनः ॥ कृत्वायेति निदधातीति ॥ निष्पन्नामुखां स्थापयेत् ॥ पाठस्तु ॥ कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये। पुत्रेभ्यः प्रायच्छददितिः श्रपयानितीति ॥ सेयमदितिः मृन्मयीं मृत्कार्यां योनिम् अग्नये अग्नेः कारणभूतामुखां कृत्वा फलं निष्पाद्य पुत्रेभ्यः स्वपुत्रसदृशेभ्यः श्रपणकारिभ्यः

मापच्छत् । मादात् । किं ब्रुवन्ती । तदुच्यते । अपयानिति । अपयन्तु भवन्त इति ब्रुवन्ती ॥कात्यायनः॥ सप्तभिरश्वशकृद्भिरुखां धूपयति। दक्षिणाऽग्निदीप्तैरेकैकेन वसवस्त्वेति प्रतिमन्त्रमिति ॥ वसवस्त्वेत्यादिभिर्मन्त्रैः क्रमेणैकैकेन मन्त्रेण दक्षिणेनाग्नौ प्रज्वलितैरश्वसम्बन्धिभिः शकृद्भिः उखां संधूपयेत् ॥ तेषां पाठस्तु ॥ वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वद् रुद्रास्त्वाधूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत् ।आदित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् । इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयत्विति॥ हे उखे त्वामष्टौ वसवः सहकारेण गायत्रेण छन्दसा सहाङ्गिरस इव धूपयन्तु । अश्वशकृज्जन्येन धूमेन धूपयन्तु संस्कुर्वन्तु । एवमुत्तरेष्वपि पदेषु योज्यम् ॥ इति द्वादशेऽध्याये पञ्चमोऽनुवाकः ॥ १२ ॥ ५ ॥

पञ्चमे उखानिर्माणमुक्तम्॥ षष्ठेऽनुवाके तु तत्संस्कार उच्यते॥कात्यायनः॥ आग्न्या श्वभ्रं चतुरस्रं खनत्यदितिष्ट्वेति ॥ खननसाधनेन काष्ठविशेषेण अभ्रिचतुष्टयोपेते तमवटं खनेत् ॥ पाठस्तु ॥ अदितिष्ट्वा देवी विश्वदेव्यावती । पृथिव्याः सधस्थे अङ्गिरस्वत् खनत्ववटेति ॥ विश्वेषु देवेषु साधवो विश्वेदेवाः।तेऽस्यां सन्तीति विश्वदेव्यावती तादृशीयम् अदितिर्देवी पृथिव्याः सधस्थे भूम्या उपरि हे अवट त्वा त्वामङ्गिरस्वत् । अङ्गिरस इव खनतु । अनेन मन्त्रेण अदितेरेव खननकर्तृत्वमिति तैत्तिरीयेऽपि श्रूयते॥ अदितिस्त्वेत्याहेयम् अदितिरदित्यास्या अक्रूरकारणाय हिंस्रः सन्हिनस्तीति ॥अस्यायमर्थः। इयं भूमिरेवादितिशब्देन विवक्षिता । अवटखननमपि भूम्यामेव । ततोऽदितेः खनने कर्तृत्वे सती भूमेर्हिंसा न भवति । न हि लोके कश्चिदपि स्वयं स्वात्मानं हिनस्ति। तस्मात् खननलक्षणक्रूरकार्यकरणाभावायेत्थमदितिकर्तृत्वं सम्पद्यत इति ॥ कात्यायनः ॥ श्रपणमास्तीर्य तस्मिन्नुखां यथाकृतां स्थापयेत् ॥ पाठस्तु ॥ देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे इति ॥ विश्वदेव्यावतीः विश्वेषां देवानां योग्या विश्वेषु देवेषु साधवो वा विश्वदेव्यः। तैः सहिता विश्वदेव्यावत्यः। एवम्भूता देवानां पत्न्यो देव्याः पृथिव्याः सधस्थे उपरि अङ्गिरस इव, हे उखे त्वां दधतु स्थापयन्तु ॥कात्यायन ॥ उखां न्युब्जां श्रपणेनावच्छाद्य दक्षिणाऽग्निना दीपयति । धिषणास्त्वेति ॥ अर्वाचीनमुखां श्रपणसाधनेन तृणा-

दिना मच्छाद्य दक्षिणाग्नेरानीतेन वह्निना दीपयेत् ॥ पाठस्तु ॥ धिषणास्त्वा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धतामुखे इति ॥ विद्याभिमानिन्यो देवता धिषणास्ता देव्यो,हे उखे,त्वाम् अभीन्धताम् । इन्धि दीप्तौ ॥ कात्यायनः ॥ वरूत्रीष्ट्वा इति श्रपयति ॥पाठस्तु॥ वरूत्रीष्ट्वा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूख इति ॥ हे उखे कृण्वन्त्यिवतीति वरूत्रयोऽहोरात्राणि । अहोरात्राभिमानिन्यो देवताः । अहोरात्राणि वै वरूत्रयोऽहोरात्रꣳ हीदꣳ सर्वꣳ वृतमितिश्रुतेः ॥ एवम्भूता वरूत्रयः, हे उखे, त्वा श्रपयन्तु ॥ कात्यायनः ॥ पचति ग्ना जनय इति द्वाभ्यामिति ॥ पाठस्तु ॥ ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत् पचन्तूखे इति ॥ छन्दांसि वै ग्ना छन्दोभिर्हि स्वर्गं लोकं गच्छतीति श्रुतिः॥ द्वितीयमन्त्रः॥जनयस्त्वाऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः । पृथिव्याः सधस्थे अङ्गिरस्वत् पचन्तूखे इति॥ जनयो नक्षत्राणिअच्छिन्नपत्रा अनवच्छिन्नपतनाः॥ नक्षत्राणिजनय इतिश्रुतेः॥कात्यायनः॥आचरति मित्रस्येति॥ आचरणमुपचरणं तत्र कुर्यात् ॥ पाठस्तु ॥ मित्रस्य चर्षणीधृतो वो देवस्य सानसि । द्युम्नं चित्रश्रवस्तममिति ॥ मित्रस्य देवस्य सानसि । सनातनं पुरातनं द्युम्नं यशस्तु वयं स्तुम इति शेषः । कीदृशं यशः । अवो रक्षणम् । चित्रश्रवस्तमम् अतिशयेन श्रवणीयम् । कथम्भूतस्य मित्रस्य । चर्षणीधृतो मनुष्याणां धारयितुः । यद्वा अवो यशश्च यजमानेष्टं साधयतु ॥ कात्यायनः ॥ उद्वपति श्रपणं देवस्त्वेति ॥ पक्वानि श्रपणानि उद्वासयेत् ॥ पाठस्तु ॥ देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्येति ॥ हे उखे, सविता देवः स्वकीयया शक्त्या त्वाम् उद्वपतु । आच्छादितश्रपणात् प्रकाशीकरोतु । उत समुच्चये । किम्भूतः सविता । सुपाणिः स्वङ्गुरिः शोभनाङ्गुलिः । रेफस्य लादेशः । सुबाहुःसुहस्ताम् ॥कात्यायनः॥ उखामुत्तानां करोत्यव्यथमाना व्यथामप्राप्नुवती सति पृथिव्यां स्थिता आशा दिशं विदिशश्चापृण पूरयाहुतिरसेन ॥ कात्यायनः ॥ उत्थापेति उद्यच्छति । अवटाद् बहिरुखामानयेत् ॥ पाठस्तु ॥ उत्थाय बृहती भवोदु तिष्ठ ध्रुवा त्वमिति ॥ ध्रुवा स्थिरा भव ॥ उ पादपूरणः ॥ कात्यायनः ॥पात्रे करोति मित्रैतामिति॥अवटादूर्ध्वमानीतामुखां पात्रे स्थापयेत्॥ पाठस्तु॥ मित्रैतां त उखां परिददाम्यभित्त्या एषा मा भेदीति,॥ हे मित्र,एतामुखां ते तव परिददामि परित्राणाय प्रयच्छामि,। किमर्थम् । अभित्त्यै अभेद-

नाय । एषा उखा गृहीता सती मा भेदि मा भिद्यताम् ॥ कात्यायनः ॥ अजापयसा च सिञ्चति वसवस्त्वेति प्रतिमन्त्रमिति ॥ वसवस्त्वेत्यादिभिश्चतुर्भिर्मन्त्रैः पृथक्पृथगजाक्षीरेणोखामासिञ्चेत् ॥ पाठस्तु ॥ वसवस्त्वाच्छृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत् । आदित्यास्त्वा छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिति ॥ हे उखे वसुनामका देवा अङ्गिरस इव त्वां सिञ्चन्तु । एवमुत्तरत्र योज्यम् ॥ इति द्वादशेऽध्याये षष्ठोऽनुवाकः ॥ १२ ॥६॥

षष्ठेऽनुवाके उखासम्भार उक्तः ॥ सप्तमे स्त्रौद्ग्रहणमन्त्राः समिदाधानमन्त्राश्चोच्यन्ते ॥ कात्यायनः ॥ प्राकृतान्यौद्ग्रहणानि हुत्वा सप्ताग्निकान्याऽऽकूतिमिति प्रतिमन्त्रमिति ॥ दीक्षाकाले सोमयागकर्तव्यान्याकूत्यै प्रयुजेऽग्नये स्वाहेत्यौद्ग्रहणानि हुत्वा पश्चादग्निचयनसम्बन्धीनि आकूतिमग्निं प्रयुजꣳ स्वाहेत्यादीनि सप्तौद्ग्रहणानि प्रत्येकं जुहुयात् ॥ पाठस्तु ॥ आकूतिमग्निं प्रयुजꣳ स्वाहा मनो मेधामग्निं प्रयुजꣳ स्वाहा । चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा । प्रजापतये मनवे स्वाहाऽग्नये वैश्वानराय स्वाहा । विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति ॥ आकूतिरस्मदीयः सङ्कल्पोऽनुष्ठानविषयः । तं प्रतियुजं प्रेरकमुद्दिश्य स्वाहा सुहुतमस्तु । अनुष्ठेयस्मरणसाधनं यन्मनः श्रुतयोर्मन्त्रतन्त्रयोर्धारणशक्तिर्या मेधा तदुभयं प्रति योजकमग्निमुद्दिश्य सुहुतमिदमस्तु । अविज्ञातस्यानुष्ठानज्ञानस्य ज्ञानसाधनं यच्चित्तं, यदपि तेन प्रचितेन ज्ञानमनुष्ठानं तदुभयं प्रति प्रेरकमग्निमुद्दिश्य सुहुतमस्तु ॥ वाचो मन्त्रपाठरूपाया विधृतिर्विधारणं प्रति प्रेरकमग्निमुद्दिश्य सुहुतमस्तु । मनवे च मनुष्याणां जनकाय प्रजापतये सुहुतमस्तु । विश्वेषां नराणामनुग्राहकत्वेन वैश्वानरायाग्नये सुहुतमस्तु । विश्वः मर्तः नेतुः फलप्रापकस्य देवस्य दानादिगुणयुक्तस्य सख्यं सखिभावं वुरीत वृणुते प्रार्थयते । किञ्च, विश्वः सर्वो जनः । राये धनाय इषुध्यति । प्रार्थयते । तत्कर्मत्वेऽयं धातुः पठितः । किञ्च पुष्यसे पोषणाय द्युम्नं यशोऽन्नं वा । यास्केनोक्तत्वात् । वृणीत सर्वो जनः प्रार्थयते । स्वाहा तस्मै प्रेरकाय देवाय सुहुतमस्तु ॥ कात्यायनः ॥ अध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मा सु भित्था इति ॥ मा सु भित्था इति मन्त्रद्वयस्य प्रतीकग्रहणमिदम् । अनेन मन्त्रेण, दृꣳहस्वेत्युत्तरेणा-

ऽध्वर्युयजमानयोरन्यतर उखामाहवनीये स्थापयेत् ॥ तत्र मथममन्त्रपाठस्तु ॥ मा सु भित्था मा सुरिषोऽम्ब धृष्णु वीरयस्व सु । अग्निश्चेदं करिष्यथ इति॥ हे उखे, त्वं मा भित्थाः भिन्ना मा भव । तदिदमभिन्नत्वं सुष्ठु कर्तव्यम् । तथा मा रिषः । स्फुटनेनाऽपि हिंसिता मा भव । तदेतदस्फुटनं सुष्ठु कर्तव्यम् । सर्वात्मना द्वैधीभावो भेदः । लेशस्य पृथग्भावः स्फुटनम् । तदुभयं ते तव मा भूदित्यर्थः । धृष्णु धर्षणयुक्ते ! हे अम्ब, हे मातः, उखे, त्वं वीरयस्व शोभनमग्निधारणलक्षणं वीरकर्म कुरुष्व । किञ्चाग्निश्च त्वं च मिलित्वेद-मस्मदीयं कर्म करिष्यथः ॥ अथ द्वितीयः ॥ दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृताऽसि । जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन्निति ॥ हे पृथिवि देवि । मृत्कार्यत्वात् पृथिवीरूपत्वम् । मन्त्रै-र्निष्पादितत्वाद्देवतात्वम् । तथाविधे हे उखे, स्वस्तये यजमानस्य क्षेमार्थं दृꣳहस्व दृढा भव । आसुरीमाया शम्बराद्यसुरनिर्मितमायेव स्वधया कृताऽसि । कव्यप्रधानया विना स्वधाशनान्नमात्रमुपलक्ष्यते । तेन निमित्तभूतेन तद्धेतु-यागसिद्ध्यर्थं निष्पादिता आसुरी माया । यद्वदविन्त्यरचनारूपं चित्रं वस्तु सहसा भूत्वा प्रतिभाति तद्वत्त्वमपि द्विस्तनत्वादिरचनया युक्ता निष्पन्ना-ऽसीत्यर्थः । त्वन्मुखान्निष्पत्स्यमानमिदं हव्यं जुष्टं प्रियमस्तु । त्वमप्यरिष्टा केनाप्यहिंसा सती अस्मिन् यज्ञे उदिहि । उद्गता भव ॥ कात्यायनः ॥ त्रयोदशप्रादेशमात्राः समिध आदधाति घृताक्तां कार्मुकीं द्रून्न इतीति ॥ अस्यां तप्यमानायामुखायां प्रादेशपरिमितास्त्रयोदशसंख्याकाः समिध आद-ध्यात् । तत्र प्रथमकार्मुकसम्बन्धिनीं घृतेनाक्तां समिधं, द्रून्नं इत्येतेनादध्यात् ॥ पाठस्तु ॥ द्रून्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुत इति ॥ अत्रोत्पत्स्यमानोऽग्निरेतैर्विशेषणैः प्रशस्यते । द्रुशब्देन वृक्षा उच्यन्ते ॥ द्रुपदमित्याह वनस्पतीच्छो नामैवैतेन यजत इति श्रुत्यन्तरात् । द्रुपदो वृक्षा एवान्नं यस्यासौ द्रून्नः । द्रु गतौ । द्रवत् अन्नं यस्य सः । सर्पिः घृतम्आसुति-रवस्थानं यस्येति वा, सर्पिरेव आहारत्वेन सूयते प्रक्षिप्यते यस्मिन्निति सा सर्पिरासुतिः । पुरातनो होता देवानामाह्वाता । वरेण्यो वरणीयः । सहसो बलस्य पुत्रः मथनहेतुना बलनोत्पद्यमानत्वाद् अद्भुत आश्चर्यरूपः । एवम्भूत उखायां तिष्ठन्नग्निः कार्मुकीं समिधं भक्षयत्विति शेषः ॥

कात्यायनः ॥ वैकङ्कतीं परस्या इति ॥ वैकङ्कतवृक्षसम्बन्धिनीं समिधं

परस्या इत्यनेनादध्यात् ॥ पाठस्तु ॥ परस्या अधि संवतोऽवराँऽअभ्यातर ।
यत्राहमस्मि ताँऽअवेति ॥ सम्यगुत्तनुते देवान् यजते यस्यां क्रियायां सा क्रिया
संवत् तस्याः संवतः । परस्याः संवतोऽपि उत्कृष्टाया इष्टेरधिष्ठानात्पास्त्वमवरान्
निकृष्टानप्यस्मान् अभ्यातर । आभिमुख्येनागत्य दुःखानि तारय । यत्र
येषु बन्धुष्वहमस्मि तानपि बन्धूनव रक्ष ॥ कात्यायनः ॥ औदुम्बरीं परमस्या
इतीति ॥ उदुम्बरवृक्षसम्बन्धिनीं समिधमादध्यात् ॥ पाठस्तु ॥ परमस्याः
परावतो रोहिदश्व इहागहि । पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृध इति ॥ इहा-
गहि आगच्छतु । कीदृशस्त्वम् । रोहिदश्वः । लोहितवर्णोऽश्वो यस्यासौ
रोहिदश्वः । इत एवान्यत्राम्नायते । रोहितेन चाग्निर्देवानां गच्छति । पुरीषम्
पशुहेतुभूतं पांसुं वहतीति पुरीष्यः । पुरूणा बहूना यजमानाना मियः
पुरुप्रियः । तादृशस्त्वं मृधस्तर शत्रूनतिलङ्घय ॥ कात्यायनः ॥ परशुवृक्णां
यदग्ने इतीति ॥ परशुना छिन्नां समिधमादध्यात् ॥ पाठस्तु ॥ यदग्ने कानि
कानिचिदा ते दारूणि दध्मसि । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्येति ॥
हे अग्ने, त्वदर्थं यथानि कानिचिद्दारूणि । दारुशब्देनात्र कुठारच्छेदरहितमर-
दारितं काष्ठमुच्यते । तादृशानि कानि कान्यप्यरण्ये पतितानि काष्ठान्यानीय
दध्मसि धारयामः । तत्सर्वं काष्ठजातं त्वदर्थं घृतं प्रियमस्तु । हे यविष्ठ्य
युवतम, तद्दारुजातं जुष सेवस्व ॥ कात्यायनः ॥ अधःशया यदत्त्युपेतीति ॥
स्वयमेव भूमौ पतिता समिधमादध्यात् ॥ पाठस्तु ॥ यदत्त्युपजिह्विका यद्वम्रो-
ऽअतिसर्पति । सर्वं तदस्तु घृतं तज्जुषस्व यविष्ठ्येति ॥ मौढा प्रधाना
ज्वाला जिह्वा । तत्समीपवर्तिनी क्षुद्रज्वालोपजिह्विका । अस्माभिरानीतेषु
दारुषु मध्ये यद्दारु महारण्ये दावाग्नेरुपजिह्विका अल्पज्वाला अत्ति भक्षयति
ईषद्दहतीत्यर्थः । वम्रशब्दः पिपीलिकासदृश क्षुद्रजीवमाचष्टे । स च यत्काष्ठ-
मतिसर्पति । अतिशयेन प्राप्नोति । काष्ठाश्रयेषु तत्र तत्र सारं भक्षयतीत्यर्थः ।
तत्सर्वं घृतमस्त्वित्यादिपूर्ववत् ॥ कात्यायनः ॥ पालाशीः मत्यूचमहरहरित्यु-
पोत्तमा क्षत्रियस्योत्तमां पुरोहितस्योभे स्वाहाकारः सर्वास्विति ॥ त्रयोदश-
संख्यासु मध्ये द्वस इत्यादिभिर्मन्त्रैः कार्मुखादीन् पञ्च समिद्विशेषाः सन्धाय
इत उत्तरैरहरहरित्यादिकैर्मन्त्रैः क्रमेण पलाशसम्बन्धिनीः समिध आदध्यात् ।
यदि क्षत्रियो यजमानः स्यात्तत उपोत्तमामादध्यात् । यदि हि पुरोहितः स्या-
त्तदान्तिमामादध्यात् । यदि क्षत्रियपुरोहिताभ्यामुभाभ्यां व्यतिरिक्तः स्या-

मन्त्रोपोत्तममामन्तिमे उभे समिधावादध्यात् । सर्वास्वाहुतिषु स्वाहाकारः प्रयोक्तव्यः । तयोदशर्शसंख्यापक्षोऽहरहरित्ययं पष्ठो मन्त्रः ॥ अहरहरप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै । रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषामेति ॥ हे अग्ने, ते तव प्रतिवेशाः प्रत्यासन्ना वयं मा रिषाम हिंसनं मा प्राप्नुमः । किं कुर्वन्तः ।रायस्पोषेण धनपुष्ट्या इषाऽन्नेन च मदन्तो हर्षं कुर्वन्तः । तथा अहरहरप्रयावं प्रतिदिनं पृथग्भावमकृत्वा एकमपि दिनमवर्जयित्वेत्यर्थः । अस्मै अग्नये घासं समिद्रूपं भक्ष्यं भरन्तः सम्पादयन्तः । तत्र दृष्टान्तः । तिष्ठतेऽश्वायेव । वाजिशालाया बद्ध्वा स्थापिताय प्रौढायाश्वाय एकमपि दिनमवर्जयित्वा यथा घासं प्रयच्छन्ति तद्वत् ॥ अथ सप्तमः ॥ नाभा पृथिव्याः समिधाने अग्नौ रायस्पोषाय बृहते हवामहे । इरम्मदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिमिति ॥ नाभा पृथिव्याः पृथिवीरूपाया उत्तराया मध्ये समिधाने सम्यग्दीप्यमानेऽग्नौ एतावदभिमानिनं देवं हवामहे । आह्वयामः । किमर्थम् । बृहते प्रौढाय रायस्पोषाय धनस्य पोषाय । कीदृशमग्निम् । इरम्मदम् इरयाऽन्नेन माद्यतीतीरम्मदः । तथाविधं बृहन्ति प्रौढान्युक्थानि प्रशसनानि यस्यासौ बृहदुक्थः । तादृशं यजत्रं यागहेतुं जेतारं राक्षसादिविषये जयशील पृतनासु सङ्ग्रामेष्वस्मच्छत्रूणामतिशयेन सोढारम् ॥ अथाष्टमः ॥ याः सेना अभीत्वरीराव्याधिनीरुगणा उत । ये स्तेना ये च तस्करास्तांस्तेअग्नेऽपिदधाम्यास्यइति॥ याःकाश्चित् परकीयसेना अभीत्वरीः अस्मदाभिमुख्येनागमनशीलाः । आव्याधिनीः सर्वतोऽस्मान् पीडयन्त्यः । उगणाः उत्कृष्टगणोपेता बहुस्तोमा इत्यर्थः । एवंविधा याः सेनाः सन्ति । उत अपि च ये स्तेना गुप्तचौरा ये च तस्करास्तान् सर्वान् हे अग्ने, ते तवास्ये मुखे अपिदधामि प्रक्षिपामि ॥ अथ नवमः ॥ दंष्ट्राभ्यां मलिम्लून् जम्भ्यैस्तस्करां उत । हनुभ्यां स्तेनान् भगवस्तांस्त्वं खाद सुखादितानिति ॥ गुप्ताः प्रकटाश्च ये द्विविधाश्चौराः । प्रकटा अपि पुनर्द्विविधाः । अरण्येषु मार्गमध्येऽपहृत्य प्रत्यक्षमेव पलायमानाः प्रकटाः । ततोऽप्यतिप्रकटा निर्भया ग्रामेष्वागस वन्दीकाराः । तेऽप्यत्र मलिम्लुच इत्युच्यन्ते । मलं पापं धीर्येषामस्तीति मलिनः । तथाविधा भूत्वा म्लायन्ति चौर्यं कुर्वन्तीति मलिम्लुचः । दन्तपङ्क्तिमध्ये याभ्यां तीक्ष्णदन्ताभ्यां क्रमुकादिफलं भक्ष्यते ते दंष्ट्रे।ततः पुरोवर्तिनो दृश्यमाना दन्ता जम्भ्याः । अन्तर्लीने च

हनू । तत्र मलिम्लुचं दंष्ट्राभ्यां पीडयित्वा जम्भ्यैस्तस्करानपि पीडयित्वा हनुभ्यां स्तेनान् पीडयित्वा, हे भगवः, पूजनीयाग्ने, तान् सर्वान् सुष्ठुसादितान् पुनर्जीवनरहिता यथा भवन्ति तथा त्वं खाद भक्षय ॥ अथ दशमः ॥ ये जनेषु मलिम्लवस्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्तांस्ते दधामि जम्भयोरिति ॥ ग्रीष्मवर्तिषु जनेषु वने गच्छत्सु च येऽनेकविधाः पूर्वोक्ताश्चोराः सन्ति, ये चान्ये व्याघ्रादयः कक्षेषु कुञ्जेषु स्थित्वा अघायवो भवन्ति । अघं पापं हिंसनमिच्छन्तीत्यघायवस्तान् सर्वांस्ते तव जम्भयोर्दधामि स्थापयामि ॥ अथ कादशः ॥ यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान् धिप्साच्च सर्वं तं मस्मसाकुर्विति ॥ पूर्वं चौरभेदा दर्शिताः । इदानीं शत्रुभेदा उच्यन्ते । ते च त्रिविधाः । अरातयो द्वेषिणो निन्दकाश्चेति । तत्र दातव्यत्वेन मतं धनं यो न ददाति सोऽयमरातीः । कार्यविघातं यः करोति स द्वेषी । वाग्दौर्जन्यमात्रं यः करोति निन्दकः । हन्तुकामश्चतुर्थः । तत्र योऽस्मभ्यमरातीयात् अरातित्वमिच्छति । यश्च नोऽस्मान् द्वेष्टि तत्कार्यनाशेन बाधते । यः अन्यो निन्दात् निन्दति । यश्चापरोऽस्मान् धिप्सात् । दम्भेःसन्नन्तस्याभ्यासस्य लोपः । दभितुं हिंसितुमिच्छति । यश्च नोऽस्मान् द्वेषते कार्यनाशेन बाधते । तत्सर्वं जनं मस्मसाकुरु चूर्णेन जनितस्य शब्दस्यानुकरणं मस्मसेति । चूर्णीकुर्वित्यर्थः ॥ अथ द्वादशः ॥ सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहित इति ॥ मे मदीयं ब्रह्म ब्राह्मण्यं सꣳशितं सम्यक्तीक्ष्णीकृतम् । शास्त्रीयमार्गवर्ति कृतमित्यर्थः । तथा वीर्यं शक्तिः, बलं शरीरशक्तिस्तदुभयं सꣳशितं स्वकार्यक्षमं कृतम् । तथा यस्य क्षत्रियस्याहं पुरोहितोऽस्मि, मे मदीयं तत्क्षत्र जिष्णु जयशीलं यथा भवति तथा सꣳशितम् ॥ अथ त्रयोदशः ॥ उदेषां बाहू अतिरमुद्वर्चो अथो बलम् । क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वाꣳअहमिति ॥ एषा स्वकीयानां राजब्राह्मणादीनां मध्य एकैकस्य बाहू उदतिरम् । उत्कर्षेण वर्द्धितवानस्मि । लौकिकोक्तिरियम् । लोके हि यस्मादुत्कृष्टो भवति तं जना एवमाहुः, स्वकीयं हस्तमुपरितनं कृतवानिति । वर्चः कान्तिः तामप्युदतिरम् । अथो अपि च बलं शरीरशक्तिमप्युदतिरम् । ब्रह्मणा मन्त्रसामर्थ्येन अमित्रान् शत्रून् क्षिणोमि क्षीणान् करोमि । स्वान् स्वकीयान् पुरुषानहमुन्नयामि उत्कर्षं प्रापयामि ॥ एवं त्रयोदशमन्त्रानुक्त्वाथोचमौ द्वौ वैकल्पिकमन्त्रावुच्येते ॥ तत्र प्रथममन्त्रः॥

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे । विश्वकर्मणे स्वाहेति ॥ हे अन्नपते, अग्ने, अनमीवस्य रोगरहितस्य शुष्मिणो बलहेतोरन्नस्य मांशं देहि । प्र प्रदातारं प्रकर्षेण हविषो दातारं यजमानं प्रतारिषः प्रकर्षेण दुरितानि तारय । नोऽस्माकं द्विपदे मनुष्याय चतुष्पदे पशवे च ऊर्जं बलम् अन्नं वा धेहि सम्पादय । विश्वकर्मणे समस्तजगत्सृष्टिस्थित्यादिकर्मकर्त्रे तुभ्यं स्वाहा सुहुतमस्तु ॥ अथ द्वितीयः ॥ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहेति ॥ हे अग्ने त्वामादित्या रुद्रा वसवश्च पुनः समिन्धताम् । उपशान्तं पुनर्दीपयन्तु । हे वसुनीथ, वसूनां धनानां नेतः प्रापयितः, ब्रह्माणो ब्राह्मणा ऋत्विजो यज्ञैर्निमित्तभूतैस्त्वां पुनः समिन्धताम् । त्वं च घृतेन तुष्टः सन् तन्वमात्मीयं शरीरं वर्द्धयस्व । ततस्त्वयि तुष्टे सति यजमानस्य कामाः सत्याः सन्तु ॥ स्वाहेति होमार्थः ॥ इति द्वादशेऽध्याये सप्तमोऽनुवाकः ॥ १२ ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः ॥ १३ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

द्वादशेऽध्याये उखासम्भरणादिमन्त्रा उक्ताः । त्रयोदशे तु रुक्मधारणादिमन्त्रा उच्यन्ते । तत्र प्रथमेऽनुवाके आसन्द्यामुख्यास्थापनं प्रतिपाद्यते ॥ कात्यायनः ॥ यजमानकण्ठे रुक्मं प्रतिमुञ्चते दृशानो रुक्म इतीति ॥ सुवर्णनिर्मितः फलकाकार आभरणविशेषो रुक्मः । तं कण्ठे बध्नीयात् ॥ पाठस्तु॥ दृशानो रुक्म उर्व्या व्यद्यौद् दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतोअभव-

हनू । तत्र मलिम्लुचं दंष्ट्राभ्यां पीडयित्वा जम्भ्यैस्तस्करानपि पीडयित्वा हनुभ्यां स्तेनान् पीडयित्वा, हे भगवः, पूजनीयाग्ने, तान् सर्वान् सुष्ठुखादितान् पुनर्जीवनरहिता यथा भवन्ति तथा त्वं खाद भक्षय ॥ अथ दशमः ॥ ये जनेषु मलिम्लवस्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्ताँस्ते दधामि जम्भयोरिति ॥ ग्रीष्मवर्तिषु जनेषु वने गच्छत्सु च येऽनेकविधाः पूर्वोक्ताश्चौराः सन्ति, ये चान्ये व्याघ्रादयः कक्षेषु कुञ्जेषु स्थित्वा अघायवो भवन्ति । अघं पापं हिंसनमिच्छन्तीत्यघायवस्तान् सर्वांस्ते तव जम्भयोर्दधामि स्थापयामि ॥ अथ कादशः ॥ योअस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान् धिप्साच्च सर्वं तं मस्मसाकुर्विति ॥ पूर्वं चौरभेदा दर्शिताः । इदानीं शत्रुभेदा उच्यन्ते । ते च त्रिविधाः । अरातयो द्वेषिणो निन्दकाश्चेति । तत्र दातव्यत्वेन प्राप्तं धनं यो न ददाति सोऽयमरातीः । कार्यविघातं यः करोति स द्वेषी । वाग्दौर्जन्यमात्रं यः करोति निन्दकः । हन्तुकामश्चतुर्थः । तत्र योऽस्मभ्यमरातीयात् अरातित्वमिच्छति । यश्च नोऽस्मान् द्वेष्टि तत्कार्यनाशेन बाधते । यः अन्यो निन्दात् निन्दति । यश्चापरोऽस्मान् धिप्सात् । दभेःसन्नन्तस्याभ्यासस्य लोपः । दभितुं हिंसितुमिच्छति । यश्च नोऽस्मान् द्वेषते कार्यनाशेन बाधते । तत्सर्वं जनं मस्मसाकुरु चूर्णेन जनितस्य शब्दस्यानुकरणं मस्मसेति । चूर्णीकुर्वित्यर्थः ॥ अथ द्वादशः ॥ सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहित इति ॥ मे मदीयं ब्रह्म ब्राह्मण्यं सꣳशितं सम्यक्तीक्ष्णीकृतम् । शास्त्रीयमार्गवर्ति कृतमित्यर्थः । तथा वीर्यं शक्तिः, बलं शरीरशक्तिस्तदुभयं सꣳशितं स्वकार्यक्षमं कृतम् । तथा यस्य क्षत्रियस्याहं पुरोहितोऽस्मि, मे मदीयं तत्क्षत्रं जिष्णु जयशीलं यथा भवति तथा सꣳशितम् ॥ अथ त्रयोदशः ॥ उदेषां बाहू अतिरमुद्वर्चोअथो बलम् । क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वाँऽअहमिति ॥ एषां स्वकीयानां राजब्राह्मणादीनां मध्य एकैकस्य बाहू उदतिरम् । उत्कर्षेण वर्द्धितवानस्मि । लौकिकोक्तिरियम । लोके हि यस्मादुत्कृष्टो भवति तं जना एवमाहुः, स्वकीयं हस्तमुपरितनं कृतवानिति । वर्चः कान्तिः तामप्युदतिरम् । अथो अपि च बलं शरीरशक्तिमप्युदतिरम् । ब्रह्मणा मन्त्रसामर्थ्येन अमित्रान् शत्रून् क्षिणोमि क्षीणान् करोमि । स्वान् स्वकीयान् पुरुषानहमुन्नयामि उत्कर्षं प्रापयामि ॥ एवं त्रयोदशमन्त्रानुक्त्वाथोत्तमौ द्वौ वैकल्पिकमन्त्रावुच्येते ॥ तत्र प्रथममन्त्रः॥

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे । विश्वकर्मणे स्वाहेति ॥ हे अन्नपते, अग्ने, अनमीवस्य रोगरहितस्य शुष्मिणो बलहेतोरन्नस्य प्राशिं धेहि । प्र प्रदातारं प्रकर्षेण हविषो दातारं यजमानं प्रतारिषः प्रकर्षेण दुरितानि तारय । नोऽस्माकं द्विपदे मनुष्याय चतुष्पदे पशवे च ऊर्जं बलम् अन्नं वा धेहि सम्पादय । विश्वकर्मणे समस्तजगत्सृष्टिस्थित्यादिकर्मकर्त्रे तुभ्यं स्वाहा सुहुतमस्तु ॥ अथ द्वितीयः ॥ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहेति ॥ हे अग्ने त्वामादित्या रुद्रा वसवश्च पुनः समिन्धताम् । उपशान्तं पुनर्दीपयन्तु । हे वसुनीथ, वसूनां धनानां नेतः प्रापयितः, ब्रह्माणो ब्राह्मणा ऋत्विजो यज्ञैर्निमित्तभूतैस्त्वां पुनः समिन्धताम् । त्वं च घृतेन तुष्टः सन् तन्वमात्मीयं शरीरं वर्द्धयस्व । ततस्त्वयि तुष्टे सति यजमानस्य कामाः सत्याः सन्तु ॥ स्वाहेति होमार्थः ॥ इति द्वादशेऽध्याये सप्तमोऽनुवाकः ॥ १२ ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाऽधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः ॥ १३ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

द्वादशेऽध्याये उखासम्भरणादिमन्त्रा उक्ताः । त्रयोदशे तु रुक्मधारणादिमन्त्रा उच्यन्ते । तत्र प्रथमेऽनुवाके आसन्द्यामुख्याग्निस्थापनं प्रतिपाद्यते ॥ कात्यायनः ॥ यजमानकण्ठे रुक्मं प्रतिमुञ्चते दृशानो रुक्म इतीति ॥ सुवर्णनिर्मितः फलकाकार आभरणविशेषो रुक्मः । तं कण्ठे बध्नीयात् ॥ पाठस्तु॥ दृशानो रुक्म उर्व्या व्यद्यौद् दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतोअभव-

द्युयोभिर्यदेनं द्यौरजनयत् सुरेता इति ॥ दृशानो दर्शनीयरूपो रुक्मः आभरणविशेषः । उर्व्या महत्या दीप्त्या व्यद्यौत् । विद्योतते । किं कुर्वन् । दुर्मर्षं केनाप्यतिरस्कार्यमायुर्जीवनं श्रिये श्रयितुं रुचानो वाञ्छन् । तथाविधोऽग्निर्वयोभिरन्नलक्षणैर्हविर्भिरमृतोऽभवत् । यद् यस्माद् एनमग्निं द्यौर्द्युलोकवासी देवगणः सुरेताः सन् अजनयत् । तस्मादमृतत्वमुक्तम् ॥ कात्यायनः ॥ परिमण्डलाभ्यामिन्द्राभ्यामुखां परिगृह्णाति नक्तोषासेतीति ॥ वर्तुलाभ्यामुखाधारणसाधनभूताभ्यामिन्द्राभ्यामुखां गृह्णीयात् ॥

पाठस्तु ॥ नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मोअन्तर्विभाति देवा अग्निं धारयन् द्रविणोदा इति ॥ नक्तं चोषाश्च नक्तोषसौ रात्रिदिवसावित्यर्थः । समनसा परस्परमैकमत्ययुक्तौ विरूपे रात्रिः दिवसः कृष्णा शुक्ल इत्येवं विलक्षणरूपे समीची समीच्यावनुकूलं सत्यम् एकं शिशुम् अग्निरूपं धापयेते यजमानकर्तृकमग्निधारणं सम्पादयतः ॥कात्यायनः॥ हरति द्यावा क्षामेति ॥ परिगृहीतामुखामाहवनीयदेशस्य प्राचीनदेशा प्रसाहरेत् ॥पाठस्तु॥द्यावा क्षामा रुक्मोअन्तर्विभाति॥ द्यावा द्युलोके, क्षामा क्षितौ भूलोके, अन्तस्तदुभयमध्यवर्त्यन्तरिक्षे रुक्मो रोचमानोऽग्निर्विभाति विशेषेण प्रकाशते॥ कात्यायनः॥ आहवनीयस्य पुरस्तादुद्वात्रासन्दी चतुरस्रायां शिक्यवत्यां निदधाति देवा अग्निमितीति ॥ आहवनीयस्य प्राग्देशे स्त्रोद्वात्रासन्दी चतुरस्रायुक्ता याऽऽसन्दी स्थिता तस्या उपरि स्थिते शिक्ये आहृतामुखां स्थापयेत्॥ पाठस्तु ॥ देवा अग्निं धारयं द्रविणोदा इति ॥ दीव्यन्ति व्यवहरन्तीति देवाः प्राणास्ते च द्रविणोदाः यागद्वारेण द्रविणं धनरूपं फलं प्रयच्छन्ति । तादृशा यजमानस्य प्राणा अग्निमेतं धारयन् । अधारयन् । अत्र देवशब्दस्य प्राणत्वं तैत्तिरीया आमनन्ति ॥ देवा अग्निं धारयं द्रविणोदा इति ॥ कात्यायनः ॥ शिक्यपाशं प्रतिमुञ्चति षडुद्यमं विश्वा रूपाणीति ॥ षडूर्ध्वाभिमुखा रज्जवो यस्मिन् तथाविधं शिक्यपाशं बध्नीयात् ॥ पाठस्तु ॥ विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । विनाकमख्यत्सविता वरेण्योऽनुप्रयाणमुषसो विराजतीति ॥ कविर्विद्वान् वरेण्यः श्रेष्ठः सविता विश्वा रूपाणि समस्तानि जगद्रूपाणि प्रतिमुञ्चते स्वास्मिन् स्वीकरोति प्रकाशयतीत्यर्थः । द्विपदे चतुष्पदे मनुष्याणां पशूनां च भद्रं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः प्रासावीत् सम्पादितवान् । नाकं स्वर्गं विशेषेणाख्यत् प्रकाशितवान् । उषसः प्रयाणमनु

उषःकाले वितते सति विराजते विशेषेण प्रकाशते ॥ कात्यायनः ॥ सुपर्णो-ऽसीत्यभिमन्त्रयत इति ॥ पाठस्तु ॥ सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरः । गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः । सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पतेति ॥ अग्ने, त्वं सुपर्णः पक्षिरूपोऽसि पक्ष्याकारेण चैण्य-मानत्वात् । अत एव तैत्तिरीयैराम्नायते ॥ वयसां वा एष प्रतिमा या चीयते यदग्निरिति ॥ तत्र दृष्टान्तः । गरुत्मान् यथा पक्षिराजस्तद्वत् पक्षाकारस्या-वयवाः सम्पद्यन्ते । त्रिवृत्ते शिरः । बहिष्पवमानस्तोत्रे योऽयं त्रिवृत्स्तोमः स एव शिरःस्थानीयः । प्रजापतिमुखजत्वेनोत्तमं यद् यद् गायत्राख्यं साम तद् । त्वदीयं चक्षुः यद् बृहद्रथन्तराख्ये सामानी ते तव पक्षस्थानीये । यः पञ्चद-शस्तोमः स तवात्माऽन्तःकरणम् । यानि गायत्रादीनि छन्दांसि तानि तव हृदयाद्यङ्गस्थानीयानि । यानि यजूंषि तानि तव नामस्थानीयानि । यद्वामदेवाख्यं साम तत् तव तनुः शरीरस्थानीयम् । यज्ञायज्ञियाख्यं साम तत् तव-पुच्छस्थानीयम् । ये सौमिकवेद्यां होमादिधिष्ण्यास्ते तव शफस्थानीयाः । हे अग्ने, एवम्भूतस्त्वम् । यतो गरुत्मान् गरुड इव सुपर्णः पक्षिरूपोऽसि । अतो दिवम् आकाशं प्रति गच्छ तत्रापि स्वः पत स्वर्गलोकं प्राप्नुहि ॥ का-त्यायनः ॥ विष्णुक्रमान् क्रमते विष्णोरिति प्रतिमन्त्रं चतुर्थे दिशो वीक्षते दिशोऽनुक्रमस्वेतीति ॥ विष्णोः क्रमोऽसीत्यादिभिश्चतुर्भिर्मन्त्रैः क्रमेण चतुरः पादविन्यासान् कुर्यात् । तत्र चतुर्थमन्त्रगतेन दिशोऽनुविक्रमस्वे-ति मन्त्रशेषेण ॥ तेषां पाठस्तु ॥ विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्दऽआरोह । पृथिवीमनुविक्रमस्व । विष्णोः क्रमोस्यभिमातिहा त्रैष्टुभं छन्द आरोह । अन्तरिक्षमनुविक्रमस्व । विष्णोः क्रमोऽस्यरातीयतो हन्ता जाग-तं छन्द आरोह । दिवमनुविक्रमस्व । विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनु-ष्टुभं छन्द आरोह । दिशोऽनुविक्रमस्वेति ॥ यज्ञप्रयोगं कृत्स्नं व्याप्नोती-ति विष्णुर्यजमानः । यद्वा विष्णुना परमेश्वरेणाभेदोपचारं कृत्वा विष्णुरि-त्युच्यते । हे प्रथमपादविन्यास, त्वं विष्णोः सपत्नहा शत्रुघाती क्रमोऽसि । तादृशस्त्वं गायत्रं छन्द आरोह अनुग्राहकत्वेन स्वीकुरु । ततः पृथिवीमनु-विक्रमस्व भूदेवतारूपम् इमं प्रदेशं विशेषेण व्याप्नुहि । एवमुत्तरेष्वपि योज्यम् । अभिमातिहा पापघाती । पाप्मा वा अभिमातिरिति श्रुत्यन्तरा-

द्रुयोभिर्यदेनं द्यौरजनयत् सुरेता इति ॥ दृशानो दर्शनीयरूपो रुक्मः आभरणविशेषः । उर्व्या महत्या दीप्त्या व्यद्यौत् । विद्योतते । किं कुर्वन् । दुर्मर्षं केनाप्यतिरस्कार्यमायुर्जीवनं श्रिये आश्रितुं रुचानो वाञ्छन् । तथाविधोऽग्निर्वयोभिरन्नलक्षणैर्हविर्भिरमृतोऽभवत् । यद् यस्माद् एनमग्निं द्यौर्द्युलोकवासी देवगणः सुरेताः सन् अजनयत् । तस्मादमृतत्वमुक्तम् ॥ कात्यायनः ॥ परिमण्डलाभ्यामिन्द्राभ्यामुखां परिगृह्णाति नक्तोषासेतीति ॥ वर्तुलाभ्यामुखाधारणसाधनभूताभ्यामिन्द्राभ्यामुखां गृह्णीयात् ॥

पाठस्तु ॥ नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मोअन्तर्विभाति देवा अग्निं धारयन् द्रविणोदा इति ॥ नक्तं चोषाश्च नक्तोषसौ रात्रिदिवसावित्यर्थः । समनसा परस्परमैकमत्ययुक्तौ विरूपे रात्रिः दिवसः कृष्णा शुक्ल इत्येवं विलक्षणरूपे समीची सम्यगञ्चावनुकूलं सत्यम् एकं शिशुम् अग्निरूपं धापयेते यजमानकर्तृकमग्निधारणं सम्पादयतः ॥कात्यायनः॥ हरति द्यावा क्षामेति ॥ परिगृहीतामुखामाहवनीयदेशस्य प्राचीनदेशं प्रत्याहरेत् ॥पाठस्तु॥द्यावा क्षामा रुक्मोअन्तर्विभाति॥ द्यावा द्युलोके, क्षामा क्षितौ भूलोके, अन्तस्तदुभयमध्यवर्त्यन्तरिक्षे रुक्मो रोचमानोऽग्निर्विभाति विशेषेण प्रकाशते॥ कात्यायनः॥ आहवनीयस्य पुरस्तादुद्गात्रासन्दी चतुरस्रायां शिक्यवत्यां निदधाति देवा अग्निमितीति ॥ आहवनीयस्य प्राग्देशे स्थोद्गात्रासन्दी चतुरस्रायुक्ता याऽऽसन्दी स्थिता तस्या उपरि स्थिते शिक्ये आहृतामुखां स्थापयेत्॥ पाठस्तु ॥ देवा अग्निं धारयं द्रविणोदा इति ॥ दीव्यन्ति व्यवहरन्तीति देवाः प्राणास्ते च द्रविणोदाः यागद्वारेण द्रविणं धनरूपं फलं प्रयच्छन्ति । तादृशा यजमानस्य प्राणा अग्निमेतं धारयन् । अधारयन् । अत्र देवशब्दस्य प्राणत्वं तैत्तिरीया आमनन्ति ॥ देवा अग्निं धारयं द्रविणोदा इति ॥ कात्यायनः ॥ शिक्यपाशं प्रतिमुञ्चति षड्द्यमं विश्वा रूपाणीति ॥ षडूर्ध्वाभिमुखा रज्जवो यस्मिन् तथाविधं शिक्यपाशं बध्नीयात् ॥ पाठस्तु ॥ विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । विनाकमख्यत्सविता वरेण्योऽनुप्रयाणमुषसो विराजतीति ॥ कविर्विद्वान् वरेण्यः श्रेष्ठः सविता विश्वा रूपाणि समस्तानि जगद्रूपाणि प्रतिमुञ्चते स्वस्मिन् स्वीकरोति प्रकाशयतीत्यर्थः। द्विपदे चतुष्पदे मनुष्याणां पशूनां च भद्रं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः प्रासावीत् सम्पादितवान्। नाकं स्वर्गं विशेषेणाख्यत्प्रकाशितवान्। उषसः प्रयाणमनु

उषःकाले वितते सति विराजते विशेषेण प्रकाशते ॥ कात्यायनः ॥ सुपर्णोऽसीत्यभिमन्त्रयत इति ॥ पाठस्तु ॥ सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरः । गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः । सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पतेति ॥ अग्ने, त्वं सुपर्णः पक्षिरूपोऽसि पक्ष्याकारेण चैण्यमानत्वात् । अत एव तैत्तिरीयैराम्नायते ॥ वयसां वा एष प्रतिमा या चीयते पदग्निरिति ॥ तत्र दृष्टान्तः । गरुत्मान् यथा पक्षिराजस्तद्वत् पक्षाकारस्यावयवाः सम्पद्यन्ते । त्रिवृत्ते शिरः । बहिष्पवमानस्तोत्रे योऽयं त्रिवृत्स्तोमः स एव शिरःस्थानीयः । प्रजापतिमुखजत्वेनोत्तमं यद् यद् गायत्राख्यं साम तद् त्वदीयं चक्षुः यद् बृहद्रथन्तराख्ये सामानी ते तव पक्षस्थानीये । यः पञ्चदशस्तोमः स तवात्माऽन्तःकरणम् । यानि गायत्रादीनि छन्दांसि तानि तव हृदयाद्यङ्गस्थानीयानि । यानि यजूंषि तानि तव नामस्थानीयानि । यद्वामदेव्याख्यं साम तद् तव तनूः शरीरस्थानीयम् । यज्ञायज्ञियाख्यं साम तद् तवपुच्छस्थानीयम् । ये सौमिकवेद्यां होमादिधिष्ण्यास्ते तव शफस्थानीयाः । हे अग्ने, एवम्भूतस्त्वम् । यतो गरुत्मान् गरुड इव सुपर्णः पक्षिरूपोऽसि । अतो दिवम् आकाशं प्रति गच्छ तत्रापि स्वः पत स्वर्गलोकं प्राप्नुहि ॥ कात्यायनः ॥ विष्णुक्रमान् क्रमते विष्णोरिति प्रतिमन्त्रं चतुर्थे दिशो वीक्षते दिशोऽनुक्रमस्वेतीति ॥ विष्णोः क्रमोऽसीत्यादिभिश्चतुर्भिर्मन्त्रैः क्रमेण चतुरः पादविन्यासान् कुर्याद । तत्र चतुर्थमन्त्रगतेन दिशोऽनुविक्रमस्वेति मन्त्रदोषेण ॥ तेषां पाठस्तु ॥ विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्दऽआरोह । पृथिवीमनुविक्रमस्व । विष्णोः क्रमोस्यभिमातिहा त्रैष्टुभं छन्द आरोह । अन्तरिक्षमनुविक्रमस्व । विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह । दिवमनुविक्रमस्व । विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आरोह । दिशोऽनुविक्रमस्वेति ॥ यज्ञप्रयोगं कृत्स्नं व्याप्नोतीति विष्णुर्यजमानः । यद्वा विष्णुना परमेश्वरेणाभेदोपचारं कृत्वा विष्णुरित्युच्यते । हे प्रथमपादविन्यास, त्वं विष्णोः सपत्नहा शत्रुघाती क्रमोऽसि । तादृशस्त्वं गायत्रं छन्द आरोह अनुग्राहकत्वेन स्वीकुरु । ततः पृथिवीमनुविक्रमस्व भूदेवतारूपम् इमं प्रदेशं विशेषेण व्याप्नुहि । एवमुत्तरेष्वपि योज्यम् । अभिमातिहा पापघाती । पाप्मा वा अभिमातिरिति श्रुत्यन्तरा-

त ॥ अरातिर्दातव्यस्य दानाऽभावः । तमात्मन इच्छतीत्यरातीयत् । तस्य हन्ता विनाशकः । प्रहारे हन्तृत्वं तदिच्छतीति शत्रूयत् तस्य हन्ता विनाशकः । अत्र सर्वत्र यजमानः स्वात्मानं विष्णुत्वेन भावयेत् । चतुर्णां प्रक्रमाणां प्रदेशान् पृथिव्यादिलोकरूपत्वेन भावयेत् । गायत्र्यादिछन्दोऽभिमानिदेवतास्तेषां प्रक्रमाणामनुग्राहिकाः ॥ कात्यायनः ॥ प्राग्रुदङ्ङ्ं प्रगृह्णात्यक्रन्ददग्निरिति ॥ अग्निं पिण्डवारमगृह्णाति ॥ पाठस्तु ॥ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो विहीमिद्धो अख्यदारोदसी भानुना भात्यन्तरिति ॥ अयमग्निरक्रन्दत् अस्मदरिष्टनिवारणार्थं गर्जतु । किमिव । स्तनयन्निव द्यौः । यथा द्युलोकस्थो मेघो गर्जन् सस्यशोषणभीतिं निवारयति तद्वत् । किं कुर्वन् । क्षाम दाहकमस्मद्विरुद्धं रेरिहत् लेलिहानः । वीरुधः समञ्जन् । पुष्पलतावदस्मदनुकूलानि सम्यगभिव्यञ्जयन् । हि यस्मात् । जज्ञानः उत्पद्यमानः । सद्यः इदानीमेव इद्धो दीप्तो व्यख्यन् विविधं जगत्प्रकाशयति । रोदसी द्यावापृथिव्योरन्तः भानुना रश्मिना स्वयमाभाति समन्तात् प्रकाशते ॥ कात्यायनः ॥ अवहरत्यग्नेऽभ्यावर्तिन्निति ॥ अग्नेऽभ्यावर्तिन्नित्यादिभिश्चतुर्भिर्मन्त्रैः उख्यमग्निमवहरेत् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ अग्नेऽभ्यावर्तिन्नभि मा निवर्तस्वायुषा वर्चसा प्रजया धनेन । सन्या मेधया रय्या पोषेणेति ॥ आभिमुख्येनावर्तितुं शीलमस्यास्तीत्यभ्यावर्ती । तादृश हे अग्ने, आयुरादिभिः सह मामभिलक्ष्य वर्तस्व आवर्तस्व । आयुरपमृत्युरहितं वर्चः कान्तिर्बलं चायुः प्रजापुत्रादिधनं रत्नसुवर्णादिराशिं यदृष्वा दिग्भ्यः सम्पादितस्य दानम् । मेधा श्रुतार्थधारणाशक्तिरपि पश्वादिः पोषः पश्वादेः पुष्टिः । एतैः सर्वैरायुरादिभिः सह मा शीघ्रमागच्छेत्यर्थः ॥ अथ द्वितीयः ॥ अग्ने आङ्गिरः शतं ते सन्त्वावृतः सहस्रं तऽउपावृतः । अधा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधीति ॥ हे आङ्गिरः, अङ्गसौष्ठवयुक्ताग्ने ते तवावृतः शतं सन्तु । आवृत्तिशक्तयः शतसंख्याका भवन्तु ॥ तथा ते तवोपावृत्तिशक्तयः शतसंख्या भवन्तु । स्वस्यैवावर्तनमावृत्तः समीपवर्तिनां पुरुषाणां द्रव्यविशेषाणां वा वर्तनमुपावृत्। अस्मासु स्नेहातिशयेन त्वमपि पुनःपुनरावर्तस्व त्वदीयाःपुरुषास्त्वदीयानि च द्रव्याणि पुनःपुनरावर्तन्तामित्यर्थः। अथापि च शतसहस्रसंख्याकानामावृत्त्युपावृत्तिशक्तीनां यः पोषः समृद्धिस्तस्यापि पोषस्यान्यः पोषो मूललक्षादिसंख्याकाभिवृद्धिस्तादृशेन पोषेण नोऽस्मदीयं नष्टं धनं पुनर्भूयोऽप्याकृ-

षि आवृत्तं कुरु । पुनर्भूयोऽपि नोऽस्मदीयं पूर्वमसम्पादितं धनमाकृधि सर्वतः सम्पादितं कुरु ॥ अथ तृतीयः ॥ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहस इति ॥ हे अग्ने, त्वम् ऊर्जा क्षीरादिरसेन सह पुनर्निवर्तस्वात्रागच्छ । अनेन आयुषा जीवनेन इषान्नेन च सह पुनरागच्छ । आगत्य च नोऽस्मान् पुनः कृतादंहसः पापात् पाहि रक्ष ॥ अथ चतुर्थः ॥ सहरय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परीति ॥ हे अग्ने, रय्या धनेन सह निवर्तस्व । प्सा भक्षण इति धातुः । विश्वैः प्स्यायते भक्ष्यते पीयत इति विश्वप्स्नी । तादृश्या वृष्टिधारया विश्वतस्परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्च ॥ कात्यायनः ॥ उपरिनाभि धारयन्नाल्वाहार्षमित्यभिमन्त्रयत इति ॥ उरुप्रमर्ग्नं नाभेरूर्ध्वं धारयेत्तमभिमन्त्रणं कुर्यात् ॥ पाठस्तु ॥ आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशदिति ॥ हे अग्ने त्वामाहार्षम् आहृतवानस्मि । त्वं चोखायामन्तरभूः । अत्रस्थितोऽसि । अविचाचलिः । अत्यन्तचलनरहितो ध्रुवस्तिष्ठ । सर्वा विशः प्रजास्त्वां वाञ्छन्तु । त्वच इदं राष्ट्रं मा अधिभ्रशत् शून्यं मा भूयात् । त्वमस्मिन् राष्ट्रे स्थित्वा सर्वाः प्रजाः पाहीत्यर्थः ॥ कात्यायनः ॥ पाशादुन्मुच्योदुत्तममितीति ॥ शिक्यपाशं विस्रंसेत् ॥ पाठस्तु ॥ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳ श्रथाय । अथा वयमादित्यव्रते तवानागसोऽअदितये स्यामेति ॥ हे वरुण, उदुत्तमम् उत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशम् उत्कृष्य श्रथाय विनाशय । अधममधमाङ्गे पादप्रदेशे स्थापितं पाशमवकृष्य विनाशय । मध्यमं मध्यप्रदेशे स्थापितं पाशं विच्छेदय । अथ पाशत्रयविनाशनानन्तरं, हे आदित्य, अदितिपुत्र, वरुण, वयमनागसः पापरहितास्तव व्रते त्वदीयकर्मणि अदितये अखण्डितत्वाय स्याम योग्या भवेम ॥ कात्यायनः ॥ प्रगृह्यास्यग्ने बृहन्नितीति ॥ पाठस्तु ॥ अग्ने बृहन्नुषसामूर्ध्वोऽअस्थान्निर्जगन्वांतमसो ज्योतिषाऽऽगात् । अग्निर्भानुना रुशता स्वङ्ग आजातो विश्वासद्मान्यप्रा इति ॥ अयमग्निर्बृहन्महानुषसामग्रे उपसां मुखे ऊर्ध्वोऽअस्थात् । अग्निहोत्रादौ बोध्यमान उत्तिष्ठति । ज्योतिषा स्वकीयेन तेजसा तमसा निर्जगन्वान् निर्गतः सद्मागात् । इहागतः कीदृशोऽग्निः । रुशता तमो हिंसता भानुना रश्मिना स्वङ्गः शोभनशरीरः । किञ्च, जात उत्पन्नमात्र एव विश्वा सद्मानि सर्वाणि स्थानानि अप्राः । स्वकीयेन तेजसा सर्वत्र पूरितवान् ॥

कात्यायनः ॥ अवहरति हंसः शुचिषदिति । आसन्द्यां करोति बृहदितीति ॥ हंसः शुचिषदित्यनेन मन्त्रेण उखामवहृत्वा बृहदितितस्योत्तमेन पदेन आसन्द्यां स्थापयेत् ॥ पाठस्तु ॥ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदिति॥ अयं मन्त्रः पूर्वमेकादशेऽध्याये व्याख्यातः ॥ कात्यायनः ॥ उपतिष्ठते सीद त्वमितीति ॥ सीद त्वमित्यादिभिस्त्रिभिर्मन्त्रैरुपस्थानं कुर्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनां तपसा मार्चिषाऽभिशोचीरन्तरस्याᳪ शुक्रज्योतिर्विभाहीति ॥ हे अग्ने, त्वं मातृसमानाया अस्या उखाया उपस्थे उत्सङ्गे सीद त्वमुपविश । कीदृशस्त्वम् । विश्वानि वयुनानि सर्वान् ज्ञानोपायान् विद्वान् जानन् । एनामुखां तपसा सन्तापेन माभिशोचीः अत्यन्तं मा दीपय । अर्चिषा ज्वालया मा शोचीः तपः कार्यम्, अर्चिः कारणम् । कार्येण भूयाँस्तापो भवति । कारणेन स्तोकः । तदुभयं मा कुर्वित्यर्थः । अस्यामुखायाम् अन्तः शुक्रज्योतिः निर्मलप्रकाशः सन् विभाहि विशेषेण दीप्यस्व ॥ अथ द्वितीयः ॥ अन्तरग्ने रुचा त्वमुखायाः सदने स्वे । तस्यास्त्वᳪ हरसा तपञ्जातवेदः शिवो भवेति ॥ हे अग्ने, त्वम् उखाया अन्तर्मध्ये स्वे सदने स्वकीये स्थाने रुचा दीप्त्या युक्तः सन् सीदेति शेषः । हे जातवेदः, त्वं तस्या उखायाः शिवो भव सुखप्रदो भव । किं कुर्वन् । हरसा तेजसा तपन् प्रज्वलन् ॥ अथ तृतीयः ॥ शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासद इति ॥ हे अग्ने, मह्यं मदर्थं शिवः शान्तो भूत्वा अनन्तरं त्वं शिवः सीद । सर्वान् प्रति शान्तः सन्नुपविश । सर्वा दिशः शिवाः शान्ताः कृत्वा इहास्यामुखायां स्वं योनिं स्वकीयं स्थानम् असदः आगत्योपविश ॥ इति त्रयोदशेऽध्याये प्रथमोऽनुवाकः ॥ १३ ॥ १ ॥

प्रथमेऽनुवाके वह्नेरासन्द्यां स्थापनमुक्तम् ॥ द्वितीये तस्याग्नेरुपस्थानमुच्यते ॥ कात्यायनः ॥ वात्सप्रेण च दिवस्परीत्येकादशभिरनुवाकेनैक इति ॥ अत्र च-शब्देनोपतिष्ठत इत्यनुवर्तते । वात्सप्रऋषेः संबन्धी वात्सप्रो दिवस्परीत्यमनुवाकः । तत्र केचिदेकादशभिर्मन्त्रैरासन्द्यामुपरिस्थितम् उख्यमग्निमुपतिष्ठेदिति वदन्ति । अन्ये तु वात्सप्रेण सर्वेणानुवाकेनोपस्थानं कुर्यादिति वदन्ति ॥ अत्र प्रथममन्त्रपाठस्तु ॥ दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि

जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीरिति ॥ अग्निः प्रथमं दिवस्परि द्युलोकस्योपरि प्रथमं जज्ञे । अस्मद्यज्ञे प्रसिद्धवह्निरूपेण द्वितीयं जन्म प्राप्तवान् । अप्सु समुद्रे तृतीयं जज्ञे । वडवानलरूपेणोत्पन्नः । अजस्रं त्रिष्वपि जन्मसु नृमणाः नृषु यजमानेषु मनोऽनुग्रहबुद्धिर्यस्यासौ नृमणाः । एनमीदृशमग्निमिन्धानः पुरोडाशादिना दीपयन् । स्वाधयच्चित्तो, जरते जीर्यते जरापर्यन्तं पचतीत्यर्थः ॥ अथ द्वितीयः ॥ विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा । विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थेति ॥ हे अग्ने, यानि पूर्वस्मिन्मन्त्रे दिवस्परीत्यादिना त्रेधा स्वरूपाण्युक्तानि आदित्याग्निवाडवानलरूपाणि तानि त्रिसंख्याकानि ते तव सम्बन्धीनि रूपाणि वयं विद्मः । किञ्च, ते तव सम्बन्धीनि विभृता बहुषु प्रदेशेषु गार्हपत्याहवनीयान्वाहार्यपचनशामित्राग्नीध्रीयरूपेषु बृंहितानि धामानि स्थानान्यपि विद्मः । किञ्च, ते तव परममुत्कृष्टं गुहा गुह्यं गोप्यं देवेद्धोमान्विद्ध इत्यादिमन्त्रप्रतिपाद्यं नाम यदस्ति तदपि विद्मः । देवादीनां नामत्वं मन्त्रान्तरे सम्बोधनबलादवगम्यते ॥ अग्ने देवेद्धमन्विद्धमन्द्रजिह्वेति मन्त्रान्तरम् । किञ्च, यत उत्साहरूपात् प्रस्रवणादाजगन्थ वैद्युतरूपेण त्वमागतोऽसि तमप्युत्सं विद्मः ॥ अथ तृतीयः ॥ समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् । तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महिषा अवर्धन्निति॥ हे अग्ने, त्वामीधे यजमानोऽहं दीपयामि । कीदृशो यजमानः । नृमणाः । नृषु मनुष्येषु कर्मानुष्ठानपरेष्वृत्विक्षु मनोऽनुसन्धानकारणं चित्तं यस्याऽसौ नृमणाः । नृचक्षाः । नृषु पुरुषेषु वेदपारङ्गतेषु मध्ये चष्टे मन्त्रान् विस्पष्टं वक्तीति नृचक्षाः । कीदृशं त्वाम् । तस्थिवांसम् । वाडवानलरूपेणावस्थितम् । तथा अप्सु वृष्टिरूपास्वन्तर्वैद्युतरूपेणावस्थितम् । तथा दिवो द्युलोकस्य ऊधन् ऊधःस्थानीये तृतीये समुद्रे दृष्ट्यपेक्षया त्रयः स्थाने रजसि रञ्जनात्मके तेजोमण्डले सूर्यरूपेण तस्थिवांसं महिषा महान्तो यजमाना अपामुपस्थे उत्सङ्गे अवर्धन् अवर्धयन् ॥ अथ चतुर्थः ॥ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो विहीमिद्धोऽअख्यदारोदसी भानुना भात्यन्त इति ॥ पूर्वाऽनुवाकेऽयं मन्त्रो व्याख्यातः ॥

अथ पञ्चमः ॥ श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः । वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधान इति ॥ श्रीणां

गवाश्वादीनां संपदाम् उदार उत्कर्षेण मापयिता, रयीणां धनानां धरुणो धारयिता मनीषाणामपेक्षितानां स्वर्गादिफलानां मार्पणः मार्पयिता । सोमगोपाः यजमानेनाऽनुष्ठेयस्य सोमयागस्य रक्षिता । वसुः सर्वस्य निवासहेतुः । सहसः सूनुः मन्थनादौ वेगरूपस्य बलस्य पुत्रः । अप्सु वृष्टिरूपासु राजा वैद्युतरूपेण दीप्यमानः उपसामग्रे प्रातःकाले इन्धानः अग्निहोत्रेऽतिदीप्यमानोऽग्निर्विभाति विशेषेण भासते ॥ अथ षष्ठः ॥ विश्वस्य केतुर्भुवनस्य गर्भ आरोदसीऽअपृणाज्जायमानः। वीळुश्चिदद्रिमभिनत् परायञ्जना यदग्निमयजन्त पञ्चेति ॥ विश्वस्य केतुः सर्वस्य जातो ज्ञाता । भुवनस्य लोकस्य गर्भो गर्भवदन्तरेव स्थितः । जायमानो जायमान एव रोदसी द्यावापृथिव्यौ आपृणात् सर्वतः स्वतेजसा पूरयति । पञ्च यजमानसहिता ऋत्विग्रूपाः पञ्चसंख्याका जना अग्निमयजन्त । तदानीं परायन् आहुतिरूपेणादित्यसमीपं गच्छन् वीळुश्चित् दृढमेव अद्रिं पर्वतसमानं मेघम् अभिनत् । विदारितवान् ॥ अथ सप्तमः॥ उशिक्पावकोऽअरतिः सुमेधा मर्त्येष्वग्निरमृतो निधायि। इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन्निति॥ अरतिर्विगराहितेषु प्रीतिरहितः। शोभना मेधा सेवकाभिप्रायधारणशक्तिर्यस्याऽसौ सुमेधाः। अमृतो मरणरहितस्तादृशोऽग्निर्मर्तेषु मनुष्येषु यजमानेषु निधायि निहितः। अरुषमरोषं चक्षुराद्युपद्रवरहितं धूमं भरिभ्रत् अतिशयेन धारयन्। शुक्रेण शोचिषा निर्मलेन तेजसा प्रभारूपेण द्यामाकाशम्, इनक्षन् व्याप्नुवन् उदियर्ति ऊर्ध्वं प्रसारयति ॥ अथाऽष्टमः॥ दृशानो रुक्मऽउर्व्या व्यद्यौद् दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतोऽअभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेता इति ॥ पूर्ववद् व्याख्येयम् ॥ अथ नवमः ॥ यस्ते अद्य कृणवद्भद्रशोचे ऽपूपं देव घृतवन्तमग्ने । प्र तन्नय प्रतरं वस्यो अच्छाभिसुम्नं देवभक्तं यविष्ठेति ॥ हे भद्रशोचे, कल्याणदीप्ते, अग्ने देव, ते तव अद्याऽस्मिन् दिने घृतवन्तं यूयम् । उपस्तरणाभिघारणोपेतं पुरोडाशं यो यजमानः कृणवत् करोति । हे यविष्ठ युवतम, देवभक्तं देवेषु भक्तियुक्तं तं पुरोडाशकारिणं यजमानम् । अभि सुम्नम् । अभिमतं सुखं प्राप्तुं प्रकर्षेण नय प्रेरय । कीदृशं सुम्नं प्रतरं प्रकृष्टतरम् । वस्योऽतिशयेन निवासकारणम् ॥ अथ दशमः॥ आ तं भज सौश्रवसेष्वग्न उक्थ उक्थ आभज शस्यमाने । प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैरिति ॥ शोभनं श्रवः कीर्तिः सुश्रवः, तस्य सम्बन्धीनि तत्कारणानि कर्माणि सौश्रवसानि। तेषु

कर्मसु उक्थे निष्केवल्पस्य म उगादिरूपे तत्तच्छस्त्रे शस्यमाने सति तं देव-भक्तं यजमानम् आभज सर्वतः सेवय । निरन्तरं कर्मानुष्ठायिनं कुर्वित्यर्थः । आभजेति द्विरुक्तेर्वीप्सद्वयमिदं कर्तव्यम् । कर्मसु मेरयेत्येकं वाक्यम् । तत्त-च्छस्त्रे मेरयेति द्वितीयम् । अयं यजमानः सूर्ये मियो भवति भवतु । अग्नावपि वह्नावपि मियो भवतु । तथा जातेनोत्पन्नेन पुत्रेणाभिनददुत्तद्धेदमपि वृद्धिं प्राप्नो-तु । तथा जनित्वैः जनिष्यमाणैः पौत्रादिभिश्च उद्धिनवत् ॥ अथैकादश्याः ॥ त्वामग्ने, यजमाना अनुद्यून् विश्वा वसु दधिरे वार्याणि । त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुरिति ॥ हे अग्ने, यजमानाः सर्वे द्यून् प्रतिदिनं त्वामनु त्वामेवानुगच्छन्तो वार्याणि वरणीयानि विश्वा विश्वानि सर्वाणि वसु वसूनि धनानि दधिरे धृतवन्तः । त्वया सहावस्थितास्ते यजमानाः । द्रविणमिच्छ-मानाः पुनरप्यधिकं द्रव्यं काङ्क्षन्तः । उशिजो धनसाध्यानि कर्माणि कामय-मानाः, गोमन्तं गोभिर्युक्तं व्रजं गोनिवासस्थानं विवव्रुः विशेषेण वृतवन्तः ॥ अथ द्वादशः ॥ अस्ताव्यग्निर्नरा॰ सुशेवो वैश्वानर ऋषिभिः सोमगोपाः । अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरमिति ॥ अग्निर्ऋषिभि-र्ऋत्विग्यजमानैरस्तावि स्तुतोऽभूत् । कीदृशोऽग्निः । नरां नराणां मनुष्याणां सुशेवः शोभनसुखयिता । वैश्वानरः विश्वानरसम्बन्धी सोमगोपाः सोमस्य रक्षिता । अद्वेषे द्वेषरहिते द्यावापृथिवी हुवेम वयमाह्वयामः । हे देवाः, यूयं सुवीरं शोभनपुत्रोपेतं रयिं धनम् अस्मे अस्मासु धत्त स्थापयत ॥ इति त्रयोदशे-ऽध्याये द्वितीयोऽनुवाकः ॥ १३ ॥ २ ॥

द्वितीयेऽनुवाके वह्नेरुखस्योपस्थानमुक्तम् ॥ अथ तृतीये चयनार्थस्य देवयजनस्य परिग्रहोऽभिधीयते ॥ कात्यायनः ॥ उख्यस्योत्तरतः समिदा-धानं॰ समिधाग्निमितीति ॥ प्राग्देशे शकटावस्थापनानन्तरमुख्याग्नेरुत्त-रतः समिधाग्निमित्यनेन मन्त्रेण समिधमादध्यात् ॥ पाठस्तु ॥ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतनेति ॥ हे ऋत्विग्यजमाना एतमग्निं समिधा दुवस्यत परिचरत । घृतैरेतस्यैरतिथिमेवैतं बोधयत । ततश्चास्मिन् हव्यानि हवींषि आजुहोतन । साकल्येन जुहुत ॥ कात्यायनः ॥ उद्यम्योदुत्वेति दक्षिणतोऽन्वासि करोति स्थाल्यामिति ॥ आसन्द्यामवस्थित-मुख्यामिमुदूह्य शकटस्य दक्षिणभागे स्थालीमवस्थाप्य तस्यामवधापयेत् ॥ पाठस्तु ॥ उदु त्वा विश्वे देवा अग्ने भरन्तुचित्तिभिः । स नो भव शिवस्त्वं॰

सुप्रतीको विभावसुरिति ॥ हे अग्ने, विश्वे सर्वेऽपि देवाः प्राणरूपाश्रिति-भिरुद्यमनकुशलिभिर्धीदृत्तिभिः, उत ऊर्ध्वमेव त्वां भरन्तु । धारयन्तु । स त्वं नोऽस्माकं शिवः शान्तः सुप्रतीकः सुमुखो विभावसुः प्रभाया वासयिता च भव ॥ कात्यायनः ॥ गार्हपत्यं पश्चाऽनड्वाहौ मुक्त्वा प्रेदग्न इति प्राङ्यात्वे-ति ॥ पूर्वमवस्थापितशकटे गार्हपत्यस्य पश्चिमे भागे द्वौ बलीवर्दौ प्रतिमुच्य पश्चात् प्रगच्छेत् ॥ पाठस्तु ॥ प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिष्ट्वम् । बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तन्वा प्रजा इति ॥ हे अग्ने, शिवेभिरर्चिभिः शान्ताभिर्ज्वालाभिर्ज्योतिष्मान् प्रकाशयुक्तस्त्वं प्रेद् याहि । यजनदेशं प्रयाहि । बृहद्भिर्भानुभिः प्रौढै रश्मिभिर्भासयञ्जगदवभासयन् तन्वा स्वकीयेन दाहकेन शरीरेण प्रजा मा हिꣳसीः॥कात्यायनः॥ अक्षे स्वनत्यक्रन्ददग्निरिति जपतीति । प्रागमनकाले शकटस्याक्षे ध्वनिं कुर्वति सति इमं मन्त्रं जपेत् ॥ पाठस्तु ॥ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो विहीमिद्धोऽअख्यदारोदसी भानुना भात्यन्त इति ॥ पूर्ववद्व्याख्येयम् ॥ कात्या-यनः ॥ उत्तरतः समिदाधानं प्रप्रेतीति ॥ प्रयाणानन्तरं शकटमवस्थाप्य उ-रुयाग्रेरुत्तरभागे समिधमादध्यात् ॥ पाठस्तु ॥ प्रप्रायमग्निर्भरतस्य शृण्वे वि-यत् सूर्यो न रोचते बृहद्भाः । अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो न इति ॥ अयमग्निर्भरतस्य हविर्भरणवतो यजमानस्याह्वानं शृण्वे शृणोतु । यत् योऽग्निः, सूर्यो न = सूर्य इव, भाः भासमानः सन् बृह-द्रोचते दीदाय अत्यन्तं दीप्यते । योऽग्निः पृतनासु संग्रामेषु पूरुं जयपूर्तिम् अभितस्थौ सर्वतः करोति । सोऽग्निर्नोऽस्माकम् अतिथिर्भवतु । अतिथिरेव समागच्छतु । कीदृशोऽग्निः । दैव्यः । देवेभ्यो हितः शिवः परममङ्गलरूपः॥ कात्यायनः ॥ अप्सूख्यमस्मावपनं पलाशपुटेनापो देवीरित्येकया ततो द्वाभ्या-मिति॥ आपो देवीरित्येकयर्चा तस्या उत्तराभ्यामप्स्वग्न इत्युभाभ्याम् ऋग्भ्यां च पलाशपत्रनिर्मितेन पात्रेण च उख्याग्नेरुपरि स्थितं भस्म जलेषु प्रक्षिपेत् ॥ तत्र प्रथमायाः पाठस्तु ॥ आपो देवीः प्रतिगृभ्णीत भस्मैतत् स्योने कृणुध्वꣳ सुरभा उ लोके । तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृताप्स्वेनत् इति ॥ हे आपो देवीर्दव्यः, भस्म उख्याग्नेरुपरि संश्रितं भस्म प्रतिगृभ्णीत । एतत् प्रतिगृहीतं भस्म स्योने सुखकरे सुरभौ सुगन्धियुक्त एव लोके स्थाने कृणुध्वं स्थापयत । शोभनः पतिर्वरुणरूपो यासां ताः सुपत्न्यः । आपो

वरुणस्य पत्न्य आसन्निति श्रुत्यन्तराम्नातत्वात् । जनयोऽग्नेर्जनन्य आपः । वाडवं वैद्युतरूपमग्निं प्रति अपां जननीत्वम् । ईदृश्य आपस्तस्मै भस्मरूपायाग्नये नमन्तां प्रह्वीभवन्तु । तमग्निं पालयितुमवश्यं सावधाना भवन्त्वित्यर्थः । हे आपो, यथा लोके माता पुत्रं पोषयति तद्वदेनमिमं भस्मरूपमग्निम् अप्सूदकरूपासु युष्मास्ववस्थाप्य बिभृत पोषयत ॥ अथ द्वितीयः ॥ अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनरिति ॥ हे अग्ने, तव सधिः सहो बलं भस्मरूपमप्सु वर्तते स त्वम् । ओषधीरनुरुध्यसे । व्रीहियवाद्योषधीरनुरुणत्सि जाठराग्निरूपेण तत्स्वीकारात् । अरण्योर्गर्भे स्थितः पुनः पुनर्जायसे ॥ अथ तृतीयः ॥ गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसीति ॥ हे अग्ने, त्वं भेषजरूपैरोषधिविशेषैरुत्पत्स्यमानस्य प्राणिजातस्य जठरे वर्तमानत्वाद् गर्भोऽसि । तथा वाडववैद्युतरूपेणाऽपां गर्भोऽसि ॥ कात्यायनः ॥ अनामिकायाः प्रस्तादादत्ते प्रसवेतीति । उदकेषु प्रक्षिप्ताद्भस्मनः सकाशादनामिकयाङ्गुल्या किञ्चिद्भस्म प्रसद्येत्यादिभिश्चतुर्भिर्मन्त्रैरादद्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासद इति ॥ हे अग्ने, भस्मना सह योनिं कारणभूतां पृथिवीं प्रसद्य प्रपद्य । किं पृथिवीमेव । नेत्याह । अपश्च योनिभूताः प्रतिपद्य । किञ्च मातृभिरद्भिः पृथिव्या च सꣳसृज्य एकीभूय त्वं भृशं ज्योतिष्मान् संपन्नः पश्चात् स्वयमेव स्थानमुखाम् आसदः आसीद ॥ अथ द्वितीयः ॥ पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतम इति ॥ हे अग्ने, अपः पृथिवीं च सदनं पुनरासद्याऽऽस्थाय शिवतमः सन् अस्यामुखायाम् अन्तर्मध्ये मातुरुपस्थे इव शेषे स्वपिषि ॥ अथ तृतीयः ॥ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहस इति ॥ अग्ने, त्वम् ऊर्जा क्षीरादिरसेन सह पुनर्निवर्तस्वाऽत्रागच्छ । इषा अन्नेन आयुषा सह पुनरागच्छ नोऽस्मान् पुनः कृतादꣳहसः पाहि पालय ॥ अथ चतुर्थः ॥ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया विश्वप्स्न्या विश्वतस्परीति ॥ हे अग्ने, रय्या धनेन सह निवर्तस्व । प्सा भक्षण इति धातुः । विश्वैः सर्वैः प्सायते भक्ष्यते पीयत इति विश्वप्स्नी । तादृश्या धारया विश्वतस्परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्च ॥ कात्यायनः ॥ प्रास्योखायामुपतिष्ठते बोधाम इतीति ॥ अनामिकया स्वीकृतं प्रक्षिप्य, बोधाम इति द्वाभ्यां

मन्त्राभ्यामुख्यामेरुपस्थानं कुर्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः । पीयति त्वो अनु त्वो गृणाति वन्दारुष्टे तन्वं वन्दे अग्न इति ॥ हे स्वधावः, स्वधोपलक्षितान्नं यस्य तव । यविष्ठ युवतम । हे अग्ने, मदीयस्यास्य वचसः स्तुतिरूपस्य बोध तात्पर्यं बुध्यस्व । कीदृशस्य वचसः । मंहिष्ठस्यातिशयेनाभिवृद्धिहेतोः । प्रभृतस्य प्रकृष्टेन आदरेण सम्पादितस्य । प्यायी वृद्धावित्यस्य धातोर्निष्पन्नः पीयतिशब्दः । त्वशब्द एकशब्दार्थे वर्तते । भवदीयस्तुतिकारिणोर्द्वयोर्यजमानर्त्विजोर्मध्ये एकः स्तोता वृद्धमधिकं वक्ति । उचितोक्तिमुल्लङ्घ्यानिन्दारूपेणातिप्रशंसारूपेण वा यत्किञ्चिदुक्तितः, एकः स्तोता अनुगृणाति अनुकूलमुचितमेव वक्ति । अतोऽस्मदभिप्रायं बुध्यस्वेति प्रार्थ्यते । वन्दारुरभिवादनपरोऽहं ते त्वदीयं शरीरं तन्वं वन्दे ॥ अथ द्वितीयः ॥ स बोधि सूरिर्मघवा वसुपते वसुदावन् । युयोध्यस्मद्द्वेषांसीति ॥ हे वसुपते, धनपते, हे वसुदावन् अन्नप्रदाऽग्ने, स त्वं बोधि अस्मदभिप्रायं बुद्ध्यस्व । कीदृशस्त्वम् । सूरिर्विद्वान् मघवा अन्नवान् । तादृशस्त्वं, द्वेषांसि शत्रुभिः कृतान् द्वेषान् अस्मद् युयोधि अस्मत्तः पृथक्कुरु ॥ कात्यायनः ॥ आज्यं विश्वकर्मण इति जुहोतीति ॥ स्वाहेति मन्त्रशेषः । विश्वकर्मणे समस्तजगत्सृष्टिस्थित्यादिकर्मकर्त्रे तुभ्यं स्वाहा सुहुतमस्तु ॥ कात्यायनः ॥ उत्थायादधाति समिधं पुनस्त्वेति ॥ पाठस्तु ॥ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहेति ॥ हे अग्ने, त्वा आदित्या रुद्रा वसवश्च पुनः समिन्धताम् उपशान्तं पुनः सन्दीपयन्तु । हे वसुनीथ, वसूनां धनानां नेतः ब्रह्माणः ब्राह्मणा ऋत्विजः यज्ञैर्निमित्तभूतैस्त्वां पुनः समिन्धतां घृतेन तुष्टः सन् तन्वं शरीरं वर्धयस्व ततस्त्वयि तुष्टे सति यजमानस्य कामाः सत्याः सन्तु ॥ इति त्रयोदशेऽध्याये तृतीयोऽनुवाकः ॥ १३ ॥ ३ ॥

तृतीयेऽनुवाके वह्निरूपस्य चयनदेशं प्रति नयनमुक्तम् ॥ अथ चतुर्थे गार्हपत्यचयनमुच्यते ॥ कात्यायनः ॥ पलाशशाखया गार्हपत्यं व्यूहत्यपेत वीतेतीति ॥ पलाशशाखया गार्हपत्यस्थानव्यूहनं संमार्जनं कुर्यात् ॥ पाठस्तु ॥ अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः । अदाद्यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मा इति ॥ यमस्य सर्वभूम्यधिपतित्वात् तद्भृत्याः पृथिव्याः सर्वत्र वर्तन्ते । हे यमभृत्याः, अत्र देवयजन;

स्थाने पुरातना ये यूयं स्थ । नूतनाश्च ये यूयं स्थ ते सर्वेऽप्येत अस्मात् स्थानादपगच्छत । वीत अत्यन्तविदूरं गच्छत विसर्पत च । अतोऽस्मात् स्थानादपेत्य सद्भावं परित्यज्य विविधे गच्छत । यमः पृथिव्या इदमवसानं स्थानमस्मभ्यमदात्। पितरश्चास्मै यजमानायेमं लोकम् अक्रन् । एतच्च यजनस्थानं कृतवन्तः ॥ कात्यायनः ॥ उखाश्चित्यपति सञ्ज्ञानमितीति ॥ ऊखरप्रदेशस्थान् पांसून् गार्हपत्यस्थाने निवपेत् ॥ पाठस्तु ॥ सञ्ज्ञानमसि कामधरणं मयि ते कामधरणं भूयादिति ॥ हे ऊखरस्वरूप, त्वं संज्ञानं पशुसम्बन्धिसम्यग्ज्ञानमसि । पशवो घ्राणेन सम्यग् ज्ञात्वा तमूखरप्रदेशं लिहन्ति । तथा कामधरणमसि । यदमुष्या यज्ञियमासीत्तदस्यामदधात्त ऊखा अभवन्निति श्रुत्यन्तरे यज्ञियांशत्वेनोक्तत्वाचद्द्वारा कामानां धारकमसि । अतस्ते तव यत्कामधारणसामर्थ्यं तन्मयि भूयात् ॥ कात्यायनः ॥ सिकताश्चाग्नेर्भस्मेतीति ॥ पाठस्तु ॥ अग्नेर्भस्मास्यग्नेः पुरीषमसीति ॥ हे सिकतास्वरूप, त्वमग्नेर्भस्म भासकमसि । सिकताधारो ह्यग्निरतितीक्ष्णो भवति । तथा त्वमग्नेरवस्थानाय पुरीषमसि पांसुरूपमसि ॥ कात्यायनः ॥ परिश्रिद्भिः परिश्रयति चित स्थेतीति ॥ परिश्रयणसाधनाभिः शर्कराभिः प्रसारयेत् ॥ पाठस्तु ॥ चित स्थ परिचित ऊर्ध्वचितः श्रयध्वमिति ॥ चीयन्ते भूमौ प्रक्षिप्यन्त इति चिताः । हे शर्कराः, यूयं चित स्थ । भूमौ प्रक्षिप्ता भवथ । परिचिताः परितः प्रक्षिप्ता ऊर्ध्वं चिताः सिकतानामूर्ध्वं प्रक्षिप्ताः । तादृश्यो यूयं श्रयध्वम् । इदं गार्हपत्यायतनं सेवध्वम् ॥ कात्यायनः ॥ चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदग्ग्रयश्मो अग्निरिति तत्प्रत्यृचमिति॥गार्हपत्यस्य मध्यप्रदेशे दक्षिणमारभ्य उत्तरापवर्गाः प्रागग्राश्चतस्र इष्टका दक्षिणतः स्थित्वा उदङ्मुखः सन्, अयश्मोऽग्निरित्यादिभिश्चतसृभिर्ऋग्भिः क्रमेणोपदध्यात् ॥ तत्र प्रथमः ॥ अयꣳ सोऽअग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः सहस्रियं वाजमत्यन्न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेद इति ॥ यस्मिन् गार्हपत्ये रूपेऽग्नौ सति वावशानः कामयमानः इन्द्रः सुतमभिषुतं सोमं जठरे दधे स्वोदरे धारयिता स तादृशोऽयमग्निरिदानीमिष्टकाभिश्चीयत इति शेषः । हे जातवेदोऽग्ने,त्वम् अत्यं न सप्तिं = सन्ततगमनकुशलमश्वमिव,सहस्रियं सहस्रसंख्याकेन धनेन संमितं वाजमन्नं ससवान् दत्तवान् यजमानेन स्तूयसे ॥ अथ द्वितीयः ॥ अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र । येनान्त-

रिक्षमुर्वाततन्थ त्वेषस्स भानुरर्णवो नृचक्षा इति ॥ हे यजत्र, हे यज्ञनिष्पाद-केष्टकारूपाग्ने, ते तव यद्वर्चः तेजो दिवि द्युलोके सूर्यरूपेण वर्तते । पृथिव्यां वह्निज्वालारूपेण वर्तते । तथा यत्तेजः ओषधीषु परिपाककत्वाकारेण वर्तते । अप्सु वडवानलरूपेण वर्तते । येन त्वदीयवर्चसा विद्युद्रूपेणोरु विस्तीर्णमन्तरिक्षमाततन्थ सर्वतो विस्तारितवानसि प्रकाशितवानसीत्यर्थः । त्वेषः त्विषां दीप्तीनां स त्वदीयवर्चः समूहो भानुर्भासकः अर्णवः समुद्र इव विस्तीर्णः । नृचक्षा मनुष्यान् प्रख्यापयिता तथाविधस्तेजोरूपामिष्टकामुपदधामीति शेषः ॥ अथ तृतीयः ॥ अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये । या रोचने परस्तात् सूर्यस्य याश्चावस्तादुपतिष्ठन्त आप इति ॥ हे इष्टकारूपाग्ने, दिवः सकाशा-दर्णम् उदकम् अच्छाभिमुख्येन जिगासि प्राप्नोषि । यागद्वारेण वृष्टिं संपाद-यसीत्यर्थः । ये देवा धिष्ण्या धारास्तान् देवानच्छाभिमुख्येन ऊचिषे हविः स्वीकुरुषे । त्वय्यत्रोपहितायाम् आहूता इव देवा आगत्य हविः स्वीकरिष्य-न्तीत्यर्थः । सूर्यस्य देवस्य रोचने दीप्तिरूपे मण्डले सति या आपः पर-स्तादूर्ध्वदेश उपतिष्ठन्ते वर्तन्ते । याश्चावस्तादधोभागे वर्तन्ते ताः सर्वास्त्वय्यु-पहितायामिह गामभ्येष्यन्तीति शेषः ॥ अथ चतुर्थः ॥ पुरीष्यासोऽअग्नयः प्रावणेभिः सजोषसः । जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीरिति ॥ एते अग्नय इष्टकारूपा अस्मदीयमिमं यज्ञं जुषन्तां सेवन्ताम् । कीदृशा अग्नयः पुरीष्यासः पुरीषे पांसुरूपे भवाः प्रावणेभिः प्रकर्षेण सम्भजनशीलैर्मनोभिः सजोषसः परस्परं समानप्रीतयः । अद्रुहो हिंसारहिताः । अनमीवा रोगरहिताः । इषोऽभीष्टप्रापिहेतवः । महीः प्रौढाः । तथाविधा अग्निरूपा इष्टका उपदधामीति शेषः ॥ कात्यायनः ॥ इळामग्न इति पश्चिमे प्रतिमन्त्रमुत्तरत इति ॥ स्वयमु-त्तरतः स्थित्वा गार्हपत्यस्य पश्चिमभागे इळामग्नेऽयं ते योनिरित्यन्ताभ्या-मृग्भ्यां द्वे इष्टके उपदध्यादिति शेषः ॥ तत्र प्रथमायाः पाठः ॥ इळा-मग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे इति ॥ हे अग्ने, हवमानाय होतुं प्रवृत्ताय यजमानाय गोः सनिं गवादिपशूनां दातारं साध सम्पादय । कीदृशं दाता-रम् । इळां सर्वैरीड्यं प्रशंसनीयं पुरुदंसं बहुधा दर्शनीयं शश्वत्तममत्यन्तमविच्छे-देन वर्तमानम् । किञ्च त्वत्प्रसादान्नोऽस्माकं सूनुः स्यात् । पुत्रो भवतु । की-दृशस्तनय औरस इत्यर्थः । पुत्रसामान्यस्य सूनुशब्देनोक्तत्वात् अन्यपुत्रादि-

व्याहृतये विशेषविवक्षया तनयशब्दः प्रयुज्यते । विजावा विविधानां जनयिता । हे अग्ने, ते तव सा सुमतिः तथाविधा अनुग्रहबुद्धिः अस्मे भूतु । अस्मासु भवतु ॥ अथ द्वितीयः ॥ अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिमिति ॥ हे अग्ने, अयम् इष्टकारूपः पदार्थः, ते तव योनिरुत्पत्तिहेतुर्ऋत्वियः ऋतुकालीनस्त्रीपुरुषसङ्गम इव । अतो योनेर्यस्त उत्पन्नस्त्वम् अरोचथाः दीप्यमानोऽसि । तं तथाविधं योनिं जानन्नवगच्छन्नारोह प्राप्नुहि । अथाऽनन्तरं नोऽस्माकं रयिं धनं वर्धय ॥ कात्यायनः ॥ चिदसीति पूर्वदक्षिणः प्रतिमन्त्रमिति ॥ दक्षिणतः स्थित्वा पूर्वभागे चिदसीति मन्त्रद्वये इष्टे उपदध्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ चिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीदेति ॥ भोगाँश्चिनोति सम्पादयतीति चित् । हे इष्टके, त्वं चिदसि या देवता त्वामभिमन्यते तया देवतयाऽनुगृहीता त्वं ध्रुवा स्थिरा भूत्वा सीद तिष्ठ । तत्र दृष्टान्तः । अङ्गिरस्वत् । अङ्गिरोऽभिरुपहितेष्टका यथा ध्रुवा भवति तद्वत् ॥ अथ द्वितीयः ॥ परिचिदसि तयाङ्गिरस्वद् ध्रुवा सीदेति । परितो भोगाँश्चिनोति सम्पादयतीति परिचित् । शेषं पूर्ववत् ॥ कात्यायनः ॥ तिसृषु लोकम्पृणासु मन्त्रो दशसु चेति ॥ अत्र मन्त्रे इत्येतँल्लोकम्पृण ता अस्येत्येतन्मन्त्रद्वयस्य प्रतीकम् । लोकम्पृणसञ्ज्ञका याश्चयोदशेष्टकाः तासामुपधानकाले एतन्मन्त्रद्वयं प्रयोक्तव्यम् ॥ तत्रायं प्रथमः॥ लोकम्पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनाऽअसीषदन्निति ॥ हे इष्टके लोकं गार्हपत्यचयनार्थे प्रदेशे पूर्वोक्ताभिरिष्टकाभिरनाक्रान्तमवशिष्टमवस्थानं पृण पूरय । तथा छिद्रं पृण । किञ्चिदपि छिद्रं यथा न दृश्यते तथा पूरय । अत्यन्तं संश्लिष्टा भवेत्यर्थः । अथोऽपि च दृढा सती सीदाऽवतिष्ठस्व । इन्द्राग्नी बृहस्पतिश्चैते देवा अस्मिन् यौनौ स्थाने त्वामसीषदन् सादितवन्तः ॥ अथ द्वितीयः ॥ ताऽअस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इति ॥ दिवो रोचने स्वर्गस्य प्रकाशके अस्य यजमानजन्मनिमित्तभूते सति देवानां सम्बन्धिन्यो विशः प्रजारूपाः पृश्नयोऽल्पगोसदृशाः सूददोहसोऽमृतस्य दोहयित्र्यस्ता इष्टकास्त्रिषु प्रातःसवनादिषु सवनेषु आसमन्तात् सोमं श्रीणन्ति पक्वं कुर्वन्ति ॥ कात्यायनः ॥ चात्वालदेशात् पुरीषं निवपतीदं विश्वा इतीति ॥ चात्वालदेशाच्छुष्कं पांसुमादायाऽस्मिन् गार्हपत्य-

चयने निर्वपेत् ॥ पाठस्तु ॥ इन्द्रं विश्वाऽअवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिमिति ॥ विश्वाः सर्वा गिरोऽस्मदीयाः स्तुतयः इन्द्रमवीवृधन् वर्द्धितवन्तः । कीदृशमिन्द्रम् । समुद्रव्यचसं समुद्रवद् व्याप्तवन्तम् । रथीनां रथयुक्तानां योद्धॄणां मध्ये रथीतममतिशयेन रथयुक्तं वाजानामन्नानां पतिं स्वामिनमसत्पतिं सन्मार्गवर्तिनां पालकम् ॥ कात्यायनः ॥ उख्यं निर्वपति समितमितीति ॥ समितमित्यादिभिश्चतसृभिर्ऋग्भिस्तस्मिन् गार्हपत्यचयने उख्याग्निं निर्वपेत् ॥ तत्र प्रथमायाः पाठस्तु ॥ समितꣳ सङ्कल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभिसंवसाना इति ॥ यदिदं गार्हपत्यचयनमभिहितं तस्मिन्नुख्याग्निनिर्वपनवेलाया द्वावग्नी सम्पद्येते । पूर्वसिद्धोऽग्निरेकः, उख्योऽग्निरपरस्तावुभौ सम्बोध्येदमुच्यते । हे अग्नी, युवामुभौ समितं सङ्गतौ भवतमासङ्गस्य च सङ्कल्पेथां सम्यग्यज्ञस्य कल्पनं निष्पादनं कुरुतम् । कीदृशौ युवाम् । संप्रियौ सम्यक् परस्परं प्रीतियुक्तौ, रोचिष्णू दीप्यमानौ सुमनस्यमानौ परस्परं सौमनस्यं प्राप्तौ । इषमन्नमूर्जं रसं चाऽभिसंवसानौ अभितः सम्यक्संपादयन्तौ ॥ अथ द्वितीयः ॥ सं वां मनाꣳसि सं व्रता समु चित्तान्याकरम् । अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि इति ॥ हे पूर्वोक्तावग्नी, वां युवयोर्मनांसि मनोजन्यान् संकल्पान् समाकरं सर्वतः सङ्गतानि करोमि । तथा व्रतानि कर्माणि समाकरम् । तथा चित्तानि कर्मविषयज्ञानानि समाकरम् । हे पुरीष्य, पांसुयुक्ताग्ने मिलितोभयाग्निस्वरूप नोऽस्माकमधिपा भव अधिकं पालयिता भव । तादृशस्त्वं यजमानाय इषमन्नमूर्जं रसं च धेहि देहि ॥ अथ तृतीयः ॥ अग्ने त्वं पुरीष्यो रयिमान् पुष्टिमाꣳऽअसि । शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासद इति ॥ हे अग्ने भगवन्, त्वं पुरीष्यः पुरीषादिभिः पांसुयुक्तः । रयिमान् धनवान् । पुष्टिमानप्यसि । सर्वा दिशः शिवाः शान्ताः कृत्वा इहास्मिंश्चयने स्वं योनिं स्वकीयस्थानमासदः प्राप्नुहि ॥ अथ चतुर्थः ॥ भवतन्नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्ट । मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य न इति ॥ योऽग्निः पुरातनो यश्चोख्यस्तौ युवां नोऽस्मदर्थं समनसौ मनसा सहितौ सचेतसौ परस्परं समानचित्तयुक्तौ अन्यविषयं मनः परित्यज्यास्मदनुग्रहाभिमुखमनं समनस्त्वम् । तस्मिन्ननुग्रहे परस्परमतिपत्तिराहित्यं सचेतस्त्वम् । अरेपसौ पापरहितौ अस्मद्विषये प्रमादिकेनापराधेनापि कोपाभावः पापराहि-

तम् । भवतं यथोक्तगुणयुक्तावुभौ तिष्ठतम् । पापराहित्यमेव स्पष्टीक्रियते । यज्ञं मा हिꣳसिष्टम् । अस्मदीयं कर्म मा विनाशयतम् । हे जातवेदसावुभावग्नी, युवाम् अद्यास्मिन्ननुष्ठानदिने नोऽस्मदर्थं शिवौ शान्तौ भवतम् ॥कात्यायनः॥ मातेव पुत्रमिति शिक्यादिमुच्येति ॥ उखामित्यनुवर्तते ॥ पाठस्तु ॥ मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योना अभारुखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चत्विति ॥ यथा लोके माता पुत्रं बिभर्ति तथा पृथिवीरूपेयमुखा स्वे योनौ स्वकीयगर्भस्थाने पुरीष्यमेतमग्निम् अभाः अभार्षीत् धारितवती । द्युम्नप्रथमपुरुषस्य रूपं बिभर्ति । तामुखां प्रजापतिर्विमुञ्चतु शिक्यपाशान्मुक्तां करोतु । कीदृशः प्रजापतिः । विश्वैर्देवैर्ऋतुभिश्च संविदान ऐकमत्यं गतः । विश्वसृष्टिरूपं कर्म यस्यासौ विश्वकर्मा ॥ इति त्रयोदशेऽध्याये चतुर्थोऽनुवाकः ॥ ४ ॥ ॥ ॥ चतुर्थेऽनुवाके गार्हपत्यचयनमुक्तम् ॥ पञ्चमेऽआहवनीयचयनार्थं पुनः कर्षणमुच्यते ॥ कात्यायनः ॥ असुन्वन्तमिति प्रत्यृचमिति ॥ तुषाग्निना पक्वाः कृष्णवर्णा निर्ऋतिदेवताकास्तिस्र इष्टका नैर्ऋतदेशे, असुन्वन्तमिति तृचेनोपदध्यात् ॥ तत्र प्रथमायाः पाठस्तु ॥ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्त्विति ॥ हे निर्ऋते देवि, यः सोमयागं न करोति यश्च हविर्यज्ञान् करोति तादृशमसुन्वन्तम् अयजमानं च ग्रहीतुमिच्छ । किञ्च यस्तेनः प्रच्छन्नचोरः, यश्च तस्करः प्रकटचोरस्तयोरित्यां गतिम् अन्विहि अनुगच्छ । पृष्ठतो गत्वा तावपि गृहाणेत्यर्थः । सर्वथा सोमं सुन्वद्भ्यो हविर्यज्ञैश्च यष्टृभ्योऽस्मदन्यमिच्छ सा ते दुष्टशिक्षा तव इत्या गतिश्चर्या । एवम्भूतायै तुभ्यं नमोऽस्तु ॥ अथ द्वितीया ॥ नमः सु ते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम् । यमेन त्वं यम्या संविदानोत्तमे नाकेऽअधिरोहयैनमिति ॥ हे निर्ऋते, दक्षिणपश्चिममध्यस्थिताऽवान्तरादिगभिमानिनि देवते, तिग्मं तीक्ष्णं तेजो यस्याः सा तिग्मतेजाः । सम्बोधनं, हे तिग्मतेजः, तुभ्यं सुष्ठु नमोऽस्तु । अयस्मयम् अस्मदीयम् अयोनिर्मितं शृङ्खलावद् दृढम् एतं बन्धं स्वर्गप्राप्तिबन्धकम् इमं पाप्मानं विचृत विनाशयत । ततस्त्वं यमेनाग्निना यम्या च पृथिव्यैव संविदानैकमत्यं गता सती एनं यजमानम् उत्तमे नाके सर्वसुखोपेते दुःखमात्ररहिते स्वर्गे अधिरोहय स्थापय ॥ अथ तृतीया ॥ यस्यास्ते घोर आसं जुहोम्येषां बन्धानामवसर्जनाय । यां त्वा जनो भूमिरिति

प्रमन्दते निर्ऋतिं त्वाहं परिवेद विश्वत इति ॥ हे घोरे क्रूररूपे निर्ऋतिदेवि, यस्मात्ते तव आसन् आसनि आस्ये मुखे जुहोमि आहुतिवदिष्टकामुपदधामि। किमर्थं बन्धानां यजमानस्य परलोकप्राप्तिबन्धकानामेषां पाप्मनाम् अवसर्जनाय विनाशार्थम् । यां त्वा जनो जनुमात्ररूपः शास्त्रसंस्काररहितो भूमिरिति प्रमन्दते स्तौति । भूमिनिर्ऋतिदेवीति । अहं तु शास्त्राभिज्ञतया तादृशीं त्वां विश्वतः सर्वथाऽपि निर्ऋतिमेव परिवेद सम्यग् जानामि । तत्रतावन्निर्ऋतिरित्येतद्देवताया नामधेयम् । अवयवार्थश्चैवं व्युत्पादनीयः । सर्वदेवसाधारणादेवयजनान्निष्कृष्य स्वतन्त्रे देशे निर्ऋतिः प्राप्तिर्यस्याः सा निर्ऋतिस्तदिदं प्रकारद्वयमभिप्रेत्य विश्वत इत्युक्तम् ॥ कात्यायनः ॥ शिक्यरुक्मपाशेन्द्वासन्दीपरेणात्यस्यति यं ते इतीति ॥ शिक्यादीन् प्रक्षिपेत् ॥ पाठस्तु ॥ यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम् । तं ते विष्याम्यायुषो न मध्यादथैतं पितुमद्धि प्रसूत इति ॥ हे यजमान, ते तव ग्रीवासु ग्रीवायाः सम्बन्धिषु प्रदेशविशेषेषु यं पाशं निर्ऋतिर्देवी आबबन्ध आसमन्ताद् बन्धितवती । कीदृशं पाशम् । अविचृत्यं विनाशयितुमशक्यं दृढमित्यर्थः । ते त्वदीयं ग्रीवास्थं तं पाशं विष्यामि विमुञ्चामि । तच्च विमोचनं त्वदीयस्यायुषो मध्यादारभ्य न भवति किन्तु क्रूरत्वेऽप्यायुषि । अथ पाशविमोकानन्तरं प्रसूतोऽभ्यनुज्ञातस्त्वम् अयमग्निनिवेशनः एतं पितुम् एतदन्नमद्धि भक्षय ॥ कात्यायनः ॥ उत्तिष्ठन्ति नमो भूत्या इतीति ॥ उत्थानं कुर्युः ॥ पाठस्तु ॥ नमो भूत्यै येदं चकारेति॥ या देवी इदमग्निलक्षणं कर्म चकार कृतवती तस्यै भूम्यै श्रीरूपिण्यै देव्यै नमोऽस्तु ॥ कात्यायनः ॥ शालाद्वार्योपस्थानं निवेशन इतीति ॥ पाठस्तु ॥ निवेशनः सङ्गमनो वसूना विश्वा रूपाभिचष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनामिति ॥ अयमग्निर्निवेशनो यजमानानां स्वगृहे निवेशयिता, वसूनां सङ्गमनः प्रजापशुरूपाणां द्रव्याणां प्रापकः । तादृशः सन्, शचीभिः स्वकीयाभिः शक्तिभिर्विश्वा रूपा सर्वाणि रूपाणि प्रकाशयति । तद्वद । कीदृशोऽग्निः । सत्यधर्मा सत्योऽवश्यम्भाविफलोपेतो धर्मोऽग्निहोत्रादिलक्षणो यस्यासौ सत्यधर्मा । इन्द्रः परमैश्वर्यवान् । अत एव पथीनां समरे न तस्थौ परिपन्थिनां शत्रूणां युद्धे स्वयमागत्य न तिष्ठति किन्तु स्वकीयनामग्रहणमात्रेण ते पलायन्त इत्यर्थः ॥ कात्यायनः ॥ नियुज्यमानमभिमन्त्रयते सीरा युञ्जन्तीति ॥ बलीवर्दैः सह नियुज्यमानं सीरा युञ्जन्तीत्यादि-

मन्त्रद्वयेनाभिमन्त्रयेत् ॥ तत्र प्रथमायाः पाठः ॥ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नयेति ॥ कवयः कृषिकर्माभिज्ञाः, सीरा सीरं लाङ्गलं युञ्जन्ति सज्जीकुर्वन्ति । तथा, युगा सुष्ठु द्वादश वा कक्ष्याविशेषेष्वपेक्षितानि युगानि तन्वते । एकैकं विस्तारयन्तु । कीदृशाः । कवयः । धीराः धैर्ययुक्ता अनलसा इत्यर्थः । तथा देवेषु देवताविषयेषु सुम्नया सुम्नं सुखमिच्छन्तीति सुम्नायवः ॥ अथ द्वितीयः ॥ युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयादिति ॥ हे कर्षकाः, सीरा युनक्त लाङ्गलं योजयत । युगा वितनुध्वं युगानि विस्तारयत । कृतेन कर्षणेन संस्कृते इहास्मिन् योनौ स्थाने बीजं व्रीह्यादिकं वपत । किञ्च तद्बीजं गिरा आशीर्वादरूपेण मङ्गलवाक्येन युक्तमिति शेषः । श्रुष्टिस्तत्र निष्पन्नस्तम्बो, नोऽस्मदर्थं सभरा असत् फलभारयुक्तोऽस्तु । पक्वं फलं नेदीय इत् अन्तिकमेव अल्पकालनिष्पाद्यमेव सत् सृण्यः सृण्या लवनसाधनेन दात्रेण लूनं स आइयात् । अस्मत्समीपम् आगच्छतु ॥ कात्यायनः ॥ कर्षति शुनं सुफाला इति प्रत्यृचमिति ॥ शुनं सुफाला इत्यादिभिश्चतसृभिर्ऋग्भिः कर्षणं कुर्यात् ॥ तत्र प्रथमः ॥ शुनं सुफाला वि कृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः । शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तमस्मे इति ॥ सुफालाः । त्रिफला विशरणे । शोभनं फालम् अधिरोपणम् आकर्षणं येषां ते सुफालाः । भूमिं शुनं सुखं यथा भवति तथा विकृषन्तु कर्षणं कुर्वन्तु । कीनाशाः हलिनः कर्षकाः, वाहैर्बलीवर्दैः सह शुनं सुखं यथा भवति तथा अभियन्तु अभितः प्रवर्तयताम् । हे शुनासीराः, शुनो वायुः सीर आदित्यः तावुभौ युवामिदं क्षेत्रे कृष्टे सति हविषा उदकेन तोशमाना तोशमानौ भूमिं निघ्नन्तौ, सुपिप्पलाः शोभनफलोपेताः ओषधीः, अस्मे अस्मभ्यं कर्तं कुरुतं बीजावापं कुरुतमित्यर्थः ॥ अथ द्वितीयः ॥ घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमता मरुद्भिः । ऊर्जस्वती पयसा पिन्वमानाऽस्मान्सीते पयसाऽभ्याववृत्स्वेति ॥ इयं सीता लाङ्गलपद्धतिर्मधुना मधुरेण घृतेनोदकेन समज्यतां संसिच्यताम् । अतः सा सीता विश्वैर्देवैर्मरुद्भिश्चानुमता समीचीनेयमित्यङ्गीकृता सा पुनरूर्जस्वती रसवती पयसा पिन्वमाना जलेनाऽऽप्यायिता वर्तते । हे सीते जलेनाप्यायिता त्वम् अस्मान् प्रत्यभ्याववृत्स्व अभितः आवृत्ता भव ॥ अथ तृतीयः ॥ लाङ्गलं पवीरवत् सुशेवं सोमपि-

त्सरु । तदुद्वपति गामार्वि प्रपूर्व्यं च पीवरीं प्रस्थावद्रथवाहणमिति ॥ इदं लाङ्गलमुद्वपति उद्धृतानि मौद्गलोष्टानि यथा भवन्ति तथा कर्षणं कुर्यादित्यर्थः । कीदृशं लाङ्गलं, पवीरवत् वज्रवत्तीक्ष्णोपेतं, सुशेवं कर्षकैः सुष्ठु सेवितुं शक्यम् । अतितीक्ष्णत्वेन सहसा भूमिभेदात् कर्षकाणां नास्ति प्रयास इत्यर्थः । सोमपित्सरु । सोमं पिबतीति सोमपा यजमानः । यजमानरूपायां भूमौ त्सरणशीलम् । अनेन कर्षणेन फलाभिवये सति गवादिकं यजमानः प्राप्नोत्विति शेषः । तत्र गौरविरित्युभय प्रसिद्धम् । प्रप्रपूर्व्यं प्रथमवयस्कां कन्यां पीवरीं पुष्टाङ्गीं, प्रस्थावत् प्रयाणसमर्थं रथवाहनं रथं वोढुं योग्यमश्वादिकम् । यदा हि कृषिः समृद्धा भवति तदानीमेतत्सर्वं यजमानस्य सुलभम् ॥ अथ चतुर्थः ॥ कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्य इति ॥ काम्यन्त इति कामाः भोगास्तान् कामान् दोग्धि सम्पादयतीति कामदुघा लाङ्गलपद्धतिः । हे कामदुघे, मित्रादीनामोषध्यन्तानां काममपेक्षितं भोगं धुक्ष्व सम्पादय ॥ कात्यायनः ॥ अनडुहो विमुच्यध्वमितीति ॥ बलीवर्दान् विसृजेत् ॥ पाठस्तु ॥ विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारमस्य । ज्योतिरापामेति ॥ हे अघ्न्याः, अहन्तव्या गावो बलीवर्दाः, यूयं विमुच्यध्वम् । युगानि मुञ्चत । देवयाना देवतार्थं कर्मकारिणो यूयम् अस्य क्रियात्मकस्य तमसः पारं तीरं वयमगन्म पारं गतास्मेति सन्दध्वमिति शेषः । अतो वयं ज्योतिः सुखाभिव्यञ्जकं यज्ञलक्षणम् आपाम प्राप्नवन्तः ॥ कात्यायनः ॥ अभिजुहोति सजूरब्द इतीति ॥ कुशस्तम्बे जुहुयात् ॥ पाठस्तु ॥ सजूरब्दो अयवोभिः सजूरुषा अरुणीभिः । सजोषसा अश्विना दꣳसोभिः सजूः सूर एतशेन सजूर्वैश्वानर इळया घृतेन स्वाहेति ॥ अयवोभिरित्यनेन पदेन मासाश्चार्द्धमासाश्चोच्यन्ते । तैरब्दः संवत्सरः सजूः समानप्रीतियुक्तो भवत्विति शेषः । तथा उषा अरुणीभिः अरुणवर्णाभिः सजूः समानप्रीतियुक्ताः । तथा अश्विना अश्विनौ देवौ दꣳसोभिः कर्मभिः सह सजोषसौ समानप्रीतियुक्तौ । तथा सूर आदित्यः, एतशेन एतन्नाम्ना ऋषिणा शेन वा समानप्रीतियुक्तः । तथा वैश्वानरोऽग्निः, इळया अन्नरूपेण हविषा सजूः समानप्रीतियुक्तो भवतु । एवंविधेभ्यः सर्वेभ्यो देवेभ्यो घृतेनाहुतिरूपेण क्षरणरूपेणाज्येन स्वाहा सुहुतमस्तु ॥ इति त्रयोदशोऽध्याये पञ्चमोऽनुवाकः ॥ १३ ॥ ५ ॥

पञ्चमेऽनुवाके सुवः कर्षणमुक्तम् ॥ षष्ठे ओषधीवापोऽभिधीयते ॥

कात्यायनः ॥ या ओषधीरिति मस्यूचैर्वैपतीति ॥ या ओषधीरित्यादिभिः पञ्चदशसंख्याकाभिर्ऋग्भिः पश्चतृचान संपद्यन्ते । तैस्तृचैः सर्वा ओषधीर्निर्वपेत् ॥ तत्रेयं प्रथमा ॥ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनैनु बभ्रूणामहꣳ शतं धामानि सप्त चेति ॥ युगशब्दः कालवाची । त्रियुगं वर्षा शरद्वसन्त इति कालत्रयमुद्दिश्य पुरा सृष्ट्यादौ देवेभ्यः सकाशाद् या ओषधयः पूर्वाः प्रथमा जाता उत्पन्ना बभ्रूणां प्राणिभरणसमर्थानां परिपाकेण पिङ्गलवर्णानां वा तासामोषधीनां शतं धामानि शतसंख्याकानि भेदात् सप्त च । विशेषाकारेण ग्राम्यानारण्यांश्च सप्तधान्यभेदात् । अहं मनैनु मन्ये जानामि ॥ अथ द्वितीया ॥ शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अधा शतक्रत्वो यूयमिमं मे अगदं कृतेति ॥ हे अम्ब, मातृस्थाना ओषधयो, वो युष्माकं धामानि जातिभेदाः क्षेत्राणि वा शतं सन्ति उत अपि च वो युष्माकं रुहः मरोहा अङ्कुराश्च सहस्रं सन्ति । शतसहस्रमिताभ्यामपरिमितत्वमुपलक्ष्यते । अधाथैवं बहुभेदोपेतत्वे सति शतसंख्याका क्रतवो याभिर्युष्माभिर्निष्पाद्यन्ते तादृश्यः शतक्रत्वो यूयं मे मदीयमिमं यजमानम् अदगं कृत क्षुत्पिपासादिरोगरहितं कुरुत ॥ अथ तृतीयः ॥ ओषधीः प्रतिमृम्णीत पुष्पवतीः प्रसूवरीः। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णव इति ॥ ओषधीः प्रतिमृम्णीत यूयं प्रतिमृम्णीत । कीदृश्यः पुष्पवतीः । पुष्पैरुपेताः । प्रसूवरीः फलप्रसववतीः । अश्वा इव सजित्वरीः । सङ्ग्रामे यथा अश्वा जयशीलाः, तद्वत् फलपर्यन्तत्वाज्जयशीलाः, वीरुधो लतारूपाः पारयिष्णुफलकान्तत्वं परित्यज्य पारं बहुसंवत्सरावसानं प्राप्तुं शीलं यासां तास्तथाविधाः ॥ अथ चतुर्थः ॥ ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे । सनेयमश्वं गां वास आत्मानं तव पूरुषेति ॥ हे मातरो मातृसमाना देवीः देव्यः । इतिशब्दोऽत्र हेत्वर्थे वर्तते । यस्मादोषधीर्यूयमोषधयः, तस्माद्वो युष्मानुपब्रुवे प्रार्थये । कथं प्रार्थनमिति तदुच्यते । हे पूरुष, तव त्वदीयं सनेयं सह नेतव्यमश्वं, त्वदीयं गां पशुं वासस्त्वदीयं वस्त्रं स्थाने वा आत्मानं त्वदीयं शरीरम् एतत्सर्वमोषधयोऽभिरर्द्धिं प्रापयन्तित्यहमोषधीः प्रार्थये । हे ओषधयो, वो यूयं यजमानाऽश्वादिकमभिवृद्धिं प्रापयतेत्यर्थः ॥ अथ पञ्चमः ॥ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषमिति ॥ हे ओषधिदेवताः, वो युष्माकमश्वत्थे निषदनम् अश्वत्थवृक्षच्छायायामुपवेशनस्थानं भवति । पर्णे

पलाशवृक्षे वो युष्माकं वसतिः कृता निवासकारणं गृहं कृतम् । देवताधिष्ठितत्वादेव लोकेऽश्वत्थवृक्षः प्रदक्षिणानमस्कारादिभिः पूज्यते । पलाशवृक्षश्लेष्मादिरूपेण । इदृशोऽपि यूयं गोभाज इव भगदीयेन स्थावररूपेण भूमिभाज एवं भूत्वा अत्रैव किल स्थिताः । इतरलोके प्रसिद्धम् । तदिदमर्थमिति तदुच्यते । यद् यस्मात् कारणात् पूरुषम् इमं यजमानं मनुष्यं सनवथ अन्नदानेन पोषयथ । तस्मात् स्थावररूपात् इदं स्थानमित्यर्थः ॥ अथ षष्ठः ॥ यत्रौषधीः समग्मत राजानः समिता इव । विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातन इति ॥ यत्र यस्मिन् क्षेत्रे ओषधीरोषधयो यूयं समग्मत फलप्रदानाय सङ्गता भवत । तत्र दृष्टान्तः । राजानः समिता इव । यथा युद्धे प्रतिपक्षिणः सेनां जेतुं परस्परमनुकूला राजानः संगच्छन्ते । एवं संगताश्चौषधीषु विप्रो मेधावी रसवीर्यविपाकाभिज्ञो यः पुरुषः स भिषगुच्यते । क्षुधादिरोगस्य चिकित्सक इत्यभिधीयते । कथं भिषक्त्वमिति तदुच्यते । रक्षोहा पक्वाभिरेताभिरोषधीभिः पुरोगमं रक्षोघ्नं कृत्वा रक्षसां हन्ता तदुपद्रवरूपरोगं निवारयति । अमीवचातनः । ओषधीजन्यपथ्यादिभिरमीवान् रोगाँश्चातयति नाशयतीत्यमीवचातनः ॥ अथ सप्तमः ॥ अश्वावतीꣳ सोमावतीमूर्जयन्तीमुदोजसम् । आवित्सि सर्वा ओषधीरस्माऽअरिष्टतातय इति ॥ काचिदोषधीजातिरश्वावती । अश्वा अस्यां सन्तीत्यश्वावती ताम् । छान्दसो दीर्घः । ओषधिसमृद्धौ सत्यां यद्द्वारेणाश्वा लभ्यन्ते इत्यर्थः । अन्या काचिदोषधीः सोमावती सोमयागोऽस्यामस्तीति भूमोभा तद्वती सोमयागः कर्तुं शक्यत इत्यर्थः । अपरा जातिरूर्जयन्ती ऊर्जं बलं प्राणचेष्टां वा करोतीत्यर्थः । अन्या जातिरुदोजा उत्कृष्टमोजोधातुरङ्गे यस्याः सा उदोजाः । अन्नद्वारेण शरीरधातुं पोषयतीत्यर्थः । तास्सर्वा ओषधीः अहम् आवित्सि सर्वतो लब्धवानस्मि । किमर्थम् । अस्मा अरिष्टतातये अरिष्टस्य भावः अरिष्टतातिः । अस्य यजमानस्य हिंसाराहित्यायेत्यर्थः ॥ अथाऽष्टमी ॥ उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते धनꣳ सनिष्यन्तीनामात्मानं तव पूरुषेति ॥ ओषधीनां शुष्मा तदुपभोगजन्यबलविशेषा उदीरते उद्गच्छन्ति । तत्र दृष्टान्तः, गावो गोष्ठादिव । यथा गावः स्वनिवासस्थानाद् गृहादेररण्यदेशं प्रति उद्गच्छन्ति तद्वत् । कीदृशीनामोषधीनाम् । हे पुरुष, तव त्वदीयमात्मानं शरीरं प्रति धनं सनिष्यन्तीनां धनं दातुमिच्छन्तीनाम् ॥ अथ नवमी ॥ इष्कृतिर्नाम वो माता-

ऽथो यूयꣳ स्थ निष्कृतीः । सीराः पतत्रिणीः स्थ न यदामयति निष्कृथेति ॥ हे ओषधयः, वो युष्माकम् इष्कृतिर्नाम । नकारलोपश्छान्दसः । निष्कृतिः निष्करणं क्षुधादिविनाशनमेव माता मातृवदुत्पत्तिनिमित्तम् । क्षुधादिकं निवारयितुमेव हि भवतीनामुत्पत्तिः । अथो अपिचैवं सति, यूयं निष्कृतिः स्थ निष्कृस, क्षुधादिविनाशका भवथ । सीराः । क्षुधादीनामपसारयित्र्यः । पतत्रिणीः पतत्रं पतनम् अस्मान् प्रत्यागमनम् । तेनागमनेनोपेताः स्थ न, भवत । यत् क्षुधादिकमामयति रोगवद् बाधते तद् निष्कृथ विनाशयत ॥अथ दशमी॥ अति विश्वाः परिष्ठा स्तेन इव व्रजमक्रमुः । ओषधीः प्राचुच्यवुर्यत्किञ्च तन्वो रपः इति ॥ परिष्ठाः शरीरस्योपरिस्थिता उदरमध्ये प्रविष्टाः, विश्वाः सर्वाः ओषधयः अति जीर्णादिदोषमतिलङ्घ्य अक्रमुः । क्रान्ता देहे व्याप्ता इत्यर्थः । तत्र दृष्टान्तः । स्तेन इव व्रजम् । यथा रात्रौ गुप्तचोरो गोष्ठ उपविश्य गाम-पहर्तुं सावधानं गोशालायां सर्वतो व्याप्नोति तद्वत् । तन्वः शरीरस्य सम्ब-न्धी यत्किञ्च रपः शरीरे शिरोव्यथामुखपातिसारादिरूपं पापफलं यत्किञ्चि-दस्ति सर्वमोषधीरोषध्यः प्राचुच्यवुः विनाशितवत्यः ॥ ॥ अथैकादशी ॥ यदिमा वाजयन्नहमोषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीव-गृभो यथेति ॥ यद्यदाहं वाजयन्नन्नमिच्छन्निमा ओषधीर्हस्त आदधामि तदानीमेव यक्ष्मस्य क्षुदादिरोगस्यात्मा स्वरूपं पुरा नश्यति । भोजनात् प्रागेव नष्टप्रदृश्यो भवति । तत्र दृष्टान्तः । यथा लोके धीवरैर्जीवस्य शशादेर्ग्रहणात् पुरा भीतः शशः कर्णाभ्यां नेत्रे पिधाय भूमिं संश्लिष्टो मृत इव तिष्ठति तद्वत् ॥ ॥ अथ द्वादशी ॥ ॥ यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः । ततो यक्ष्मं विबाधध्व उग्रो मध्यमशीरिवेति ॥ यस्य रोगिणः अङ्ग-मङ्गं सर्वाण्यङ्गानि परुष्परुः परुःशब्दः पर्ववचनः । सर्वाणि पर्वाणि च, हे ओषधीः, ओषधयो यूयं प्रसर्पथ प्रगच्छत व्याप्नुत । ततोऽनन्तरमेव यक्ष्मं व्याधिं विबाधध्वम् । तस्मादङ्गपर्वसमुदायाद् व्याध्यपगमं कुरुध्वम् । तत्र दृष्टान्तः। उग्र उद्गूर्णबलः क्षत्रियः, मध्यमशीरिव मध्यमं मर्मभागं शृणाति विध्यति हिनस्तीति मध्यमशीर्मर्मघातकः सन् यथा शत्रून् बाधते, एवमोषधयो यूयमपि रोगिणो रोगं बाधध्वमित्यर्थः ॥

अथ त्रयोदशी ॥ साकं यक्ष्म प्रपत चाषेण किकिदीविना । साकं वा तस्य ध्राज्या साकं नश्य निहाकयेति । श्लेष्मावरुद्धकण्ठजन्यध्वनेरनुकरणार्थो-

ऽयं किकिशब्दः । किकिना ध्वनिविशेषेण दीव्यति व्यवहरतीति रोगविशेषः किकिदीविः । स च श्लेष्मजन्यः । चाषः कश्चित् पक्षिविशेषः । तद्वत् तीव्रत्वात् पित्तजन्यो रोगश्चाषः । हे पक्षराज पक्षपादिरोग, त्वं श्लेष्मजन्येन पित्तजन्येन च वातेन सार्कं प्रपत प्रकर्षेण नष्टो भव । तथा तस्य प्राज्यातरोगस्य गत्या व्याध्या सह नश्य नष्टो भव । तथा यया पीडया निहतोऽस्मि हा कष्टमिति शब्दं करोति सा निहाका तया सार्कं नश्य नष्टो भव ॥ अथ चतुर्दशी ॥ अन्या वो अन्यामवत्वन्यान्यस्या उपाऽवत । ताः सर्वाः संविदाना इदं मे प्रावता वचः इति ॥ हे ओषधयो, युष्माकं मध्ये अन्या काचिदोषधीव्यक्तिरन्यामितरामोषधीव्यक्तिम् । अवतु तया रक्षिता सान्या अन्यस्या रक्षिकाया उपावत समीपमागत्य तामप्यवतु । संहत्यकारित्वात् परस्पररक्षकत्वमुचितम् । ताः सर्वास्तथाविधा ओषधयो यूयं संविदानाः परस्परमैकमत्यं गताः सत्यो मे मदीयमिदं वचो वाक्यं प्रार्थनारूपं प्रावत प्रकर्षेण रक्षत ॥ अथ पञ्चदशी ॥ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहस इति ॥ या ओषधयः फलिनीः फलिन्यः फलयुक्ताः । याश्चाफलाः फलरहिताः । याश्चापुष्पाः पुष्परहिता । याश्च पुष्पिणीः पुष्पयुक्ताः । सर्वा बृहस्पतिप्रसूताः । बृहस्पतिना प्रेरिताः सत्यो नोऽस्मान् अंहसः पापान्मुञ्चन्तु मोचयन्तु ॥ एवमोषधिविषयाणि पञ्च तृचान्याम्नातानि ॥ अथाऽत्रैव विकल्पिता दशर्च आम्नायन्ते ॥ ॥ अथ प्रथमः ॥ मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत । अथो यमस्य पड्वीशात् सर्वस्माद्देवकिल्बिषात् इति ॥ शपथ्यात् शपथे भव शपथ्यम् । तस्मात्किल्बिषान्मामोषधयो मुञ्चन्तु । अथो अपिच वरुण्याद् वरुणे भव वरुण्यं तस्माद्वरुणापराधनिमित्तात् पापान्मा मुञ्चन्तु । उताऽपिच यमस्य सम्बन्धिनः पड्वीशात् पड्वीशशब्दोऽत्र बन्धनवाची । बन्धननिमित्तात् पापान्मा मुञ्चन्तु । अथोऽपिच सर्वस्माद्देवकिल्बिषाद्देवतापराधनिमित्तात् पापान्मा मुञ्चन्तु ॥

अथ द्वितीयः ॥ अवपतीः समवदन्त दिव ओषधयस्परि । यं जीवमश्नवामहै न स रिष्याति पूरुष इति ॥ द्युलोकात् पतन्तो वृष्टिबिन्दव ओषधिरूपेणोत्पद्यन्ते । तथाच तैत्तिरीयेऽग्निहोत्रब्राह्मणैः समाम्नायते । यावन्तस्तोका आपः अपोऽवपद्यन्ते तावतीरोषधयो जायन्ते इति । अतोऽत्रापि दिवः परि स्वर्गस्योपरितनप्रदेशादवपतीरवयत्यः अधस्ताद् भूमौ पतन्त्य ओषधयः समवदन्त

परस्परं सम्यगेतद्वचनमुक्तवत्यः । कीदृशं वचनमिति तदुच्यते । यं जीवं प्राणिनमश्नवामहै व्याप्नुमः स पुरुषो न रिष्यति नैव विनश्यतीति ॥ अथ तृतीयः॥ या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः । तासामसि त्वमुत्तमाऽरं कामाय शं हृद इति ॥ सोमराज्ञीः सोमो राजा यासां ताः सोमराज्ञीः बह्वीर्बह्व्यः शतविचक्षणाः शतं विचक्ष्यन्ते मोच्यन्ते इति शतविचक्षणाः । एवम्भूता या ओषधीरोषध्यः सन्ति तासामोषधीनां मध्ये हे ओषधीः, उत्तमा उत्कृष्टा त्वं कामाय अरम् अलं समर्थाऽसि । ततो हृदे हृदयाय शं सुखकारिणी भवेति शेषः॥अथ चतुर्थी॥या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु। बृहस्पतिप्रसूता अस्यै सन्दत्त वीर्यमिति ॥ पृथिवीमनु विष्ठिताः बृहस्पतिप्रसूता बृहस्पतिना प्रेरिताः सोमराज्ञी या ओषधयो यूयम् । अस्यै पृथिव्यै वीर्यं सामर्थ्यं सन्दत्त सम्यक् प्रयच्छत ॥ अथ पञ्चमी ॥ याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः सर्वाः सङ्गत्य वीरुधोऽस्यै सन्दत्त वीर्यमिति ॥ याश्चोषधिदेवता इदं मदीयं प्रार्थनं समीपस्थाः सत्यः शृण्वन्ति । याश्चान्या ओषधिदेवता दूरं यथा भवति तथा परागता व्यवहिताः सत्य ईषच्छृण्वन्ति । हे वीरुधो लतारूपाः सर्वा ओषधयो यूयं सङ्गत्य सङ्गता भूत्वा अस्यै पृथिव्यै वीर्यं सामर्थ्यं पृथग्दत्त ॥ ॥ अथ षष्ठी ॥ नाशयित्री बलासस्यार्शस उपचितामसि । अथो शतस्य यक्ष्माणां पाकारोरसि नाशनीति ॥ हे ओषधि, त्वं बलासस्य बलमस्यति क्षिपतीति बलक्षयस्तस्य अर्शसो मूलव्याधेर्नाशयित्र्यसि । किञ्च उपचितां शरीरे उपचीयन्तेऽन्ये ये रोगास्ते उपचितः, तेषामपि नाशयित्र्यसि । अथो अपिच शतस्य यक्ष्माणां व्याधीनां शतस्यापि नाशिनी त्वमसि । पाकारोः क्षयव्याधेरपि नाशनी त्वमसि ॥ ॥ अथ सप्तमी ॥ मा वो रिषत् खनिता यस्मै चाहं खनामि वः । द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरमिति ॥ हे ओषधयो, वो युष्माकं खनिता चिकित्सार्थे युष्मदीयमूलं ग्रहीतुं खननस्य कर्ता मा रिषत् । मा विनश्यतु । अहं च यस्मै रुग्णाय चिकित्सार्थं वः खनामि युष्मन्मूलं ग्रहीतुं करोमि सोऽहमपि मा विनश्यामि । किं बहुना, अस्माकं सम्बन्धि द्विपच्चतुष्पद्वा प्राणिजातं युष्मानुपजीवति तत्सर्वमनातुरं रोगरहितमस्तु ॥ अथाऽष्टमी ॥ ओषधयः संवदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसीति ॥ ओषधयः ओषधिदेवताः स्वकीयेन स्वामिना सोमेन राज्ञा सह संवदन्ते वादं कुर्वन्ति । कथं संवाद इत्युच्यते ।

यस्मै रुगणाय चिकित्सामस्मदीयमूलादिना ब्राह्मणः कृणोति करोति, हे राजन् तमातुरं पारयामसि । वयं पारयामः । व्याधेस्तारयामः ॥ अथ नवमी ॥ त्वां गन्धर्वा अखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः । त्वामोषधे सोमो राजा विद्वान् यक्ष्मादमुच्यतेति ॥ हे ओषधे, त्वां गन्धर्वाः स्वापेक्षितकार्यसिद्ध्यर्थम् अखनन् खननमकुर्वन् । त्वामिन्द्रोऽपि अखनत् । तथा बृहस्पतिश्चाऽखनत् । विद्वान् ओषधिसामर्थ्यं जानन् सोमो राजा त्वामखनत् । अतस्त्वामयं सम्भुज्य यक्ष्माद्रोगादमुच्यत मुक्तो भवतु ॥ अथ दशमी ॥ त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः । उपस्तिरस्तु सोऽस्माकं योऽस्माँ अभिदासतीति ॥ हे ओषधे, त्वमुत्तमा उत्कृष्टासि । वृक्षादयः उपस्तयः त्वदीयबाधापरिहारार्थं वृक्षास्तिष्ठन्तीति उपस्तयो भवन्तु । योऽस्मानभिदासति अभिहन्ति स पुरुषोऽस्माकम् उपस्तिरस्तु । अस्मदुपद्रवपरिहाराय स्थिरो भवतु ॥ इति त्रयोदशेऽध्याये षष्ठोऽनुवाकः ॥ १३ ॥ ६ ॥

षष्ठेऽनुवाके ओषधिनिवापोऽभिहितः ॥ अथ सप्तमे लोकेष्टकोपधानादिमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ मा मा हिꣳसीदिति मत्यृचं मदिशमिति ॥ मा मा हिꣳसीदित्यादिभिश्चतसृभिर्ऋग्भिः पूर्वादिदिक्क्रमेण लोकेष्टकसंज्ञका लोकरूपा इष्टका उपदध्यादिति शेषः ॥ तत्र प्रथमा ॥ मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट् । यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेमेति॥यः प्रजापतिः पृथिव्या जनिता उत्पादकः, यो वा प्रजापतिः सत्यधर्मा अवितथधारणशक्तिः सन् दिवं द्युलोकं व्यानट् व्याप्तवान् । पुनरपि यः प्रजापतिः प्रथमो मुख्यः चन्द्रः आल्हादिकारिणीः,आपः उदकानि जजान उत्पादयामास तादृशाय कस्मै प्रजापतये देवाय हविषा विधेम वयं परिचरेम । एवम्भूतः प्रजापतिः मा मा हिꣳसीत् हिंसां मा करोतु ॥ अथ द्वितीया ॥ अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते अग्निरिषितो अरोहदिति ॥ हे पृथिवि, यज्ञेनाग्न्यात्मकेन पयसा च तत्फलभूतेन सह अभ्यावर्तस्व । अस्मदाभिमुख्येनागच्छ । इषित इच्छावानतोऽग्निः ते वपां त्वदीयं वपासदृशामिमं प्रदेशम् अरोहत् । आरोहतु स्वीकरोतु ॥ अथ तृतीया ॥ अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम् । तद्देवेभ्यो भरामसीति॥ हे अग्ने ते त्वदीयं त्वदङ्गं शुक्रं दीप्तिमत् । यच्चान्यदङ्गं चन्द्रम् आल्हादकरं यदप्यन्यदङ्ग यज्ञियं यज्ञार्हं तत्सर्वं ज्योतीरूपं देवेभ्यो देवानामर्थे भरामसि सम्पादयामः॥

अथ चतुर्थी ॥ इषमूर्जमहमित आदमृतस्य योनिं महिषस्य धाराम् । आ मा गोषु विशत्वातनूषु जहामि सेदिमनिराममीवामिति ॥ ऋतस्य यज्ञस्य योनिं स्थानं महिषस्य महतोऽग्नेः धारणं च इषमन्नम् ऊर्जं रसं च इतोऽस्मात् प्रदेशादहमादं स्वीकरोमि । एतत् सर्वं मा माम् आविशतु । आगत्य प्रविशतु । किञ्च, तनूषु मदीयपुत्रादिशरीरेषु मदीयगोषु च आविशतु ॥ कात्यायनः ॥ सिकताः प्रमार्ष्टि जहामीतीति ॥ तत्र स्थिता बालुकाः प्रमार्जयेत् ॥ पाठस्तु ॥ जहामि सेदिमनिराममीवामिति ॥ अनिरामन्नरहितामप्रीवां रोगयुक्तां सेदिं सिकतारूपां भूमिं जहामि परित्यजामि ॥ कात्यायनः ॥ कुशस्तम्बेऽग्ने तवेति सिकता न्युप्येति ॥ कुशस्तम्बेऽग्ने तवेत्यादिभिः षड्भिर्ऋग्भिः सिकताः प्रक्षिप्येत्यर्थः ॥ तत्र प्रथमा ॥ अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो । बृहद्भानो शवसा वाचमुक्थ्यं दधासि दाशुषे कव इति ॥ विज्यते प्राणिभिरश्यत इति वयोऽन्नम् । हे अग्ने, तव श्रवः त्वदीयत्वेन श्रूयमाणं वयोऽन्नं महि महदस्ति । विभा दीप्तिरेव वसु धनं यस्याऽसौ विभावसुः । हे विभावसो, अर्चयस्तव दीप्तयो भ्राजन्ते दीप्यन्ते । बृहन्तो भानवो रश्मयो यस्याऽसौ बृहद्भानुः कविर्विद्वान् यजमानाभिप्रायज्ञः । तादृश हे अग्ने, दाशुषे हविर्दत्तवते यजमानाय उक्थ्यं शस्त्राद्युपेतं यज्ञयोग्यं वाजमन्नं शवसा त्वदीयेन बलेन दधासि स्वयमादधासि ॥ अथ द्वितीया ॥ पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना । पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे इति ॥ पावकवर्चाः शोधकदीप्तिः, शुक्रवर्चा निर्मलदीप्तिः अनूनवर्चा ईदृशस्त्वं भानुना भासा उदियर्षि उत्कर्षं गच्छसि । उभे रोदसी द्यावापृथिव्यौ विचरन् परिचरन्नुपावसि समीपमागत्य रक्षसि । पृणक्षि च । तयोः सम्पर्कमपि करोषि । परिचरणे दृष्टान्तः । पुत्रो मातरा यथा । लोके शास्त्रीयमार्गेणाऽनुशिष्टः पुत्रो मातरौ परिचरति तद्वत् ॥ अथ तृतीया ॥ ऊर्जोनपाज्जातवेदः सुशस्तिभिर्मन्दस्वधीतिभिर्हितः । त्वे इषः सन्दधुर्भूरिवर्पसश्चित्रोतयो वामजाता इति ॥ ऊर्जोऽन्नस्य नपाद् अविनाशयिता तादृश, हे जातवेदः, धीतिभिर्हितः दीप्तिभिर्युक्तः सन् सुशस्तिभिः शोभनाभिः स्तुतिभिर्मन्दस्व तृप्यस्व । भूरिवर्पसः नानारूपयजमानाः । त्वे त्वयि इषो हविर्लक्षणानि अन्नानि सन्दधुः सम्पादितवन्तः । ईदृशा यजमानाः, चित्रोतयः विचित्रास्त्वया कृता ऊतयो रक्षा येषां ते चित्रोतयः वामजाताः वननीये सम्भजनीये देशे कुले

चोत्पन्नाः ॥ अथ चतुर्थी ॥ इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य। स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिं क्रतुमिति ॥ हे अमर्त्य मरणरहिताग्ने, जन्तुभिः पुरोडाशादिहविःप्रदैः प्राणिभिरिरज्यन् दीप्यमानः सन् अस्मे अस्मासु रायो धनानि प्रथयस्व विस्तारय। स त्वं दर्शतस्य वपुषो दर्शनीयस्य चित्राग्निरूपस्य शरीरस्य मध्ये विराजसि विशेषेण दीप्यसे सानसिं बहुविधनानाईक्रतुमस्मदीयमस्मं पृणक्षि पूरय पारं गमयेत्यर्थः ॥ अथ पञ्चमी ॥ इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ राधसो महः । रातिं वामस्य सुभगां महीमिषं दधासि सानसिꣳ रयिमिति ॥ अध्वरस्य इष्कर्तारं यजमानस्य निष्पादकम् । प्रचेतसं प्रकृष्टचित्तयुक्तं क्षयन्तं विशिष्टस्थाने निवसन्तं यजमानं वामस्य वननीयस्य महो महतो राधसो धनस्य रातिं करोषीति शेषः । किञ्च, सुभगां सुष्ठुभजनीयां महीं महतीम् इषमन्नं सानसिं सम्भजनीयं रयिं पश्वादिधनं च दधासि ददासि ॥ अथ षष्ठी ॥ ऋतावानं महिषं विश्वदर्शतमग्निꣳ सुम्नाय दधिरे पुरोजनाः । श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगेति ॥ मानुषजना मनुष्यजातियुक्ता जन्तवः ऋत्विग्यजमानाः पुरः पूर्वस्मिन् काले युगा गिरा योग्यया स्तुतिरूपया वाचा सुम्नाय सुखार्थमग्निमत्र दधिरे स्थापितवन्तः । कीदृशमग्निम् । ऋतावानं सत्यवन्तं यज्ञवन्तं वा महिषं महान्तं विश्वदर्शतं सर्वतो दर्शनीयम् । श्रुत्कर्णं शृण्वत्कर्णम् । यद्विज्ञाप्यते । तत्सत्यमेव कर्णेन श्रुत्वा सम्पादयतीत्यर्थः । सप्रथस्तमम् अतिशयेन प्रथासहितं कीर्तिमन्तं तादृशं त्वामग्निं दैव्यं देवेभ्यो हितं दधिरे इत्यन्वयः ॥ कात्यायनः॥आप्यायस्वेति सिकतालम्भनप्रऋग्भ्यामिति ॥ पूर्वं न्युप्ता सिकता आप्यायस्वेति एताभ्याम् ऋग्भ्यां संस्पृशेत् ॥ तत्र प्रथमा॥आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवा वाजस्य सङ्गथ इति ॥ हे सोम, त्वमाप्यायस्व सर्वतो वर्धस्व । ते तव वृष्ण्यं वीर्यं विश्वतः सर्वस्मात् समेतु सम्प्राप्नोतु । वाजस्यान्नस्य सङ्गथे सङ्गमने त्वन्निमित्तं भव ॥

अथ द्वितीया॥सं ते पयाꣳसि समुयन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः।आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्वेति । हे सोम, ते तव पयांसि पातव्यानि क्षीरादीनि समुयन्तु । संप्राप्तानि भवन्तु । तथा वाजा अन्नान्यपि समुयन्तु।वृष्ण्यानि रेतांस्यपि समुयन्तु।कीदृशस्य तव अभिमातिषाहः।अभिमातिं पाप्मानं सहते तिरस्करोतीत्यभिमातिषाहः । तस्य क्षीरादिसंपत्तौ सत्यां

स्वयमाप्यायमानो वर्द्धमानः, अमृताय यजमानस्यामृतत्वाय देवभावाय दिवि द्युलोके उत्तमान्युत्कृष्टानि श्रवांस्यन्नानि धिष्व धारय संपादयेत्यर्थः ॥ आप्यायस्व मदिन्तमेत्यादिचतुर्णा मन्त्राणा विनियोगोऽन्वेष्टव्यः ॥ तत्र प्रथममन्त्रपाठस्तु ॥ आप्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः । भवा नः सप्रथस्तमः सखा वृधे इति ॥ हे मदिन्तम अतिशयेन मादिन्तम सोम, त्वम् आप्यायस्व प्रवृद्धो भव । ततो विश्वेभिर्विश्वैः सर्वैरंशुभिः सूक्ष्मांशैः सखा सखिभूतः सन्नोऽस्माकं वृधे वर्द्धनाय सप्रथस्तमः । प्रथयितृतमो भव ॥ अथ द्वितीयः ॥ आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वां कामया गिरेति ॥ हे अग्ने, ते तव वत्सः प्रियभूतो यजमानः, त्वां कामया त्वां स्तोतु काम्ययाऽनया गिरा वाचा परमाच्चित्सधस्थादुत्कृष्टादपि स्थानाद् मनोऽन्तःकरणम् आयमत् नियच्छतु ॥ अथ तृतीयः ॥ तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे इति ॥ हे अङ्गिरस्तम अग्ने, तुभ्यं यजमानैः कृता याः स्तुतयः सन्ति सर्वाः पृथक् पृथक् सुक्षितयः शोभननिवासास्ताः स्तुतयः कामाय यजमानानां मनसोऽभिलाषपरिपूरणार्थं येमिरे नियम्यन्ताम् ॥ अथ चतुर्थः ॥ अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य । सम्राळेको विराजतीति ॥ भूतस्य उत्पन्नस्य भव्यस्य भविष्यतश्च जनस्य कामः कामपूरकः सम्राट् सम्यग्राजमानोऽग्निः प्रियेषु धामसु । अभिरुचितेषु स्थानेषु एकोऽसहायभूतः सन् विराजति विशेषेण दीप्यते ॥ इति त्रयोदशेऽध्याये सप्तमोऽनुवाकः ॥ १३ ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराज-परमेश्वरवैदिकमार्गप्रवर्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये काण्वसंहिताभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥

# अथ चतुर्दशोऽध्यायः ॥ १४ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

त्रयोदशेऽध्याये यजमानस्य कण्ठे रुक्मधारणादिमन्त्रा उक्ताः ॥ अथ चतुर्दशेऽध्याये यजमानजपपुष्करपर्णाद्युपधानमन्त्रा उच्यन्ते ॥ तत्र प्रथमेऽनुवाके यजमानजपादिस्रगुपधानपर्यन्ता मन्त्रा निरूप्यन्ते ॥ कात्यायनः ॥ उत्तरवेदिमपरेण तिष्ठन् यजमानो मयि गृह्णामीति जपतीति ॥ पाठस्तु ॥ **मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मामु देवताः सचन्तामिति** ॥ अहं यजमानः अग्रे प्रथमं मय्यात्मनि अग्निं गृह्णामि धारयामि । किमर्थम्? रायस्पोषाय धनपुष्ट्यर्थं, सुप्रजास्त्वाय शोभनपुत्रादिनिष्पादनार्थं, सुवीर्याय शोभनसामर्थ्यार्थं च । किञ्च, उकारोऽप्यर्थे देवता अपि एवं स्थितं मां सचन्तां सङ्गच्छन्तां प्राप्नुवन्तु ॥ कात्यायनः ॥ पुष्करपर्णमुपदधाति स्तम्बे पूर्ववदिति ॥ पूर्वं मृदाहरणकाले येन मन्त्रेण कृष्णाजिने पुष्करपर्णमुपदध्यात् इदानीं तेनैवापां पृष्ठमसीति मन्त्रेण कुशस्तम्बे पुष्करपर्णमुपदध्यादित्यर्थः ॥ पाठस्तु ॥ **अपां पृष्ठमसि योनिरग्नेस्समुद्रमभितः पिनम् । वर्धमानो महांऽआ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्वेति** ॥ अयं मन्त्रो द्वादशाध्याये व्याख्यातः ॥ कात्यायनः ॥ तस्मिन् रुक्ममधः पिण्डं ब्रह्मजज्ञानमिति ॥ तस्मिन् पुष्करपर्णे रुक्ममधस्तनबिलं यथा भवति तथा उपदधातीति शेषः ॥ पाठस्तु ॥ **ब्रह्मजज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवरिति** ॥ प्रथमजं ज्ञानमादौ उत्पन्नमिदं रुक्मस्वरूपं ब्रह्म परिवृढमत्यन्तं महदित्यर्थः । तस्य रुक्मस्य दृष्टान्तत्वेन सूर्यः प्रपञ्च्यते । पुरस्तात् पूर्वस्यां दिशि अवस्थितो वेनः कमनीयः सूर्यः सीमतः सर्वस्यां सीम्नि सुरुचः शोभनरश्मीन् विशेषेणाऽऽवः । आवृणोत् । अस्य रुक्मस्योपमा उपमानभूता विष्ठा विशेषेणाऽवस्थिता बुध्न्याः बुध्न्ये मूले पृथिवीरूपे भवाः यदा ये सन्ति तानपि स वेनो विवः विवृतवान् प्रकाशितवानित्यर्थः । सतो विद्यमानस्य घटपटादेर्योनिः कारणं मृदादिरूपम् असतश्चाविद्यमानस्य नरविषाणादेः कारणं मनुष्यमूर्धादिकमपि विवो विवृत-

वान् । तथाविधेन सूर्येण सदृशोऽयं रुक्मः । मकाशत इत्यर्थः ॥ कात्यायनः ॥ हिरण्यपुरुषं तस्मिन् हिरण्यगर्भ इतीति॥तस्मिन् रुक्मे सुवर्णेन निर्मितं पुरुषम् ऊर्ध्वाभिमुखं यथा भवति तथा हिरण्यगर्भ इति मन्त्रद्वयेनोपदध्यादिति शेषः ॥ तत्र प्रथममन्त्रपाठस्तु ॥

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेमेति ॥ हिरण्यं ब्रह्माण्डरूपेण गर्भरूपेणावस्थितः प्रजापतिर्हिरण्यगर्भः । स च भूतस्य प्राणिजातस्याग्रे समवर्त्तत प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव । स च जात उत्पन्नमात्र एक एवोत्पत्स्यमानस्य सर्वस्य जगतः पतिरासीत् । अत एव पृथिवीं द्यां विस्तीर्णां दिवं दाधार धृतवान्, उताऽपिचेमां भूमिं दाधार तादृशाय कस्मै प्रजापतये देवाय हविषा विधेम वयं परिचरेम ॥ अथ द्वितीयः ॥ द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । समानं योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्रा इति ॥ द्रव्यान्तरमद्दृष्टेनेन स्फुरितो हिरण्यपुरुषावयवलेशो द्रप्सः । स पृथिवीमनु चस्कन्द पृथिव्यां पतित इत्यर्थः । स च द्रप्सो हुतः सन् स्थानत्रयेण सञ्चरति द्युलोकेऽन्तरिक्षलोके भूलोके च । तदेतदभिमेत्य स्मर्यते । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति । सोऽयमर्थो, द्यामित्यादिनाऽभिधीयते । द्यामिमं च योनिमनु अन्तरिक्षरूपमिदं स्थानमनुसञ्चरति यश्च पूर्वः योऽपि पृथिवीमनु चस्कन्देति पूर्वोक्तस्थानविशेषः तमप्यनुसञ्चरति । समानं सदृशं स्वस्य योग्यं योनिं द्युलोकरूपमादित्यस्थानमनुसञ्चरति तमिमं त्रिषु स्थानेष्वनुसञ्चरन्तं द्रप्सं जुहोमि मनसा हुतमिव भावयामि । कुत्र होम इति ? तदुच्यते । अनु सप्तहोत्राः । यस्यां दिशि द्रप्सः पतितः । तद्व्यतिरिक्ता होमयोग्या याः सप्त दिशः सन्ति तास्वनुक्रमेण जुहोमि । यथाऽयं द्रप्सो हुत आदित्यादिस्थानत्रयेषु सञ्चरन्नुपकरोति । तथा भावयामीत्यर्थः ॥ कात्यायनः ॥ उपतिष्ठते यजमानो नमोऽस्त्विति ॥ नमोऽस्त्वित्यादिभिस्त्रिभिर्मन्त्रैर्यजमान उपस्थानं कुर्यात् ॥ तत्र प्रथमः ॥ नमोऽस्तु सर्पेभ्यो येकेच पृथिवीमनु । येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नम इति ॥ ये केचित् सर्पाः पृथिवीमनुगतास्तेभ्यः सर्पेभ्यो नमोऽस्तु । अन्तरिक्षे अन्तरिक्षलोके वर्तमानाः सर्पा ये च

दिवि द्युलोके वर्तमाना वाहूमभूतयस्तेभ्यः सर्पेभ्यो नमोऽस्तु ॥ अथ द्वितीयः॥ या इषवो यातुधानानां ये वा वनस्पतींरनु । ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नम इति ॥ याः सर्पजातयो यातुधानानां राक्षसाना-मिषवो बाणरूपेण वर्तन्ते ये चाऽन्ये वनस्पतींश्चन्दनादिवृक्षाननुवेष्ट्यावेष्ट्य स्थिताः । ये चान्ये अवटेषु बिलेषु शेरते तेभ्यः सर्पेभ्यो नमोऽस्तु ॥ अथ तृतीयः ॥ ये वाऽमी रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषा-मप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नम इति ॥ दिवो द्युलोकस्य रोचने दीप्तस्थाने ये चामी सर्पा अस्माभिरदृश्यमानाः सन्ति तथा सूर्यस्य रश्मिषु ये वा सर्पा वसन्ति । येषां सर्पाणामप्सु जलेषु सदः स्थानं कृत तेभ्यः सर्पेभ्यो कृतेभ्यो नमोऽस्तु ॥ कात्यायनः ॥ पञ्चगृहीतं जुहोति पुरुषे कृणुष्वपाज इति मत्यृचं मतिदिशमिति ॥ पञ्चवारं गृहीतमाज्यं हिरण्मये पुरुषे कृणुष्वपाज इत्यादिभिः पञ्चभिर्ऋग्भिः क्रमेण प्रागाद्यूर्ध्वान्तं पञ्च दिशोऽभिलक्ष्य जुहुयात् ॥ तत्र प्रथमा ॥ कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवाऽमवाँ इभेन ॥ तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैरि-ति ॥ कृणुष्व कुरुष्व पाजो बलं, प्रसितिं न = मृगबन्धनहेतुभूतामिव पृथ्वीं प्रसारिताम्, अतोऽनन्तरं याहि अमवान् शत्रून् इभेन गजेन तृष्वीं क्षिप्रगामिनीं प्रसितिं प्रकृष्टसेनां द्रुणानो हिंसन्, अस्ता क्षेप्ता धावयिता रक्षसो राक्ष-सान् तपिष्ठैरतिसन्तापकैर्बाणैः । हे अग्ने, मृगबन्धनाय प्रसारितां पृथ्वीं च रक्षोनिरोधाय प्रौढबलं कुरु अमात्ययुक्तो गजेन सहितो राजेव रक्षसामुपरि याहि । क्षिप्रगामिनीं परकीयसेनामनुप्रवृत्तो गत्वा पलायनविशिष्टाया धाव-यिता भव । पलायमानानपि राक्षसान् बाणैस्तीक्ष्णैर्विध्य ॥ अथ द्वितीया ॥ तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः । तपूं-ष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्का इति ॥ भ्रमासो भ्रमणशीला विस्फुलिङ्गा आशुया शीघ्रगामिनः पतन्ति इतश्चेतश्च गच्छन्ति । धृषता धार्ष्ट्येन शोशुचानो भृशं दीप्यमानः, तपूंषि तापकर्तॄणि रक्षांसि, पतङ्गान् पतनशीलान् विस्फुलिङ्गान् अनुस्पृश स्पर्शनं कुरु । असन्दितः अखण्डितः विसृज विशेषेणोत्पादय । विष्वक् सर्वतः, उल्का महाज्वालाः । हे अग्ने, तव सम्बन्धिनो विस्फुलिङ्गाः शीघ्रगामिनः सर्वतः पतन्तु । त्वमपि भृशं दीप्यमानस्तैर्विस्फुलिङ्गैस्तानसुरान् धार्ष्ट्येनातपन्तमादमनुस्पृश पुन-

रपि जुह्वा हुतेन हविषा त्वमविच्छिन्नः सन् सन्तापान् विस्फुलिङ्गान् महाज्वालास्वाशु खादनाय सर्वतो बाहुल्येनोत्पादय ॥ अथ तृतीयः ॥ प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः । यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीदिति ॥ स्पशः स्पशः । नोऽस्माकं दूरे योऽघशंसः, अघं पापं शंसति गच्छति अघशंसः । अस्मद्द्रोही यो दूरे वसति । यश्चान्ति समीपेऽघशंसः । हे अग्ने, तं प्रति स्पशः । स्पश बन्धन इति धातुः । स्पशयन्ति बध्नन्तीति स्पशो बन्धनकृतः प्रणिधीन् विसृज प्रेरय । अस्या अस्मदीयाया विशः प्रजायाः पायुः । पातीति पायुः पालको भव । कीदृशस्त्वम् । तूर्णितमः । तूर्णं वेगोऽस्यास्तीति तूर्णी । अत्यन्तं तूर्णी तूर्णितमः । वेगवत्तरः । अदब्धः । अनुपहिंसितः । हे अग्ने, एवमनुग्रहनत्तस्य ते तव माकिः मा कश्चिद् व्यथिः, व्यथयतीति व्यथिर्व्यथकः शत्रुरादधर्षीत् । धार्ष्ट्यं मा करोतु । दूरसमीपस्थानस्मच्छत्रून् प्रति त्वरितो बन्धकान् प्रेरय । केनाऽप्यहिंसितोऽस्मत्प्रजापालको भव । राक्षसाश्च त्वां प्रति धृष्टा मा सन्त्वित्यर्थः । धृषो धातोर्लुङि द्वित्वम् अडभावश्च मायोगात् ॥ अथ चतुर्थी ॥ उदग्ने तिष्ठ प्रत्यातनुष्व न्यऽमित्रां ओषतात् तिग्महेते । यो नोऽअरातिं समिधान चक्रे नीचा तं धक्ष्यऽतसं न शुष्कमिति ॥ हे अग्ने त्वमुत्तिष्ठ । ततः प्रत्यातनुष्व ज्वाला विस्तारय । तिग्मा हेतयो यस्य स तिग्महेतिः । तिग्मं, तेजेत्युत्साहकर्मणः । तत्सम्बोधनं, हे तिग्महेते, उत्साहवदायुध, अमित्रान् शत्रून् त्वं न्योषतात् नितरां दह । उष दाहे । तुह्योस्तातङाशिषीति हेस्तातङादेशः । हे समिधान । समिन्धे दीप्यतेऽसौ समिधानः । तत्सम्बुद्धौ हे समिधान दीप्यमान, नोऽस्माकं योऽरातिम् अदानं चक्रे करोति दानं प्रतिषेधति, तं नीचा नीचैः कृत्वा धक्षि दह । दह भस्मीकरणे । बहुलं छन्दसीति शपि लुप्ते लटि मध्यमैकवचने धक्षीति रूपम् । तत्र दृष्टान्तः । शुष्कम् अतसं न । न इवार्थः । अतसो वृक्षः । शुष्कं वृक्षमिव अदातारं निर्दहेत्यर्थः ॥ अथ पञ्चमी ॥ ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रूनिति ॥ हे अग्ने, ऊर्ध्वो भव उद्युक्तो भव । अस्मदधि अस्माकमुपरि वर्तमानान् शत्रून् प्रतिविध्य प्रतिताडय । दैव्यानि देवसंबन्धीनि कर्माणि आविः कृणुष्व प्रकटय । किञ्च, यातुजूनां यातुधानानां

स्थिरा स्थिराणि धनूंषि अवतनुहि अवतारय । किञ्च, जाम्यजामिशब्दौ पुनरुक्तापुनरुक्तवचनौ । जामिमजामिं पुनरुक्तमपुनरुक्तं कृत्वा, पुनः पुनस्ताडितमताडितं वा शत्रून् प्रमृणीहि। मृणातिर्मारणार्थः। रिपून् मारय ॥ कात्यायनः ॥ घृतपूर्णामग्नेष्ट्वेति ॥ काष्मर्यमयीं पादमात्रदीर्घां षडङ्गुलविपुलां घृतपूर्णां प्रागग्रां स्रुचम् अग्नेष्ट्वेति यजुषाग्निर्मूर्द्धेति ऋचा चोपदधाति ॥ पाठस्तु ॥ अग्नेष्ट्वा तेजसा सादयामीति ॥ हे स्रुक्, अग्नेः सम्बन्धिना तेजसा त्वा त्वां सादयामि ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाᳬरेताᳪसि जिन्वतीति ॥ अयं मन्त्रः पूर्ववद् व्याख्यातः ॥ कात्यायनः ॥ एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति ॥ एवंविधामेवौदुम्बरीं दधिपूर्णां स्रुचमुत्तरे उपदधाति ॥ पाठस्तु ॥ इन्द्रस्य त्वौजसा सादयामीति ॥ हे स्रुक्, इन्द्रस्यौजसा तेजसा त्वा त्वां सादयामि स्थापयामि ॥ भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहमिति ॥ हे अग्ने, त्वं यदा हव्यवाहं हव्यं वहतीति हव्यवाट् तां हविषो वोढ्रीं जिह्वां ज्वालां चकृषे करोषि । लडर्थे लिट् । तदा यज्ञस्य द्रव्यदेवतात्यागात्मनो नेता भुवः भवसि । रजसो यज्ञपरिणामरूपोदकस्य च नेता भुवः भवसि जगद्रक्षार्थम् । भवतर्लेटि मध्यमैकवचने सिपि, इतश्च लोप इतीकारलोपे, लेटोऽडाटाविसडागमे, अविश्नुधातिर्भुवद्रादेशे च कृते भुव इति रूपम् । कुत्र नेता भवसीत्यत आह । यत्र यस्मिन् स्थाने शिवाभिर्मङ्गलरूपाभिर्नियुद्भिरश्वाभिस्त्वं सचसे सम्बन्धं प्राप्नोषि । नियुतो वायोरित्युक्तेर्नियुतो नाम वायोरश्वाः । ताभिर्वायुर्लक्ष्यते । वायुना चान्तरिक्षं लक्ष्यते । यत्र च दिवि द्युलोके मूर्द्धानम् आदित्यं दधिषे धारयसि । लिट् लडर्थे । किम्भूतं मूर्द्धानम् । स्वर्षाम् । स्वः स्वर्गं सनति ददातीति स्वर्षाः।षणु दाने । विट् प्रत्ययः । विड्वनोरनुनासिकस्यादिति नकारस्याकारः । यद्वा स्वः स्वर्गोऽस्यास्ति तिष्ठतीति स्वर्षाः। तम् । षोऽन्तकर्मणि । विच् । अन्तरिक्षे द्युलोके च यज्ञस्य रजसश्च नेता भवसीत्यर्थः । यत्रेत्यस्य संहितायां, निपातस्य चेति दीर्घः । यस्य तवैतत् कर्म तं त्वां स्रुग्रूपेण सादयामीति शेषः ॥ इति चतुर्दशेऽध्याये प्रथमोऽनुवाकः ॥ १४ ॥ १ ॥

चतुर्दशे प्रथमेऽनुवाके यजमानजयपुष्करपर्णाद्युपधानमन्त्रा उक्ताः ॥

द्वितीयेऽनुवाके स्वयमातृण्णादीष्टकोपधानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ स्वयमातृण्णां पुरुषे शर्करां छिद्रां ध्रुवासीति ॥ पुरुषोपरि ध्रुवेत्यादिचतुर्भिर्ऋग्भिः स्वयमातृण्णामुपदधाति। कीदृशीं शर्करां, पाषाणमयीम्। छिद्रां स्वाभाविकाच्छिद्रयुतां सच्छिद्राम्। अश्ममयीष्टकैव स्वयमातृण्णोच्यत इति सूत्रार्थः ॥ पाठस्तु ॥ ध्रुवासि धरुणास्तृता विश्वकर्मणा । मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृꣳहेति ॥ हे स्वयमातृण्णे, त्वं ध्रुवा स्थिराऽसि । कीदृशी त्वं, धरुणा । भूमिरूपेण विश्वस्य धारयित्री । विश्वं करोतीति विश्वकर्मा। तेनाप्यहिंसिता विश्वकर्मणा जगत्कर्त्रा सुकृता सुष्ठु निर्मिता आस्तृता उपहिता।समुद्रस्त्वा मोद्वधीत् स्वोदरमध्ये निमज्जनलक्षणं वधं मा कार्षीत् । सुपर्णः पक्षिराजोऽपि सर्वोद्यमनवेलायां त्वामादाय मोद्वधीत् । दूरे परिसागलक्षणं वधं मा कार्षीत् । एवं सति अव्यथमाना भयरहिता त्वं पृथिवीमिमां दृꣳह दृढीकुरु॥ अथ द्वितीयः॥ प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन् । व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि।भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री।पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीरिति॥हे स्वयमातृण्णे, प्रजापतिः,अपाम्पृष्ठे उदकानामुपरि समुद्रस्य समुद्रनशीलस्योदकसंघातस्य, एमन् एतेर्धातोर्मनिन् सप्तम्येकवचनम्।एमनि अवसादने सादयतु स्थापयतु । कीदृशीं त्वाम् । व्यचस्वतीम्अभिव्यक्तियुक्तां प्रथस्वतीं विस्तारयुक्ताम् । त्वमपि प्रथस्व अस्याग्नेः प्रथनं कुरु । किञ्च, त्वं पृथिव्यामुत्पन्नत्वात् पृथिव्यसि भूरसि सुखानां भावयित्र्यसि भूमिरसि मृन्मया पृथिव्यभिमानिनी भूमिदेवताऽसि ॥ अदितिरसि, अखण्डनीयासि।विश्वधाया विश्वस्य पोषयित्र्यसि । तथा विश्वस्य भुवनस्य सर्वस्य लोकस्य धर्त्री धारयित्र्यसि । तादृशी त्वं पृथिवीं यच्छ नियतां कुरु । पृथिवीं दृꣳह दृढीकुरु । पृथिवीं माहिꣳसीः पृथिव्या हिंसां माकुरु ॥ अथ तृतीयः ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । अग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद् ध्रुवा सीदेति ॥ विश्वस्मै प्राणापानाय व्यानाय वायुवृत्तिलाभाय प्रतिष्ठायै स्वगृहे स्थितिलाभाय । चरित्राय शास्त्रीयाचरणाय प्राणिनामेतस्य सर्वस्य सिद्ध्यर्थम् । अयमग्निस्त्वामभितः पातु रक्षतु । केन रक्षणमिति । मह्या

स्वस्त्या महत्या योगक्षेमसंपत्त्या । शन्तमेन छर्दिषा गृहेण असन्तसुखकरणादिभिर्विशेषेण । तत्र स्वामिभूता या देवता तया देवतयाऽनुगृहीता ध्रुवासि । संति सीद इहोपविश । अङ्गिरस्वद् अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिरा तद्वत् ॥ कात्यायनः ॥ मूलाग्रवर्ती दूर्वा काण्डात् काण्डादितीति मूलाग्रोपेतां दूर्वां काण्डात् काण्डादिति मन्त्रद्वयेनोपदध्यादिति शेषः ॥ तत्र प्रथममन्त्रपाठस्तु ॥ **काण्डात् काण्डात् प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन चेति** ॥ काण्डशब्दः स्तम्बवाची । यावन्तः काण्डा स्तम्बाः सन्ति तत्रैकैकस्मात् प्रकर्षेण दूर्वोत्पद्यते । एकस्मिन्नपि स्तम्बे यावन्ति परुषं पर्वाणि तत्रैव्कैकस्य पर्वणः परितः प्रकर्षेण दूर्वोत्पद्यते । हे दूर्वे, त्वं तत्तत्काण्डात् तत्तत्पर्वणः प्रकर्षेणोत्पद्यमाना वर्तसे परुषः परुषस्परि । काण्डात् काण्डात् सर्वतः प्ररोहन्ती सती यथा शताङ्कुरा भवसि एवा एवमनेन प्रकारेण नोऽस्मदर्थं शतसंख्याकेन सहस्रसंख्याकेन वा त्वदीयभेदेन तत्तत्स्वरूपं प्रतनु विस्तृतं कुरु ॥ अथ द्वितीयः॥ **या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयमिति** ॥ हे दूर्वे, या त्वं शतसंख्याकेन स्वरूपेण प्रतनोष्यसन्तं विस्तारयसि । तथा सहस्रसंख्याकेनाकारेण विरोहसि । हे इष्टके देवि, तस्या वयं हविषा विधेम परिचरेम ॥ कात्यायनः ॥ यास्त इति द्वियजुषमिति ॥ यास्त इति मन्त्रद्वयेन मन्त्रद्वयोपेतामिष्टकामुपदध्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ **यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः । ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधीति** ॥ हे अग्ने सूर्ये मण्डले ते त्वदीया या रुचो दीप्तयो रश्मिभिः । रश्मिस्वरूपेण दिवमन्तरिक्षमातन्वन्ति सर्वतो व्याप्नुवन्ति । या अग्ने दीप्तयस्ता एव सूर्योदयकाले सूर्यरश्मयो भवन्ति । एतच्च तैत्तिरीये अग्निहोत्रब्राह्मणे समाम्नातम्— उद्यन्तं वाऽऽदित्यमग्निरनुसमारोहतीति । ताभिः सर्वाभिर्दीप्तिभिरद्याऽस्मिन् दिने नोऽस्मदर्थं नोऽस्मदीयाय पुत्रभृत्यादिजनाय रुचे कृधि प्रकाशाय कुरु ॥ अथ द्वितीयः ॥ **या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः । इन्द्राग्नी ताभिः सर्वाभी रुचन्नो धत्त बृहस्पते इति** ॥ हे देवाः, वो युष्माकं सम्बन्धिन्यः सूर्यमण्डले वर्तमाना या रुचो दीप्तयः सन्ति तथा गोष्वश्वेषु च या दीप्तयः सन्ति । हे इन्द्राग्नी, हे बृहस्पते, त्रयोऽपि यूयं

नोऽस्मदर्थं रुचं धत्त ॥ कात्यायनः ॥ विराट्स्वराळिति रेतःसिक्तौ प्रतिमन्त्रमिति ॥ रेतःसिचाख्ये द्वे इष्टके विराट्स्वराडित्येकैकेन मन्त्रेणोपदध्यात् तयोः पाठस्तु ॥ विराड् ज्योतिरधारयत् स्वराड् ज्योतिरधारयदिति ॥ विशेषेण राजत इति विराट् । एवंविधा रेतःसिचाख्या प्रथमा इष्टका अस्मदनुग्रहार्थं ज्योतिरधारयत् । स्वयमेव राजत इति स्वराट् । तादृशी द्वितीया रेतःसिचाख्येष्टका अस्मदनुग्रहार्थं ज्योतिरधारयत् ॥ कात्यायनः ॥ प्रजापतिरिति विश्वज्योतिषमिति ॥ वैश्वज्योतिःसंज्ञकामिष्टकां प्रजापतिष्ट्वेति मन्त्रेणोपदध्यात् ॥ पाठस्तु ॥ प्रजापतिष्ट्वा सादयतु पृष्ठे पृथिव्या ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ । अग्निष्टेऽधिपतिस्तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति ॥ पृथिव्याः पृष्ठे उपरि ज्योतिष्मती ज्योतिषोपेतां त्वा त्वामिष्टकां प्रजापतिः सादयतु स्थापयतु विश्वस्मै सर्वस्मै प्राणादिसम्पत्त्यर्थं विश्वं ज्योतिः सर्वज्योतिर्यच्छ । हे इष्टके, त्वं नियृह्णीष्व । अग्निश्च ते तवाधिपतिः । स्वामिदेवतया ध्रुवा स्थिरा सती सीद उपविश । अङ्गिरस्वत् । पुरा अङ्गिरसां चयनाख्ये कर्मणि यथा स्थिरासीत् तद्वदत्रापीत्यर्थः ॥ कात्यायनः ॥ ऋतव्ये मधुश्च माधवश्चेतीति ॥ ऋतव्याख्ये द्वे इष्टके उपदध्यादिति शेषः ॥ पाठस्तु ॥ मधुश्च माधवश्च वासन्तिका ऋतू अग्नेरन्तःश्लेषोऽसि । कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे वासन्तिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति ॥ मधुश्चैत्रो मासः माधवो वैशाखमासः । तावुभौ वसन्तसम्बन्धित्वादृतुरूपौ । हे तादृश वसन्ताख्य ऋतो, त्वं चीयमानस्याग्नेरन्तःश्लेषोऽसि । यथा कुड्यस्यान्तर्दार्ढ्यार्थं काष्ठपाषाणादयः श्लिष्यन्ते तद्वत् । ममाग्निं चिन्वतो यजमानस्य ज्यैष्ठ्यायोत्कर्षार्थमिमे द्यावापृथिव्यौ स्वोचितमुपकारसंपदा कल्पेताम् । आपश्चौषधयश्च कल्पन्तां स्वोचितमुपकारं संपादयन्तु । समानं व्रतं कर्म येषां ते सव्रता एकस्मिन् कर्मण्यवस्थिता आहवनीयादयोऽपि पृथक्कल्पन्तां प्रत्येकं स्वस्वोचितव्यापारं सम्पादयन्तु । किञ्च, इमे द्यावापृथिवी अन्तरा अनयोर्द्यावापृथिव्योर्मध्ये वर्तमानाः समनस एकमनस्का ये अग्नयस्ते सर्वेऽपि

वसन्तसम्बधिनावृत्तत्रयवानभिकारयमानाः सर्वतः संपादयन्त एतत्कर्माभि-संविशन्तु । तत्र दृष्टान्तः । इन्द्रमिव देवाः । यथा अन्ये सर्वे देवा इन्द्रम् अभितः सेवन्ते तद्वत् । हे ऋतव्ये इष्टके, युवां तया देवतयाऽङ्गिरस्वत् कर्मणि इव ध्रुवे स्थिरे सत्यौ सीदतम् उपविशतम् ॥ कात्यायनः ॥ अषाळ्हासीस-ऽषाढामिति ॥ अषाढसंज्ञकामिष्टकाम्, अषाढासीति मन्त्रद्वयेनोपदध्यादिति शेषः ॥तत्रायं प्रथमः ॥ अषाळ्हासि सहमाना सहस्वारातीः सहस्व पृतनायतः । सहस्रवीर्यासि सा मा जिन्वेति ॥ हे इष्टके त्वम् अषाढा केनाप्यपरिभूता सहमाना विरोधिनः परिभवशीला असि । ये अस्मभ्यं दातव्यं धनं न प्रयच्छन्ति तथाविधा अरातीः शत्रून् सहस्व अभिभव पृतना-यतः । ये च संग्राममिच्छन्तः शत्रवस्तानपि सहस्व । किञ्च, या त्वं सहस्रवीर्या-स्वभावतः सहस्रवीर्यवत्यसि सा त्वं मा = मां जिन्व प्रीणय ॥ अथ द्वितीयः॥ सहस्वेमा अभिमातीः सहस्व पृतनायतः । सहस्व सर्वपाप्मानꣳ सहमानास्योषध इति ॥ हे ओषधे, इष्टके, इमा अभिमातीः शत्रुभूताः प्रजाः सहस्व अभिभव । तथा पृतनायतः संग्रामकाङ्क्षिणः शत्रून् सहस्व । सह-माना त्वं स्वभावतः सर्वमभिभवनशीलाऽसि । अतस्त्वं सर्वपाप्मानं सहस्वाऽभि-भव ॥ इति चतुर्दशेऽध्याये द्वितीयोऽनुवाकः ॥ १४ ॥ २ ॥

द्वितीयेऽनुवाके स्वयमातृण्णादीष्टकोपधानमन्त्रा उक्ताः । तृतीये तु कूर्माभ्यञ्जनमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ कूर्मं दधिमधुघृतैरनक्ति मधु वाता इतीति ॥ मधु वाता इति मन्त्रत्रयेण दध्यादिभिः कूर्ममञ्ज्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीरिति ॥ ऋतं यज्ञम् आत्मन इच्छतीति ऋतायत् । तस्मै यजमानाय वाता वायवो मधु क्षरन्ति मधुररसं स्रावयन्ति । सिन्धवः समुद्राश्च मधुररसं स्रावयन्ति । ओषधीरोषधयोऽपि नोऽस्मदर्थं माध्वीः मधुररसोपेताः सन्तु ॥ अथ द्वितीयः ॥ मधु नक्तमुतोषसो मधुमत् पार्थिवꣳ रजः । मधु द्यौरस्तु नः पितेति ॥ नक्तं रात्रिः मधु मधुमदस्तु । उताऽपि च उषसो मधुमत्यः सन्तु । पार्थिवं पृथिव्यात्मकमिदं रजो मातृभूतो-ऽयं लोको मधुमत् मधुररसोपेतमस्तु । नोऽस्माकं पिता पितृभूतो द्युलोको मधु मधुमत् मधुमानस्तु ॥ अथ तृतीयः ॥ मधुमान्नो वनस्पतिर्मधुमाँ-ऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु न इति ॥ वनस्पतिरश्वत्थादिर्नोऽस्म-

दर्थं मधुमानस्तु माधुर्यरसोपेतो भवतु । सूर्योऽपि मधुमान् सन्तापराहित्य-लक्षणमाधुर्यरसोपेतोऽस्तु । तथा गावो नोऽस्मदर्थं माध्वीर्मधुरक्षीरोपेता भवन्तु ॥ कात्यायनः ॥ अपां गम्भन्निति तिसृभिर्विदृयतीति ॥ पाठस्तु ॥ अपां गम्भन्त्सीद मा त्वा सूर्योऽभिताप्सीन्माग्निर्वैश्वानरः । अच्छिन्नपत्राः प्रजा अनुवीक्षस्वानु त्वा दिव्या वृष्टिः सचतामिति ॥ हे कूर्म, अपां गम्भन् गम्भीरे स्थाने सीद उपविश । एवमुपविष्टं त्वां सूर्यो माभिताप्सीत् । अभितो मा संतापयेत् । वैश्वानरः सर्वेषां नराणामुदरस्थोऽग्निस्त्वामभि मा सन्तापयेत् । त्वम् अच्छिन्नपत्रा अनवखण्डितपक्षाः प्रजारूपा इष्टका अनुवीक्षस्व दिव्या दिविभवा वृष्टिश्च त्वामनु सचतां सेवताम् ॥ अथ द्वितीयः ॥ त्रीन्त्समुद्रान्त्समसृपत् स्वर्गानपां पतिर्वृषभ इष्टकानाम् । पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेता इति ॥ इष्टकानां वृषभो वर्षिता अपां पतिर्मेघः स्वर्गान् स्वर्गसाधनभूतान् त्रीन् समुद्रान् समुद्रवन्ति स्वकारणात् समुद्रच्छन्तीति समुद्रा लोकास्तान् समसृपत् सम्यक्प्राप्तो भवति । यत्र यस्मिन् स्थाने पूर्वे पुरातना ये कूर्मा अन्येष्वग्निषु उपहिताः सन्तः परेताः पारं गताः सुकृतस्य शोभनकृतस्याग्नेस्तत्र तस्मिन् लोके स्थाने, पुरीषं शुष्कं पांशुरूपां मृदं वसानः आच्छादयन् गच्छ ॥ अथ तृतीयः ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिरिति ॥ अयं मन्त्रो नवमेऽध्याये व्याख्यातः ॥ कात्यायनः ॥ मुसलं दक्षिणमुलूखलाद्विष्णोः कर्माणीतीति ॥ अत्र चयने उलूखलमुसले उपधातव्ये । तत्रोलूखलस्य दक्षिणभागे उपदध्यात् ॥ पाठस्तु ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखेति ॥ अयं मन्त्रः षष्ठेऽध्याये व्याख्यातः ॥ कात्यायनः ॥ ध्रुवासीत्युखामिति ॥ ध्रुवासीति मन्त्रद्वयेनोखामुपदध्यात् । तत्र प्रथममन्त्रपाठस्तु ॥ ध्रुवासि धरुणेतो जज्ञे प्रथममेभ्यो योनिभ्यो अधि जातवेदाः । स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् इति ॥ हे उखे धरुणा धारयित्री त्वं ध्रुवा स्थिराऽसि । इदानीमुखा स्तूयते । इतोऽस्या उखायाः सकाशात् प्रथममादौ जातवेदा अग्निर्जज्ञे प्रादुर्भूतो भवति । तत एतेभ्यो योनिभ्यः सकारणेभ्यः अधिजज्ञे । ततः स च गायत्र्यादिच्छन्दस्त्रयेण देवान् हविश्च प्रकर्षेण जानन् अस्मदीयं हव्यं हविः देवेभ्यो देवानां

प्रीणनाय वहतु ॥ अथ द्वितीयः ॥ इषे राये रमस्व सहसे द्युम्न ऊर्जे अपत्याय। सम्राळसि स्वराळसि सारस्वतौ त्वोत्सौ प्रावतामिति ॥ हे अग्ने, इषे अन्नार्थ,राये धनार्थ,सहसे बलार्थं, द्युम्ने यशोनिमित्तम् । ऊर्जे क्षीरादिरसार्थम्, अपत्याय पुत्रार्थं रमस्व रमत्र क्रीडा कुरु । किञ्च सम्यग् राजत इति सम्राडसि । स्वयमेव राजत इति स्वराडसि । एवम्भूतं त्वाम् उत्सौ अत्युत्सुकौ, सारस्वतौ सरस्वतीसम्बन्धिनावृग्वेदसामवेदौ, प्रावतां प्रकर्षेण रक्षताम् । तथा तैत्तिरीये श्रूयते, ऋक्साम वै सारस्वतावुत्सावितिः॥ कात्यायनः ॥ अग्ने युक्ष्वाहीति प्रत्यृच स्रुवाहुती जुहोतीति॥ अग्ने युक्ष्वाहीति मन्त्रद्वयेन स्रुवेण द्वे आहुती जुहुयात् ॥ ॥ तत्र प्रथममन्त्रपाठस्तु ॥ अग्ने युक्ष्वा हि ये तवाऽश्वासो देव साधवः । अरं वहन्ति मन्यव इति ॥ हे अग्ने, देव, मम्बन्धिनो येकेचिदश्वासः अश्वाः साधवो दान्ताः सन्तो मन्यवे यज्ञार्थम् अरम् अलं वहन्ति । सुष्ठु वहन्तीत्यर्थः । तानश्वान् युक्ष्व इह योजय ॥ अथ द्वितीयः ॥ युक्ष्वा हि देवहूतमाँऽअश्वाँऽअग्ने रथीरिव निहोता पूर्व्यः सद इति ॥ हे अग्ने, देवहूतमान् देवानामतिशयेनाह्वातॄन् अश्वान् युक्ष्व योजय । हिशब्दः प्रसिद्धवाची । प्रसिद्धेऽस्मिन् कर्मणीत्यर्थः । योजने दृष्टान्तः । रथीरिव । रथीरश्वानिवेति । रथस्वामी यथा अश्वान् योजयति तद्वत् । किञ्च, त्वं पूर्व्यः पुरातनो होता होमोत्पादको भूत्वा निषदः अस्मिन् यागस्थाने निषीद ॥ इति चतुर्दशोऽध्याये तृतीयोऽनुवाकः ॥ १४ ॥ ३ ॥

तृतीयेऽनुवाके जुह्वाभ्यञ्जनादिमन्त्रा उक्ताः ॥ चतुर्थेऽनुवाके तु हिरण्य पुरुषाऽश्वादिच्छिद्रेषु सुवर्णशकलस्थापनादिमन्त्रा उच्यन्ते ॥कात्यायनः॥ प्रति शिरः सप्त सप्त हिरण्यशकलानियुखे करोति सम्यक्स्रवन्तीति ॥ वक्ष्यमाण- हिरण्यपुरुषाश्वादीनां मध्ये एकैकस्य शिर स्थितेषु सप्तसु सप्तच्छिद्रेष्वपि सप्त सप्त सुवर्णशकलानि क्षिपेत् । तत्र सम्यक्स्रवन्तीत्यनेन मन्त्रेण प्रथममास्ये स्थापयेत् ॥पाठस्तु॥ सम्यक्स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्ये अग्नेरिति ॥ अन्तः शरीरस्याभ्यन्तरे हृदा मनसा हृदयपुण्डरीकवर्तिना तन्वो निरीक्षणयुक्तेनान्तःकरणेन पूयमानाः पवित्रीक्रियमाणा धेना अन्नलक्षणाः । अन्नं वै धेना इति श्रुतेः ॥ घृतस्य दीप्तियुक्तस्य सुवर्णस्य धाराः सम्यक् स्र-

षन्ति । सुष्ठु प्रवहन्ति । तत्र दृष्टान्तः । सरितो न । यथा नद्यः प्रवहन्ति तद्वत् । अपिच उखाग्नेर्मध्ये हिरण्मयः सुवर्णमयः वेतसः पुरुषोऽवभासते तं पुरुषमभिलक्ष्य स्रवन्तीस्ता धाराः अभिचाकशीमि अहमभिपश्यामि ॥ कात्यायनः ॥ उत्तरौ द्वौ द्वौ नासिकयो रुचे त्वेत्यक्ष्णो भासे त्वेति श्रोत्रयोरभूदिदमिति ॥ अवशिष्टानामितरेषां सप्तानां सुवर्णशकलानां मध्ये द्वौ शकलौ, रुचे त्वेति मन्त्रद्वयेन नासिकाच्छिद्रयोः स्थापयेत् । द्वौ भासेदिति मन्त्रद्वयेन नेत्रयोः स्थापयेत् । अभूदिति मन्त्रद्वयेन द्वौ श्रोत्रयोः क्षिपेत् ॥ तेषां पाठस्तु ॥ **ऋचे त्वा. रुचे त्वा भासे त्वा ज्योतिषे त्वा । अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य चाग्निर्ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वानिति** ॥ हे हिरण्यशकल, येयमृक् श्रोत्ररूपा तदर्थं त्वां दक्षिणनासिकाच्छिद्रे प्रास्यामि । तथा हे हिरण्यशकल, यासौ रुक् दीप्तिस्तदर्थं त्वां नासिकाच्छिद्रेण प्रक्षिपामि । तथा भासे प्रकाशाय त्वां दक्षिणाक्षिगोलके प्रक्षिपामि । तथा ज्योतिषे दीप्त्यै त्वा त्वामक्षिगोलके प्रक्षिपामि । इदं दक्षिणश्रोत्रे प्रक्षिप्यमाणं सुवर्णं विश्वस्य भुवनस्य सर्वस्य भूतजातस्य वाजिनम् अन्नं वीर्यरूपम् । इन्द्रियं वै वीर्यं वाजिनमिति श्रुत्यन्तरात् । तथा वैश्वानरस्य विश्वेषां नराणां स्वामिनोऽग्नेः स्ववीर्यरूपमभूत् । अयमग्निर्वामश्रोत्रगोलकस्थितेन हिरण्यज्योतिषा स्वयं ज्योतिष्मानभूत् । तथा रुक्मो रोचमानोऽग्निर्वर्चसा हिरण्येन कान्त्या वर्चस्वान् । स्वकान्तिर्वर्च इति भेदः ॥ कात्यायनः ॥ सहस्रदा इति पुरुषशिर उद्गृह्येति ॥ पाठस्तु ॥ **सहस्रदा असि सहस्राय त्वेति** ॥ हे हिरण्यपुरुष त्वं सहस्रदाः सहस्रस्य धनस्य दाताऽसि । ततस्त्वां सहस्राय सहस्रधनलाभायोद्गृह्णामीति शेषः ॥ कात्यायनः ॥ मध्येऽश्वाव्योरुत्तरतः पूर्वापरे गोऽजयोश्च दक्षिणतः आदित्यं गर्भमिति प्रतिमन्त्रमिति ॥ अश्वादीनां मध्ये हिरण्यपुरुषमुपदध्यात् । तस्योत्तरतः प्राचीनदेशे स्थापयेत् । अविः पश्चिमे । तथा तस्य दक्षिणतः प्राचीनदेशे गां स्थापयेत् । अजं पश्चिमे स्थापयेत् ॥ अत्र पुरुषादीनामेकैकस्य स्थापनम् आदित्यं गर्भमित्याद्याः पञ्च मन्त्राः क्रमेण प्रयोक्तव्याः ॥ तत्र पुरुषोपधानमन्त्रपाठस्तु ॥ **आदित्यं गर्भं पयसा समङ्धि सहस्रस्य प्रतिमां विश्वरूपम् । परिवृङ्धि हरसा माभिमंस्थाः शतायुषं कृणुहि** ... मान इति हे अग्ने, चीयमानः सन् आदित्यम् अदितिर्देवमाता तस्याः संब...

प्रीणनाय वहतु ॥ अथ द्वितीयः ॥ इषे राये रमस्व सहसे द्युम्न ऊर्जे अपत्याय। सम्राळसि स्वराळसि सारस्वतौ त्वोत्सौ प्रावतामिति ॥ हे अग्ने, इषे अन्नार्थं,राये धनार्थं,सहसे बलार्थं, द्युम्ने यशोनिमित्तम् । ऊर्जे क्षीरादिरसार्थम्, अपत्याय पुत्रार्थं रमस्व त्वमत्र क्रीडां कुरु । किञ्च सम्यग् राजत इति सम्राडसि । स्वयमेव राजत इति स्वराडसि । एवम्भूतं त्वाम् उत्सौ अत्युत्सुकौ, सारस्वतौ सरस्वतीसम्बन्धिनावृग्वेदसामवेदौ, प्रावतां प्रकर्षेण रक्षताम् । तथा तैत्तिरीये श्रूयते, ऋक्साम वै सारस्वतावुत्साविति॥ कात्यायनः ॥ अग्ने युक्ष्वाहीति प्रत्यृचं स्रुचाहुती जुहोतीति॥ अग्ने युक्ष्वाहीति मन्त्रद्वयेन स्रुवेण द्वे आहुती जुहुयात् ॥ ॥ तत्र प्रथममन्त्रपाठस्तु ॥ अग्ने युक्ष्वा हि ये तवाऽश्वासो देव साधवः । अरं वहन्ति मन्यव इति ॥ हे अग्ने, देव, मम्बन्धिनो येकेचिदश्वासः अश्वाः साधवो दान्ताः सन्तो मन्यवे यज्ञार्थम् अरम् अलं वहन्ति । सुष्ठु वहन्तीत्यर्थः । तानश्वान् युक्ष्व इह योजय ॥ अथ द्वितीयः ॥ युक्ष्वा हि देवहूतमाँऽअश्वाँऽअग्ने रथीरिव निहोता पूर्व्यः सद इति ॥ हे अग्ने, देवहूतमान् देवानामतिशयेनाह्वातॄन् अश्वान् युक्ष्व योजय । हिशब्दः प्रसिद्धवाची । प्रसिद्धेऽस्मिन् कर्मणीत्यर्थः । योजने दृष्टान्तः । रथीरिव । रथीरश्वानिवेति । रथस्वामी यथा अश्वान् योजयति तद्वत् । किञ्च, त्वं पूर्व्यः पुरातनो होता होमोत्पादको भूत्वा निषदः अस्मिन् यागस्थाने निषीद ॥ इति चतुर्दशोऽध्याये तृतीयोऽनुवाकः ॥ १४ ॥ ३ ॥

वन्ति । सुष्ठु प्रवहन्ति । तत्र दृष्टान्तः । सरितो न । यथा नद्यः प्रवहन्ति तद्वत्। अपिच उत्तानेर्मध्ये हिरण्मयः सुवर्णमयः वेतसः पुरुषोऽवभासते तं पुरुषमभिलक्ष्य स्रवन्तीस्ता धाराः अभिचाकशीमि अहमभिपश्यामि ॥ कात्यायनः ॥ उत्तरौ द्वौ द्वौ नासिकयो रुचे त्वेत्यक्ष्णो भासे त्वेति श्रोत्रयोरभूदिदमिति ॥ अवशिष्टानामितरेषां खानां सुवर्णशकलानां मध्ये द्वौ शकलौ, रुचे त्वेति मन्त्रद्वयेन नासिकाच्छिद्रयोः स्थापयेत् । द्वौ भासेदिति मन्त्रद्वयेन नेत्रयोः स्थापयेत् । अभूदिति मन्त्रद्वयेन द्वौ श्रोत्रयोः क्षिपेत् ॥ तेषां पाठस्तु ॥ **ऋचे त्वा, रुचे त्वा भासे त्वा ज्योतिषे त्वा । अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य चाग्निर्ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वानिति** ॥ हे हिरण्यशकल, येयमृक् श्रोत्ररूपा तदर्थं त्वां दक्षिणनासिकाच्छिद्रे न्यस्यामि । तथा हे हिरण्यशकल, यास्तौ रुक् दीप्तिस्तदर्थं त्वां नासिकाच्छिद्रेण प्रक्षिपामि । तथा भासे प्रकाशाय त्वां दक्षिणाक्षिगोलके प्रक्षिपामि । तथा ज्योतिषे दीप्त्यै त्वा त्वामक्षिगोलके प्रक्षिपामि । इदं दक्षिणश्रोत्रे प्रक्षिप्यमाणं सुवर्णं विश्वस्य भुवनस्य सर्वस्य भूतजातस्य वाजिनम् अन्नं वीर्यरूपम्। इन्द्रियं वै वीर्यं वाजिनमिति श्रुत्यन्तरात् । तथा वैश्वानरस्य विश्वेषां नराणां स्वामिनोऽग्नेः स्ववीर्यरूपमभूत्। अयमग्निर्वामश्रोत्रगोलकस्थितेन हिरण्यज्योतिषा स्वयं ज्योतिष्मानभूत्। तथा रुक्मो रोचमानोऽग्निर्वर्चसा हिरण्येन कान्त्या वर्चस्वान् । स्वकान्तिर्वर्च इति भेदः॥कात्यायनः॥सहस्रदा इति पुरुषंशिर उद्गृह्णेति॥पाठस्तु॥ **सहस्रदा असि सहस्राय त्वेति**॥ हे हिरण्यपुरुषत्वं सहस्रदाः सहस्रस्य धनस्य दाताऽसि । ततस्त्वां सहस्राय सहस्रधनलाभायोद्गृह्णामीति शेषः ॥ कात्यायनः ॥ मध्येऽश्वाव्योरुत्तरतः पूर्वापरे गोऽजयोश्च दक्षिणतः आदित्यं गर्भमिति प्रतिमन्त्रमिति ॥ अश्वादीनां मध्ये हिरण्यपुरुषमुपदध्यात् । तस्योत्तरतः प्राचीनदेशे स्थापयेत् । अविः पश्चिमे।तथा दक्षिणतः प्राचीनदेशे गां स्थापयेत् । अजं पश्चिमे स्थापयेत् ॥ अत्र पुरुषादीनामेकैकस्य स्थापनम् आदित्यं गर्भमित्याद्याः पञ्च मन्त्राः क्रमेण प्रयोक्तव्याः ॥ तत्र पुरुषोपधानमन्त्रपाठस्तु॥**आदित्यं गर्भं पयसा समङ्धि सहस्रस्य प्रतिमां विश्वरूपम्। परिवृङ्धि हरसा माभिमंस्थाः शतायुषं कृणुहि चीयमान इति** हे अग्ने, चीयमानः सन् आदित्यम् अदितिर्देवमाता तस्याः संबन्धि तत्कायरूपं

गर्भसदृशमिमं पुरुषं पयसा क्षीरेण समङ्ग्धि सम्यगार्द्रीकुरु । सहस्रप्रतिमां बहुधनस्य प्रतिमानभूतं विश्वरूपं परिवृङ्ग्धि परित्यज । हरसा तदीयज्वालारूपेण तेजसा माभिमंस्थाः । अभिपूर्वो मनिर्हिंसार्थः । यजमानं मा हिंसीः । किन्तु शतायुषं शतसंवत्सरपरिमितकालजीवनं कृणुहि कुरु ॥ ॥ अथाऽश्वोपधानमन्त्रपाठस्तु ॥ वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानᳬं सरिरस्य मध्ये । शिशुं नदीनाᳬं हरिमद्रिबुध्नमग्ने मा हिᳬंसीः परमे व्योमन्निति ॥ हे अग्ने, अश्वं मा हिंसीः । ज्वालया मा दह । त्रिविधव्योमरक्षणं व्योममन्तातिसहस्रपक्षस्य रोगास्तेभ्यः सर्वेभ्यः पालनमित्यर्थः । तत्र परममुत्कृष्टं रक्षितस्याश्वस्य पुनरुपद्रवः कदाचिदपि न जायते । तथाकरणं रक्षणस्य परमत्वम् । तादृशे परमे व्योमन् एतमश्वं स्थापयेदिति शेषः । कीदृशमश्वम् । वातस्य जूतिं वायोर्गतिस्वरूपवच्छीघ्रगतिमित्यर्थः । वरुणस्य नाभिम् । अपामधिपतेर्वरुणस्य नाभिस्थानीयम् । यथा स्वोदरमध्यवर्तिनी नाभिर्वस्त्रप्रावरणादिना पाल्यते तद्वदन्ततः प्रियत्वाद्वरुणेन पालनीयमित्यर्थः । अत एव प्रियं तमभिमेत्य प्रजापतिर्वरुणाय प्राज्यमनयदिति तैत्तिरीये समाम्नातम् । सरिरस्य मध्ये पद्मानां समुद्रजलस्य मध्ये वडवारूपेणोत्पन्नम् । अप्सुयोनिर्वा अश्व इति श्रुत्यन्तरात् । नदीनां शिशुम् । यदा नदीनां पतिः समुद्रः पूर्वोक्तन्यायेन पिता तदा नदीनां मातृत्वाच्छिशुः । हरिमुपर्यारूढस्य पुरुषस्य हर्तारं नेतारम् । अद्रिबुध्नम् अद्रिबुद्धम् । नकारोपजनश्छान्दसः । मार्गमध्ये खुरैश्चूर्णीकृत्वा येऽद्रिभवक्षुद्रपाषाणास्तैर्बुद्धम् । तादृशान् पाषाणान् दृष्ट्वा मार्गेऽस्मिन्नश्वो गत इति बोद्धुं शक्यते ॥ अथ गोस्थापनमन्त्रः ॥ अजस्रमिन्दुमरुषं भुरण्युमग्निमीळे पूर्वचित्तिं नमोभिः । स पर्वभिर्ऋतुशः कल्पमानो गां मा हिᳬंसीरदितिं विराजमिति ॥ पूर्वचित्ति पूर्वमहर्षिभिर्ध्येयमेतमग्निं नमोभिर्नमस्कारैर्युक्तोऽग्निमीडे स्तौमि । कीदृशमग्निम् । अजस्रमिन्दुं निरन्तरपरमैश्वर्योपेतम् । अरुःशब्दो मर्मवाची । अरुषं मर्मसङ्घातं भुरण्युं भरन्तं पोषयन्तम् । यथा यजमानस्य मर्माणि वैरिणो न उद्घाटयन्ति तथा कुर्वन्तमित्यर्थः । सोऽग्निरादित्यरूपेण स्थित्वा पर्वभिरमावास्यादिभिस्तिथिभिर्ऋतुशः तस्मिँस्तस्मिन्नृतौ कल्पमानः कर्माणि सम्पादयन् वर्तते । तादृश हे अग्ने, गां मा हिᳬंसीः । कीदृशीं गाम् । अदितिमखण्डनीयाम् । विराजं विशेषेण राजमानम् ॥ अथाविस्थापनमन्त्रः ॥ वरूत्रीं

त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाᳲरजसः परस्मात् । महीᳲ साहस्रीमसुरस्य मायामग्ने मा हिᳲसीः परमे व्योमन्निति ॥ हे अग्ने, परमे व्योमन् उत्कृष्टे विविधरक्षणे स्थितामविं मा हिंसीर्मा वधीः । कीदृशीमविम् । त्वष्टुर्वरुत्रीम् । रूपाणां निर्माता यस्त्वष्टा तस्याऽनुग्रहात् धरणीयरूपयुक्ताम् । वरुणस्य नाभिम् । अनिष्टनिवारकस्याग्नेर्नाभिस्थानीयाम् । उत्कृष्टाज्जगद्रूजसो जज्ञानाम् । उत्कृष्टकाद् माआपरयरजस उत्पन्नाम् । तथा तैत्तिरीये, उरसो बाहुभ्यामित्यादिवाक्ये अविः पशूनामिति श्रुतम् । महीं महतीम् । साहस्रीं सहस्रमूल्यार्हाम् । असुरस्य मायां, स्वर्भानोरसुरस्य सम्बन्धित्वेन निर्मिताम् । अत एव तैत्तिरीये । स्वर्भानुरित्यादिवाक्ये साक्षाद्-ऽविरभवदिति श्रुतम् ॥ अथाजस्थापनमन्त्रः ॥ योऽअग्निरग्नेरध्यजायत शोकात् पृथिव्या उत वा दिवस्परि । येन प्रजा विश्वकर्मा जजान तमग्ने हेळः परि ते वृणक्त्विति ॥ पृथिव्या भूमेरुपरिस्थितात्, उत वा अथवा दिवस्परि द्युलोकस्योपरिस्थितात्, शोकाद्दीप्तियुक्तात् अग्नेः प्रजापतिरूपात् सकाशाद्योऽग्निरूपोऽध्यजायत उत्पन्नोऽभूत् । येनाऽजरूपेण विश्वकर्मा जगत्स्रष्टा प्रजापतिः प्रजाः पशून् जजान उत्पादितवान् । अजस्य प्रजापशुसृष्टिसाधनत्वं तैत्तिरीये समाम्नातम् ॥ ततोऽजः स्तूपरः समभवत्ताᳲ स्वायै देवताया आलभत । ततो वै स प्रजाः पशूनसृजतेति ॥ हे अग्ने, ते त्वदीयो हेळः कोपः तं तादृशमजं परिवृणक्तु परिवर्जितं करोतु, मा विनाशयत्वित्यर्थः ॥कात्यायनः॥ चित्रं देवानामित्यर्द्धर्चेन स्रुवाहुती इति॥ जुहुयादिति शेषः ॥ पाठस्तु ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवीऽअन्तरिक्षᳲ सूर्य आत्मा जगतस्तस्थुषश्चेति ॥ अयं मन्त्रः पूर्वाध्याये व्याख्यातः ॥ इति चतुर्दशेऽध्याये चतुर्थोऽनुवाकः ॥ १४ ॥ ४ ॥

चतुर्थेऽनुवाके हिरण्यपुरुषादीनां शिरश्छिद्रेषु सुवर्णशकलस्थापनादिमन्त्रा उक्ताः ॥ पञ्चमे तेषामुपस्थानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ उदङ् तिष्ठन्नुपतिष्ठत उत्सर्गैरिमं मा हिᳲसीरिति प्रतिमन्त्रमिति ॥ अध्वर्युरुदङ्मुखो भूत्वा इमं मा हिᳲसीरित्यादिशोकपरित्यागलक्षणैर्मन्त्रैः क्रमेण पुरुषाश्वादीनामुपस्थानं कुर्यात् । पुरुषोपस्थानमन्त्रपाठस्तु ॥ इमं मा हिᳲसीर्द्विपादं पशुᳲ सहस्राक्ष मेधाय चीयमानः । मयुं पशुं मेधमग्ने जुषस्व तेन

चिन्वानस्तन्वो निषीद । मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु इति ॥ हे सहस्राक्ष सहस्रसंख्याकज्वालारूपचक्षुर्युक्ताग्ने,मेधाय यज्ञाय चीयमानश्चयनेन सह क्रियमाणम् इमं द्विपादं पादद्वयोपेतं पुरुषरूपं ग्राम्यं पशुं मा हिंसीः दाहरूपां हिंसां मा कार्षीः । यदि तव भक्ष्यापेक्षा तर्हि तव भक्षणाय मेधं पशुं मयुं कृष्णमृगरूपं जुषस्व सेवस्व । भक्षयेत्यर्थः । तेन मयुभक्षणेन ज्वालारूपास्तन्वस्त्वदीयतनूश्चिन्वानः पोषयन्निह निषीद । ते तव शुक् शोकः सन्तापो मयुं कृष्णमृगम् ऋच्छतु प्राप्नोतु । किञ्च, वयं यं पुरुषं प्रति द्विष्मो द्वेषं कुर्मः । तं पुरुषं ते त्वदीयः शुक् सन्तापो ऋच्छतु प्राप्नोतु ॥ अथाश्वोपस्थानमन्त्रपाठः ॥ इमं मा हिꣳसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु॥गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद । गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु इति ॥ हे अग्ने, इममेकशफयुक्तमश्वरूपं पशुं मा हिंसीर्दाहरूपां हिंसां मा कार्षीः । कीदृशमश्वं, कनिक्रदं हेषाशब्देनात्यन्तक्रन्दनेनोपेतम् । वाजिनेषु शीघ्रगतियुक्तेषु प्राणिष्वत्यन्तशीघ्रगतियुक्तम् । यदि ते तव भक्षापेक्षा, तर्हि ते तव भक्षणायेममारण्यं गौरं सिंहम् अनुदिशामि पुरुषशीर्षमनु त्वद्भक्ष्यत्वेनातिसृजामि । तेन गौरभक्षणेन त्वदीयज्वालारूपाः तनूः पोषयन्निह निषीद । शिष्टं पूर्ववत्॥अथ गोरुपस्थानमन्त्रः॥ इमꣳ साहस्रꣳ शतधारमुत्सं व्यच्यमानꣳ सरिरस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन् ॥ गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद । गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति ॥ हे अग्ने, इमं गां मा हिंसीः । किम्भूताम् । साहस्रं सहस्रार्हां शतधारं कूपम् । बहुस्रोतसं कूपमिव बहुप्रकारकं वाहदोहादिभिः । सरिरस्य मध्ये व्यच्यमानं विविधमुपजीव्यमानम् । इमे वै लोकाः सरिरमिति श्रुतेः । जनाय जनेभ्यो वा घृतं दुहानां घृतपूर्णां वा । घृतस्य कारणभूतां क्षीरदोग्ध्रीम् । अदितिमखण्डनीयाम् । गवयो गोसदृश आरण्यो मृगविशेषः । शिष्टं स्पष्टम् ॥ अथाविरुपस्थानमन्त्रः ॥ इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम् । त्वष्टुः प्रजानां प्रथमञ्जनित्रमग्ने मा हिꣳसीः परमे व्योमन् ॥ उष्ट्रमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद । उष्ट्रं ते शुगृच्छतु । यं द्विष्मस्तं ते शुगृच्छ-

स्त्विति ॥ हे अग्ने, इमम् ऊर्णायुम् अविं मा हिंसीः । कीदृशम् अविम् । वरुणस्याग्निरूपनिवारकस्याग्नेर्नाभिस्थानीयम् । द्विपदां मनुष्याणां . चतुष्पदां गवादीनाम् उभयरूपाणां पशूनां त्वक्सदृशम् । यथा त्वचा शरीरमावृतम् । द्विपदो मनुष्याः शीतनिवारणार्थमविजन्येन कम्बलेनाच्छादिता भवन्ति । चतुष्पदोऽप्यश्वा बलीवर्दाश्च भारवहनेन मार्दवार्थं पृष्ठे कम्बलेनाच्छादिता भवन्ति । तथा त्वष्टुः प्रजापतेः सकाशादुत्पद्यमानानां मध्ये प्रथमं जनित्रं प्रधानत्वेनोत्पन्नम् । प्राधान्यं च वीर्यवत्त्वात् । वीर्यवत्त्वं च बाहुजन्यानां सर्वेषां तैत्तिरीये आम्नातम् । तस्मात्ते वीर्यवतो वीर्यानुसृज्यन्तेति ॥ उष्ट्रः प्रसिद्धः । शेषं पूर्ववत् ॥ अथाजोपस्थानमन्त्रः ॥ अजो ह्यग्नेरजनिष्ट शोकात् सोऽपश्यज्जनितारमग्रे । तेन देवा देवतामग्रमायँस्तेन रोहमायन्नुपमेध्यासः ॥ शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद । शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति ॥ हि यस्मादयमजः शोकादीप्तियुक्तादग्नेः सकाशादजनिष्ट । अत एव तैत्तिरीये आम्नातम् । आत्मनो वपामुदखिदत्तामग्नेः प्रागृह्णात्ततोऽजस्तूपरः समभवदिति ॥ स एवाग्नेः प्रजापतिरूपादुत्पन्नोऽजो जनयितारं स्वोत्पादकं प्रजापतिरूपमग्निमग्रेऽपश्यत् । उत्पत्त्यनन्तरमेव दृष्टवान् । यस्मादेवमजः प्रशस्तस्तस्मादिदानीं वर्तमानादेव अग्रे पूर्वस्मिन् जन्मनि तेनैवाजेन कर्माण्यनुष्ठाय देवतामायन् देवत्वं प्राप्ताः । किञ्चेदानीं मेध्यासो यागयोग्या यजमानारोहणीयं स्वर्गमुपायन् सामीप्येनैव प्राप्ताः । विलम्बमन्तरेण प्राप्ता इत्यर्थः । शरभः सिंहघाती क्रूरमृगः । शेषं पूर्ववत् ॥ कात्यायनः ॥ त्वं यविष्ठेति चितोपस्थानमिति ॥ चित्याग्नेरुपस्थानं कुर्यात् ॥पाठस्तु॥ त्वं यविष्ठ दाशुषो नॄ᳡ः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मनेति ॥ हे यविष्ठ युवतमाग्ने, त्वं दाशुषो हविर्दत्तवतो यजमानस्य नॄन् भृत्यादीन् मनुष्यान् पाहीति ऋत्विजां गिरः आशिषः शृणुधि शृणुहि । उताऽपि च त्मना आत्मना त्वदीयेन प्रयत्नेन तोकमपत्यं रक्ष॥इति चतुर्दशेऽध्याये पञ्चमोऽनुवाकः॥१४॥५॥

पञ्चमेऽनुवाके हिरण्यपुरुषाश्वादीनामुपस्थानमन्त्रा उक्ताः॥ षष्ठेऽपस्याऽऽख्येष्टकोपधानमन्त्रा उच्यन्ते ॥कात्यायनः॥ अपस्याः पञ्च पञ्चानूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रमिति ॥ अप्लिङ्गैर्मन्त्रैरुपधेया इष्टका अपस्या एतत्संज्ञकाः । पञ्च पञ्चेष्टका अपां त्वेमन्त्रित्यादिभिर्मन्त्रैः क्रमेणानूकान्तेषूपदध्यादिति शेषः

॥ तत्र प्रथमपञ्चकमन्त्रपाठः ॥ अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयामि । अपां त्वा ज्योतिषि सादयाम्यपां त्वायने सादयामीति ॥ हे इष्टके, त्वामपामेमन् एमनि जलसम्बन्धिगमनप्रकारे सादयामि स्थापयामि । एवमुत्तरत्रापि योज्यम् । ओद्मन् वीचितरङ्गादिरूपे । वदन् । भस्मन् पालके पङ्करूपे ज्योतिषि प्रकाशे नैर्मल्य इत्यर्थः । अयने नदीकूपावापारे ॥ अथ द्वितीयपञ्चकमन्त्रपाठः ॥ अर्णवे त्वा सदने सादयामि समुद्रे त्वा सदने सादयामि सरिरे त्वा सदने सादयामि । अपां त्वा क्षये सादयाम्यपां त्वा सधिषि सादयामीति ॥ अर्णःशब्देन सारूप्यात् सोऽयं तडागाद्युपलक्ष्यते । अपां सदनं, तस्मिन् स्थाने, हे अपस्थारूपे इष्टके, त्वा त्वां सादयामि स्थापयामि । समुद्रः प्रसिद्धः । सरिरशब्देनानिर्धारितविशेषो जलप्रायापार उपलक्षितः । क्षीयन्ते शुष्यन्त्यापोऽत्रेति शुष्कतडागादिः क्षयः । जलेन सह धीयतेऽवस्थाप्यते इति सधिर्वर्षोपलादिः ॥ अथ तृतीयपञ्चकमन्त्रपाठः ॥ अपां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा योनौ सादयामि । अपां त्वा पुरीषे सादयाम्यपां त्वा पाथसि सादयामीति ॥ हे इष्टके, अपां सदने स्थाने नद्यादौ त्वां सादयामि स्थापयामि । अद्भिः सह विद्युदादयो यत्र मेघे तिष्ठन्ति सोऽयं मेघः सधस्थः । योनिशब्देन जलकारणभूतोऽग्निरुच्यते । अग्नेराप इति श्रुतेः । पुरीषशब्देन नद्यादिगताः सिकता उच्यन्ते । पीयते जलं जीमूतैरत्रेति पाथः समुद्रः ॥ अथ चतुर्थपञ्चकमन्त्रपाठः ॥ गायत्रेण त्वा छन्दसा सादयामि त्रैष्टुभेन त्वा छन्दसा सादयामि जागतेन त्वा छन्दसा सादयामि । आनुष्टुभेन त्वा छन्दसा सादयामि पाङ्क्तेन त्वा छन्दसा सादयामीति ॥ हे इष्टके त्वां गायत्रीसम्बन्धिना छन्दसा सादयामि । स्थापयामि एवमुत्तरत्रापि योज्यम् ॥ इति चतुर्दशेऽध्याये षष्ठोऽनुवाकः ॥१४॥६॥

षष्ठेऽनुवाकेऽपस्येष्टकोपधानमन्त्रा उक्ताः ॥ सप्तमे प्राणभृत्संज्ञकानामिष्टकानामुपधानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ प्राणभृतः कर्णसहिता दश दशाऽयं पुरो इति प्रतिमन्त्रमिति ॥ यासां प्राणभृत्संज्ञकानां पञ्चाशदिष्टकानां कर्णाविव चिह्नमस्ति तद्युक्ता दश दशेष्टका उपदध्यादिति शेषः ॥ तत्र पूर्वस्यां दिश्युपधेयानां दशेष्टकानां मन्त्रपाठः ॥ अयं पुरो भुवस्तस्य

प्राणो भौवायनो वसन्तः प्राणायनः। गायत्री वासन्ती गायत्र्यै गायत्रं गायत्रादुपांशुरुपांशोस्त्रिवृत् त्रिवृतो रथन्तरम्। वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्य इति ॥ भवत्यस्माज्जगदिति भुवः शब्दः प्रजापतिमाचष्टे। पुरः पूर्वस्यां दिशि अयं भुवो वर्तत इति शेषः। हे इष्टके, तद्रूपासीत्यभिप्रायः। एवमुत्तरेषु योज्यम्। तथा भुवःशब्दाभिधेयस्य प्रजापतेः सम्बन्धी प्राणः । अत एवापत्यत्वमुपचर्यते। भौवायन इत्युच्यते । तस्य च प्राणस्य श्वासवृत्तिरूपस्यापत्यत्वेनोपचारितः प्राणायनो वसन्त ऋतुः। तस्य च वसन्तस्य सम्बन्धिनी गायत्री। तस्याश्छन्दोरूपाया गायत्र्याः सम्बन्धि गायत्रं साम। तस्माच्च गायत्रसाम्न उत्पन्न इवोपांशुग्रहः । तस्माच्चोपांशुग्रहादुत्पन्नमिव त्रिवृत्स्तोमम् । तस्मात् त्रिवृत्स्तोमादुत्पन्नमिव रथन्तरं साम। यो वसिष्ठाख्यस्तद्रूपा वाऽसि। हे इष्टके, यथोक्तप्रकारेण प्रजापतिप्राणवसन्तादिरूपोपचारेण प्रजापतिगृहीतया त्वया प्रजाभ्यः सर्वासां प्रजानां प्राणं गृह्णामि प्रजानां प्राणसिद्ध्यै त्वामुपदधामीत्यर्थः । यद्यप्यनेकवाक्यत्वादेक एव मन्त्रस्तथापि प्रतीष्टकमावृत्त्या दश मन्त्राः सम्पद्यन्ते ॥ अथ दक्षिणस्यां दिश्युपधेयानां दशेष्टकानां मन्त्रपाठः ॥ अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणम्। ग्रीष्मो मानसस्त्रिष्टुप् ग्रैष्मी । त्रिष्टुभः स्वारः स्वारादन्तर्यामोऽन्तर्यामात् पञ्चदशः पञ्चदशाद् बृहत् । भरद्वाज ऋषिः । प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्य इति ॥ विश्वानि कर्माणि जगद्व्यापारादीनि यस्याऽसौ विश्वकर्मा। हे इष्टके, तद्रूपा त्वमसि। प्राणवसन्तादिपरम्परेव मनोग्रीष्मादिपरम्परा व्याख्येया। स्वारमिति सामविशेषः ॥ अथ पश्चिमायां दिश्युपधेयानामिष्टकानां मन्त्रपाठः ॥ अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसम् । वर्षाश्चाक्षुष्यो जगती वार्षी। जगत्या ऋक्सममृक्समाच्छुक्रः । शुक्रात् सप्तदशः। सप्तदशाद्वैरूपम्। जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्य इति ॥ विश्वं सर्वं जगद्व्यचति व्याप्नोतीति विश्वव्यचाः प्रजापतिः । शेषं पूर्ववद् विभजनीयम् । वर्षा वर्षर्तुः । ऋक्सममिति सामविशेषः ॥ अथोत्तरस्यां दिश्युपधेयानामिष्टकानां मन्त्रपाठः— इदमुत्तरात् स्वस्तस्य श्रोत्रं सौवम् । शरच्छ्रौत्र्यनुष्टुप्

शारदी । अनुष्टुभ ऐळमैळान्मन्थी मान्थिन एकविंश एक- विंशाद्वैराजम् । विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्य इति ॥ सौति सर्वं जगत् प्रेरयतीति स्वशब्दः प्रजापतिवाची । उत्तरस्यां दिशि यदिदं स्वः प्रजापतिशरीरं, हे इष्टके, त्वं तद्रूपासीतियोज्यम् । ऐळमिति सामविशेषः । शेषं पूर्ववद् योज्यम् । अथ मध्यम- देश उपधेयानामिष्टकानां मन्त्रपाठः ॥ इयमुपरिमतिस्तस्यैवाङ्मात्या हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती । पङ्क्त्यै निधनवं निधनवत आग्र- यण आग्रयणात् त्रिणवत्रयस्त्रिंशौ त्रिणवत्रयस्त्रिंशाभ्याᳪ शाकररैवते । विश्वकर्मऋषिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्य इति ॥ मन्यते कृत्स्नं जगज्जानातीति मतिः प्रजापतिः । ऊर्ध्वायां दिशि येयं प्रजापतिः । हे इष्टके, तद्रूपा त्वमसि । मतिनाम्नः प्रजापतेस्त्वपत्यरूपा येयं वाक् सा माता । वाचोऽपत्यं वान्यायनः । निध नवमिति सामविशेषः । अत्रैकैकस्मिन्मन्त्रे प्रजापतिरिन्द्रियमृतुश्छन्दः सामवि- शेषो ग्रहस्तोमपृष्ठस्तोमसाम ऋषिरिति नाडीनामेषां पदार्थानां यद्यपि लोकप्रसिद्धो जन्यजनकभावो नास्ति, तथापि मन्त्रार्थत्वेन मनसा भावयितु- मिदमुक्तमित्यविरोधः ॥ कात्यायनः ॥ लोकम्पृणा दक्षिणांऽस आदध्यात् समदध्यादू इति ॥ लोकम्पृणसंज्ञका इष्टका दक्षिणांसमारभ्य मध्यदेशपर्यन्ता लोकम्पृणेत्यादिभिस्त्रिभिर्मन्त्रैरुपदध्यादिति शेषः । तेषां मन्त्राणां प्रतीका- न्याह ॥ लोकम्पृणा ता अस्येन्द्रं विश्वा इति ॥ लोकम्पृणेतीदं प्रथम- मन्त्रप्रतीकम् ॥ ता अस्येति द्वितीयमन्त्रस्य प्रतीकमिदम् ॥ इन्द्रं विश्वा इति तृतीयमन्त्रस्य प्रतीकम् ॥ ते च मन्त्रास्त्रयोदशेऽध्याये व्याख्याताः ॥ इति चतुर्दशेऽध्याये सप्तमोऽनुवाकः ॥ १३ ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य- धुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिता- भाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥

## अथ शुक्लयजुःकाण्वमन्त्रभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

चतुर्दशेऽध्याये यजमानपुष्करपर्णस्तरणादिप्रथमचितिमन्त्रा उक्ताः ॥ एतावता प्रथमचितिः समाप्ता ॥ अथ पञ्चदशाध्याये द्वितीयतृतीयचित्यादिमन्त्रा उच्यन्ते ॥ तत्र प्रथमाऽनुवाके द्वितीयचितौ आश्विन्याख्या इष्टका अभिधीयन्ते ॥ कात्यायनः ॥ आश्विनीर्ध्रुवक्षितिरिति प्रतिमन्त्रमिति ॥ अश्विदेवयुक्तैः मन्त्रैरुपधेया इष्टका आश्विन्यः । ता ध्रुवक्षितिरित्यादिभिः पञ्चभिर्मन्त्रैः क्रमेणोपदध्यादिति शेषः ॥ तत्र प्रथममन्त्रपाठस्तु ॥ **ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया । उख्यस्य केतुं प्रथमं जुषाणाश्विनाध्वर्यू सादयतामिह त्वेति** ॥ ध्रुवा स्थिरा क्षितिर्निवासभूमिर्यस्या इष्टकायाः सा ध्रुवक्षितिः । यस्यां भूमौ इष्टका निवसतिः तस्या भूमेश्चाञ्चल्याभावात् स्थैर्यं द्रष्टव्यम् । ध्रुवा विनाशरहिता योनिरुत्पत्तिहेतुर्मृद्रूपा यस्या इष्टकायाः सा ध्रुवयोनिः । हे इष्टके, तादृशी त्वं स्वरूपतो ध्रुवा असि । आमकपालादिभिः संयोज्यनिर्मितत्वाद् ध्रुवा त्वम् । साधुया अस्माभिः साधनीया उपधातव्या त्वं ध्रुवं योनिं स्थिरमग्निक्षेत्ररूपं स्थानम् आसीद आगत्योपविश । किञ्च, उख्यस्य उखायां स्थितस्याग्नेः केतुं प्रज्ञापकं प्रथमं द्वितीयायां चितौ मुख्यं स्थानं जुषाणौ सेवमानौ देवानामध्वर्यू उभावश्विनाविहास्मिन्नग्निक्षेत्रे इष्टके त्वा त्वां सादयतां स्थापयताम् ॥ अथ द्वितीयः ॥ **कुलायिनी घृतवतीपुरन्धिः स्योने सीद सदने पृथिव्याः । अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यू सादयतामिह त्वेति** ॥ हे इष्टके, त्वं कुलायिनी निवासस्थानवती घृतवती होष्यमाणेनाज्येन संयुता सती पुरन्धिः पुरु बहुधा धीयते सम्यगवस्थाप्यत इति पुरन्धिः । तादृशी सती पृथिव्याः प्रथमचितिरूपाया भूमेः सम्बन्धिनि, स्योने सुखरूपे सदने स्थाने सीद उपविश । किञ्च, रुद्रा वसवः सर्वे देवाः सर्वे त्वा त्वाम् अभिगृणन्तु । इमा इमानि ब्रह्म ब्राह्मणानि मन्त्रात्मकानि पीपिहि आप्यायस्व । किमर्थम् । सौभगाय महदैश्वर्यार्थम् । पूर्ववत् ॥ अथ तृतीयः ॥ **स्वैर्दक्षैर्दक्षपितेह**

सीद देवानाᳬ सुम्ने बृहते रणाय । पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा संविशस्वाश्विनाध्वर्यू सादयतामिह त्वेति ॥ स्वैर्दक्षैः स्वकीयैर्बलैर्दक्षपिता बलस्य पालयित्री, हे इष्टके त्वम् एवंविधा सती इहास्यां द्वितीयायां चितौ सीद उपविश । किमर्थम् । बृहते महते रणाय रमणीयाय देवानां सम्बन्धिनि सुम्ने सुखाय सुखप्राप्त्यर्थम् । तत्र आ सर्वतः सुशेवाः सुखेन सेवितुं शक्यया एधि भव । क इव । सूनवे पितेव । यथा पुत्रार्थं पिता सुखेन सेव्यो भवति । किञ्च, तन्वा स्वकीयेन शरीरेण स्वावेशा सुखेन प्रवेशवती सती संविशस्व । अवस्थानं कुरु । अश्विनेत्यादि पूर्ववत् ॥ अथ चतुर्थः ॥ पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽयजस्वाश्विनाध्वर्यू सादयतामिह त्वेति ॥ हे इष्टके, त्वं पृथिव्याः प्रथमचितिभूताया भूमेः पुरीषं पूरकमसि । अप्सो नाम । अपः प्सनोतीत्यप्सो रसः । या त्वमेवं रसगुणभूता प्रसिद्धा तां त्वां तादृशीं त्वां विश्वे देवाः सर्वेऽपि देवा अभिगृणन्तु सर्वतः कीर्तयन्तु । स्तोमपृष्ठा सप्तदशादिस्तोमैर्युक्तानि पृष्ठस्तोत्राणि यस्याः सा स्तोमपृष्ठा घृतवती होष्यमाणेनाज्येन संयुता सती इहास्मिन्न क्षेत्रे सीद तिष्ठ । अस्मभ्यं प्रजावत् पुत्रपौत्रादियुक्तानि द्रविणानि धनानि आयजस्व सर्वतो देहि । अश्विनेत्यादि पूर्ववत् ॥ अथ पञ्चमः ॥ अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशामधिपत्नीं भुवनानाम् । ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वेति ॥ हे इष्टके, त्वा त्वाम् । अदित्याः पृष्ठे प्रथमचितिभूताया भूमेरुपरि सादयामि स्थापयामि । कीदृशीं त्वाम् । अन्तरिक्षस्य लोकस्य धर्त्रीं धारयित्रीम् । तथा प्राच्यादीनां दिशां विष्टम्भनीं विविधकार्येण स्तम्भयन्तीं व्यवस्थापयन्तीं, भुवनानां सर्वेषामधिपत्नीम् आधिक्येन पालयित्रीम् । यस्यास्ते विश्वकर्मा प्रजापतिर्ऋषिर्द्रष्टा सा त्वम् अपाम् ऊर्मिः, यश्च द्रप्सः, तदुभयरूपाऽसि । शिष्टं पूर्ववत् ॥ काशायनः ॥ शुक्रश्च शुचिश्चेत्यृतव्ये इति ॥ ऋतव्यसंज्ञके द्वे इष्टके उपदध्यादिति शेषः ॥ पाठस्तु ॥ शुक्रश्च शुचिश्च ग्रैष्मा ऋतू अग्नेरन्तःश्लेषोऽसि । कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा

द्यावापृथिवी इमे । ग्रैष्मावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतमिति ॥

शुक्रो ज्येष्ठमासः । शुचिराषाढः । तावुभौ ग्रीष्मसम्बन्धिनावृत्ववयवौ, हे ग्रीष्माख्यऋतो, त्वं चीयमानस्याग्नेरन्तःश्लेषोऽसि। यथा कुड्यस्यान्तर्दार्ढ्यार्थं काष्ठपाषाणादयः श्लेष्यन्ते तद्वत् । ममाग्निं चिन्वतो यजमानस्य ज्यैष्ठ्यायोत्कर्षार्थमिमे द्यावापृथिव्यौ स्वोचितमुपकारं कल्पेतां सम्पादयेताम्। आपश्चोपधयश्च कल्पन्तां स्वोचितमुपकारं सम्पादयन्तु । समानं व्रतं कर्म येषां ते सव्रता एकस्मिन् कर्मण्यवस्थिता आहवनीयाद्यग्नयोऽपि पृथक् कल्पन्ताम् । प्रत्येकं स्वोचितव्यापारं सम्पादयन्तु । किञ्च, इमे द्यावापृथिवी अन्तरा अनयोर्द्यावापृथिव्योर्मध्यं वर्त्तमानाः, समनस एकमनस्का ये अग्नयः ते सर्वेऽपि ग्रीष्मसम्बन्धिनावेतावृत्ववयवावभिकल्पमानाः सर्वतः सम्पादयन्तः, एतत्कर्माभिसंविशन्तु । तत्र दृष्टान्तः । इन्द्रमिव देवाः । यथाऽन्ये सर्वे देवाः, इन्द्रमभितः सेवन्ते तद्वत् । हे ऋतव्ये इष्टके, युवां तया देवतया आङ्गिरस्वत् अङ्गिरसां कर्मणां च ध्रुवे स्थिरे सत्यौ सीदतम् उपविशतम् ॥ इति पञ्चदशेऽध्याये प्रथमोऽनुवाकः ॥ १५ ॥ १ ॥

प्रथमेऽनुवाके आश्विन्यादीष्टकोपधानमन्त्रा उक्ताः ॥ द्वितीये वैश्वदेवीष्टकाद्युपधानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रमिति ॥ नानाविधदेवतायुक्तैर्मन्त्रैरुपधेया इष्टका वैश्वदेव्यः । ताः सजूर्ऋतुभिरित्यादिभिः पञ्चभिर्मन्त्रैः क्रमेणोपदध्यादिति शेषः ॥ तत्र प्रथममन्त्रपाठस्तु ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधैः। अग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वेति ॥

हे इष्टके, ऋतुभिर्वसन्तादिऋतुभिःसजूः समानप्रीतिरसि। वसन्तादीनां यादृशी प्रीतिस्तादृशी तवेत्यर्थः। एवमुत्तरत्रापि सजूःशब्दो योज्यः। विविधं जगद्धाति पोषयन्तीति ब्रह्मादयो विधाः। तैः समानप्रीतिरसि। यद्वा विधाशब्देनाप उच्यन्ते । आपो वै विधा इति श्रुतेः । तादृशीभिः समानप्रीतिरसि । वयोनाधैः पद्भिश्छन्दोरूपैः प्राणरूपैर्वा देवैः समानप्रीतिरसि । तथाच श्रूयते । प्राणा वै देवा वयोनाधाः । प्राणैर्हीदं सर्वं वयुनं नद्धमथ छन्दाꣳसि वयोनाधाः । छन्दोभिर्हीदꣳ सर्वं वयुनं नद्धं प्राणैर्वै सयुग्भूत्वा प्राजनयादित्यादि । सजूर्देवैरिति पुनर्वचनमादरार्थम्। एवं तादृशैर्देवैः समानप्रीतिर्युक्तां त्वां वैश्वा-

नरायाग्नये सर्वपुरुषाणां हितकारिवह्निरूपधेनहमुपदधामीति शेषः । एवमुप-
हिता त्वां देवानामध्वर्यू अश्विना इहास्मिन् क्षेत्रे सादयतां स्थापयताम् ।
एव मुत्तरेष्वपि मन्त्रेषु योजनीयम् ॥ तेषां पाठस्तु ॥ सजूर्ऋतुभिः सजू
र्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैः । अग्नये त्वा वैश्वा-
नरायाऽश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजू-
र्विधाभिः सजू रुद्रैः सजूर्देवैर्वयोनाधैः । अग्नये त्वा वैश्वानराया-
ऽश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः
सजूरादित्यैः सजूर्देवैर्वयोनाधैः । अग्नये त्वा वैश्वानरायाश्विना-
ऽध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजू-
र्विश्वैर्देवैः सजूर्देवैर्वयोनाधैः । अग्नये त्वा वैश्वानरायाश्विना-
ऽध्वर्यू सादयतामिह त्वेति ॥ कात्यायनः ॥ प्राणभृतः प्राणं म इतीति ॥
प्राणभृत्संज्ञका इष्टका उपदध्यात् ॥ पाठस्तु ॥ प्राणं मे पाह्यपानं मे
पाहि व्यानं मे पाहि । चक्षुर्म उर्व्या विभाहि श्रोत्रं मे श्लोकये-
ति ॥ हे इष्टके त्वं मे मदीयं प्राणं पाहि पालय । एवमुत्तरत्रापि । उर्व्या
विशालया दृष्ट्या मदीयं चक्षुर्विभाहि विशेषेण प्रकाशय । दर्शनसमर्थं कुर्वि-
त्यर्थः । मदीयश्रोत्रं संघाते शक्तं कुरु । बहुविधशास्त्रश्रवणसमर्थं कुर्वित्यर्थः ॥
कात्यायनः॥अपः पिन्वेत्यपस्या इति॥आपस्यानामका इष्टका उपदध्यात्॥पाठस्तु
अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात् पाहि । देवो वृष्टिमे-
रयेति ॥ हे इष्टके, त्वमपो जलानि पिन्व प्रीणय । ओषधीरपि जिन्व प्रीण-
य । द्विपात् मनुष्यशरीरम् अव रक्ष । चतुष्पात् पशुशरीरं पाहि पालय ।
दिवः सकाशाद् वृष्टिमेरय । आसमन्तात् प्रेरय ॥ इति पञ्चदशोऽध्याये द्वितीयो-
ऽनुवाकः ॥ १५ ॥ २ ॥

द्वितीयेऽनुवाके वैश्वदेवीष्टकाद्युपधानमन्त्रा उक्ताः ॥ तृतीये वयस्याख्ये-
ष्टकोपधानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ वयस्याः पञ्च पञ्चानुवाकान्तेषु
मूर्द्धा वय इति प्रतिमन्त्रमिति ॥ वयःशब्दोपेतैर्मन्त्रैरुपधेया इष्टका वयस्याः ।
ता अनुवाकान्तेषु पञ्च पञ्चोपदध्यात् ॥ पाठस्तु ॥ मूर्द्धा वयः प्रजापति-
श्छन्दः क्षत्रं वयो मयन्दं छन्दः । विष्टम्भो वयोऽधिपतिश्छन्दो
विश्वकर्मा वयः परमेष्ठीछन्दः । बस्तो वयो विवल छन्दो वृष्णि-
र्वयो विशाल छन्दः । पुरुषो वयस्तन्द्र छन्दो व्याघ्रो वयो-

ऽनाधृष्टं छन्दः । सिꣳहो वयश्छदिश्छन्दः पष्ठवाड्वयो बृहती-च्छन्दः। उक्षा वयः ककुप्छन्दः। ऋषभो वयः सतो बृहती छन्दः। अनड्वान् वयः पङ्क्तिश्छन्दो धेनुर्वयो जगतीछन्दः । त्र्यविर्व-यस्त्रिष्टुप्छन्दो दित्यवाड्वयो विराट् छन्दः । पञ्चाविर्वयो गायत्रीछन्दस्त्रिवत्सो वय उष्णिक् छन्दः । तुर्यवाड्वयो-ऽनुष्टुप् छन्द । इति ।

पुरा खलु सृष्टतः प्रजापतेर्विश्वस्मात् सकाशात् सृष्टाः पश-वश्छन्दोरूपमास्थाय निरगच्छन् । ततः स प्रजापतिः स्वयमपि गायत्र्या-दिछन्दोरूपं स्वीकृत्य पशुसम्बन्धिधर्मां तत्तदवस्थायां तान् योजयत् । तत्र तावदादितश्चतुर्भिर्मन्त्रैः प्रजापतेरष्टावयवात्मकं गायत्रीरूपं परिकल्पते । एवं गायत्रीछन्दोरूपेण परिकल्पितोऽसौ प्रजापतिः स्वयमेव मूर्द्धा पशुसं-बन्धिशिरः । वयः शरीरावस्था । प्रजापतिरेव मूर्द्धलक्षणं वयोऽभवत् । अत एव मूर्ध्नि इतरावयवेभ्यः प्राधान्यं दृश्यते । तथा प्रजापतिः स्वयमेव छन्दोऽभवत् । अस्मिन् मन्त्रे उत्तरमन्त्रेष्विव छन्दसो विशेष्य यच्छन्दःसा-मान्यं विवक्षितम् । अनेन मन्त्रेण प्रजापतेर्द्वावयवौ परिकल्पितौ । क्षतात् त्रायत इति क्षत्रम् । तादृशं वयः शरीराऽवस्था प्रजापतिरभवत् । मयः सुखं ददातीति मयन्दं तादृशं छन्दश्चाभवत् । कृत्स्नं शरीरं विष्टभ्नोति स्थिरीकरोती विष्टम्भः प्रजापतिः । स्वयं विष्टम्भात्मकं वयोऽभवत् । अधि-ष्ठापयतीत्यधिपतिः । एतदात्मकं छन्दोऽभवत् । विश्वं कर्म कर्तव्यं यस्या-ऽसौ विश्वकर्मा प्रजापतिरीदृग्रूपं वयोऽभवत् । परमे उत्कृष्टे । स्थाने तिष्ठतीति परमेष्ठी एतदात्मकं छन्दोऽभवत् । एवं प्रतिमन्त्रं द्वौ द्वावयवा-विति अष्टावयवः प्रजापतिः परिकल्पितः । तथाचाष्टसंख्योपेतत्वात् सर्व-छन्दःप्रकृतिभूतं गायत्रीरूपमस्य संपन्नम् । एवं गायत्रीरूपः प्रजापतिः किम-करोदिति तदाह । बस्तोवय इत्यादिना । एकपदा वै विवर्छ छन्द इति श्रुतेः । प्रजापतिः स्वयमेकपदा गायत्रीछन्दो भूत्वा वयः । सुपां सुलुगिति तृतीयाया लुक् । बस्तश्छन्दः । अत्रापि द्वितीयैकवचनस्य सुपादेशः । प-यसा शरीरावस्थया निर्गतं बस्ताख्यं पशुं पर्यगृह्णात् । एवमुत्तरेष्वपिमन्त्रेषु विभक्तिविपरिणामं कृत्वा तत्तच्छन्दोरूपमास्थाय प्रजापतिस्तद्वयसा तं पशुं परिगृहीतवानिति योज्यम् । विशेषस्तु । कथ्यते । वृष्णिः सेचनसमर्थो मेषः।

द्विपदां गायत्री । विशालाख्यं छन्दः । द्विपदा वै विशालं छन्द इति श्रुतेः । विराट्छन्द । अनाधृष्टम् । विराड्वा अनाधृष्टमिति श्रुतेः । अनाधृष्टाख्यं विराट्छन्दो विराट् । सर्वाणि छन्दांसि छादयतीति छदिः । अतिछन्दः अतिछन्दो वै छदिरिति श्रुतेः । पृष्ठे पृष्ठभागे वहतीति पृष्ठवाट् पञ्चवर्षः पशुः । उक्षा सेचनसमर्थः पशुः । अन्तिमौ द्वाषष्टाक्षरौ पादौ मध्यपादौ द्वादशाक्षरश्चेत् सा ककुप् । ऋषभः सेचनसमर्थोऽनड्वान् । प्रथमतृतीयौ पादौ द्वादशाक्षरौ सा सतो बृहती । अतो वहतीत्यनड्वान् बलीवर्दः । धेनुर्नवप्रसूता । सत्रत्या गौस्त्रिधा भवतीति त्र्यविः । यद्वा अविशब्देन क्षीरादिकमन्नं लक्षयित्वा तत्प्राशनाय विहितः षण्मासात्मकः कालो लक्ष्यते । तथा च तिस्रो अवयोऽस्य सञ्जाता इति त्र्यविरष्टादशमासः पशुरिति । दित्यार्ह खण्डनार्ह वहतीति दित्यवाट् । यद्वा द्विवर्षः पशुर्दित्यवाडित्युच्यते । पञ्चपशुः पञ्चाविः । त्रयो वत्सा यस्यासौ त्रिवत्सः । यद्वा त्रिवत्सरः पशुस्त्रिवत्सः । तुर्यं चतुर्थं वहतीति तुर्यवाट् । मूर्द्धा वय इत्यादीनां मन्त्राणां श्रुत्यनुसारेणैवं व्याख्यानं कृतम् । तत्सर्वं शतपथादवगन्तव्यम् ॥ कात्यायनः ॥ लोकम्पृणासंज्ञका इष्टका यथापूर्वमुपदध्यादिति शेषः । तेषां मन्त्राणां प्रतीकान्याह । लोकं पृणता अस्येन्द्रं विश्वा इति पूर्वव्याख्यातम् ॥ इति पञ्चदशेऽध्याये तृतीयोऽनुवाकः॥१५॥३॥

तृतीयेऽनुवाके चयस्याल्लोकम्पृणसंज्ञका इष्टका उक्ताः एतावता द्वितीया चितिः समाप्ता ॥ अथ चतुर्थे तृतीयस्या चितौ स्वयमातृण्णाद्या उच्यन्ते ॥ कात्यायनः ॥ तृतीयायां स्वयमातृण्णामिन्द्राग्नी इति ॥ तत्पाठस्तु ॥

इन्द्राग्नी अव्यथमानामिष्टकां दृहतं युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधसे । विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वती । अन्तरिक्षं यच्छान्तरिक्षं दृहान्तरीक्षं मा हिᳬसीः । विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद् ध्रुवासीदेति ॥

अत्रोपरार्द्धः प्रथमं व्याख्येयः । येयमिष्टका पृष्ठेन स्वकीयेनोपरिभागेन लोकत्रयं विबाधसे पुरुषव्यत्ययः । विभासेतु अभिभवति । हेइन्द्राग्नी

युतं युवाम् अव्ययमानां भङ्गं रहिता स्वयमातृण्णाख्यां तामिष्टकां दृꣳहतं दृढीकुरुतम् । किञ्च, विश्वानि कर्माणि यस्यासौ प्रजापतिः । हे स्वयमातृण्णो त्वां स प्रजापतिस्त्वामन्तरिक्षस्य पृष्ठे उपरि सादयतु । कीदृशीम् । व्यचस्वतीम् अभिव्यक्तियुक्ताम् । प्रथमस्वतीं विस्तारोपेताम् । येयं स्वयमातृण्णा सा त्वमन्तरिक्षं यच्छ । गन्धर्वाप्सरोगणानां सा त्वमन्तरिक्षं यच्छ । गन्धर्वाप्सरोगणादिधारकतया नियमय । तथाऽन्तरिक्षं दृꣳहपरोपद्रवराहित्येन दृढीकुरु । त्वमपि तदन्तरिक्षं मा हिꣳसीः । विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यं वायुवृत्तिलाभाय प्रतिष्ठायै स्वगृहे स्थितिलाभाय चरित्राय शास्त्रीयाचरणाय प्राणिनायतस्त्वं सर्वस्य सिद्ध्यर्थमयं वायुस्त्वामभितः यातु । केन रक्षणामिति । तदुच्यते । मह्या स्वस्त्या महत्या योगक्षेमसंपत्त्या शततमेन छर्दिषा असन्तशुभकारिणा दीप्तिविशेषेण तत्र स्वामिभूतया देवतयानुगृहीताध्रुवा स्थिरा सती सीद इहोपविशे । अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिरा तद्वत् ॥ कात्यायनः ॥ पञ्चदिश्या वैश्वदेवीवद् राज्ञ्यसीति प्रतिमन्त्रमिति ॥ दिक्शब्दपञ्चकोपेतैर्मन्त्रैरुपधेया इष्टकाः पञ्चदिश्या राज्ञ्यसीति ॥ मन्त्रपञ्चकेनोपदध्यादिति शेषः ॥ पाठस्तु ॥

**राज्ञ्यसिप्राची दिग्विराडसि दक्षिणा दिक् सम्राडसि प्रतीचीदिक् स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिगिति ॥**

हे इष्टके त्वं राज्ञी राजमाना दीप्यमाना सती प्राची दिगसि पूर्वदिग्रूपासि । विराड्विराजमाना दक्षिणा दिगसि । सम्राट् सम्यग् राजमाना प्रतीची दिगसि । स्वराट् परनिरपेक्षतया स्वयमेव राजमाना उदीची दिगसि । अधिकं पातीत्यधिपत्नी तादृशी त्वं बृहती प्रौढोर्ध्वा दिगसि ॥ कात्यायनः ॥ विश्वकर्मेति विश्वज्योतिषमिति ॥ पाठस्तु ॥

**विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै । प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ । वायुष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवासीदेति ॥**

हे इष्टके ज्योतिष्मतीं त्वा त्वां विश्वकर्मान्तरिक्षस्य पृष्ठे उपरि आसादयतु किञ्च, सर्वप्राणवृत्तिलाभार्थं, हे इष्टके त्वं सर्वज्योतिर्यच्छ प्रयच्छ वायुस्ते तत्राधिपतिरधिदेवता तया देवतया ध्रुवा स्थिरा सती सीद उपविश । अङ्गिरस्वत् । अङ्गिरसां चितौ पूर्वं ध्रुवा सती प्रविष्टा

तद्वदवापीत्यर्थः ॥ कात्यायनः ॥ ऋतव्ये नभस्यश्चेतीति ॥ पाठस्तु ॥

नभश्च नभस्यश्च वार्षिकाऽऋतूऽअग्नेरन्तः श्लेषोऽसि । कल्पतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । वार्षिकाऽऋतूऽअभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद् ध्रुवे सीदतमिति ॥

स्पष्टार्थः ॥ इषश्चोर्जश्चेत्यपरे इति ॥ इतर ऋतव्ये इष्टके उपध्यादि-विशेषः ॥ पाठस्तु ॥

इषश्चोर्जश्च शारदा ऋतूऽअग्नेरन्तः श्लेषोऽसि । कल्पतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । वार्षिका ऽऋतूऽअभिकल्पमाना इन्द्रमिव देवाऽअभिसंविशन्तु । तया देवतयाङ्गिरस्वद् ध्रुवे सीदतमिति ॥

व्याख्यातसमानार्थः ॥ इति पञ्चदशेऽध्याये चतुर्थोऽनुवाकः ॥१५॥४॥

चतुर्थेऽनुवाके स्वयमातृण्णादीष्टकोपधानमन्त्रा उक्ताः ॥ पञ्चमे प्राणभृ-दिष्टकोपधानमन्त्रा उच्यन्ते ॥ कात्यायनः ॥ पूर्वार्द्धे प्राणभृतो दशायुर्मे इति प्रतिमन्त्रमिति ॥ पूर्वभागे प्राणभृत्संज्ञका दशसंख्याका इष्टका एकैकेन मन्त्रे-णोपदध्यात् ॥ तेषां पाठस्तु ॥

आयुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्मे पाहि श्रोत्रं मे पाहि वाचं मे पिन्व मनो मे जिन्वात्मानं मे पाहि ज्योतिर्मे यच्छति ।

हे इष्टके मदीयमायुः पाहि रक्ष एवमुत्तरत्रापि योज्यम् । पिन्व प्रीणय । जीन्व प्रीणय आत्मानं जीवस्वरूपं ज्योतिः कान्तिं यच्छ देहि॥कात्यायनः॥छन्दस्या-ह्वादशद्वादशाप्यनयेषु माछन्द इति प्रतिमन्त्रं वालखिल्याश्लोक पश्चाच्चिष्टीति । छन्दः शब्दोपेतैर्मन्त्रैरुपधेया इष्टकाश्छन्दस्याः ताः षड्विंशतिसंख्योपेता वा-लखिल्येष्टकोपधानार्थं मदध्यात् ॥ पाठस्तु ॥

मा छन्दः प्रमाछन्दः प्रतिछन्दो अस्रीवयछन्दः । पङ्क्तिश्छन्दऽउष्णिक् छन्दः । बृहतीछन्दः । बृहतीछन्दोऽनुष्टुप्छन्द-विराट्छन्दो गायत्रीछन्दः । त्रिष्टुप्छन्दो जगतीछन्दः । पृथि-

धीछन्दोऽन्तरिक्षश्छन्दो द्यौश्छदः समाश्छन्दः । नक्षत्राणिछन्दो वाक् छन्दः । मनश्छन्दः कृषिछन्दो हिरण्यछन्दो गौछन्दः । अजाश्छन्दोऽश्वश्छन्दः । अग्निर्देवता वातोदेवता सूर्योदेवता चन्द्रमादेवता । वसवोदेवता । आदित्यादेवता मरुतोदेवता विश्वेदेवादेवता बृहस्पतिर्देवता । इन्द्रोदेवता ब्रह्मणोदेवतेति ॥

अत्र या प्रमा प्रतिमादिशब्दाभिधेयाश्छन्दो विशेषाः केचिद्वेदेष्वेव प्रसिद्धाः केचिल्लोकेष्वपि प्रसिद्धाः । हे इष्टके त्वं प्रमानामछन्दोरूपासि । प्रमानामछन्दोरूपासि । इत्येवं सर्वत्र योज्यम् । अग्न्यादीनान्तु देवतात्वं प्रसिद्धं हे इष्टके त्वं अग्निदेवतारूपासीत्येवं तत्रापि योज्यम् ॥ इति पञ्चदशेऽध्याये पञ्चमोऽनुवाकः ॥

पञ्चमेऽनुवाके प्राणभृदिष्टकादिमन्त्रानुक्ताः ॥ षष्ठे वालखिल्यादीष्टकोपधान मन्त्रा उच्यन्ते ॥ कात्यायनः ॥ वालखिल्याः सप्तमूर्द्धासि राडिप्रति मन्त्रामिति वालखिल्येष्टकाः सप्तपूर्वभागे मूर्द्धासि राडितिसप्तभिर्मन्त्रैरुपधेयाः । इतराः सप्तपश्चिमभागे यन्त्रीराडितिप्रतिमन्त्रमिति । वालखिल्येष्टकाः सप्तपूर्वभागे मूर्द्धासिराडिति सप्तभिर्मन्त्रैरुपधेयाः । इतराः सप्तपश्चिमभागे यन्त्रीराडितिसप्तभिर्मन्त्रैरुपदध्यात् ॥ पाठस्तु ॥

मूर्द्धासिराड् ध्रुवासि धरुणाधर्त्र्यसि धरणी । आयुषेत्वा वर्चसेत्वाकृष्यै त्वा क्षेमायत्वा । यन्त्रीराड्यन्त्र्यसि यमनीध्रुवासि धरित्री । इषेत्वोर्जेत्वारय्यैत्वापोषायत्वेति ।

हे इष्टके त्वं मूर्द्धा मूर्द्धवदुत्तमाराद् राजमानाचासि । हे इष्टके त्वं मूर्द्धामूर्द्धवदुत्तमाराद् राजमानाचासि । हे इष्टके त्वं ध्रुवास्थिराधरुणाधारणहेतुश्चासि हे इष्टके त्वं धत्रीधारणं कुर्वतीधरणी भूमिरूपासि । आयुषे आयुर्वृद्ध्यर्थं त्वामुपदधामि । वर्चसे कान्त्यर्थं त्वामुपदधामि । कृष्यैप्रसवनिष्पत्तये त्वामुपदधामि । क्षेमाय सम्पादितस्य धनस्य रक्षणाय त्वामुपदधामि । हे इष्टके त्वं यन्त्रीनियमोपेताराद्राजमानाचासि । तथा यन्त्रीस्वयमपि नियन्त्रीयमुनीसर्वेषां नियमकारिणीचासि । तथा ध्रुवास्थिरासतीधरित्रीभूमिरूपाचासि । हे इष्टके इषे अन्नाय त्वामुपदधामि । ऊर्जे बलाय त्वामुपदधामि । र-

ण्यै धनार्थं त्वामुपदधामि । पोषाय तद्ब्रह्मपुष्ट्यर्थं त्वामुपदधामि ॥ कात्यायनः ॥ लोकं पृणाः पूर्ववदिति । तन्मन्त्रप्रतीकं ॥ पाठस्तु ॥

लोकं पृणता अस्येन्द्राविश्वा इति ।

पूर्ववद्व्याख्येयम् ॥ इतिपञ्चदशेऽध्यायेषष्ठानुवाकः ॥

षष्ठानुवाके वालखिल्यादीष्टकोपधानमन्त्रा उक्ताः ॥ एतावता तृतीयाचितिः समाप्ता ॥ अथ सप्तमेऽनुवाके चतुर्थ्यां चितौ वक्ष्यमाणायां स्तोमोपाख्याया इष्टकास्तासामुपधाने केचिन्मन्त्रानुच्यन्ते ॥ सूत्रन्तु चतुर्थ्यामनूकान्तेषु दक्षिणोत्तरे द्वे द्वे इत्यारभ्य प्रतूर्तिरष्टादश इत्यन्तं कात्यायनेनोदाहृतम् ॥ तेषां पाठस्तु ॥

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशोधरुणएकविंशः प्रतूर्तिरष्टादशः । तपो नवदशोभीवर्तः स विंशो वर्चो द्वाविंशः सम्भरणं त्रयो विंशो व्योमा सप्तदशो धरुणरेकविंशः प्रतूर्तिरष्टादशः । तपो नवदशोभीवर्तः सविंशो वर्चो द्वाविंशः सम्भरणस्त्रयोविंशो योनिश्चतुर्विंशः । गर्भाः पञ्चविंश ओजस्त्रिणवः क्रतुरेकत्रिंशः प्रतिष्ठा त्रयस्त्रिंशो ब्रध्नस्यविष्टपश्चतुस्त्रिंशः । नाकः षट्त्रिंशो विवर्तोऽष्टाचत्वारिंशो धर्त्रं चतुष्टोम इति ।

अत्र त्रिवृत्पञ्चदशसप्तदशादिशब्दाः सोमविशेषवाचिनः स्तोमाश्च त्रिवृत्त्रिभ्यस्य साम्न आवृत्तिभेदान्निष्पद्यन्ते । आवृत्तिप्रकारस्तु त्रिवृत्पञ्चदशसप्तदशानां राजसूयाभिधायके एकादशेऽध्याये सामब्राह्मणोदाहरणेनाम्नाभिर्व्याख्यातः । एकविंशस्त्रिणवस्त्रयस्त्रिंशाख्या अपि सोमाः सामब्राह्मणे पठिताः । अष्टादशनवदशादयस्तु न्यायेनोन्नेया स्तोमास्तु ब्राह्मणाम्नाताः तदुन्नयनार्थस्त्वावृत्तिप्रकारः सामसूत्रादवगन्तव्यः । अत्र त्रिवृदादयश्चतुष्टोमान्ताः स्तोमविशेषा अष्टादशसंख्याका आम्नाताः । आशुस्त्रिवृद्भान्त इत्यादीनि स्तोमविशेषणानि कानिचिद्गुणवाचकानि कानिचिद् द्रव्यवाचकानि तथासति गुणसम्बन्धं द्रव्यतादात्म्यं वा स्तोमेषूपचर्यन्ते । अत्र स्तोमरूपत्वं नतादिष्टकायाः प्रशंसनार्थं उपन्यस्यते । तत्रैवमक्षरयोजना । आशुः शैघ्र्यगुणोपेतो यस्त्रिवृत्स्तोमः हेइष्टके त्वं तद्रूपासि । एवमुत्तरत्रापि

योज्यम् । भान्तो भासमानः व्योमेतिमसिद्धं द्रव्यव्यत्ययेन पुल्लिङ्गता । धरुणो धारकः प्रकृष्टातूर्तिस्त्वरायस्यासौ प्रतूर्तिः शीघ्रकारीत्यर्थः । तपः प्रसिद्धम् । अभीवर्त्तः सोमविशेषच्छान्दसो दीर्घः सहविंशत्या संख्यया सविंशः स्तोमविशेषः । वर्चो बलविशेषः । सम्भरणः सम्यक्पोषकः योनिः प्रजोत्पादकः गर्भः प्रसिद्धः । ओजोष्टमो धातुः क्रतुर्ज्योतिष्टोमादिः । प्रतिष्ठा स्थितिहेतुः । ब्रध्नस्यादित्यस्य विष्टपं निवासस्थानम् । असौ वा आदित्यस्य विष्टपं निवासस्थानम् । असौ वा आदित्यो ब्रध्न इतिश्रुत्यन्तरात् । नाकः स्वर्गाख्यो भोगभूमिः । विपरीतत्वेन वर्त्तनमस्यासौ विवर्तः । त्रिवृत्सं च दशपञ्चदशैकविंशत्रिणवत्रयस्त्रिंशाः अनेनैवाम्नातक्रमेण क्वचिदनुष्ठीयन्ते । क्वचित्तु विपरीतक्रमेण । अतएवायस्तम्बाचार्येण क्वचिदुक्तम् । त्रयस्त्रिंशारम्भणास्त्रिवृदन्तया इतिधर्त्तो धारकश्चतुष्टोमस्त्रिवृत् पञ्चदशसप्तदशैकविंशानां समूहः । एतैस्तोमवादिभि इष्टादशभिर्मन्त्रैः स्तोमरूपत्वमापादिता । अष्टादशेष्टकानुपदध्यादित्यर्थः ॥ इतिपञ्चदशेऽध्यायेसप्तमोनुवाकः ॥

सप्तमेऽनुवाके केचिदनूपा स्तोमीयाख्येष्टकोपधानमन्त्रा उक्ता । अथाष्टमे तदवशिष्टेष्टकोपधानमन्त्रानुच्यन्ते ॥ अग्नेर्भागइत्यारभ्य पशूनाम्भाग इत्यन्तं कात्यायनेन सूचितम् ॥ तेषां पाठस्तु ॥

अग्नेर्भागोसिदीक्षाया आधिपत्यम्ब्रह्मस्पृतन्त्रिवृत्स्तोमः । इन्द्रस्यभागोसिविष्णोराधिपत्यङ्क्षत्रंस्पृतं पञ्चदशस्तोमः । नृचक्षसाम्भागोसि धातुराधिपत्यञ्जनित्रंस्पृतंसप्तदशस्तोमः । मित्रस्य भागोसि वरुणस्याधिपत्यन्दिवोवृष्टिर्वातस्पृतएकविंशस्तोमः । वसूनाम्भागोसि रुद्राणामाधिपत्यं चतुष्पात्स्पृतं चतुर्विंशस्तोमः । आदित्यानां भागोसि मरुतामाधिपत्यं गर्भाः स्पृताः पञ्चविंशस्तोमः । अदितेर्भागोसि पूष्ण आधिपत्यमोजस्पृतं त्रिणवस्तोमः दिवस्य सवितुर्भागोसि बृहस्पते राधिपत्यंसमीचीर्दिशः स्पृताश्चतुष्टोमस्तोमः । यवानां भागोस्य यवानामाधिपत्यं प्रजास्पृताश्चतुश्चत्वारिंशस्तोमः । ऋभूणां भागोसि विश्वेषां देवानामाधिपत्यं भूतंस्पृतन्त्रयस्त्रिंशस्तोइति ।

हे इष्टके योयमग्रेर्भागो हविर्लक्षणः त्वं दीक्षा देवताया आधिपत्यं स्थापितवं स्पृतं ब्रह्मद्रवानां प्रीतिकरं मन्त्रज्ञानं ब्राह्मणजातिर्वायोपि त्रिवृदाख्यः सोमविशेषस्तत्सर्वं त्वमसि । हे इष्टके योयमिन्द्रभागो हविर्विशेषः यच्च विष्णोः परमेश्वरस्याधिपत्यं यदपिस्तृतप्रीतिकर बलं क्षत्रं क्षत्रियजाति वा योनिः पञ्चदशाख्यः स्तोमः तत्सर्वं त्वमसि । हे मनुष्याः सन्तः यक्षते वेदं व्यक्ताव्यक्तमुच्चारयन्ति तेनानूचक्षसक्रत्विजस्तेषां भागो दक्षिणरूपा गवादिधातुप्रभृतेर्यदाधिदत्तं यच्च स्मृतं प्रीतिकारणं जानजं जननशीलमन्नं तत्त्वं त्वमसि । स्मृतः प्रीतिहेतुर्वातोवायुर्दिवः सकाशादागताद्वृष्टिश्च पुष्पाद्गवाश्वादिगर्भाद्द्विपदां च पुष्पदां चादरगताः प्रीतिहेतवः आजोबलमष्टधातुर्वा योस्तु दिक्ष्ववस्थिताः प्राणिनामनुकूलाः तादिशः समीच्यः युतामिश्री भवतः शुक्लकृष्णपक्षावत्रेति यवामासाः स तथाविधत्वाद्यवा अर्धमासाः ऋतुशब्देवसामान्यवाचीगणविशेषो विश्वेदेवाः भुतं निष्पन्नं प्रीतिकरं स्थानं हे इष्टकं त्वं तत्सर्वमसि ॥ कात्यायनः ॥ ऋतव्ये सहश्चसहश्चेति ॥ ॥ पाठस्तु ॥ सहश्च सहस्यश्च हैमन्तिकावृतूअग्नेरन्तः श्लेषोसि कल्पेतां द्यावा पृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । येअग्नयः समनसोन्तरा द्यावा पृथिवी इमे । हैमन्तिकाऽऋतू अभिकल्पमाना इन्द्रमिव देवाः अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवेसीदतमिति व्याख्यातः समानार्थः ॥ इतिपञ्चदशेऽध्यायेऽष्टमोनुवाकः ॥

अष्टमेऽनुवाकेऽवशिष्टानामसुपात्तोपीयानामिष्टकानामुपधानमन्त्रा उक्ताः॥ नवमे तु सृष्टिशब्दाभिधेयेष्टकोपधानमन्त्राः उच्यन्ते ॥ कात्यायनः ॥ सप्तदशसृष्टेरेकया स्तुवतेतिप्रतिमन्त्रमिति । सूत्रमुदुसुक्तैर्मन्त्रैरुपधेया इष्टकासृष्टयः ता एकयास्तुवतत्र्यादिभिः सप्तदशभिर्मन्त्रैः क्रमेणोपदध्यादितिशेषः ॥ तेषां पाठस्तु ॥ एकया स्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीति त्रिभिरस्तुवत ब्रह्म सृज्यत ब्रह्मणस्पतिराधिपतिरासीत्। पञ्चभिरस्तुवतभूतान्यसृज्यन्तभूतानां पतिरधिपतिरासीत्सप्तभिरस्तुवत सप्तऋषयो सृज्यन्त धाताधिपतिरासीत् । नवभिरस्तुवत पितरो सृज्यन्तादितिरधिपत्न्यासोदेकादशभिरस्तु-

षट् ऋतवो सृज्यन्तार्तवा अधिपतय आसन् । त्रयोदशभिर स्तुवत मासा असृज्यन्त संवत्सरोधिपतिरासीत्पञ्चदशभि-रस्तुवत क्षत्रमसृज्यतेन्द्रोधिपतिरासीत् । सप्तदशभिरस्तुवत ग्राम्याः पशवो सृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभि-रस्तुवत शूद्रार्या असृजेतामहोरात्रे अधिपत्नी आस्तां एकविंश-त्यास्तुवतैकशफाः पशवो सृज्यन्त सोमोधिपतिरासीदिति । अत्र निदानं पुरा प्रजापतिरिन्द्रियाधिष्ठातृन्देवान् मां स्तुवध्वमित्यब्रवीत् । ते च देवाः केन स्तोष्यामह इत्यवोचन् । एवमुक्ताः प्रजापतिर्मया च युष्मा-भिश्च स्तुतिः करिष्यत इत्यादिकं सर्वं एतद्वै प्रजापतिरित्यादिके शतपथब्रा-ह्मणेऽनुसन्धेयम् । एकया वाचा देवाः प्रथममस्तुवत । स्तुतिमकुर्वन् ततः प्रजापतिना प्रजा अधीपतिरासीत् । ततः पञ्चभिः प्राणादिभिरस्तुवत तदानीं पञ्चभूतानि सृष्टान्यभूवन् भूतानां पतिरितिकश्चिद्देव विशेषः । अत्र स ए-वाधिपतिरासीत् । श्रोत्रे चक्षुषिनासिकेवागितियेसप्तशीर्षण्यास्तैःसप्तभिरस्तु-वत । ततः सप्तर्षयः सृष्टा अभूवन् । धाता जगत्स्रष्टा यो देवः स एवा-धिपतिरासीत् । नवभिरस्तुवत । सप्तशीर्षण्याः द्वाववाञ्चाविति येनच प्राणाः तैरस्तुवत स्तुतिमकुर्वन् । ततः पितरोऽग्निष्वात्तादयः सृष्टाअदितिरेनं विश्वस्य प्रजापतेरखण्डितायानक्तिमेव तेषां सृष्टाना पितॄणां अधिपती स्वामित्वे-नाधिकं पालयित्र्यासीत् । दशप्राणा आत्मैकादशसंख्या कायास्तैःकृत्वा इन्द्रियाधिष्ठातारो देवाः प्रजापतिं स्तुतिमकुर्वन् । ततः ऋतवो वसन्ताद्याः सृष्टास्तेषामार्तवा ऋतुपालकाः केचिद्देवविशेषास्तएव स्वामिनोऽभुवन् । सदशप्राणा द्वौ प्रतिष्ठारूपौ पादौ एकआत्मेति ये त्रयोदशसंख्याकास्तैरस्तु-वत । ततो मासाश्चैत्रादयः सृष्टा मासाभिमानी यः संवत्सरः । तेषां स एवाधिपतिरासीत् । दशहस्त्याङ्गुल्यश्चत्वारो दोर्बाहवः नाभेरूर्ध्वच्छ-रीरं एतैः पञ्चदशभिरस्तुवत क्षत्रं क्षत्रियजातिः सृष्टाइन्द्रस्तदभिमानी दे-वस्तस्याप्यभूत् । दशपादाङ्गुल्यः ऊरुद्वयमष्ठीद्वयञ्च नाभेरवाग्यच्छरीरंएतैः सप्तदशभिरस्तुवत । तदा ग्राम्याः पशवः सृष्टास्तेषां बृहस्पतिस्तदभिमानी-स्वाम्यभूत् । दशहस्त्याङ्गुल्यो नवप्राणास्तैर्नवदशभिः शूद्रार्यौ शूद्रार्यौवै-श्यशूद्रौ सृष्टौ तयोरहोरात्रे स्वामित्वेनाभूताम् । हस्तगतादशाङ्गुल्यः । दशपादगताआत्मैकविंशइति या एकविंशतिसंख्यास्तयास्तुवत । तत्

एकशफा अश्वादयः पशवः सृष्टास्तेषां वरुणोऽधिपतिरासीत् । दशपाद्रेि मतिष्ठे आत्मा त्रयोविंश इति या त्रयोविंशतिः संख्या तयाऽस्तुवत । ततः शूद्रास्त्वजादयः पशवः सृष्टास्तेषां पूष्णस्त्वाभ्यासीत् । दशहस्तांगुल्यो दश पाद्याश्चत्वारः करचरणआत्मापञ्चविंशतिः संख्या तया स्तुतिमकुर्वन् तदा ह्यारण्याः कृष्णमृगादयः सृष्टास्तेषां वायुरधिपतिरासीत् । दशहस्त्यांगुल्योदशपाद्याः सप्तशीर्षण्याः माणइति या सप्तविंशतिस्तयास्तुवत तत्र द्यावा पृथिव्यौ व्यैतां विशेषेणगच्छतां वसवोरुद्राआदित्याइति ये देवा अनुव्यायन् अन्वागच्छत एव स्वामिनो भुवन् । दशहस्त्यम् । अङ्गुल्योदशपाद्यावयवमाणा इति । या तयाऽस्तुवत ततो वनस्पतयस्तत्र सोमोऽधिपतिरासीत् । दशहस्त्याङ्गुल्यो दशपाद्याप्राणा आत्मैकत्रिंशतयाताइतियत् तेनैवास्तुवत । ततः प्रजाः सृष्टास्तासां प्रजानां यवाः पूर्वपक्षाः । अयनाः । अपरपक्षाश्चाधिपतये आसन् दशहस्त्यांगुल्योदशपाद्यारद्वाःमाणाद्वेिप्रतिष्ठे आत्मायंयस्त्रिंशइत्येतेनास्तुवत ततः सर्वाणि भूतान्याशाम्यन् । सर्वे प्राक्तिनः शांता अभूवन् । परमे सत्यलोके तिष्ठतीतिपरमेष्ठी प्रजापति ॥ सर्वेषां भूतानां सप्त्राधिपतिरासीत् । अत्र यायेका येन येन मन्त्रेणोपधेयात् तदिष्टकानत्तन्मंत्रप्रतिपादकदैवतारूपत्वेन प्राप्तेत्यर्थः ॥ ॥ कात्यायनः ॥ लोकं पृणाः पूर्ववत् । लोकं पृणसंज्ञकाः इष्टकाः पूर्ववदुपदध्यात् ॥ तन्मन्त्रप्रतीकपाठस्तु ।

लोकं पृणता अस्येदं विश्वा पूर्ववद्व्याख्येयम् ।

इतिपञ्चदशोऽध्यायेनवमोऽनुवाकः ॥

वेदार्थस्यप्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थ महेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येणविरचितेमाधवीये काण्वसंहिताभाष्ये वेदार्थप्रकाशे पञ्चदशोऽध्यायः ॥ १५ ॥

## अथ यजुर्वेदकाण्वमन्त्रभाष्ये षोडशोऽध्यायः ॥ १६ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहंवन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पंचदशोऽध्याये द्वितीयतृतीयचतुर्थचितिविषयेऽष्टका मंत्रा उक्ताः ॥ षोडशे तु पंचमचितिविषयेऽष्टका मन्त्रा उच्यन्ते । कात्यायनः । पंचम्या सपत्या अग्ने जातानिति प्रतिमंत्रमिति । पंचम्यां चितौ प्रथमं असपत्नाख्या इष्टका अग्ने जातानितिपञ्चभिर्मंत्रैः क्रमेणोपदध्यात् । । तत्र प्रथमंत्रपाठस्तु । । अग्ने जातान्प्रणुदानः सपत्नान् प्रत्यजातां जातवेदानुदस्व । अधिनो ब्रूहिंसुमनाअहेलन्स्तवस्याम त्रिवरूत्युद्भाविति । हे अग्ने नोऽस्माकं जातान् सपत्नान् येपूर्वमुत्पन्नाः शत्रवस्तान् प्रणुद प्रकर्षेण नाशय । किञ्च हेजातवेदायेपूर्वमुत्पन्नाः इतः परमुत्पत्तिप्रशक्तियुक्तास्तान् जातान् शत्रून् प्रतिनुदस्व उत्पत्तिप्रतिबंधेन निराकुरु । सुमनाः सानुग्रहचित्तस्त्वं अहलंनुदन्युष्मं नोऽस्माकं अधिब्रूहि । अत्र यज्ञे इति कर्तव्यतानुपादिश। उद्भौ मा दीप्तौ पशुधनधान्यादिभिरुद्भिद्यनइत्युद्भिदः । तस्मिन् शर्मन् शर्मणि सुखात्मकयगृते भादीप्तौ शत्रुधनधन्यादिभिरुद्भिदीयत इत्युद्भिदः । तस्मिन्नुद्भौ । त्रिवरूथेभाग्यंवत् । सदोहविधान रूपे यज्ञगृहे नवप्रमादात् वयं स्याम सुखिनो भवेम ॥ ॥ अथद्वितीयः ॥ सहस्य जातान्प्रणुदानः सपत्नान्प्रत्यजातान्नुदजातवेदः । अधिनोब्रूहिसुमनस्यमानो वयःस्यामप्रणुदानः सपत्नानिति सहसा बलेन जातान्स्वशास्था उत्पन्नान् नः शत्रून् प्रणुदा हेजातवेदः अजाताश्च प्रतिनुद्-किंचसुमनस्यमानः अस्मासु सौमनस्य प्राप्तः सन् नोऽस्मानधिब्रूहि शत्रुभ्योधिका । त्वद् वयमपि त्वदनुग्रहादाधिकाः स्याम । नोऽस्मदीयान् सपत्नान् शत्रून् प्रणुद । भूयोभूयः प्रणुदेत्यर्थः ॥ ॥ अथतृतीयः ॥ ॥ षोडशीस्तोमओजोद्रविणोमिति । षोडशभिरावृत्तिभिरूपेतः षोडशीयस्तादृशः स्तोमः । यञ्च ओजो द्रविणं बलरूपं धनं हेइष्टके तदुभयरूपात्वमसि ॥ ॥ अथचतुर्थः ॥ ॥ चतुश्चत्वारिंशस्तोमोवर्चो द्रविणामिति । योयं स्तोश्चमतुश्चत्वारिंसदावृत्या सम्पन्नः यच्च बलरूपं धनं हेइष्टके तदुभयरूप स्त्वमसि ॥ ॥ अथपञ्चमः ॥ ॥ अग्नेः पुरीषमस्यप्सोनामतां त्वा विश्वे आभिगृणंतु देवाः । स्तोमपृष्ठा

घृतवतीहसीदप्रजावदस्मेद्रविणा यजस्वेति हेइष्टके त्वं अग्नेः पुरीषमसि पूरयित्री भवसि । अप्स इति भक्षयति विनाशयतीतिक्षः । नक्षातीत्यक्षः । योऽग्निः तादृशनामास्ति तस्याग्नेरित्यर्थः । इतरौ व्याख्यातमन्त्रार्थः ॥ ॥ कात्यायनः ॥ ॥ विराजो दशदशैव छंद इति प्रतिमंत्रमिति विराट्संज्ञकाश्चत्वारिंशदिष्टकास्ताः प्राच्यादिस्तुक्रमेण दशदशोपदध्यात् ॥ ॥ तेषांपाठस्तु ॥ ॥ रावश्छंन्दोवारिवश्छन्दः शंभुश्छंदः शंभूश्छंदः परिभूश्छंदः आच्छंदोमनश्छंदो व्यचश्छंदः सिन्धुश्छंदः समुद्रश्छंदः सरिच्छंदः । ककुप्छंदः । ककुप्छंदास्त्रिककुप्छंदः काव्यं छंदोअंकुप्छंदः । अक्षरपंक्तिश्छंदः पदपंक्तिश्छंदो विष्टारपंक्तिः श्छंदः आच्छंदोः संयच्छंदो वियच्छंदः बृहच्छंदो । थंतरंछंदोनिकायश्छंदोविवधश्छंदः । गिरश्छंदो भ्रजश्छंदः सस्तुप्छंदोऽनुष्टुप्छंदः । रावश्छंदोवरिवश्छंदो वयश्छंदो वयस्कृच्छंदः विष्पर्धाश्छंदो विशाल छंदश्छादिश्छंदोदूरोहणंछंदः गिरश्छंदो भ्रजश्छंदः सस्तुप्छंदोऽनुष्टुप्छंदः एवश्छंदो वरिवश्छंदो वयश्छंदो वयस्कृच्छंदः । विष्पर्धाश्छंदो विशालंछंदश्छदिश्छंदोदूरोहणं छंदः । तंद्रंछंदो अंकोकं छंद इति । राति गच्छत्परिमन्सर्वः प्राणिनिकाय इति । एवं पृथिवीलोकः स एव छंदोरूपेण स्थितत्वाच्छदकत्वाच्छदः । हेइष्टके त्वं तद्रूपासीतिशेषः । एवमुत्तरेष्वपि योजना वरिवः प्रभामण्डले नान्वयन इतिवरिवोंतरिक्षे तदेव छन्दः शम्भुः शान्तिरातिशयसुखं अस्याद्भवतीति शम्भुर्द्युलोकः परितो भवति व्याप्य वर्तते इति व्युत्पत्त्या परिभुः शब्दो दिग्वचनः । आच्छादयति आत्मा येन रसेन सर्वं शरीरमित्याच्छन् अन्नं प्रथमस्थं प्रजापत्यात्मकं यन्मनस्तु देवच्छदः । विचानिव्याप्तिकर्माविवतिव्याप्नोति सर्वजगदितिव्यचो-सावादित्यः स्यंदति नदीशरीरं व्याप्नोतीतिसिन्धुः प्राणो वायुः समुद्रवत्य-स्मादिकल्पजातानिति समुद्रं मनः । यद्वा समुद्रा यथा सर्वाभिर्नदीभिः पूरितोपि पर्याप्तिं न प्राप्नोति । तथा शब्दस्पर्शादिविषयैरनुभूयमानैस्तृप्तिं न प्राप्नोतीति समुद्रसाम्यात् । समुद्रमेवमनः शरीरदनुगह्वरान्निर्गच्छतीति शरीरं वाक् । कं सुखं स्तभ्नाति शरीरे धारयतीति ककुप् ककुप् प्राणः मेघा कंपितमुदकं स्तुभाति पिबतीति त्रिककुप् पयदानः । त्रयात्मकः

शङ्काव्यं । अं कुपं अक्रमगकुटिलायां गतौ कुटिलगत्या आप्नोतीत्यकूपं उदकं अक्षरनाशरहिता नक्षत्राणां पराबलिर्यस्याः सा द्यौरक्षरपङ्क्तिः प-दानां पङ्क्तयो यस्मिन्सोयं भूलोकः पदपङ्क्तिः विस्तारिता । आपणे प्र-सारिता वस्तूनां पङ्क्तयो यस्याः सा वैश्यजातिः विष्टारपङ्क्तिः एवं क्षुरो-भ्रतप्रभृतीनां सुपरेषां छन्दसां यौगिक्या व्याख्यापर्यान्तरेषु वृत्तिः-श-तपथब्राह्मणादवगन्तव्या यद्वा गायत्र्यादिवदक्षरसंख्या निष्पाद्यातिच्छन्दो-न्तरण्यत्र पुनोवरिवईसादिभिर्नामभिः प्रतिपाद्यन्ते । नानिवैच्छन्दांऽसि सुवर्ग्याण्यासंस्नैर्देवाः सुवर्गलोकमापन्निति तैत्तिरीयश्रुत्या तेषामेव प्रसृतीनां छन्दसां स्वर्गसाधनताऽऽस्तानात् । अत्रेष्टकास्तु तद्रूपेण श्रुतिः ॥

इति षोडशेऽध्याये प्रथमोऽनुवाकः ॥

प्रथमेऽनुवाके अक्षपलादीष्टकोपधानमन्त्रा उक्ताः ॥ द्वितीये लोका भागेष्टकोपधानमन्त्रा उच्यते ॥ कात्यायनः ॥ स्तोकभागारश्मिना सत्या-येति प्रतिमन्त्रमिति अस्यानुवाकस्य स्तोत्राभ्यनुज्ञायते विनियोगात्रिवृदा-दिस्तोम सम्बन्धात्स्तोमा इति वान्यास्तोमभाग एतदनुवाकसंबन्धिनो मन्त्राः । तदुपधेया इष्टकाश्च तथैव व्यपदिश्यन्ते । तांश्चिशदिष्टका अनेनानुवाकेन प्रतिमन्त्रमुपदध्यादित्यर्थः ॥ तत्पाठस्तु ॥ **रश्मिनासत्यायसत्यञ्जि च प्रेतिनाधर्मणाधर्मजिन्व । अन्वित्यादिवादिवञ्जिन्वसन्धिनान्त-रिक्षेणान्तरिक्षञ्जिन्व । प्रतिधिना पृथिव्यापृथिवीञ्जिन्वविष्टम्भे-नवृष्ट्या वृष्टिञ्जिन्व । प्रवयाह्नाहर्जिन्वानुयाराष्यारात्रीञ्जिन्व । नुशिजावसुभ्योवसूञ्जिन्वप्रकेतेनादित्येभ्य आदित्याञ्जिन्व । त-न्तुनारायस्पोषेणरायस्पोषञ्जिन्व सꣳसर्पेण श्रुतायश्रुतंजिन्व । ऐलेनौषधीभिरोषधीर्जिन्वोत्तमेनतनूभिस्तनूर्जिन्व । वयोधसा-धीतेनाधीतं जिन्वाभिजितातेजसातेजोजिन्व । प्रतिपदसि-प्रतिपदेत्वानुपदस्य नुपदेत्वा । संपदसिसंपदेत्वातेजोसितेज-सेत्वा । त्रिवृदसित्रिवृतेत्वाप्रवृदसिप्रवृतेत्वा । विवृदसिविवृते त्वासवृदसि सवृतेत्वा । आक्रमोस्याक्रमायत्वासंक्रमोसि सं-क्रमायत्वा । उत्क्रमोस्युत्क्रमायत्वोत्क्रान्तिरस्युत्क्रान्त्यैत्वा । अधिपतिनोर्जोर्जजिन्ववेपश्रीःक्षत्रायक्षत्रंजिन्वेति** । हे इष्टके त्वं रश्मिना तेजोरूपेणानेन सत्याभिमानिदेवतार्थं सत्यं जिन्वन प्रीणय रश्मिर-

त्यामिति श्रुतेः । प्रेतिना प्रकर्षेण देहमेति गच्छतीति प्रेतिरन्नं तेन धर्म जिन्व प्रीणय । प्रेतिरन्नमिति श्रुतेः । किमर्थं धर्मणा । अत्र विभक्तिव्यत्ययः । धर्माय धर्मार्थम् । अन्वित्या अन्नेन । अन्वितिरन्नमिति श्रुतेः । दिवं द्युलोकं जिन्व तर्पय दिवा द्युलोकार्थं सन्धिना सम्यक् बलादिकं धीयतेऽस्मिन्निति सन्धिरन्नं तेन अन्तरिक्षं जिन्व । अन्तरिक्षेण अन्तरिक्षार्थं प्रतिधिना प्रतिधीयतेऽस्मिन्निति प्रतिधिरन्नं तेन पृथिव्या पृथिव्यै पृथिवी अन्नदेहादिविष्टम्भननिमित्तत्वात् । विष्टं भोन्नं तेन वृष्ट्यै वृष्ट्यर्थं वृष्टिं जिन्वन्नम् । प्रवया प्रवाप्यत इति प्रवान्नं तेन अह्ना अह्ने अहर्जिन्व । देहान्तर्गतद्वारा प्रतिनाडीरन्वीयतेऽनुगच्छतीत्यन्वी अन्नं तया अन्वा अनुयेति छान्दसं रूपं रात्र्या रात्र्यभिमानि देवार्थं रात्रिं जिन्व उशिजा सर्वै काम्यमानत्वादुशिगन्नं तेन वसुभ्योऽर्थाय वसून् जिन्व प्रकेतेन प्रकर्षेण के सुखं ह्यते अन्नेनेति केतमन्नं तेन आदित्येभ्योऽर्थाय आदित्यान् जिन्व । तन्तुना जन्यते विस्तार्यते इति तन्तुरन्नं तेन रायस्पोषेण रायो धनं पुष्ट्यर्थं नुपहितासती रायस्पोषं जिन्व । संसर्पेण गम्यते इतस्ततो पदार्थसंसर्पोऽन्नेन । श्रूयेत इति श्रुतं जिन्व । ऐडेन इडान्नं तस्य इदं ऐडं तेन औषधीभिरोषधीभ्य ओषधीर्जिन्वोत्तमेनोत्कृष्टेनान्नेन तनूभिस्तनूर्जिन्व । वयोधसा वयः शरीरावस्थान् मेधते पोषयतीति वयोधोऽन्नम् । तेनाधीतेनाधीसर्वं आधीतं जिन्व अभिजिता सर्वजयहेतुरन्नमभिजित् । तेजसा तेजसे तेजो जिन्व येन जीवनं प्रतिपद्यत इति प्रतिपदन्नं । हे इष्टके यतस्त्वं तादृग्रूपासि तदर्थं त्वां उपदधामीतिशेषः । प्रतिदिवसमनुपद्यत इत्युपदन्नं । हे इष्टके यतस्त्वं तादृग्रूपासि तदर्थं त्वामुपदधामीतिशेषः । संपदसि हे इष्टके त्वं तद्रूपासि । तदर्थं त्वां उपदधामि । अन्नं वै संपदिति श्रुतिः । तेजः कारणत्वात्तेजोऽन्नं त्रिधा वर्तत इति त्रिवृत् । अन्नम् । प्रकर्षेण प्रवर्तत इति प्रवृत् अन्नम् । विशेषेण वर्तत इति विवृदन्नम् । समेनवर्तत इति सवृत् अन्नम् । क्षुधामाक्रामतीति आक्रमोऽन्नम् । देहस्य सर्वावयवत्वा संक्रमत इति संक्रमोऽन्नं अपक्रमोऽप्यर्थश्च तादृग्रूपेणोत्क्रामन्तीत्युत्क्रमोऽन्नं उत्क्रान्तिरुत्कृष्टं गमनं यस्मात्तस्य अधिपतिना अधिकं पालनेन ऊर्जान्नरसेन ऊर्जं जिन्व वेषश्रीर्वेषस्य शोभा यस्य तदन्नं तस्मात् आयत इति क्षत्रमन्नं तदर्थं क्षत्रं जिन्व ॥

इति षोडशेऽध्याये द्वितीयोऽनुवाकः ॥

द्वितीयेऽनुवाके लोकम्पृणान्तं इष्टका उक्ताः ॥ तृतीयेऽनुवाकेनाकसदाख्या इष्टका उच्यन्ते ॥ कात्यायनः ॥ नाकसदोराज्ञ्यसीति प्रतिमंत्रमिति नाकः स्वर्गस्तंपद्यते यैर्मंत्रैस्तेनाकसदः । तथाच मंत्रलिंगं नाकस्य पृष्ठे स्वर्गे लोके यजमानं सादयंतु तैर्मंत्रैरुपधेया इष्टका । अग्निनाकसद इसम्पते ॥ तथाच प्रथमर्मंत्रपाठः ॥ राज्यसि प्राचीदिग्वसवस्ते देवाऽअधिपतयः । अग्निर्हेतीनां प्रतिधर्ता । त्रिवृत्त्वास्तोमः पृथिव्याः श्रयत्वाज्यमुक्थमव्यथायैस्तभ्नातुरथन्तरंसाम प्रतिष्ठित्याऽअन्तरिक्षे । ऋषयस्त्वाप्रथमजा देवेषु दिवोमात्रया वरिम्णाप्रथन्तु । विधर्ता चायमधिपतिश्च तेत्वासर्वेसंविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्विति । हेइष्टके राज्ञीराजमानाया प्राचीदिक् त्वंतद्रूपासि । ते तत्र वसवोऽष्टसंख्या कादेवा अधिपतयो अधिकं पालयितारः । अग्निस्तत्रोपद्रवकारिणीनां परकीयायुधानां प्रतिधर्ता निराकर्ता योऽयं त्रिवृदाख्यः स्तोमः स त्वां पृथिव्यां श्रयतु स्थापयतु यद्वा ज्यमुक्थं आज्यनामकं प्रवो देवायाग्ने इत्यादिकं शास्त्रपरिपत्त्वाय व्याप्याये चलरहितायस्तभ्नातुदृढांकरोतुंअतिरक्षे लोके प्रतिष्ठित्यै प्रतिष्ठापनाय रथं तरं सामत्वां स्तभ्नातु । देवेषु मध्ये प्रथमभावेन ऋषयः प्राण्याः । प्राणा वा ऋषय इतिश्रुतेः । यद्वा ऋषयो नारदाद्या अतएव स्वर्यते । देवर्षिर्नारदस्त्वेति । एवं भूता ऋषयस्त्वा त्वां दिवो मात्रया आकाशस्य यत्परिमाणं तेन परिमाणेन प्रथंतु विस्तारयंतु । कीदृश्यामात्रयावरिम्णा श्रेष्ठया न केवलप्रथयः । प्रथयंतु किंतु विधर्ता चायमधिपतिश्च योयमिष्टकानां निष्पादयितायश्च पालस्तावपि प्रथमर्ता । यद्वा अयं विधर्ता विशेषेण धारयिता तत्र पोषयिता प्राणाभिमानदेवः अधिपतिः प्रधानभूतो मनोऽभिमानी देवश्च प्रथयतामिति यावत् । ते सर्वे दिग्गाधि वस्वादयः संविदानाः परस्परैकमत्यं प्राप्तानाकस्य पृष्ठे स्वर्गसदृश्य क्षेत्रस्योपरि त्वां त्वा सादयतु । एतत्फलभोगार्थयजमानश्च स्वर्गेलोके सादयंतु । एवमुत्तरेष्वपि मंत्रेषु योज्यम् ॥

अथद्वितीयः ॥ विराडसिदक्षिणादिग्रुद्रास्ते देवा अधिपतयः । इंद्रो हेतीनां प्रतिधर्ता । पंचदशस्त्वास्तो यः पृथिव्याः श्रयतु प्रउगमुक्थमव्याथायैस्तभ्नातु । बृहत्सामप्रतिष्ठित्या अन्तरिक्षे ।

ऋषयस्त्वाप्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु । वि॰धर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्विति ।

स्तोमाः सामानि राज्ये सूर्यप्रकारेण व्याख्यातानि । वायुरग्रेगा इत्यादिकं शास्त्रं शिष्टं समानम् ॥

अथ तृतीयः ॥ सम्राडसि प्रतीचीदिगादित्यास्ते देवा अधिपतयः । वरुणो हेतीनां प्रतिधर्ता । सप्तदशस्त्वास्तोमः पृथिव्याᳪश्रयतु वैरूपवतीयमुक्थमव्यथायै स्तभ्नातु । वैरूपᳪसामप्रतिष्ठित्या अन्तरिक्षे । ऋषयस्त्वाप्रथमजा देवेषु दिवोमात्रयावरिम्णा प्रथन्तु ॥ विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गलोके यजमानं च सादयन्त्विति ।

इदं वसो सुतमन्धनु इति मरुत्वतीयं शास्त्रम् ।

अथ चतुर्थः॥ स्वराडस्युदीचीदिङ्मरुतस्ते देवाऽअधिपतयः। सोमो हेतीनां प्रतिधर्ता । एकविᳪशस्त्वास्तोमः पृथिव्याᳪश्रयतु निष्केवल्यमुक्थमव्यथायै स्तभ्नातु । वैराजᳪसामाप्रतिष्ठित्या अन्तरिक्षे । ऋषयस्त्वाप्रथमा देवेषु दिवोमात्रया वरिम्णा प्रथन्तु । विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्विति । अभित्वशूरनोनुमसादिक शास्त्र निष्केवल्यम् ॥

अथ पञ्चमः ॥ अधिपत्न्यसि बृहतीदिग्विश्वेते देवा अधिपतयः । बृहस्पतिर्हेतीनां प्रतिधर्ता । त्रिणवत्रयस्त्रिᳪशौत्वास्तोमौ पृथिव्याᳪश्रयतो वैश्वदेवाग्नि मारुते उक्थेऽअव्यथायै स्तभ्नाताम् । शाक्वररैवते सामनीप्रतिष्ठित्याऽ अन्तरिक्षे । ऋषयस्त्वाप्रथमजा देवेषु दिवोमात्रयावरिम्णा प्रथन्तु । विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठस्वर्गे लोके यजमानं च स्यादयन्त्विति । अधिपत्नीपत्नयित्री अधिपत्नी बृहतीदिक् मौढाध्वीदिक् । तत्सवितुर्वृणीमह इत्यादिकं शास्त्रं वैश्वदेवं वैश्वानराय पृथुपाजसमित्यादिकं शास्त्रमग्निमारुतम् । शिष्टं व्याख्यातमिप्रायमेतद् । अतो मान्युदाहृतानि आज्यादिरुपस्थानि नान्याश्वलायनो दर्शयति ।

प्रवामहेस्याऽयमुपमंतनुयादिति । धानुरग्रेण । यज्ञश्रीरिति । समानां पुरोरुचा नस्यासस्तनुपरिष्टात्तृचंशानिद्वा पद्यो हि सप्तृचाद्वितीयां मनुगनिरितिमह्स्वतीयशस्त्रं शंसेदध्वर्यरोमिति माध्यन्दिनेशाखादिष्याद्यावर्जत्वारथं यथातय इद्वसो सूनमन्ध इतिमरुत्वतो यस्य प्रतिपदनुचराविति निष्केवल्यस्याभिस्त्वाशूरनोनुमोभि त्वपूर्व्यपीतय इतिप्रगाथौस्तोत्रियानुरूपौ यदि रथन्तरं मष्टामिति तत्सवितुर्वृणीमहे द्यानोदेवसवितरिति वैश्वदेवस्य प्रतिपदनुचराविति स्वभ्यग्रमाग्निमारुतं तस्यामागछयावायवच्छशस्त्राचेद्ग्रंर्चेसइस्तसन्तानमुत्तमेन वचनेन वैश्वानराय पृथुपाकसंस्तुतिः ॥ ॥ इति षोडशेऽध्याये तृतीयोऽनुवाकः ॥

तृतीयेऽनुवाके सदारूपा इष्टका उक्ताः ॥ ॥ चतुर्थे पञ्चचूडाख्या इष्टका उच्यन्ते ॥ ॥ कात्यायनः ॥ ॥ अयं पुर इति पञ्चचूडाः प्रतिमन्त्रं प्रतिदिशमिति । याः सर्वासामिष्टकानां शिखास्थानीयाः । तानुपदध्यादित्यर्थः ॥ तत्र प्रथममन्त्रपाठस्तु ॥ ॥ **अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ । पुञ्जिकस्थला चाक्रतुस्थला चाप्सरसौ यशवो हेतिः पौरुषेयो वधः प्रहेतिः । तेभ्यो नमो अस्तु ते नो मडयन्तु ते नोऽवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति ।** हरिकेशः हिरण्यवर्णाकेशमाना ज्वाला यस्यासौ हरिकेशः सूर्यरश्मय इव रश्मयो यस्यासौ सूर्यरश्मिः एवम्भूतो योऽयमिष्टकारूपोऽग्निः पुरः पूर्वस्यां दिशि अवस्थापितः । तस्याग्रे रथगृत्सः रथगृत्सो मेधावी रथयुद्धकुशल इत्यर्थः । रथे ओजो बलं यस्य स रथौजाः । चकारौ समुच्चयार्थौ । राजनामकौ । सेना नयतीति सेनानी । ग्रामं नयतीति ग्रामण्यो वा सन्ति कौ यासौ परिचारकौ तथा पुंस्त्रीकुक्षलावण्यसौभाग्यगुणस्थलापुञ्जिकस्थला । क्रतूनां सङ्कल्पानां स्थलमिव स्थिता क्रतुस्थला एतदाख्ये दिशुपदिशुपदिग्रूपद्वेप्सरसौ परिचारिकदंष्ट्रणवः पशवो दंशनशीला व्याघ्रादयः पौरुषेयः तुरुषसम्बन्धिहेतिरायुधं वधे हननशीलः । एवं भूतो हेति रप्यायुधविशेषौ । यस्याग्रे रिदं सर्वमस्ति । हेइष्टके त्वं तदधिस्वरूपासीत्यर्थः । योयमग्निर्यौचसेनानी ग्रामण्यौ येचाप्सरसौ येतद्धेति प्रहेती तेभ्यः सर्वेभ्यो नमो अस्तु ते सर्वेनोऽस्मान्मृडयन्तु सुखयन्तु । तेनेऽस्मानवन्तु रक्षन्तु । यं वैरिणं ते वयं द्विष्मः द्वेषं कुर्मः । यश्च वैरीणोऽस्मां द्वेष्टि तं वैरिणं एषा हेतिप्रहेत्या-

दीनां जंभे दंष्ट्राकराले दध्मः स्थापयामः ॥ ॥ अथ द्वितीयः ॥ ॥ अयं दक्षिणीयस्वकर्मा तस्य रथस्वं नश्च रथे चित्रश्च सेनानी ग्रामण्यौ मेनका च सहजन्याचाप्सरसौ यातुधानाहेतीरक्षांꣳसि प्रहेतिः । तेभ्यो नमो अस्तु ततो मृडयन्तु तेनोवन्तु । ते यद्विष्णोस्यश्च नोद्वेष्टि तमेषां जम्भे दध्म इति ॥ विश्वानि कर्माण्यग्निहोत्रादीनि यस्य सोऽयमग्निविश्वकर्मा तस्य दक्षिणादक्षिणस्यां दिशि स्थितस्य रथश्चनः सेनानीः रथचित्रो ग्रामणीः मानयते मां तेना इति येना समाना जनानां सहजन्या मेनकेति सहजन्येति चाप्सरसो नामधेयम् । यातुधाना रक्षांसि चेत्यवान्तरजातिभेदोऽयमन्तव्यः । हेति प्रहेती अप्यायुधविशेषौ । तत्र यातुधानाः क्रूरास्तीक्ष्णाहेति स्वरूपाः रक्षांस्यतिक्रूराणि अतितीक्ष्णप्रहेतिस्वरूपाणि । तस्यग्नेरिदं सर्वं देहप्रकेतदग्निस्वरूपासीत्यभिप्रायः । शिष्टं व्याख्यातम् ॥ ॥ अथ तृतीयः ॥ ॥ अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ । प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिः सर्पाः प्रहेतिः । तेभ्यो नमोऽअस्तु ते नो मृडयन्तु ते नोऽवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति ॥ विश्वं व्यवति अवाप्नोतीति विश्वव्यचाः सोऽयमग्निः पश्चात् प्रतीच्यां दिशि वर्तते । तस्य रथप्रोतः रथेऽवस्थितेः श्रोतश्च असमरथरन्यैरनभितुल्यः । प्रम्लोचन्तीपुमांसं प्रत्यात्मानं दर्शयन्ती स हि तस्या स्वभावः । अनुम्लोचन्ती स एवार्थः स रमन्यत्पूर्ववद्व्याख्येयम् ॥ ॥ अथचतुर्थः ॥ ॥ अयमुत्तरात्संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टने- मिश्च सेनानीग्रामण्यौ विश्वाची च घृताची चाप्सरसा आपो हेतिर्वातः प्रहेति । तेभ्यो नमोऽअस्तु तेनोमृडयन्तु तेनोऽवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति ॥ सम्यक् प्राप्ते वस्तुधनं यस्यासौ सोऽयं संयद्वसुः सोऽग्निः उत्तरादुत्तरस्यां दिशि वर्तते । तार्क्ष्यः तीर्णेऽन्तरिक्षे क्षियति निवसतीति तार्क्ष्यः अरिष्टनेमिः । अनुपहिंसितायुधः । विश्वाचीति प्रत्यचरणीलाघृताची । घृतश्च ना । घृतं वैदघृतत्सत्यमन्नम् । आपो वातहेतिः । शेषं पूर्ववद् ॥ ॥ अथ पञ्चमः ॥ ॥ अयमुपर्यर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्चसेनानी ग्रामण्यौ । उर्वशी च पूर्वचित्तिश्चाप्सरसा अवस्फूर्जन्हेति विद्युत्प्रहेतिः । तेभ्यो नमो अस्तु तेनो मृडयन्तु ते-

नोऽस्तु । यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति ॥
अर्वाग्वसु रथोमुखत्वेन वसनात् मेघाद्भूमौ पततद्वृष्टिरूपत्वोऽग्निरस्यस्येत्युच्यते ।
सचोपर्यूर्ध्वायां दिशि वर्तते । तस्याग्नेः सेना जयतीति सेनजित् । सेनानाः
शोभना सेना यस्यासौ सुषेणोग्रामणीः तुरुः पृथुः कामो वरो यस्याअसी-
त्युर्वशीरूपलावण्यातिशयात्पूर्वमेव पुरुषाणां चित्तमभ्युपैतीति पूर्वचित्तिः ।
एतेऽप्सरसौ तुभयहेतुः । शब्दविशेषे अवस्फूर्जन् स्फूर्जतिर्वज्रनिर्घोषः भय-
हेतिः प्रकाशो विद्युत् । एतावपि प्रतिहेतिरूपाऽयुधविशेषौ । शेषं स्पष्टम् ।
इति षोडशेऽध्याये चतुर्थोऽनुवाकः ॥

चतुर्थेऽनुवाके चूडाख्या इष्टका उक्ताः ॥ ॥ पञ्चमे छन्दस्या इष्टकानु-
च्यन्ते ॥ ॥ कात्यायनः ॥ ॥ छन्दस्यास्तिस्रोस्तस्रानूकां तेषु पुरुषस्त-
ङ्गायत्रीरग्निमूर्धेति प्रत्युचमिति ॥ गायत्र्यादिछन्दस्याभिर्ऋग्भिरुप-
धेया इष्टकाश्छान्दस्याः । ता अनूकादिप्रदेशेषु तिस्रतिस्रनुपदध्यात् ॥

तत्र प्रथमः ॥ ॥ अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयं
अपाᳪरेताᳪसिजिन्वतीति । अयमग्निरादित्यरूपेण दिवो द्युलोकस्य
ककुत्स्थो मूर्द्धा शिरस्थानीयः पृथिव्यापातिः । दाहपाकारित्वेन पाल-
कोऽप्ययम् । किञ्च अपाᳪरेताᳪसि । उदककार्याणि स्थावरजङ्गमशरीराणि
जाठराग्निरूपेण जिन्वति प्रीणयति ॥

अथ द्वितीयः ॥ अयमग्निः सहस्रिणो वाजस्पति तस्पति ।
मूर्द्धाकवीरयीणामिति । अयमग्निः सहस्रिणो वाजस्पति नस्पतिः ।
मूर्द्धाकवीरयीणामिति । अयं समिध्यमानोऽग्निः सहस्रिणः सहस्र संख्यावतः
शतिनः शतसंख्यावतः वाजस्यान्नस्य पतिः । अत एव मूर्द्धा शिरोवदुत्तमः ।
कविर्विद्वान् । तादृशो रयीणां धनानां दाता भवतु ॥

अथ तृतीयः ॥ ॥ त्वामग्ने पुष्करादध्यथर्वानिरमन्थत मूर्ध्नो वि-
श्वस्य वाघत इति । हे अग्ने अथर्वाख्यऋषिः पुष्करादधिपद्मपत्रस्योपरि
त्वा निरमन्थत । निःशेषेण मथितवान् । अतएव तैत्तिरीये पञ्चमकाण्डे ब्राह्म-
णमास्नातम् । पुष्करपर्णेह्येनमुपश्रितमविन्दादिति । कीदृशात् पुष्करात्
मूर्ध्न उत्तमाङ्गवत् । प्रशस्तात् । विश्वस्य वाघतः सर्वस्य जगतो वाहकात् ।
इदं हि पुष्करपर्णमग्निमयमन्थत् । यज्ञनिष्पादनद्वारा सर्वं जगन्निर्वहति ॥
कात्यायनः ॥ ॥ उत्तरात्रिनिष्टुभोरेतः शिलाया भुवो यज्ञस्येति । त्रिष्टुप्

छन्दस्काभिर्ऋग्भिरुपधेया इष्टकास्त्रिष्टुभः तास्तिस्रो गायत्रीष्टकानां पूर्वभागे उपदध्यादितिविशेषः ॥

तत्र प्रथमः ॥ ॥ भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहमिति । अयमग्निर्भूर्लोकस्य तत्रानुष्ठे यस्य यज्ञस्य तस्मिन्पक्षे प्रवर्तकस्य रजसो रजो गुणस्य सच नेता निर्वाहकः । तादृश हेअग्ने यत्र यस्यां दिवि सूर्यरूपो भूत्वा नियुद्भिः रसै नितरां योज्यमानाभिः शिवाभिरुत्तमाभिः सचसे समवैषि । तस्यां दिवि मूर्द्धानं शिरोवदुन्नीति दधिषे धारयसि । कीदृशं मूर्द्धानम् । स्वर्षां स्वः स्वर्गस्येति सर्वदातितिस्वर्षां स्वं हर्षाम् । सोभयाः शब्दवस्पुल्लिङ्गोऽयं हे अग्ने त्वमस्मिन्पक्षे हव्यवाह हविषः प्रापिकां ज्वालां जिह्वाञ्च कुपे करोषि ॥

अथद्वितीयः ॥ अबोध्यग्निः समिधा अयमग्निरबोधितः प्रज्वलितो ऽभूत् । तत्र दृष्टान्तः । आयतीमुपासं । प्रतिधेनुमिव । उपः काले सामगते सतिदोहनार्थं शमानां धेनुं यथेच्छार्पयति । उद्बुध्यमानस्याग्निनत्रो रश्मयः प्राजिहानाः प्रकर्षेणोद्गच्छंतो नाकं यन्त्र स्वर्गमभिप्राप्तुं प्रसिस्रते अतिशयेन प्रसरंइति । तत्र दृष्टान्तः । यह्वा इव वयांवीनां पक्षिणां मध्ये यह्वाः महान्तः पक्षिणो प्रकर्षेणोत्पतन्ति । तद्वत् । यह्वा महांतो जातपक्षाः पक्षिणः प्रवयांतवयस्यां वृक्षलाखां नुजिहाना ऊर्ध्वं गच्छेयुस्तद्वत् ॥

अथतृतीयः ॥ ॥ अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णो । गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेदिति । कवये क्रान्तदर्शिने वदये वचो वाक्य अवोचाम । कीदृशाय कवये मेध्याय यज्ञायुक्ताय वृष्णो कामानां वर्षयित्रे । गविष्ठिरः गविष्ठिरायभूमौस्थिरत्वेनावस्थितान कीदृशं वचः । अग्नावस्तो समग्निविषमे नमस्कारेण प्रक्तं स्तोत्ररूपं अतएवं दारुचन्दनशीलं । तत्र दृष्टान्तः । दिवी द्युलोके रुक्मं रोचमानं नुरुव्यंच विस्तीर्णगतिमास्रं सन्ध्यावन्दनादिषु ब्राह्मणे प्रयुक्तं वाच्यमश्रेत् । आश्रयति । तद्दृष्टांतः । दिवि द्युलोके रुक्म रोचमानं रुरुव्यंचंविस्तीर्णागतिमात्यं सध्यावंनादिदापु ब्राह्मणै प्रयुक्तं वाक्यमश्रयति । तद्वदस्मदुक्तोपि वह्निमाश्रयतु ॥ ॥ कात्यायनः ॥ ॥ जगती-

भादयमिहेतीति । जगतीच्छदस्ताभिर्ज्ञिभिरुपधेया इष्टका जगत्यः ताः अन्तिमभागे अयमिहेत्यादिभिस्तिसृभिस्काभिमुपधेया इति ॥ ॥ तत्र प्रथमः अयमिह प्रथमोधायि धातृभिर्होतायजिष्ठो अध्वरेष्वीड्यः । यमप्नवानोभृगवोविरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे इति । सेयमेकतृतीयेऽध्याये उगमयेतहग्निरितस्मिन्ननुवाके व्याख्याता अथद्वितीयः ॥ ॥जनस्य गोपा अजनिष्टजागृविरग्निः सुदक्षः सुविताय नव्यसे । घृतप्रतीको बृहतादिविस्पृशाद्युमद्विभातिभरतेभ्यः शुचिरिति । अयमग्निरत्रनिष्टोत्पन्नः किमर्थं सविताय नव्यसे स्तुष्टुयाय स्तुतियुक्ताय कर्मणे एतत्कर्मसिध्यर्थमित्यर्थः । कीदृश्याग्नि जनस्य गोप्ता । प्राणिनो रक्षकः सुदक्षोऽत्यन्तकुशलः । जागृविः कर्मणिसावधानः । घृतं प्रतीके मुखे यस्यासौ घृतप्रतीकः । तादृशोऽयमग्निर्बृहतोमौढेणादिविस्पृशाद्युमद्दीप्यमानः । शुचिः शुद्धः सन् भरतेभ्यो यज्ञभरणकुशलयजमानानाभं विभाति विशेषेण भासते ॥ ॥ अथतृतीयः ॥ ॥ त्वामग्ने आङ्गिरसो गुहाहितमन्वविंदञ्छिश्रियाणं वनेवने । सजायसे मथ्यमानः सहोमहत्वामाहुः सहसस्पुत्रमंगिर इति । हे अग्ने अंगिरसो महर्षयः त्वामन्वविदन् । अन्विष्या लभंत किदृशं त्वां अरणिप्रभृतिषु गोप्यस्थानेषु अवस्थितं वने वने शिश्रियाणं तस्मिन्नरिमन्नरण्ये दावाग्निरूपेणाश्रितः । स त्वं सहः मौढं बलमत्रलम्व्यमथ्यमानो जायसे हेअंगिरः अग्नं सौष्ठवयुक्तात्म त्वामहसस्पुत्रं बलस्य पुत्रमाहुः । महता बलेन मथने सति जायमानत्वात ॥ ॥ काशायनः ॥ ॥ अपराश्चताभ्योऽनुष्टुपः सखायः सव इतीति । अनुष्टुछंदस्काभिर्ऋग्भिरुपधेया इष्टका अनुष्टुभः । ताजागतीष्टकानामग्निमभागे सखायः सव इतितिसृभिऋग्भिरुपदध्यात् । तत्रप्रथमः । सखायः सवःसमाच मिषर्ध्वंस्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जोनप्त्रे सहस्वत इति । हे सखायः परस्परसख्ययुक्ताऋत्विग्यजमाना वो युष्माकं सम्यंच मिषंसमीचीनमिष्टार्थं सम्पादय तत्तामेतस्योपसर्गस्यापेक्षितः श्रेयोध्याहृतः पूर्वंचाग्नये स्तोत्रं सम्पादयत । कीदृशायाग्नये क्षितीनांनिवासहेतनां मध्ये वर्षिष्ठाय बृहताय दृगुर्जोनमेवलस्य पातयितेविनाशमकुर्वते सहस्वते स्वयमतिशयेन बलवते ॥ अथद्वितीयः ॥ सऽसमित्युवसेवृषन्नग्नेविश्वान्य-र्यआ । इच्छस्पदेसमिध्यसेसनोवसून्याभरेति । हेवृषन् कामानां

वर्षकामानां वर्षकामे त्रिश्याने सर्वाणि फलानि संगमिव सम्पादय सम्पाद्येवयुगसे यजमानेन निश्रयसि । अर्थ ईश्वरस्त्वमागत्य इलस्यपदपृथिवीरूपार्यवेद्यास्थाने समिध्यसे सम्यकत्वाल्पसेसताद्दशोमहानुभावस्त्वन्तीस्यर्थं वसुनि धनानि समाभर । सम्यगातृप्यमसच्छ ॥ अथतृतीयः ॥ त्वामग्नेहविष्मन्तोदेवम्मर्तासईलते । मन्येत्वाज्ञातवेदसꣳसहव्याववक्ष्यानुषगिति । हे अग्ने मर्ताऽसौमरणशीलां मनुष्याः हविष्मन्तः पाणौ गृहीतहविषो यज्ञभागादेवं देवनादिगुणे युक्ते त्वा ईलते स्तुवन्ति । अहमपि त्वां जातवेदसं सर्वज्ञं जानामि मन्ये । सत्वं आनुषक् । अनुषक्तः सन् हव्याहवींषि वक्षि वहसि ॥ तत्र वैकल्पिका चतुर्थी ॥ त्वां चित्रश्रवस्तमहवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढ्व इति । चित्र श्रवोविचित्राकीर्तिर्यस्यासौ चित्रश्रवा अतिशयेन चित्रश्रवस्तमः पुरूणां बहूनां यजमानानां प्रियः पुरुप्रियः तथाविध हेअग्ने विक्षु प्रजासु मध्ये जन्तवः ऋत्विग्प्रभृतयः त्वां हवन्ते आहूयन्ति किमर्थं हव्याय वोढ्वेहविर्वोढुं । कीदृश त्वां शोचिष्के शशोचीं पिज्वालाएव केशस्थानीयो यस्यासौशोचिष्केशः ॥ काशायनः ॥ आषाढाविळायाः परस्ताद्बृहतीरे ना बृहतीति । छन्दॄंन्छन्दस्ताभि ऋग्भिर्मि रूपधेया इष्टकाः छुद्दयः ता अखिलेष्टकामाः पूर्वभागेरानाव इति तिसृभिर्ऋग्भिरुपदध्यात् । तत्र प्रथमः ॥ एनावो अग्निंनमसोर्जोनपातमाहुवेप्रियश्चे । तिष्टमरतिꣳस्वध्वरं विश्वस्य दूतममृतमिति । हेऋत्विग्यजमाना वो युष्माकं तरतम्वधिनमामि एता नमसा । एतेन नमस्कारेण युक्तोऽहमाहुवे आह्वयामि । कीदृशमग्निं । ऊर्जोऽन्नस्य नपातम विनाशयितारं प्रिय यजमानं । प्रीतिहेतिश्चेतिष्टं अतिशयेन चेतयितव् अरतिरूपरमस्तद्रहितं सवन्दोयुक्तमित्यर्थः । स्वध्वरं शोभनस्य क्रतो निर्णदक विश्वस्य दूतं सर्वस्य जगतो दूतवत्कार्यकारिणं । सर्वस्य हि गृहे दाहपाकादिकार्यं करोति अमृत मरणरहितं । मनुष्यवद्देवानां सहसा मरणं नास्ति ॥ अथद्वितीयः ॥ विश्वस्य दूतममृतं विश्वस्य दूतममृतं । स योतते ऽअरूपा विश्वभोजसासदुद्रवत्स्वाहुत इति । विश्वस्य दूतं सर्वस्य जगतो दूतं सर्वस्य जगतो दूतवत्कार्यकारिणं । अमृतंअमरणशीलमग्निं आहवामिपुनर्वचनमादरार्थमग्निमाहुवसोग्निविश्वभोजसा विश्वस्य भोक्तारी अदया अरोच्यमाना

मश्वो योजते रथे युनक्ति । ततः सरावाग्निः स्वाहुतः । सुष्टु आहुतः सन्न-
दुद्रवत् । गच्छति ॥ अथतृतीयः ॥ सद्रुद्रवत्स्वाहुतः सद्रुद्रवतस्स्वाहु-
तः । सुब्रह्मायज्ञः सुशमो वसूनादेवंराणेजनानामिति । स्वाहु-
तः ऋग्भिः सुष्टु कर्मण्याहुतः सोऽयमग्निर्वसूनां जनानानां निवासार्थिनां मा-
णिनां सम्बन्धिदेवं दोह्यमानं रायोहविर्लक्षणं धनं प्रतिदुद्रवत् । आगच्छ-
तु । ईदृशोऽग्निः सुत्रसा शोभन ऋत्विग्रूपो ब्रह्मा यस्यासौ शोभनमन्त्रो वा
यज्ञो यजनी यः पूजनीयः । सुशोभी शोभनकर्मवान् ॥ ॥ कात्यायनः ॥
अपरेणगायत्रीभ्यनुष्णि होमे वाजस्येतीति । नुष्णिकृच्छन्दस्काभिऋग्भि-
रूपधेया इष्टकानुष्णि । इस्तांगायत्रीष्टकाभ्यः पश्चिमभाविनीरूपदध्यात् ॥
तत्र प्रथमः ॥ ॥ अग्नेवाजस्यगोमतईशानः ॥ सहसोयहो ।
अस्मे धेहि ज्ञातवेदोमहिश्रव इति । सहसो बलस्य यहो हेसूनो जा-
तवेदउत्पन्नजगदग्निज्ञाग्ने गोमतो । गोभियुक्तस्य वाजस्यान्नस्य ईशानस्त्वं
अस्मे अस्मासु महिश्रवो महतीकीर्तिर्महदन्नं वा धेहि सम्पादय ॥ ॥ अथ
द्वितीयः ॥ ॥ सदधानोवसुष्कविरग्निरीलेन्योगिरा । खेदस्मभ्यं-
पुर्वणीकदीदिहीति । पुरु बलं अनीकं सुखं सैन्यं वा यस्यासौ पुर्व-
णीकः । तादृश हेअग्ने सत्वमस्मभ्यं रेयव । रयिवतुनवत् । धनयुक्तं गृहक्षेत्रा-
दिकं दीदिहि । दीप्यस्व । कीदृशस्त्वं इधानो दीप्यमानः वसुर्निवासहेतुः
कविः क्रान्तदर्शी अग्निरग्रणीः प्रथमं यज्ञप्रवर्तक इत्यर्थः । गिरा मन्त्ररूपया
वाचा ईलेन्यः स्तुत्यः ॥ ॥ अथ तृतीयः ॥ ॥ क्षपो राजन्नुतत्मनाग्ने
वस्तोहितोषसः । सतिग्मजम्भरक्षसो दहप्रतीति । हेअग्ने वस्तोर-
हानि क्षपः क्षपय । उतापिच । उषसः उषः कालानपि क्षपय । द्विनीया
या अत्यन्तं तद्योगावाचित्वात् । सर्वेष्वप्युषः कालेषु राक्षसान् विनाश-
येत्यर्थः । हेराजन् दीप्यमानाग्ने केवलं स्वकीयसेनामुखेन रक्षसां क्षपणं
उतत्मना आत्मनापि स्वयमपि क्षपयेति मुखे विदारणवाचिना जम्भशब्देन
ज्वालानुपलक्ष्यन्ते तिग्माहि । क्ष्णं जम्भा यस्यासौतिग्मजम्भः । हेतिग्मजम्भ-
सत्वं रक्षसो राक्षसान्प्रतिप्रत्येकं दह भस्मीकुरु ॥ ॥ कात्यायनः ॥ भद्रो न
इति ककुभच्छन्दस्काभिर्ऋग्भिरूपधेया इष्टका ककुभस्ताभद्रो न इति ति-
सृभिर्ऋग्भिरूपदध्यात् ॥ तत्र प्रथमः ॥ भद्रो नो अग्निराहुतो भद्रा-
ऽअध्वरः । भद्रा उत प्रस्तय इति । आहुत ऋत्विभिराहुतोऽग्निर्नो

वर्षकामानां वर्षकामे विश्वानि सर्वाणि फलानि समभिद् सम्पादय सम्पा-
दयितुमसे यजमानेन निश्रयसि । अर्थ ईश्वरस्त्वमागत्य इलस्यपदपृथिवी-
रूपायवेद्यास्थाने समिध्यसे सम्यकत्वात्यसे सतादशोमहानुभावस्त्वन्तीस्य-
भ्यं वसुनि धनानि समामर । सम्यगात्पृष्ठसच्छ ॥ अथतृतीयः ॥ त्वाम-
ग्नेहविष्मन्तोदेवम्मर्तासईलते । मन्येत्वाजातवेदसᳪसहव्याव-
क्ष्यानुपगिति । हे अग्ने मर्त्ताऽसौमरणशीलो मनुष्णह् विष्मन्तः पा-
णौ गृहीतहविषो यज्ञभागादेवं देवनादिगुणे युक्ते त्वा ईलते स्तुवन्ति ।
अहमपि त्वां जातवेदसं सर्वज्ञं जानामि मन्ये । सत्वं आनुषक् । अनुषक्तः
सन् हव्याहवींपि वक्षि वहसि ॥ तत्र वैकल्पिका चतुर्थी ॥ त्वा चित्रश्रव-
स्तमहवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढ्व इति ।
चित्र श्रवोविचित्राकीर्तिर्यस्यासौ चित्रश्रवा अतिशयेन चित्रश्रवस्तमः पुरु-
णा बहूनां यजमानानां प्रियः पुरुप्रियः तथाविध हेअग्ने विक्षु प्रजासु
मध्ये जन्तवः बलिग्रपाताः त्वा हवन्ते आह्वयन्ति किमर्थं हव्याय वो-
ढ्वेहविवोढुं । कीदृश त्वां शोचिष्के शशोर्चीं पित्वालाएव केशस्थानीयो
यस्यासौशोविष्केशः ॥ कात्यायनः ॥ आपाढाविलायाः परस्तात्बृहतीरे ना
वहतीति । बृहतीन्छन्दस्ताभि ऋग्मिभि रूपधेया इष्टकाः बृहत्यः ता अषि-
लेष्टकामाः पूर्वभागेरानाव इति तिसृभिर्ऋग्भिरुपदध्यात् । तत्र प्रथमः ॥
एनावो अग्निंनमसोर्जोनपातमाहुवेप्रियश्चे । तिष्ठमरतिᳪस्वध्व-
न्नू विश्वस्य दूतममृतंनमिति । हेऋत्विग्यत्तमाना वो युष्माक तत्सम्बधि-
नमपि एता नमसा । एनेन नमस्कारेण युक्तोऽहमाहुवे आह्वयामि । की-
दृशमग्निं । ऊर्जोऽन्नस्य नपातम विनाशयितार प्रिय यजमानं । प्रीतिहेतिश्चे-
तिष्ठं अतिशयेन चेतयितव् अरतिरूपरमस्तद्रहित सवन्दोयुक्तमित्यर्थः । स्व-
ध्वरं शोभनस्य क्रतो निर्ष्पदक विश्वस्य दूतं सर्वस्य जगतो दूतवत्कार्य-
कारिणं । सर्वस्य हि गृहे दाहपाकादिकार्यं करोति अमृत मरणरहितं ।
मनुष्यवद्देवानां सहसा मरणं नास्ति ॥ अथद्वितीयः ॥ विश्वस्य दूत-
ममृतं विश्वस्य दुतममृतं । स योतते ऽअरुपा विश्वभोज-
सासदुद्रवत्स्वाहुत इति । विश्वस्य दूतं सर्वस्य जगतो दूतं सर्वस्य ज-
गतो दूतवत्कार्यकारिण । अमृतंअमरणशीलमग्निं आह्वयामिपुनर्वचनमाद-
रार्थयमग्निमाहुरसोऽग्निविश्वभोजसा विश्वस्य भोक्तारौ अरुपा अरोच्यमाना

सायंकाले प्रदीप्यमानमग्निं दृष्ट्वा अयमस्मद्दोहनकाल इति ज्ञात्वा अस्तं स्वकीययजमानगृहं प्रति किञ्च। आशवः शीघ्रगामिनो अर्वन्तोऽश्वा अपयग्निं दृष्ट्वा अस्तं गृहं यन्ति गच्छन्ति। पुनस्तदेवाह। नित्यासो नित्याः शाश्वता वाजिनो बलवन्तो अश्वा यमग्निं दृष्ट्वा अस्तं गृहं गच्छन्ति। हे तादृशाग्ने! त्वं स्तोतृभ्योऽस्मभ्यं इषमन्नं आभर सम्पादयेत्यर्थः॥

अथ द्वितीयः॥ **सोऽअग्निर्यो वसुर्गृणे सन्यमायन्ति धेनवः समर्वन्तो रघुद्रुवः। सꣳसुजातासः सूरय इषꣳ स्तोतृभ्य आभरेति।**

यो निवासहेतुरग्निरस्ति स तादृशोऽग्निर्गृणे अस्माभिस्तूयते धेनवः पशवो यमग्निं दृष्ट्वा समायन्ति सम्यगाभिमुख्येन गच्छन्ति। किञ्च रघुद्रुवः लघुद्रुवः शीघ्रगामिनोऽर्वन्तोऽश्वाः प्रतिसमायन्ति। सुजातासः शोभनजन्मानः सूरयो विद्वांसः ऋत्विजादयः यमग्निं प्रतिसमायन्ति हे अग्ने तादृशस्त्वं स्तोतृभ्य इषमन्नं सम्पादय॥

अथतृतीयः॥ ॥ **उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आभरेति।**

हे सुश्चन्द्र सुष्ठु आह्लादनकाराग्ने। आसनि त्वदीय आस्ये सर्पिष आज्यस्य सम्बन्धिन्यौ उभे दर्वी सदृशहनू येद्वा सर्पिषः पानार्थं दर्वीसदृशौ हस्तौ। अथवा सर्पिषः सर्पिः सम्बन्धिन्यौ जुहू प्रभृती। श्रीणीषे सेवसे। हनुप्रेरणपर्यन्तं सर्पिस्त्वया पीतमित्यर्थः। उतो अपि च हे शवसस्पते बलस्याधिपते उक्थेषु यज्ञेषु नोऽस्मानुत्पुपूर्याः उत्कर्षेण पूरय प्रापयेत्यर्थः। स्तोतृभ्यो यजमानेभ्यः इषमन्नं आभर सम्पादय॥ ॥ कात्यायनः उत्तरे पदपंक्तीरग्नेनमद्येतीति। पदपंक्तिच्छन्दस्का अग्निरूपधेया इष्टका पदपंक्तयस्ता अनूकस्योत्तरभागेनुपदध्यात्॥

तत्र प्रथमा॥ ॥ **अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम्। ऋध्यामा त ओहैरिति।**

हे अग्ने हृदिस्पृशं हृदयं स्पृशन्तं प्रियं ते त्वामद्यास्मिन् कर्मणि ओहैः फलप्रापकस्तोमैः ऋध्याम समृद्धं करवाम। तत्रैको दृष्टान्तः। अश्वं न यथा लोके

अन्नं घासादिप्रदानेन समर्द्धयन्ति तद्वत् । अथापरो दृष्टान्तः । ग्रमुं न यथा समीधीता ज्योतिष्टोमादिक्रतुं संगीतानुष्ठानेन समर्द्धयन्ति तद्वत् । भद्रं कल्याणमित्यग्निविशेषणं भाऽस्तु ॥

अथ द्वितीयः ॥ ॥ अधाह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः रथि रतस्य बृहतो बभूवेति ।

हेअग्ने अथाऽस्मदीयस्तोत्रानन्तरं क्रतोरनुष्ठीयमानस्य कर्मणोरथीर्बभूव हि । रथोस्यास्तीति रथी सारथिर्यथा निर्वाहकस्तथा त्वं निर्वाहको बभूव खलु कीदृशस्य क्रतोर्भद्रस्य कल्याणरूपस्य दक्षस्य स्वफलप्रदानसमर्थस्य साधोरस्माभिः साध्यस्य ऋतस्य ज्यत्यस्य मोक्षफलस्य बृहतः प्रौढस्य ॥

अथ तृतीयः ॥ एभिर्नो अर्कैर्भवानोऽअर्वाङ् स्वर्णपीतिः । अग्ने विश्वेभिः सुमनाऽअनीकैरिति ।

हेअग्ने विश्वेभिः अनीकैः सर्वैस्त्वदीयसैन्यैः सहितः सुमनाः सौमनस्यं प्राप्तः सते एभिरिदानीं क्रियमाणैर्नोऽस्मान्–सन्त्रन्विभिरर्कैरर्चनीयैः स्तोत्रैर्नोस्मानत्यर्वाक् भव समीपस्थो भव अवरं समीपदेशमश्नति गच्छत्यर्वाक् । तत्र दृष्टान्तः । स्वर्णज्योतिः स्वर्गलोके प्रकाशरूप आदित्यो यथासमीपवर्ती भवति तद्वत् ॥ ॥ कात्यायनः ॥ पुरीषवत्याः पूर्वामतिच्छदसं प्राच्यौ पुरीषसहिते भद्रारग्निर्नृत्र सूर्येऽग्न्यस्थिरागिंॅहोतारमितीति । अतिच्छंदस्काभिर्ऋग्भिरुपधेया इष्टकास्तिस्रोतिच्छदसस्तासां मध्ये एकमतिच्छदसमिष्टकांपुरीषवतीष्टकायाः पूर्वभागे उपदध्यात् ॥

तत्रैकरूपाः पाठः ॥ ॥ अग्निंॅहोतारं मन्ये दास्वन्तं वसुॅसुनुॅसहसो जातवेदसं विप्रन्नजातवेदसं । यऊर्ध्वयास्वध्व सदेवोदेवाच्याकृपा । घृतस्य विभ्राष्टिमनुवष्टिशोचिषा जुहानस्य सर्पिष इति ।

इममग्निं होतारं देवानामाह्वातारमहं मन्ये कीदृशमग्निं वसुं धनं दास्वंतं प्रयच्छंतं सहसः सुनुं बलस्य पुत्रं जातवेदसं इत्यस्मा जगदभिज्ञं। तत्र दृष्टान्तः विप्रं नजातवेदसं । यथा ब्राह्मणं कुटुम्बिनं उत्पन्नपुत्रानभिज्ञं मन्ये तद्वत् । योऽग्निर्देरूर्ध्वयाअत्पन्नतया उच्छ्रितया देवाच्या देवानमति गच्छता

कृपात्कल्पया ज्वालया स्वध्वरः सुष्ठु यागनिष्पादको भवति योऽग्निर्घृतस्य विभ्राति विशेषदीप्तिं शोचिषा स्वकीयेन तेजसा अनुवष्टि। अनुवष्टि अनुकामयते कीदृशस्य घृतस्य आजुह्वानस्य सर्वतो हूयमानस्य सर्पिषः सर्पणशीलस्य ॥ ॥ कात्यायनः ॥ अग्नेत्वमित्यनूकांतेपर इति । अनूकस्य पश्चिमभागे द्विपदछन्दस्यास्तिस्र -इष्टका उपदध्यात् ॥

तत्र प्रथमः ॥ अग्नेत्वन्नोअन्तम् योभवावरूथ्यइति । -

हेअग्ने त्वं नो अस्माकं अन्तमो अन्तिकतमो भव उतापि च त्राता रक्षकः शिवो मंगलरूपी त्वं वरुथ्यो वरुथे गृहे नित्यं सन्निहितो भव ॥

अथ द्वितीयः ॥ ॥ वसुरग्निर्वसुश्रवा अच्छानक्षि द्युमत्तमᳬ रयिंदा इति ।

वसूर्वसुमानयमग्निर्वसुभिरिन्द्रादिदैवतैरादरेण श्रूयत इति वसुश्रवाः हेतादृशाग्ने । अच्छास्मदभिमुखोनक्षि। माप्नुहि कीदृशस्त्वं द्युमत्तमं अतिशयेन दीप्तियुक्तं रयिं धनं दाः प्रयच्छन् ॥

अथतृतीयः । तं त्वा शोचिष्टदीदिवः सुम्नाय नूनमीमहे सखिभ्य इति ।

हेशोचिष्टदीदिवः शुद्धतमदीप्यमान सखिभ्यः सखीनामस्माकंसुम्नाय सुखाय तं पूर्वोक्तगुणयुक्तं त्वा ईमहे प्राप्नुमः ॥ ॥इति षोडशाध्याये पञ्चमोऽनुवाकः ॥

पञ्चमेऽनुवाके च्छन्दस्या इष्टका उक्ताः ॥ ॥ अथ षष्ठे गार्हपत्यस्य पुनश्चितिमन्त्रा उच्यन्ते ॥ ॥ कात्यायनः ॥ । मध्ये स्रक्तं गार्हपत्यं पुनश्चितिश्चोपरितन्द्रयेन ऋषय इति प्रत्यृचमिति पूर्वमुपहितायाः गार्हपत्यस्य चितेर्मध्ये पुनरष्टका येन ऋषयइत्येताभिर्मन्त्रैरुपदध्यात् ।

तत्र प्रथममन्त्रपाठस्तु ॥ येन ऋषयस्तपसा सत्रमायं निधाथाअग्निᳬस्वराभरन्तः । तस्मिन् ह निदध नाके अग्निं यमाहुर्मनवस्तीर्णवर्हिषमिति ॥

येन स्वर्गेण निमित्तभूते पूर्वमहर्षयस्तपसा संतापयुक्तेनाग्निना सत्रमायन्नुष्ठितवंतः । कीदृशा महर्षयः अग्निमिन्धानाः मज्वालयंतः स्वराभरंतः स्व-

गेमाहर्तुं समुद्यताः अहमपि तस्मिन्नाके निमित्तभूते सति अग्निं दधे स्थापयामि । यमग्निं मनवः पूर्वमनुष्यास्तीर्णबर्हिषः मसारितयज्ञमाहुः । तमग्निं निदध इत्यन्वयः ॥ ३ ॥

अथ द्वितीया ॥ ॥ तमग्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुतवा हिरण्यैः । नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिव इति ।

हेदेवा ऋत्विजः सर्वे वयं पत्न्यादिभिः सर्वे मनुष्यैः उत वा हिरण्यैः । नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिव इति । हेदेवा ऋत्विजः सर्वे वयं पत्न्यादिभिः सर्वैर्मनुष्यैः उतवा हिरण्यादिभिः सर्वसाधनद्रव्यैःस्वसहितस्तमग्निं अनुगच्छेम अनुगताः सन्तः फलं माप्स्याम इत्याशयः । स एव स्पष्टीक्रियतेद्रिः पृष्ठे स्वर्गस्योपरि नाकं दुःखरहितं स्थानं गृभ्णाना गृहीतुकामा वयमित्यर्थः । कीदृशा दिवः पृष्ठसुकृतस्य लोके सम्यगनुष्ठितस्य कर्मणः फलभूते तृतीये पृथिवीमारभ्य गणनायां त्रिसंख्यापूरकअधिरोचने अधिकत्वेन दीप्यमानः ॥

॥ अथ तृतीयः ॥ ॥ आवाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः । पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुतां ये पृतन्यव इति ।

अयमग्निर्वाचोमध्यमरुहत् स्तोत्ररूपाया वाचः मतिपाद्यमर्थमारूढस्तोत्रगतसर्वगुणयुक्त इत्यर्थः । कीदृशोऽग्निः भुरण्युर्जगद्भरणशीलः । सत्पालकः । चेकितानोऽभिज्ञानवान् । स च पृथिव्याः पृष्ठभूमेरुपरि निहितः । स्थापितो दविद्युतत् । अतिशयेन द्योतते ये तु शत्रवः पृतन्यवो अस्माभिः सह कलहं कर्तुमिच्छन्ति तानधस्पदं कृणुतामस्माकं पादयोरधस्तादवस्थितान् कुरुताम ॥

अथ चतुर्थः ॥ ॥ अयमग्निर्वीरतमो वयोधाः सहस्रियो द्योततामप्रयुच्छन् । विभ्राजमानः शरीरस्य मध्यउपप्रयाहि दिव्यानि धामेति ।

अयमग्निः द्योततां अस्मिन्कर्मणि मकाशतां कीदृशः वीरतमः अतिशयेन शूरः वयोधाः वयस आयुषः स्थापयिता सहस्रियद्रूपकासहस्रेण संमितः अमयुच्छन् । अस्मिन् कर्मणि ममादरहितः । सर्वशरीरस्य जलस्य मध्ये

विभ्राजमानः पूर्ववत् । वैकृतादिरूपेण विशेषः । अकामयमानः । हे अग्ने एवंभूतस्त्वं दिव्यानि धामस्थानानि उपप्रयाहि प्राप्नुहि ॥

अथ पञ्चमः ॥ ॥ सम्प्रच्यवध्वमुपसम्प्रयाताग्ने पथो देवयानान्कृणुध्वम् । पुनः कृण्वानापितरायुवानान्वातांसो त्वयि तन्तुमेनमिति ।

हेअग्नेत्वं सम्प्रच्यवध्वं स्वकीयात्स्थानात्सम्प्रच्यवध्वंसम्यङ्गनिर्गच्छ । ततः अस्मदीयदेवयजन भागसमीपेस्य सम्प्रयात सम्यक्प्राप्नुहि । ततो देवयानान् । देवलोकप्राप्तिहेतून् पथोमार्गान् कृणुध्व कुरु सर्वत्र पूजार्थं बहुवचनम् । किंकुर्वन् पितामातरौ युवाना युवानौ तरुणौ पुनः भूयो भूयः कृण्वाना कुर्वन् एवंभूतः सोऽग्निः यजनत्वान्निमित्तभूते सति एतं तुं यज्ञमवाहं अन्वातांसात् । अनुक्रमेण तनोतु सम्पादयतु ॥ ॥

अथ षष्ठः ॥ ॥ उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते संसृजेथामयञ्च । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदतेति ।

हे अग्ने त्वं उद्बुध्यस्व अस्मद्विषये सावधानो भव । एवं यजमानं प्रतिजागृहि । प्रतिदिनं जागरूकं सावधानं कुरु । अय च त्वञ्च । मिलित्वा इष्टापूर्ते श्रौतस्मार्त्ते कर्मणी संसृजेथां सम्पादयतम् । किञ्च विश्वेदेवा यजमानश्च सर्वे यूयं सधस्थे सहस्थितियोग्येऽस्मिन्कर्मणि सीदत उत्तरस्मिन्लोके अधिकत्वेन सीदताम ॥

अथ सप्तमी ॥ येन वहसि सहस्रं येनाग्ने सर्ववेदसम् । तेन संयज्ञनो नय स्वर्देवेषु गन्तवइति ।

हे अग्ने येन व्यापारेण सहस्रं वहसि सहस्रदक्षिणकं यज्ञं सर्वलोकं देवेषु देवान् प्रतिगन्तवे गन्तुं नय प्रापय ॥

॥ अथाष्टमः ॥ ॥ अयं तयोनिर्ऋत्वियो यतोजातोऽभरोचथाः । तं जानन्नग्नआरोहाथानो वर्धया रयिमिति ।

अयं मन्त्रो तृतीयाध्यायस्य षष्ठेऽनुवाके व्याख्यातः ॥ ॥ इति षोडशेऽध्याये षष्ठोऽनुवाकः ॥

षष्ठेऽनुवाके गार्हपत्येष्टकोपधानमन्त्राउक्ताः ॥ ॥ अथ सप्तमे पुनराहवनीयस्य पञ्चमचितिविशेषभूतेष्टकोपधानमन्त्रा उच्यन्ते ॥ ॥ कात्यायनः ॥ ऋतव्ये तपश्च तपस्यश्चेतीति द्विऋतव्येष्टके उपदध्यादितिशेषः ।

पाठस्तु ॥ तपश्च तपस्यश्च शैशिराऽऋतूऽअग्नेरन्तः श्लेषासि । कल्पेतां द्यावापृथिवीकल्पं तापाय औषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोन्तरा द्यावापृथिवी इमे । शैशिरा ऋतूअभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति ॥

व्याख्यातः समानार्थः ॥ ॥ कात्यायनः ॥ ॥ विश्वज्योतिषं परमेष्ठीत्वेति ।

पाठस्तु ॥ परमेष्ठीत्वासादयतु दिवस्पृष्ठे ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ सूर्यस्तेधिपतिस्तयादेवतयां गिरस्व ध्रुवासीदेति ।

अयमपि व्याख्यातः ॥ ॥ कात्यायनः ॥ ॥ लोकं पृणाः पूर्ववदिति ।

पाठस्तु ॥ लोकं पृणायोसीदध्रुवात्वम् । इन्द्राग्नीत्वा बृहस्पतिरस्मिन्योना असीषदन् । ताऽअस्यसूददोहसः सोमꣳश्रीणन्ति पृश्नयः । तन्चन्देवानां विशस्त्रिष्वारोचनेदिवः । इन्द्रविश्वाऽअवीवृधन्समुद्रव्यचसङ्गिरः । रथी तमꣳ रथीनांवाजानाꣳसत्पतिं पतिमिति ।

अयो लोकं पृणेष्टकोपधानमन्त्रा व्याख्याताः ॥ ॥ कात्यायनः ॥ भोपदश्वस्युत्तरां विकर्णीमिति । उपदध्यादितिशेषः ।

पाठस्तु ॥ प्रोथदश्वानयवसेविष्यन्यदामहः संवरणा-
द्व्यस्थात् । आदस्यवातोअनुवातिशोचिरधस्मतेव्रजनंकृष्णम-
स्तीति ।

*अयमग्निरश्वोन अश्व इव प्रोथत् । प्रोथदश्वः* । आ-
ग्नेयी त्रिष्टुप् । मध्यमानोऽग्निरुच्यते । प्रोथति शब्दार्थः शब्दा-
यतेऽग्निः अश्वोऽनयवसेविष्यन् । अश्व इव यवसे घासे विषयभूते अ-
विष्यन् ग्रसिष्यन् । यदा यस्मिन्काले महतः संवरणात् । संत्रियते यस्मि-
न्नग्निरिति संवरणमरणिकाष्ठमुच्यते । अरणिकाष्ठात् व्यस्थात् व्युत्तिष्ठते
प्रकाशीभवति । आत् अथानन्तरमेव अस्याग्नेः वातः अनुवाति । शोचिः
संदीपनः । अध समानार्थौ छन्दसि । स्मनिपातोऽनर्थकः तथैतस्येत्यर्थः ।
नह्यत्र युष्मदः प्रयोगः । परोक्षकृतत्वान्मन्त्रस्य । श्रुतिरप्यमुमर्थं दर्शयति ।
अथैतस्य व्रजनं कृष्णं भवतीति । व्रजति गच्छत्यनेनेति व्रजनं कृष्णं भवति ।
कात्यायनः । आयोष्ट्वेति स्वयमातृ ।

पाठस्तु॥आयोष्ट्वासदने सादयाम्यवतश्छायायाᳪं समुद्रस्य
हृदये।रश्मीवतीं भास्वतीं माद्यामास्याद्यापृथिवी मोऽवन्तरिक्षम्॥
परमेष्ठी त्वासादयतु दिवस्पृष्ठे व्यचस्वतीम् । दिवं यच्छदिवं
याहिᳪंसीः । विश्वस्मै प्राणायोपानाय व्यानायोदानाय प्रति-
ष्ठायै चरित्राय । सूर्यस्त्वाभिपातुमह्यास्वस्त्याछर्दिषा शन्त-
मेनतया देवतयां गिरस्वध्रुवे सीदतामिति ।

याति निरन्तरं गच्छतीत्यायुरादित्यः गच सर्वजगद्वाते तस्या-
वतः समुद्रस्य समुद्रसमानस्यादित्यस्य हृदये प्रधानभूते छायायां
आश्रयभूते सदनेस्मिन् स्थाने सादयामि । कीदृशी त्वा रश्मी-
वतीरश्मिसंयुक्तां भास्वतीदीप्तिमती हिरण्मके या त्वं द्यां द्युलो-

*अस्यैकमन्त्रस्य भाष्यं आदर्श हस्तलिखित पुस्तके अनुपलब्ध-
त्वात् उवट भाष्यादुद्धृतम् ।

कं आभासयसि प्रकाशयसि । तथा उर्वीं भूलोकं उरुविस्तीर्णमन्तरिक्षं चाभासि । तादृशीं त्वा सादयामीतिसम्बन्धः । शिष्टं व्याख्यातं ॥ ॥ कात्यायनः अग्निं प्रोक्षति हिरण्यशकलसहस्रेण शतेद्वे प्रकिरति सहस्रस्येति प्रतिमंत्रमिति । हिरण्यसम्बन्धीनां शकलानां सहस्रेणाग्नेः प्रोक्षणं कुर्यात् । तत्र शकलसहस्रमध्ये द्वेद्वे शते सहस्रस्येत्येकैकेन मन्त्रेण प्रकिरेत् ॥ ॥ तेषांपाठः ॥ ॥ सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि सहस्रस्योन्मासि । साहस्रोसि सहस्रायत्वेति । हेचिते इष्टकानां सहस्रस्य पूर्वभागावस्थितस्य प्रमातुल्यासि । तथा दक्षिणवस्थितस्येष्टकासहस्रस्य प्रतिमा तुल्या । एवं पश्चिमदिग्भागावस्थितस्येष्टकासहस्रस्य उन्मा तुल्यासि हेचित्यग्ने त्वमुत्तरस्यां दिशि साहस्रः सहस्रसम्बन्ध्यसि । तथा ऊर्ध्वायां दिशि सहस्रसंख्याकफलसम्बन्धार्थं प्रोक्षामि ॥ ॥ इतिषोडशेऽध्याये सप्तमोऽनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणविरचिते माधवीयवेदार्थप्रकाशे काण्वसंहिताभाष्ये षोडशोऽध्यायः ॥ १ ॥

# अथ शुक्लयजुर्वेदकाण्वमन्त्रभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

षोडशेऽध्याये चयनमन्त्रान् समाप्य सप्तदशेऽध्याये शतरुद्रियाख्यहोममन्त्रा उच्यन्ते ॥ ॥ तत्र कात्यायनः ॥ ॥ शतरुद्रियहोमउत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन धारयन् सन्ततं जर्तिलमिश्रान् गवेधुकासक्तून् वा क्षीरमेके तिष्ठंस्तूदङ्मुखस्त इत्यध्यायेन अनुवाकान्ते स्वाहाकारो जानुमात्रे पश्चान्ते च नाभिमात्रे । प्राक्प्रत्यवरोहेभ्यो मुखमात्रे । प्रतिलोमं प्रत्यवरोहं जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रं । अस्यार्थः ॥ हिरण्यशकलैरग्निप्रोक्षणानन्तरं शतरुद्रियसंज्ञो होमः । तस्य हवनीये मात्राविशेषमाह । उत्तरपक्षपश्चिमकोणेयाः परिश्रितो जङ्घामात्र्यादयः पूर्वं निखातास्तासु होमः । तत्र विधिः जर्तिलैरारण्यतिलैर्मिश्रान् गवेधुकासक्तून् कृशूकसक्तून् अर्कपत्रेण जुहोति । किं कुर्वन् । अर्ककाष्ठेन सततं क्षारयन् परिश्रित्सु पातयन् । अर्कपर्णं दक्षकरेणादायार्ककाष्ठं वामेनादाय तेन पीतनीयम् । सक्तुस्थानेऽजाक्षीरमिति केचित् । उदङ्मुखो नमस्त इत्यध्यायेन । तत्रानुवाकत्रयान्तेऽर्भकेभ्यश्चरो नम इत्यत्र जानुमात्रपरिश्रिति स्वाहाकारो विधेयः । पश्चानुवाकान्ते सुधन्वने चेत्यत्र नाभिमात्रे परिश्रिति स्वाहाकारः । नमोऽस्तु रुद्रेभ्य इति प्रत्यवरोहमन्त्रास्तेभ्यः प्राङ्मुखमात्रपरिश्रिति स्वाहाकारः । नमोऽस्त्विति त्रिऋग्भिः प्रतिलोमं होमः । ये दिवीति मुखमात्रे । येऽन्तरिक्ष इति नाभिमात्रे । ये पृथिव्यामिति जानुमात्र इति सूत्रार्थः ॥ ॥ पाठस्तु ।

ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः । बाहुभ्यामुत ते नम इति । रुत् दुःखं द्रावयति इति रुद्रः । यद्वा । रु गतौ गत्यर्थास्ते ज्ञानार्थाः । रवणं रुत् ज्ञानम् । भावे क्विप् । तुगागमः । रुतं ज्ञानं राति ददाति रुद्रः । ज्ञानप्रदः । यद्वा पापिनो नरान् दुःखभोगेन रोदयतीति रुद्रः । हे रुद्र । ते तव मन्यवे क्रोधाय नमो नमस्कारोऽस्तु ।

उतोऽपि च ते तवेषवे बाणाय नमः । उतापि च ते तव बाहुभ्यां नमः । तव क्रोधबाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्विस्त्यर्थः ॥ १ ॥

**या ते रुद्र शिवातनूरघोरा पापकाशिनी । तयानस्तन्वा शंतमयागिरिशन्ताभिचाकशीहीति ।** हेरुद्र! याते तवेदृशी तनूः शरीरं हे गिरिशंत। तया तन्वा नोऽस्मानभिचाकशीहि । अभिपश्य । चाकशीहि पश्यतिकर्मा कीदृशी तनूः । शिवा शान्ता मङ्गलरूपा । यतोऽघोरा । अविषमा सौम्या । अतएवापापकाशिनी । पापमशुभं काशयति प्रकाशयति पापकाशिनी न पापकाशिनी अपापकाशिनी । या पुण्यफलमेव ददाति न पापफलमित्यर्थः । गिरौ कैलासे स्थितः शं सुखं प्राणिनां तनोति विस्तारयति गिरिशन्तः । गिरीव त्रिस्थितः शं तनोतीति वा । गिरौ मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा । गिरौ शेते गिरिशः । अमति गच्छति जानातीत्यन्तः सर्वज्ञः अमगतौ भजने शब्दे । कर्त्तरि क्तः । गिरिशश्चासावन्तश्च गिरिशन्तः तत्सम्बुद्धिः । शकंध्वादित्वात् पररूपम् । कीदृश्या तन्वा । शन्तमया सुखतमया सुखयितृतमया ॥ २ ॥

**यामिषुं गिरिशन्तहस्ते विभर्ष्यस्तवे । शिवां गिरित्रतां कुरु मा हि ंसीः पुरुषं जगदिति ।** हेगिरिशंत त्वं यामिषुं बाणम् । हस्ते बिभर्षि । धारयसि । किं कर्तुम् । अस्तवे । असु क्षेपणे । तुमर्थे तवे प्रत्ययः । अस्तितुम् । शत्रून् क्षेप्तुमित्यर्थः । हेगिरित्र गिरौ कैलासे स्थितो भूतानि त्रायत इति गिरित्रः । तां इषुं शिवां कल्याणकारिणीं कुरु । किञ्च । पुरुषं पुत्रपौत्रादिकं जगत् जंगममन्यदपि गवाश्वादिकं मा हिंसीः मा वधीः ॥ ३ ॥

**शिवेन वचसा त्वा गिरिशाच्छावदामसि । यथा नः सर्वमिज्जगदयक्ष्मꣳसुमना असदिति ।** गिरौ कैलासे शेते गिरिशः । हेगिरिश शिवेन वचसा मङ्गलेन स्तुतिरूपेण वचनेन त्वा अच्छ । त्वा । प्राप्तुं वयं वदामसि । वदामः प्रार्थयामहे । अच्छाभेराप्तुमिति शाकपूणिरिति यास्कोक्तेः । संहितायां निपातस्य चेति दीर्घः । इदं तोमसि । किं वदाम इत्यत आह । नोऽस्माकं सर्वमित् । सर्वमेव जगत् जङ्गमं नरपश्वादि यथा येन प्रकारेण अयक्ष्मं निरोगं सुमनः शोभनमनस्कं असत् । भवति तथा कुर्विति शेषः । सुमनः शब्दे पुंस्त्वमार्षे

जगद्विशेषत्वात् । असदित्यत्र लेटो डाट् विसर्ग । इलोपः ॥ ५ ॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् अहींश्च सर्वा जम्भयन्त्सर्वाश्च यातुधान्यो धराचीः परासुवेति । रुद्रो मां अध्यवोचत् । अधिवक्तुम् । मां सर्वाधिकं वदतु तेनोक्ते मम सर्वाधिक्यं भवत्वेनेत्यर्थः । कीदृशः अधिवक्ता । अधिकवदनशीलः । प्रथमः सर्वेषां मुख्यः पूज्यत्वात् । दैवेभ्यो हित । भिषक् । रोगनाशकः । स्मरणेनैव रोगनाशाद्भिषक्त्वम् । एवं परोक्षमुक्त्वा प्रत्यक्षमाह । हेरुद्र सर्वा यातुधान्यो यातुधानी राक्षसीः । त्वं परासुव पराक्षिप । अस्मतो दूरीकुरु । किं कुर्वन् । सर्वान् हीन् सर्पव्याघ्रादीन् जम्भयन् विनाशयन् । कीदृशीर्यातुधानीः । अधराचीः अधरे अधोदेशेऽञ्चन्ति ताः अधराच्यः । ताः । अधोऽधो गमनशीलाः चौ समुच्चये । सर्पनाशराक्षसीक्षेपौ सदैव कुर्वीत्यर्थः ॥ ६ ॥

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चैनꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशो वैषाꣳहेल ईमह इति । आदित्यरूपेणात्र रुद्रः स्तूयते । योऽसौ प्रत्यक्षो रुद्रो रविरूपः । च पुनर्ये रुद्रा एनमभितो दिक्षु प्राच्यादिषु श्रिताः किरणरूपेण सहस्रशोऽसंख्याः । एषां हेलः क्रोधमस्मदपराधजं वयं अवईमहे । निवारयामः । भक्त्या निराकुर्मः हेल इति क्रोधनाम । अभि सर्वतसोरिति द्वितीया । कीदृशोऽसौ । ताम्रः । उदयेऽत्यन्तं रक्तः । अरुणो रक्तोऽस्तकाले । उतापि च बभ्रुः पिंगलवर्णोऽन्यदा । सुमंगलः । शोभनानि मंगलानि यस्य मंगलरूपः । रव्युदये सर्वमंगलप्रवर्तनात् ॥ ६ ॥

असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृडयातिन इति । योसावादित्यरूपोऽवसर्पति । उदयास्तमयौ कुर्वन्निरंतरं गच्छति । गोपाउत गोपाला अपि वेदोक्तसंस्काररहीनाः अदृश्रन् । पश्यन्ति । उदहार्यः । उदकं हरंति तौउदहार्यः । मंथौदनसक्तुबिंदुवज्रहारभारवीवधगाहेष्विस्युदकस्योदादेशः । जलहारिण्यो योषितोप्येनमदृश्रन् । पश्यंति । आगोपालांगनादिप्रसिद्ध इत्यर्थः । दृशेर्लुङि इरितो वेति च्लेरङ् । ऋगागमश्छांदसः । कीदृशः । नीलग्रीवः । विषधारणेन नीला ग्रीवा कंठो यस्य । अस्तमये । नीलकंठ इव लक्ष्यः । विलोहितः । विशेषेण रक्तः । स रुद्रो दृष्टः सन् । नाऽस्मान्मृडे-

यति । सुखयतु । असौ मंडलवतीरुद्र एव तपतीति ज्ञातः । सुखं करोत्वित्यर्थः ॥ ७ ॥

**नमोस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानो हंतेभ्यो करं नम इति ।**

नीलग्रीवाय नीलकंठाय नमोस्तु । नमस्कारो भवतु । कीदृशाय । सहस्राक्षाय । सहस्रमक्षीणि यस्य । इंद्ररूपिणे । मीढुषे । मिमेहेति मीढ्वान् तस्मै । मिह सेचने । दाश्वान्साह्वान्मीढ्वांश्चेति क्वसंतो निपातः । सेक्त्रे वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः । तरुणाय वा । अथो अपि अस्य रुद्रस्य ये सत्वानः प्राणिना भृत्यास्तेभ्योऽहं नमो नमस्कारं करोमि । कृञ् करणे शप् । लङ्युत्तमैकवचनम् ॥ ८ ॥

**प्रमुंच धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्चते हस्त इषवः परात्ता भगवो वपेति ।**

हेभगवः भगं षाड्गुण्यमैश्वर्यमस्यास्ति भगवान् । मतुवसोरुः संबुद्धौ छंदसीतिरुत्वं । ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भगइतीरणेत्युक्तेः । हेभगवन्नु रुद्र तव धन्वनो धनुषः उभयोरार्त्न्योर्द्वयोः कोट्योः स्थिता ज्यां मौर्वीं त्वं प्रमुंच दूरीकुरु । यश्च ते तव हस्ते इषवो बाणास्ताइपूः परावप ॥ पराक्षिप ॥ ९ ॥

**विज्यं धनुः कपर्दिनो विशल्यो बाणवाऽनुत । अनेशन्नस्य या इषव आभुरस्य निषंगधिरिति ।** कपर्दो जटाजूटोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुर्विज्यं मौर्वीरहितमस्तु । विगता ज्या यस्य तत् । उतापिबाणवान् । बाणा अस्यिन् संतीति बाणवान् विशल्यो निष्फलोस्तु । बाणाग्रतो लोहभागः शल्यं । इषुधिर्निरग्रबाणोस्तु । अस्य रुद्रस्य या इषवस्ता अनेशन् । नश्यंतु । नशेरतङ्मांडेत्येतत् । पुषादित्वात् च्लेरङ् । अस्य रुद्रस्य निषंगधिर्निषज्यत इति निषंगधिः खड्गः स धीयतेऽस्मिन्निति निषंगधिः । कोशः । स आभुः रिक्तः खड्गरहितोस्तु । रुद्रोऽस्मान्प्रति न्यस्तसर्वशस्त्रोस्त्वित्यर्थः ॥ १० ॥

**परिते धन्वनो हेतिरस्मान्वृणक्तु विश्वत । अथोयऽइषुधिस्तवारे अस्मन् निधेहितमिति ।**

हेरुद्र ते तव धन्वनो हेतिर्धनुः सम्बन्धि आयुधं विश्वतः सर्वतो-

स्मान्परिवृणक्तु त्यजतु । माहिंसीत्यर्थः । वृजीवर्जने । रुधादित्वात् श्नम् । अथो अपि च यस्तव इषुधिस्तं अस्मत्सकाशाद्दूरे निधेहि । अस्मतो दूरे स्थापय ॥ ११ ॥

याते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुजेति ।

अतिशयेन मीढ्वान्मीढुष्टमः । तसौ मत्वर्थे इतिमसंज्ञाया वसोः संप्रसारणम् । षत्व,ष्टुत्वे । हेमीढुष्टमसेक्तृतम कामयवर्षक ते तव हस्ते या धनुर्हेतिर्धनुरूपमायुध बभूव अस्ति एक ते पदं पादपूरणाय । तया धनुरूपया हेत्या विश्वतः सर्वतो नोऽस्मान् त्व परिभुज । परिपालय । भुजे विकरणव्यत्यये शप् प्रत्ययः । कीदृश्या तया अयक्ष्मया नास्ति यक्ष्मा रोगो यस्या स्तया निरूपद्रवया दृढया । अनुपद्रवकारिण्या वा ॥ १२ ॥

अवतत्य धनुष्ट्वꣳसहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमनाः भवेति ।

सहस्रमक्षीणि यस्य । शतं इषुधयो यस्य । हे सहस्राक्ष हेशतेषुधे त्वं नोऽस्मान्प्रतिशिवः शातः सुमनाः शोभनचित्तश्च भव । अनुगृह्णाणेत्यर्थः । किं कृत्वा । धनुरवतत्य । अपज्याकं कृत्वा । शल्यानां मुखा । मुखानि वाणफलाग्राणि निशीर्य शीर्णानि कृत्वा । शृहिंसाया । समासेऽनञ्पूर्वेक्त्वोल्यप् । ऋत इद्धातोः ॥ १३ ॥

नमस्त आयुधायानातताय धृष्णवे । उभाभ्यामुतते नमो बाहुभ्यां तव धन्वन इति । हेरुद्र ते तवायुधाय नमोस्तु वाणाय नतिरस्तु कीदृशाय । अनातताय । धनुष्यमारोपिताय । धृष्णवे । धर्षणशीला धृषेः क्नुप्रत्ययः रिपून् हन्तु मगल्भाय । उतापि च ते तवोभाभ्यां नमः । तव धन्वने धनुषेऽपि नमोस्तु । तस्यापि विशेषणम् । अनातताय अततारितमौर्वीकाय ॥ १४ ॥

मानो महांतमुतमानो अर्भकं मानुक्षंत मुतमान उक्षितं । मानोवधीः पितरं मोत मातरं मातः प्रियास्तन्वो रुद्ररीरिष इति ।

हेरुद्र नोऽस्माकं महान्तं वृद्ध गुरुपितृव्यादिकम् । मावधीः मा हिंसीः उतापि नोऽस्माकमर्भकं बालं मा वधीः । नोऽस्माकमुक्षन्तं सिञ्चन्तं

तरुणं मावधीः । उतापि नोऽस्माकमुक्षितं सिच्कङ्गर्भस्थं च मावधीः । नः पितरं जनकं मा वधीः । उतापि नोमातरं जननीं च मावधीः । महान्तमित्यनेन सिद्धयो मा तापित्रोः पुनरादानगादरार्थं नोऽस्माकं प्रियावल्लभास्तन्वस्तनुः शरीराणि पुत्रपौत्ररूपाणि त्वं मारीरिषः । माहिंसीः रिषति हिंसाकर्म ॥ १५ ॥

**मानस्तोके तनये मान आयुषि मानो गोषु मानोऽश्वेषु रीरिषः। मानोवीरान्रुद्रभामिनो वधीर्हविष्मंतः सदमित्त्वाहवामहइति।** हेरुद्र नोऽस्माकं तोके पुत्रे तनये पौत्रे मारीरिषः । माहिंसीः । नः आयुषि जीवने माहिंसीः । नो गोषु धेनुषु मारीरिषः । नोऽश्वेषु तुरगेषु मारीरिषः विभक्तिव्यत्ययो वा । तोकं तनयं आयुर्गांअश्वामाहिंसीः । भामक्रोधेभामिनः क्रोधयुताव । अपि नोऽस्माकं वीरान् भृत्यान्मावधीः । कउपकारइतिचेत् । हविष्मन्तोहविर्युक्ता सदं इव । सदैवत्वांत्वा वयं हवामहे । यागाय । ह्यामः । तदेकशरणात्वमिति भावः ॥ १६ ॥

॥ इतिसप्तदशोऽध्याये प्रथमोऽनुवाकः ॥

**नमो हिरण्यबाहवे सेनान्येदिशांचपतये नमोनमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः । नमः शष्पिंजराय त्विषीमते पथीनां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नम इति ।** हिरण्यमाभरणरूपं बाह्वोर्यस्य स हिरण्यबाहुः स च सेनां नयतीति सेनानीस्तस्मै रुद्राय नमः । दिशां पतये पालकाय रुद्राय नमः । हरयो हरितवर्णाः । केशाः पर्णरूपा येषां ते हरिकेशास्तेभ्यो वृक्षेभ्यो वृक्षरूपरुद्रेभ्यो नमः । पशूना जीवाना पतये पालकाय रुद्राय नमः । शष्पं बालतृणं तद्वद् पिञ्जराय पीतरक्तवर्णाय । छिन्दप्रच्छांदसः । त्विषि दीप्तिरस्यास्तीति त्विषिमान संहितायां त्विषिशब्दस्यदीर्घः इदृशायरुद्राय नमः पथिनां मार्गाणां पालकाय नमः पथि शब्दो मार्गवाचि । उत्तर दक्षिण तृतीया मार्गाः श्रुतायुक्ताः हरिकेशाय नीलवर्णकेशाय जरारहितायोपवीतिने मङ्गलार्थयज्ञोपवीतधारिणे रुद्राय ते नमः । पुष्टानां गुणपूर्णानां नराणां पतये स्वामिने नमः ॥ ८ ॥ १ ॥

**नमो बभ्लुशायाव्याधिनेऽन्नानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमः। नमो रुद्रायाततायिने क्षेत्राणां पतये**

नमो नमः सूताया हन्त्यै वनानां पतये नम इति । बभ्लुशः कपिलवर्णः । यद्वा बिभर्ति रूद्रमिति वभुर्वृषभ स्तस्मिन् शेते स बभ्लुशः । विध्यति शत्रूनतिव्याधी तस्मै रूद्राय नमः । अन्नाना पालकाय नमः । भवस्य संसारस्य हेत्यै आयुधाय संसारनिवर्त्तकाय रूद्राय नमः । जगता पालकाय रूद्राय नमः । आततेन विस्तृतेन धनुषा सह एति गच्छति आततायी उद्यतायुधस्तस्मै रूद्राय नमः । क्षेत्राणा देहाना पालकाय नमः । न हन्तीत्यहन्तिस्तस्मै अहन्त्ये सूताय सारथये तद्रूपाय रूद्राय नमः । सारथिर्न हन्ति। वनानां पालकाय नमः ॥ ८ ॥ २ ॥

नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः । नमो मन्त्रिणे वाणिजाय कक्षाणा पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नम इति । रोहितो लोहितवर्णः । स्थपतिर्गृहादिकर्ता विश्वकर्मारूपेण । तस्मै नमः । वृक्षाणां पालकाय नमः । भुवं तनोतीति भुवन्तिर्भूमण्डलविस्तारकः । परिबोधनं करोतीति वरिवस्कृत । मएत्र वारिवस्कृतः । स्वार्थेऽणूस्थानभोग्यकाराय नमः । औषधीना ग्राम्यारण्याना पालकाय नमः । अलोचनकुशलो मन्त्री । वणिगेववाणिजः व्यापारकर्ता । तद्रूपाय नमः । वनगता गुल्मवीरुधादयः कक्षास्तेषा पालकाय नमः । उच्चैर्घोषो ध्वनिर्यस्य स उच्चैर्घोषः । आक्रन्दयति रोदयतीत्याक्रन्दयन् । युद्धे महाशब्दाय रिपुरोदकाय नमः । पत्तीनां सेनाविशेषाणां पदातीना वा पालकाय नमः ।एको रथो गजेश्चाश्वास्त्रयः पञ्चपदातयः । एष सेनाविशेषोऽयं पत्तिरित्यभिधीयत इतिव्यासोक्तेः ॥ ८ ॥ ३ ॥

नमः कृत्स्नाय तयधावते सत्वानां पतये नमो नमः सहमानाय निव्याधिनआव्याधिनीनां पतये नमः । नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नम इति । कृत्स्नं समग्रमायतं विस्तृतपर्यान्धनुर्यस्य स कृत्स्नायतः आकर्णपूर्णधनुष्ट्वेन धावते । युद्धे शीघ्र गच्छते । रूद्राय नमः । शीघ्रगतौ सरते धीवादेशः तलोपश्छान्दसः । यद्वा कृत्स्नः सर्व आयो लाभो यस्य स कृत्स्नायतः धावते सर्वलोभप्रापकत्वेन धावते यत्र गच्छति तत्र सर्वेष्टलाभं प्राप्नोतीत्यर्थः । सत्वन् शब्दः प्राणिवाची । सत्वनः सा-

त्विकाः शरणागताः प्राणिनस्तेषां पालकाय नमः । सहंतरीनभिभवतीति सहमानः । नितरां विध्यति हन्ति शत्रूनिति निव्याधी । तस्मै नमः । आसमन्ताद्विध्यन्तीत्याव्याधिन्यः शूरसेनास्तासां पालकाय नमः । ककुभो महान् तस्मै रुद्राय नमः । ककुभ इति महन्नामसुपठितम् । निषङ्गः खड्गः सोऽस्यास्तीति निषङ्गी । स्तेना गुप्तचौरास्तेषां पालकाय नमः । अपहारबुध्या निरन्तरं चरतीति निचेरुः । परित आपणवाटिकादौ हरणेच्छया चरतीति परिचरः । तस्मै नमः । अरण्यानां वनानां पतये नमः रुद्रो लीलया चोरादिरूपं पतेः । यद्वा रुद्रस्य जगदात्मकत्वाचोरादयो रुद्रएव ध्येयः । यद्वा स्तेनादिशरीरे जीवेश्वररूपेण रुद्रो द्विधा तिष्ठति । तत्र जीवरूपं स्तेनादिशब्दवाच्यं तदीश्वररुद्ररूपं लक्षयति । यथा शाखाग्रं चन्द्रस्य लक्षकम् । किम्बहुना लक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः । शब्दाः प्रयुक्ताः ॥८॥४॥

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः । नमः सृकायिभ्यो जिघाᳪंसद्भ्यो मुष्णतां पतये नमो नमो सिमद्भ्यो नक्तं चरद्भ्यो विकृन्तानां पतये नम इति । वञ्चति प्रतारयति वञ्चन् । परिसर्वतो वञ्चति परिवञ्चन् । तस्मै नमः । स्वामिनः आप्तो भूत्वा व्यवहारे कुत्रचित्तदीयं धनमपह्नुते तद्वञ्चनम् । सर्वव्यवहारे धनापह्नः परिवञ्चनम् । गुप्तचौरा द्विविधाः । रात्रौ गृहे खातादिना द्रव्यहर्तारः । स्वीयात्रएवहोर्निशमज्ञाताश्चौरश्च पूर्वेस्तेनाः । उत्तरेस्तायवः । तेषां पतये नमः । निषङ्गः खड्गो बाणो वा । सोऽस्यास्तीति निषङ्गी । इषुधिर्बाणाधारोऽस्यास्तीतीषुधिमान् । तदुभयरूपाय नमः । तस्कराः प्रकटचोराः । तेषां पतये नमः । सृक इतिवज्रनाम । सृकेण वज्रेण सहयन्ति गच्छन्तीत्येवं शीलाः सृकायिनः । अतएव शत्रून् हन्तुं इच्छन्ति जिघांसति जिघांसतीति जिघांसन्तः । हन्तेः सनन्ताच्छतृप्रत्ययः । तेभ्यो रुद्रेभ्यो नमः । क्षेत्रादिषु धान्यापहर्तारो मुष्णन्तस्तेषां पालकाय नमः । असयः खड्गाः सन्ति येषान्तेऽसिमन्तः । नक्तं रात्रौ चरन्ति ते नक्तं चरन्तः । खड्गं धृत्वा रात्रौ वीथीनिर्गतप्राणिघातकास्तेभ्यो रुद्रेभ्यो नमः । विकृन्तन्तिच्छिन्दन्तितेविकृताः । छित्वापहर्तारस्तेषां पतये नमः ॥ ८ ॥ ५ ॥

इति सप्तदशोऽध्याये द्वितीयोऽनुवाकः ॥

नमं उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नमः ऽइषुमद्भ्यो धन्वायिभ्यश्च वो नमः । नमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्चवो नमो नमऽआयच्छद्भ्योस्यद्भ्यश्च वो नम इति ।

उष्णीषँ शिरोवेष्टनमस्यास्तीत्युष्णीषी उष्णीषेण शिरः प्रावृत्य ग्रामेऽपहर्तुं प्रवृत्तः । गिरौ चरति गिरिचरः । अध्वन्यानां वस्त्राद्यपहर्तुं पर्वतादिविषमस्थानचारी । तदुभयरूपाय रुद्राय नमः । कुं भूमिं क्षेत्रगृहादिरूपां लुञ्चन्ति हरन्ति कुलुञ्चाः । कुत्सितं लुञ्चति वा तेषां पालकाय नमः । इषवो विद्यन्ते येषान्ते इषुमन्तः । जनान् भीषयितुं बाणधारिणस्तेभ्यो नमः । धन्वना धनुषा सह यान्ति गच्छन्ति धन्वायिनः । हेरुद्रा धनुर्धारिभ्यो वा युष्मभ्यं नमः । चकारो मन्त्रभेदज्ञापनार्थः । एवमग्रेऽपि । आतन्वन्त्यारोपयन्ति ज्यां धनुषिते आयच्छन्तः । तेभ्यो नमः । अस्यंति क्षिपन्ति बाणानिस्यस्यन्तस्तेभ्यो नमः । असु क्षेपणे दिवादिः ॥ ८ ॥ १ ॥

नमोविसृजद्भ्यो विध्यद्भ्यश्चवो नमो नमःस्वपद्भ्यो जाग्रद्भ्यश्च वो नम नमः । नमः शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नम इति ।

विसृजन्ति मुञ्चन्ति बाणानरिषु इति विसृजंतः । तेभ्यो नमः । विध्यन्ति ताडयन्ति शत्रूनिति विध्यंति । तेभ्यो वो नमः । मुक्तस्य बाणस्य लक्ष्ये प्रवेशो वेधः । स्वपंतिते स्वपन्तः । स्वप्नावस्थामनुभवंतस्तेभ्यो नमः । जाग्रति ते जाग्रतः । जाग्रदवस्थावन्तस्तेभ्यो वो नमः । शेरतेति शयानाः सुषुप्त्यवस्थावंतस्तेभ्यो नमः । आसते ते आसीना उपविशन्तस्तेभ्यश्च वो नमः । तिष्ठन्ति ते तिष्ठन्तो गतिनिवृत्तास्तेभ्यो नमः । धावंतिते धावंतः वेगवद्गतयस्तेभ्यो वो नमः ॥ ८ ॥ २ ॥

अथ मांसदृशा रुद्रा रुद्रलोके सन्ति ते कथ्यन्ते रुद्रा द्वैतमतिपादयन्ति । अथो एव द्वैतानिरुद्राणा जातानीतिश्रुतेः ।

नमः सभाभ्यः सभापतिभ्यश्च वो नमोनमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमः । नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम ऽउगणाभ्यस्तृँहतीभ्यश्च वो नम इति ॥

सभारूपेभ्यो रुद्रेभ्यो नमः । सभादिषु रुद्रादिः कर्त्तव्येति तासधीः । सभायाः पतिभ्यो वो नमः । अश्वास्तुरगास्तेभ्यो नमः । अश्वा-

नां पतिभ्यो वो नमः । आसमन्ताद्विध्यन्तीत्याव्याधिन्यो देव्यः । सेना वा ताभ्यो नमः । विशेषेण विध्यन्ति विविध्यन्त्यस्ताभ्यो वो नमः । उत्कृष्टा गणा भृत्यसमूहा यासान्ता उगणाः । उपसर्गात्यलोपः पृषोदरादित्वात् । ब्राह्म्याद्या मातरस्ताभ्यो नमः । तृंहन्ति घ्नन्ति तृंहत्यः । तृहू हिंसायां । हन्तुं समर्था दुर्गादयस्ताभ्यो नमः ॥ ८ ॥ ३ ॥

नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः । नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नम इति ॥

देवानुचरा भूतविशेषा गणास्तेभ्यो नमः । गणानां पालका गणपतयस्तेभ्यो वो नमः । व्राता नानाजातीयानां सङ्घास्तेभ्यो नमः व्रातपालका व्रातपतयस्तेभ्यो नमः । गृध्यन्ति वाँञ्छन्ति गृत्सा विषयलंपटाः । गृत्सा मेधाविनो वा तेभ्यो नमः । गृत्सपतयस्तत्पालकास्तेभ्यो वो नमः गविकृतं रूपं येषान्ते विरूपा नग्नमुण्डजटिलादयस्तेभ्यो नमः । विश्वं सर्वं नानाविधं रूपं येषान्ते विश्वरूपास्तुरङ्गास्तुरङ्गवदनहयग्रीवादयस्तेभ्यो वो नमः ॥ ८ ॥ ४ ॥

नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमः । नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमो महद्भ्यो अर्भकेभ्यश्च वो नम इति ॥

सेनारूपेभ्यो नमः । सेना नयन्ति सेनान्यः सेनापतयस्तद्रूपेभ्यो वो नमः । ह्रस्वश्छान्दसः । रथाः सन्ति येषां ते रथिनः । तेभ्यो नमः । नास्ति रथा येषां अरथास्तेभ्यो वो नमः । क्षत्तृभ्यः । क्षि निवासगत्योः । तुदादिः । क्षियन्ति निवसन्ति रथेष्विति क्षत्तारः । यद्वा । क्षिप प्रेरणे । क्षियन्ति प्रेरयन्ति सारथीनिति क्षत्तारो रथाधिष्ठातारः । नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृ इत्यौणादिकसूत्रेण तृन्प्रत्ययान्तो निपातः । तेभ्यो नमः । संगृह्णंति अश्वानिति संग्रहीतारः सारथिनः । ण्वुल् तृचाविति तृच् । तेभ्यो नमः महान्तो जातिविद्यादिभिरुत्कृष्टास्तेभ्यो नमः । अर्भकाः प्रमाणादिभिरल्पास्तेभ्यो नमः ॥ ८ ॥ ५ ॥

इति सप्तदशोऽध्याये तृतीयोऽनुवाकः ॥

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः । नमो निषादेभ्यः पुंजिष्टेभ्यश्च वो नमो न-

मः श्वनिभ्यो मृगयुभ्यश्च वो नम इति ।

तक्षाणः शिल्पिजातयस्तेभ्यो नमः । रथं कुर्वन्तीति रथकाराः सूत्रधारविशेषास्तेभ्यो वो नमः । कुलालाः कुंभकारास्तेभ्यो नमः । कर्मारा लोहकारास्तेभ्यो वो नमः । निषादा गिरिचरा मांसाशिनो भिल्लास्तेभ्यो नमः । पुञ्जिष्ठाः पक्षिपुञ्जघातकाः । पुल्कसादयस्तेभ्यो वो नमः । शुनो नयन्ति ते श्वन्यः । श्वकण्ठबद्धरज्जुधारकाः श्वनिनः । नयतो ह्रस्व आर्षः । तेभ्यो नमः । मृगान्कामयते ते मृगयवः । इदंयुरिदं कामयमान इति यास्कोक्तेः । सुप आत्मनः क्यजि नित्यच् । क्यचि चेति प्राप्तस्येत्वस्य पुन्नस्येति निषेधः । मृगयवो लुब्धकास्तेभ्यो वो नमः ॥ ८ ॥ १ ॥

**नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च । नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय चेति ॥**

देवानः कर्कुरास्तद्रूपेभ्यो नमः शुनां पतयः श्वपतयः । श्वपालकास्तेभ्यो वो युष्मभ्यं नमः । श्वपतय किरातवेषस्य रुद्रस्यानुचराः । नम इषुमद्भ्यो धन्वायिभ्य इत्यारभ्य ये वः शब्दास्ते पूजावाचका न युष्मदादेशाः इत्युभयतो नमस्कारमन्त्राः समाप्ताः । अथ नमस्कारोपक्रमा नाममन्त्रा उच्यन्ते ॥ भवन्त्युत्पद्यन्ते जन्तवोऽस्मादिति भवस्तस्मै नमः । रुतं दुःखं द्रावयति नाशयति रुद्रस्तस्मै नमः । शृणाति हिनस्ति पापमिति शर्वस्तस्मै नमः । पशूनज्ञान्पाति रक्षतीति पशुपतिस्तस्मै नमः । विषभक्षणेन नीला नीलवर्णा ग्रीवा कण्ठैकदेशो यस्य स नीलग्रीवस्तस्मै नमः । शितिः श्वेतः कण्ठो नीलातिरिक्तभागो यस्य शितिकण्ठस्तस्मै नमः शिती धवलमेचकौ ॥ ८ ॥ २ ॥

**नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च । नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमायेषुमते चेति ।**

कपर्दी । जटाजूटोऽस्यास्तीति कपर्दी तस्मै नमः । पाशुपतादिवेषेण । चकाराः सर्वे समुच्चयार्था ज्ञेयाः व्युप्तामुण्डिताः केशाः यस्य स व्युप्तकेशस्तस्मै नमः । यत्यादिरूपेण मुण्डितस्य । सहस्रमक्षीणि यस्य सहस्राक्षस्तस्मै इन्द्ररूपाय नमः । शतं धनूंषि यस्य शतधन्वा । धनुषश्चेत्यनङ् ।

तस्मै बहुधनुर्धारिणे नमः । गिरौ कैलासे शेतेऽसौ गिरिशयस्तस्मै नमः । शिपिविष्टाय विष्णुरूपाय । विष्णुः शिपिविष्ट इति श्रुतेः । यद्वा शिपिषु पशुषु विष्टः प्रविष्टः शिपिविष्टः । पशवो वै शिपिरिति श्रुतेः । सर्वप्राणिष्वन्तर्यामितया स्थित इत्यर्थः । यद्वा यज्ञो वै शिपिः । यज्ञेऽधिवक्तात्वेन प्रविष्टः । शिपिरादित्यो वा । मण्डलाधिष्ठातेत्यर्थः । शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवतीति यास्कोक्तेः । अतिशयेन मीढ्वान्मेढ्यरूपेण सेक्ता मीढुष्टमः । तस्मै नमः । इषवो बाणाः सन्त्यस्येतीषुमान् । तस्मै नमः । ८ । ३ ।

**नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय चेति ॥**

रूपतो नमस्काराः । ह्रस्वोऽल्पशरीरस्तस्मै नमः । वामनः सङ्कुचितावयवस्तस्मै नमः । बृहत्प्रौढांगस्तस्मै नमः । वर्षीयानातिशयेन वृद्धः । मत्स्येत्यादिना वर्षादेशस्तस्मै नमः । वृद्धो वयसाधिकस्तस्मै नमः । वर्द्धते विद्याविनयादिगुणैस्ते वृद्धाः पण्डिताः । क्विप् । तैः सह वर्तत इति सवृत् तस्मै नमः । जगतामग्रे भवोऽग्र्यस्तस्मै नमः । अग्राद्यत् । सर्वत्र मुख्यः प्रथमस्तस्मै नमः ॥ ८ ॥ ४ ॥

**नम ऽआशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च । नमः ऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय चेति ।**

अश्नुते जगद्व्याप्नोतीत्याशुस्तस्मै नमः । अजति गच्छतीत्यजिरो गतिशीलस्तस्मै नमः । शीघ्रे वेगवद्वस्तुनि भवः शीघ्र्यः । तत्र भव इति यत्सर्वत्र । शीभृ कत्थने । शीभते कथ्यते इति शीभ आत्मश्लाघी अचाद्यत् । तत्र भवः शीभ्यः शीभो जलप्रवाहो वा । शीभः क्षिप्रो वा । तत्र भवाय नमः । ऊर्मिषु कल्लोलेषु भवः ऊर्म्यस्तस्मै नमः । अवगतः स्वनो यस्मात्तदवस्वनं स्थिरजलं । यद्वा अवनीचैर्गर्तादौ स्वनोऽवस्वनस्तत्र भवाय नद्यां भवो नादेयस्तस्मै नमः स्त्रीभ्यो ढक् द्वीपे जलांतर्वर्त्तिनिर्जलभूमौ भवो द्वीप्यस्तस्मै नमः ॥ ८ ॥ ५ ॥

इतिसप्तदशोऽध्यायेचतुर्थोऽनुवाकः ।

**नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च । नमो मध्यमाय च । प्रगल्भाय च नमो जघन्याय च बुध्न्याय चेति ।**

वयोवस्थाविशेषाभिधायकाः षड् नमस्काराः । अत्यन्तं प्रशस्यो ज्येष्ठस्तस्मै नमः । ज्यचेति प्रशस्यशब्दस्येष्ठनि ज्यादेशः अत्यन्तं युवाऽल्पो वा कनिष्ठस्तस्मै नमः । युवाल्पयोः कनन्यतरस्यामिति कनादेशः । पूर्वं जगदादौ हिरण्यगर्भरूपेणोत्पन्नः पूर्वजस्तस्मै । अपरस्मिन्काले प्रळये कालाग्निरूपेण जातोऽपरजस्तस्मै नमः । मध्यसृष्टिसंहारांत-र्देवतिर्यगादिरूपेण भवो मध्यमस्तस्मै नमः मध्यान्मः । गल्भो धार्ष्ट्ये । गल्भनं गल्भो धार्ष्ट्यः । अपगतो गल्भो यस्मात्सोपगल्भोऽव्युत्पन्नेन्द्रियस्तद्रूपाय नमः । एकगर्भान्तरितो ऽपगल्भो वा । जघनं गवादीनां पश्चाद्भागस्तत्र भवो जघन्यस्तस्मै नमः । बुध्ने वृक्षादिमूले भवः बुध्न्यः तस्मै नमः ॥ ८ ॥ १ ॥

**नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च । नमः श्लोक्याय चावसान्याय च नमः उर्वर्याय च खल्याय चेति ।**

सोभं गन्धर्वनगरं तत्र भवः सोभ्यः । यद्वा । उभाभ्यां पुण्यपापाभ्यां सहितः सोभो मनुष्यलोकः । पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकमित्यथर्वणश्रुतेः । तत्र भवः सोभ्यस्तस्मै नमः । प्रतिसारो विवाहोचितं हस्तसूत्रमभिचारो वा तत्र भवः प्रतिसर्यस्तस्मै नमः । आहुः प्रतिसरं हस्तसूत्रे माल्यस्यमुंडने । महाशुद्धौ च भूपृष्ठे नियोज्यारक्षकङ्कणे । मन्त्रभेदेपीति विश्वः । यमे भवो याम्यः । पापिनां नरकार्तिदाता तस्मै नमः । क्षेमे कुशले भवः क्षेम्यस्तस्मै नमः । श्लोका वैदिकमन्त्रा यशो वा तत्र भवः श्लोक्यस्तस्मै नमः अवसानं समाप्तिर्वेदान्ता वा तत्रभवोऽवसान्यस्तस्मै नमः । उर्वरा सर्वसस्याढ्या भूस्तत्र धान्यरूपेण भव उर्वर्यस्तस्मै नमः । खलो धान्यविवेचनदेशस्तत्र भवः खल्यस्तस्मै नमः । खलः कल्के भुविधाने कल्के कर्णजपेऽधमे इत्युक्तेः ८।२

**नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च । नम आशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने चेति ।**

वनं वृक्षादिरूपेण भवो वन्यस्तस्मै नमः । वनं वृक्षेऽथो जलं वा । वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने । कक्षं तृणं वल्ली वा तत्र भवः कक्ष्यस्तस्मै नमः । कक्षो वीरुधिदोर्मूले कच्छे शुष्कवने तृणे । श्रूयते इति श्रवः शब्दस्तद्रूपाय नमः । प्रतिश्रवः प्रतिशब्दस्तद्रूपाय नमः । आशु शीघ्रा सेना यस्य स आशुषेणः । तस्मै नमः । आशुः शीघ्रो रथो यस्यासावाशुरथस्तस्मै नमः । शूराय युद्धधीराय नमः । अवभिनत्ति रिपूश्चैवं विदारयतीत्यवभेदी तस्मै नमः ॥ ८ ॥ ३ ॥

**नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च । नमः श्रुतेरपि श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय चेति ।**

बिल्मं शिरस्त्राणमस्यास्तीति बिल्मी तस्मै नमः । पटस्यूतं कार्पासगर्भं देहरक्षकं कवचं तदस्यास्ति कवची । तस्मै नमः । लोहमयं शरीररक्षकं वर्म तदस्यास्ति वर्मी तस्मै नमः । गजो परिस्थो गजाकारः कोष्ठो वरूथः । रथगुप्तिर्वासोस्यास्तीति वरूथी तस्मै नमः । वरूथं तु तनुत्राणे रथगोपनवेश्मने । श्रुतायप्रसिद्धाय नमः । श्रुता प्रसिद्धा सेना यस्यस श्रुतसेनस्तस्मै नमः । दुन्दुभौ भेर्यांभवो दुन्दुभ्यस्तस्मै नमः । दुन्दुभिस्तु भेर्यां दितितिसुते विषे । आहन्यते ताड्यते नेनेत्याहनं वाद्यसाधनं दण्डादि तत्र भव आहनन्यस्तस्मै नमः ॥ ८ ॥ ४ ॥

**नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च । नमस्तीक्ष्णेषवेचायुधिने च नमः स्वायुधाय च सुधन्वेचेति ।**

धृष्णोतीत्येवंशीलो धृष्णुः प्रगल्भस्तस्मै नमः । प्रमृशति विचारयति प्रमृशः पण्डितस्तस्मै नमः । इषुधयेति कः । निषङ्गिणे खड्गयुताय नमः । इषुधिमते तूणयुताय नमः । तीक्ष्णा असह्या इषवो बाणा यस्य स तीक्ष्णेषुस्तस्मै नमः । आयुधान्यन्यान्यपि सन्त्यायुधी । तस्मै नमः । शोभनमायुधं त्रिशूलं यस्य स स्वायुधस्तस्मै नमः । शोभनं धनुः पिनाकं यस्य स सुधन्वा तस्मै नमः ॥ ८ ॥ ५ ॥

इति सप्तदशोऽध्याये पञ्चमोनुवाकः ॥

**नमः स्रुत्याय च पथ्याय च नमः काट्याय च । नमः कुल्याय च सरस्याय च नमो नादेया पचवैशन्तायचेति ।**

स्रुतिः क्षुद्रः प्रवाहः क्षुद्रमार्गो वा । तत्र भवः स्रुत्यस्तस्मै नमः । यथा रथादियोग्यो मार्गस्तत्र भवः पथ्यस्तस्मै नमः । कुत्सितमटंति जना यत्रेति काटो विषममार्गस्तत्र भवः काट्यस्तस्मै नमः । काटकुलया प्रदेशो वा नीचैः पतन्त्यापो यत्रेति नीचोगिर्यधोभागः । ऋक्पूरब्धूरित्यप्रत्ययः । अतरूपसर्गेभ्योपईदिसप् शब्दस्येकारः । तत्र भवोनीप्यस्तस्मै नमः । कुल्या कृत्रिमा सरित्तत्र भवः कुल्यः कुलेषु देहेषु वाऽन्तर्यामिरूपेण भवः कुल्यस्तस्मै । कुलं देहेऽन्वये गणे । सरसि भवः सरस्यस्तस्मै नमः । नद्यां भवो नादेयस्तस्मै नदीजलरूपाय नमः । वेशान्तोऽल्पसरस्तत्र भवो वैशान्तस्तस्मै नमः ॥ ८ ॥ १ ॥

**नमः कूप्याय चावद्याय च नम ईध्याय चातप्याय च नमो मेघ्याय चविद्युत्पाय च नमो वर्ष्याय शावर्षाय चेति ॥**

कूपे भवः कूप्यस्तस्मै नमः । अवटे गर्तस्तत्रभवोऽवट्यस्तस्मै नमः । इन्धि दीप्तौ । ईध्र निर्मलं शरदभ्र तत्र भव ईन्ध्यः यद्वा ईध्रो दीप्तिर्यस्मात्स ईध्रो घनागमस्तद्भवाय नमः आतपे भव आतप्यः । तस्मै नमः । मेघे भवो मेघ्यस्तस्मै नमः । विद्युति भवो विद्युत्पस्तस्मै नमः । वर्षे वृष्टयाँ भवो वर्ष्यस्तस्मै नमः । अवर्षे वृष्टिप्रतिबन्धे भवोऽवर्ष्यस्तस्मै नमः ॥ ८ ॥ २ ॥

**नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः । सोमाय च रुद्राय च नमस्ताम्राय चारुणाय चेति ॥**

वाते भवो वात्यस्तस्मै नमः । रिष्यन्ति नश्यन्ति भूतान्यत्रेति रेष्मा प्रलयकालः अन्येभ्योपि दृश्यन्त इति मनिन् । तत्र भवो रेष्म्यस्तस्मै नमः । प्रलयेऽपि विद्यमानायेत्यर्थः । वास्तुनि गृहभुवि भवो वास्तव्यस्तस्मै । वेश्मभूर्वास्तुरस्त्रियाम् । वास्तुं गृहभुवं पाति रक्षति वास्तुपस्तस्मै नमः । उमया सहितः सोमस्तस्मैः नमः । रुव दुःखं द्रावयति रुद्रो दुःखनाशकस्तस्मै नमः ताम्रो रक्तवर्णउदयद्रविरूपेण । तस्मै नमः । अरुणईषद्रक्तउदयोत्तरकालीनार्करूपेण ॥ ८ ॥ ३ ॥

**नमः शङ्गवे च पशुपतये च तु नम उग्रायच भीमायच ।**

**नमोग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च । नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय्येति ।**

शं सुखं गमयति माययति शङ्गुः । शं सुखरूपा गावो वाचो वादरूपा यस्येति वा तस्मै नमः । पशूनां प्राणिनां पतिः पालकस्तस्मै नमः । उग्र उद्गूर्णायुधः शत्रून् हन्तुं तस्मै नमः । भीमः शत्रुभयोत्पादकः । अग्रे पुरो वर्तमानो हन्तीत्यग्रे वधस्तस्मै नमः । दूरे वर्तमानो हन्तीति दूरेवधस्तस्मै नमः । हन्तीति हन्ता तस्मै । लोके यो हन्ति तद्रूपेण रुद्रएव हन्तीत्यर्थः । अतिशये हन्तानीयान् । तस्मै नमः । तुरिष्ठ मेयः स्त्विति तृचो लोपः । प्रलये सर्वहन्तेत्यर्थः । हरयो हरिताः केशाः पत्ररूपा येषां तेभ्यो वृक्षेभ्यः कल्पतरुरूपेभ्यो नमः । तारयति संसारमिति तारस्तस्मै नमः ॥ १० ॥ ४ ॥

**नमः शम्भवे च मयोभवे च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय चेति ॥**

शं सुखं भवतीति शम्भुः । यद्वा शं सुखरूपं भवनं आविर्भवनम् । मुक्तिरूपो भूः तस्मै नमः । मयः सुखं भवत्यस्मान्मयो भूः सुखप्रदः तस्मै नमः शं लौकिकसुखं करोति शङ्करस्तस्मै नमः । मयो मोक्षं सुखं करोति मयस्करस्तस्मै नमः । स्रक्चन्दनादिरूपेण लौकिकसुखकारित्वम् । शास्त्राचार्यादिरूपेण ज्ञानप्रदत्वात् मोक्षसुखकारित्वमित्यर्थः । एताभ्यां पदाभ्यां साक्षात् सुखकारित्वम् । पूर्वपदाभ्यां तद्द्वारा कारयितृत्वमिति विवेकः । शिवः कल्याणरूपो निःपापस्तस्मै नमः । शिवतरोऽत्यन्त शिवो भक्तानपि निःपापान् करोति तस्मै नमः । अस्यां कण्डिकायां षड्यजूंषि । पूर्वस्या दशोक्तेः ॥ ५ ॥

इति सप्तदशोध्याये षष्ठोनुवाकः ॥

**नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च । नमस्तीर्थ्याय च कूल्याय च नमः शष्पाय चफेन्याय चेति ॥**

पारे संसाराब्धेः परतीरे जीवन्मुक्तरूपेण भवः पार्यस्तस्मै नमः । अवारे अर्वाक्तीरे संसारमध्ये संसारित्वेन भवोऽवार्यस्तस्मै नमः । पारावारे परार्वाची तीरे पात्रं पदन्तरमिति कोशः । प्रकर्षेण मन्त्रजपादिना पापतरणहेतुः प्रतरण-

स्तस्मै नमः । उत्कृष्टेन तत्त्वज्ञानेन संसारोत्तरणहेतुरुत्तरणस्तस्मै नमः । तीर्थे प्रयागादौ भवस्तीर्थ्यस्तस्मै नमः । कूले तीरे भवः कूल्यस्तस्मै नमः । शष्पं बालतृणं गङ्गातीरोत्पन्नकुशाङ्कुरादौ तत्र भवः शष्प्यस्तस्मै नमः । फेने डिंडिरे भवः फेन्यस्तस्मै नमः ॥ ८ ॥ १ ॥

नमः सिकत्याय च प्रवाह्याय च नमः किंशिलाय च क्षयणाय च । नमः कपर्दिने च पुलस्तिने च नम इरिण्याय च प्रपथ्याय चेति ॥

सिकतासु भवः सिकत्यस्तस्मै नमः । प्रवाहे स्रोतसि भवः प्रवाह्यस्तस्मै नमः कुत्सिताः क्षुद्राः शिलाः शर्कराद्रूपाः पाषाणा यत्र प्रदेशे स किंशिलस्तद्रूपाय नमः । क्षिय निवासगत्योरापो यत्र स क्षयणः स्थिरजलप्रदेशस्तस्मै नमः । कपर्दो जटास्यास्ति कपर्दी तस्मै नमः । इरिणमूषरं वितृणदेशस्तत्र भव इरिण्यस्तस्मै नमः । प्रकृष्टः पन्थाः प्रपथो बहुसेवितो मार्गस्तत्र भवः प्रपथ्यस्तस्मै नमः ॥ ८ ॥ २ ॥

नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च । नमो हृद्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय चेति ॥

व्रजे गोसमूहे भवो व्रज्यस्तस्मै नमः । गोष्ठा ध्वनिवहा व्रजाः गावस्तिष्ठन्ति यत्रेति तद्गोष्ठं तत्र भवो गोष्ठ्यस्तस्मै नमः । तल्पं शय्या तत्र भवस्तल्प्यस्तस्मै नमः । गेहे गृहे भवो गेह्यस्तस्मै नमः । हृदे भवो हृद्यो जलजन्तुरूपस्तस्मै नमः । निवेष्प आवर्तो नीहारजलं वा तत्र भवो निवेष्प्यस्तस्मै नमः । कुत्सितमटन्ति गच्छन्ति जना यत्र सकाटो दुर्गारण्यदेशः । काटः कूपो वा तत्र भवः काट्यस्तस्मै नमः गह्वरे विषमे गिरिगुहादौ गभीरे जले वा तिष्ठतीति गह्वरेष्ठस्तस्मै नमः । गह्वर बिलभेदयोः ॥ ८ ॥ ३ ॥

नमः शुष्क्याय च हरित्याय च नमः पांसव्याय च रजस्याय च । नमो लोप्याय चोलप्याय च नमः ऊर्व्याय च सूर्व्याय चेति ।

शुष्के काष्ठादौ भवः शुष्क्यस्तस्मै नमः । हरिते आर्द्रे काष्ठादौ भवो हरित्यस्तस्मै नमः । पांसुषु धूलिषु भवः पांसव्यस्तस्मै नमः । रजोगुणः ।

रजसि गुणे परागे वा भवो रजस्यस्तस्मै नमः । रजो रेणुपरागयोः स्त्रीपुष्पेषु गुणभेदे च । लुप्यते नश्यति गमनादि यत्रेति लोपोऽगम्यमदेशस्तत्र भवो लोप्यस्तस्मै नमः । लोपः । संहारो वा । उलपा वल्वजादि तृणविशेषास्तत्र भव उलप्यस्तस्मै नमः । उलपस्तु गुल्मिनी तृणभेदयोः । उर्व्यां भूमौ भव उर्व्यस्तस्मै नमः । दीर्घ आर्षः । ऊर्वो वडवानलो वा । शोषणं ऊर्वः सूर्वः कल्पानलस्तत्र भवः सूर्व्यस्तस्मै नमः ॥ ८ ॥ ४ ॥

**नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च । नमऽ आखिदते च प्रखिन्दते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नम इति ।**

तरूणां पत्ररूपाय नमः । शल्लृ शातने शदनं शदः शातनं । यद्वा । पर्णानि शीयन्ते पक्वानि पतंति यत्र पृचपर्णसदः पतितपर्णस्थितिदेशस्तस्मै नमः । गुरोः द्वयो । तुदादिभ्यः शः । उद्गुरते उद्यमं करोति उद्गुरमाण उद्यमी तस्मै नमः । अभिहंति शत्रूनित्यभिघ्नन् । तस्मै नमः । आ समंताद् खिद्यते दैन्यं करोति अभक्तानामित्याखिदन् तस्मै नमः । प्रकर्षेण खेदयति पापिन इतिप्रखिदंस्तस्मै नमः । इषून् बाणान् कुर्वंति ते इषुकृतस्तेभ्यो रुद्रेभ्यो नमः । धनूंषि चापानि कुर्वंति ते धनुष्कृतः । तेभ्यो वा युष्मभ्यं रुद्रेभ्यो नमः ॥ ८ ॥ युष्मदादेशयोगा स्मत्पक्षा एते रुद्राः । तिस्रोऽशीतयो रुद्राणां समाप्ताः । एवं चत्वारिंशदधिकशतद्वयमन्त्रै रुद्रस्य सर्वात्मत्वमुक्तं । अथ रुद्रेषु प्रधानभूतानामग्निवायुसूर्याणां सम्बन्धीनि चत्वारि यजूंष्युच्यंते । चतुर्णामादौ नमः शब्दाच्चत्वार्येव यजूंषि । आद्यं चतुर्दशाक्षरं त्रीणि सप्ताक्षराणि तानि व्याहृतिसंज्ञानि ।

**नमो वः किरिकेभ्यो देवानाᳬ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्य इति ।**

देवानां हृदयेभ्यो रुद्राणां हृदवत्प्रधानभूतेभ्योऽग्निवायुसूर्येभ्यो वो युष्मभ्यं नमः । देवानां हृदयेभ्य इत्यग्निर्वायुरादित्य एतानि हृ । तानि देवानां हृदयानीति श्रुतेः । हृदयानीव हृदयानि । यथाँगानां हृदयं प्रधानमेवमेते रुद्राणां प्रधाना इत्यर्थः । कीदृशेभ्यस्तेभ्यः । किरिके-

भ्यः । वृष्ट्यादिद्वारा जगत्कुर्वंति किरिकास्तेभ्यः । एते हीदं सर्वं कुर्वंतीति श्रुतेः । विचिन्वंन्ति पृथक् कुर्वंति धर्मिष्ठं चेति विचिन्वत्कास्तेभ्योऽग्न्यादिभ्यो नमः । विविधं क्षिण्वंति हिंसन्ति पापमिति विक्षिणत्कास्तेभ्योऽग्न्यादिभ्यो नमः । आसमन्तान्निर्हता निर्गता सर्गादौ लोकेभ्य इत्यानिर्हतास्तेभ्यो रुद्रावतारेभ्योऽग्निवायुसूर्येभ्यो नमः । हंतिर्गत्यर्थः । तेभ्यस्तस्तेभ्यस्त्रीणिज्योतींष्यजायंतामियोयं पवते सूर्य इति श्रुतेः ॥४॥९॥

इति सप्तदशोऽध्यायेसप्तमोऽनुवाकः ॥

**द्रापे अंधसस्पते दरिद्र नीललोहित । आसां प्रजानामेषां पशूनां मा भेर्मारोङ्मो च नः किं च नाममदिति ॥**

हेद्रापे । द्रा कुत्सायां । द्रापयति कुत्सितां गतिं पापिनां प्रापयतीति द्रापिः । अंधसः सोमस्य पते पालक । अधस्पत इति अधस्पत इति सोमस्य पत इत्येतदिति श्रुतेः । हेदरिद्र निःपरिग्रह अद्वितीयत्वादिति भावः । हेनीललोहित ! कण्ठे नीलोऽन्यत्र लोहितः । हेशिव ! नोऽस्माकमासां प्रजानां पुत्रादीनामेवं पशूनां गवादीनां त्वं माभेः । भयं मा कुरु । बहुलं छन्दसीति शपो लुक् । मो रोक् । रुजो भङ्गे । प्रजानां पशूनां भङ्गं मो इति माकार्षीः । कर्मणि षष्ठ्यौ । च पुनर्नोऽस्माकं किञ्चन किमपि द्विपदचतुः पदादिकं मो मा आममत् । रुग्णं मो मा कार्षीत् । यद्वा रुग्णं मो मास्तु । अम रोगे । लुङि धातोरमागम आर्षः ॥ १ ॥

**इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा शमसद्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरमिति ॥**

वयं इमाः अस्मदीया मतीर्बुद्धीः रुद्राय शङ्कराय प्रभरामहे । प्रहरामहो समर्पयामो रुद्रं स्मराम इत्यर्थः । हृग्रहोर्भः । कीदृशाय । तवसे महते बलवते वा । उभयत्र तवः शब्दः पठितः । कपर्दिने जटिलाय । क्षयद्वीराय । क्षयंतो निवसन्तो वीराः शूरा यत्र स क्षयद्वीरस्तस्मै शूरपुत्रायेत्यर्थः । क्षयन्तो नश्यन्तो वीरा रिपवो यस्मादिति वा द्विपदे पुत्राद्ये चतुःपदे गवादि पशवे सप्तमी वा । द्विपदचतुष्पदविषये यथा येन प्रकारेण शं सुखं । असद् भवति । अस्मिन्ग्रामेऽस्मन्निवासस्थाने विश्वं-

सर्वं प्राणिजातं पुष्टं समृद्धं अनातुरं निरुपद्रवं स्वस्थं च यथा असत् स्यात्तथा मतिं हरे समर्पयाम इत्यर्थः ॥ २ ॥

**या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजा । शिवा ऽऋतस्य भेषजी तया नो मृल जीवस इति ।**

हेरुद्र या ते तवेदृशी तनूः शरीर । तया तन्वा नोऽस्मान् जीवसे जीवितुं मृड सुखय । कीदृशी । शिवा शांता । अघोरा विश्वाहा । विश्वानि च तान्यहानि च विश्वाहा । कालाध्वनोरत्यंतसंयोग इति द्वितीया । तस्या आकारः । सर्वेष्वहस्सु सर्वदा शिवा कल्याणकारिणी । भेषजी औषधरूपा संसारव्याधिनिवर्तिका । ऋतस्य यज्ञस्य शिवा समीचीना भेषजी । निवर्तिकौषधिः ॥ ३ ॥

**परि णो हेती रुद्रस्य वृज्यात्परि त्वेषस्य दुर्मतिर्महीगात् । अवस्थिरा मघवद्भ्यस्तनुष्वमीढ्वः स्तोकाय तनाय मृलेति ।**

रुद्रस्य शिवस्य हेतिरायुधं नोऽस्मान्परिवृणक्तु । परितो वर्जयतु । अस्मान्मा हिंस्त्वित्यर्थः । त्वेषस्य क्रुद्धस्य , दुर्मतिर्दुष्टामतिर्द्रोहबुद्धिश्चास्मान्परिवृणक्तु । महीगात् । मेहति सिञ्चतीति मीढ्वान् । हेमीढ्वः कामाभिवर्षुक स्थिरास्थिराणि दृढानि धनूंषि त्वं अवतनुष्व । अवतारय । ज्यारहितानि कुरु । किमर्थं । मघवद्भ्यः मघमिति धननाम । मघं हविर्लक्षणं धनं विद्यते येषां ते मघवन्तो यजमानास्तदर्थं । यजमानानां भयनिवृत्तये इत्यर्थः । किं च तोकाय पुत्राय तनयाय पौत्राय मृड । पुत्रपौत्रं च सुखय । कर्मणि चतुर्थी ॥ ४ ॥

**मीढुष्टम शिवा नः सुमना भव परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहीति ॥**

अतिशयेन मीढ्वान्मीढुष्टमः । अत्यन्तं शिवः शिवतमः । हे मीढुष्टम अतिशयेन कामसेक्तः । हेशिवतमअत्यन्तं कल्याणकर्त्तः नोऽस्मान् प्रति शिवः शान्तः सुमना हृष्टचित्तश्च भव । किञ्च । परमे दूरस्थे उन्नते वा वृक्षे वटादौ आयुधं त्रिशूलादिकं निधाय संस्थाप्य कृत्तिं चर्म परिदधानः सन् आचर आगच्छ । तपश्चरेति वा । आगच्छन्नपि पिनाकं धनुर्बिभ्रत् । धारयन्सन् । आगहि । आगच्छ ज्यारहितं धनुर्मात्रं शोभार्थं धारयन्नागच्छेत्यर्थः ॥ ५ ॥

**विकिरिद्रविलोहित नमस्ते अस्तु भगवः । यास्ते स- हस्रꣳहेतयोऽन्यमस्मन्निवपन्तु ता इति ।**

विविधं किरं घाताद्युपद्रवं द्रापयति नाशयति विकिरिशः य- द्वा विकिरति विक्षिपति शरानिति विकिरिः । विकिरिः सन् । बाणान् मुंचन् द्रावयति शत्रूनिति विकिरिद्रः । हेविकिरिद्र ! हेविलोहित ! वि- गतं लोहितं कल्मषं यस्मात्स विलोहितः । हेशुद्धस्वरूप हेभगवः भगवन् ! ते तुभ्यं नमोऽस्तु हेरुद्र ! ते तव याः सहस्रं हेतयोसंख्यान्यायुधानि । ता हेतयोऽस्मदन्यमस्मद्व्यतिरिक्तं निवपन्तु घ्नन्तु ॥ ६ ॥

**सहस्राणि सहस्रशो बाह्वोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखाकृधीति ।**

हेभगवः भगवन् षड्गुणैश्वर्यसंपन्न तव बाह्वोर्हस्तयोर्याः सहस्राणि सहस्रशो हेतयः सन्ति तासां हेतीनां मुखानि शल्या- नि पराचीनानि अस्मत्तः पराङ्मुखानि त्वं कृधि कुरु करोतेः शपिलुसेश्रुश्रृणुपृकृवृभ्यश्छन्दसीति हेर्धिः । कीदृशस्त्वं । ईशानः ईष्टे इतीशानः जगन्नाथः । सहस्राणि सहस्रसंख्यानि । धनुः शूलं चर्म- त्यादि जातिभेदेन सहस्रसंख्यत्वम् । सहस्रशः । सहस्रं सहस्रमिति स- हस्रशः । संख्यैकवचनाच्च वीप्सायामिति शस्प्रत्ययः । धनुरादीन् । प्र- त्येकं सहस्रसंख्यकमित्यर्थः ॥ ७ ॥ भूमिस्था रुद्रा उच्यन्ते ।

**असंख्याता सहस्राणि ये रुद्रा अधिभूम्यां । तेषांꣳ सहस्र- योजने व धन्वानि तन्मसीति ।**

असंख्यातानि अपरिमितानि सहस्राणि अमिता ये रुद्रा भूम्यां अ- धिभूमेरुपरिस्थिताः । तेषां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयो- जनानि यस्मिंस्तादृशे पथि सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि । अव- तन्मः । अवतारयामः । अपज्यानि कृत्वाऽस्मत्तो दूरं क्षिपाम इत्यर्थः ॥८॥ अन्तरिक्षस्था रुद्रा उच्यन्ते ।

**अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषांꣳ सहस्रयोजने- व धन्वानि तन्मसीति ।**

अस्मिन्नंतरिक्षे अधिश्रित्य ये भवा रुद्राः स्थितास्तेषां धन्वान्यव त-

न्मसीति पूर्ववत् । कीदृशेऽन्तरिक्षे । महति विशाले । अर्णवे । अर्णांसि जलानि विद्यन्ते यत्र तदर्णवं मेघाधारत्वात् । अर्णसो लोपश्चेति वमत्यधोऽन्तलोपश्च ॥ ९ ॥ द्युस्था रुद्रा उच्यन्ते ।

**नीलग्रीवा शितिकण्ठा दिवꣳ रुद्रा उपाश्रिताः । तेषाꣳ सहस्रयोजने वधन्वानि तन्मसि इति ।**

ये रुद्रा दिवं द्युलोकमुपाश्रिताः । स्वर्गस्थास्तेषामिति पूर्ववत् । कीदृशाः नीलग्रीवाः । नीला श्यामा ग्रीवा येषां ते । शितिः श्वेतः कंठो येषां ते । विषग्रासात्किंयान्कंठभागः कृष्णः । कियान् श्वेत इत्यर्थः ॥१०॥ पातालस्था रुद्रा उच्यन्ते ।

**नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः । तेषाꣳ सहस्रयोजने व धन्वानि तन्मसीति ।**

अधोभागे ये शर्वाः रुद्राः क्षमाचराः । क्षमायां भुवोऽधोभागे चरन्ति गच्छंति क्षमाचराः पातालवर्तमानास्तेषामित्युक्तम् । नीलग्रीवाः । इतिशितिकण्ठाः पूर्ववद्विशेषणे ॥ ११ ॥

**ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः । तेषाꣳ सहस्रयोजने व धन्वानि तन्मसीति ।**

ये रुद्रा वृक्षेष्वश्वत्थादिषु स्थिताः । कीदृशाः शष्पिञ्जराः शष्पं बालतृणं तद्वत्पिञ्जरा हरितवर्णा नीलग्रीवाः । नीलाग्रीवा येषां ते । कण्ठे नीलवर्णाः । तथा केचन विलोहिताः । विशेषेण रक्तवर्णाः यद्वा । विगतं लोहितं रुधिरं येषां ते । लोहितपदं मांसादीनामुपलक्षणम् । विगतलोहितादि धातवः । तेजोमयशरीरा इत्यर्थः तेषामित्याद्युक्तम् ॥ १२ ॥

**ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषाꣳ सहस्रयोजनेवधन्वानि तन्मसीति ।**

ये ईदृशा रुद्रास्तेषां धन्वानीति पूर्ववत् । कीदृशाः । भूतानां देवविशेषाणामधिपतयः । अन्तर्हितशरीराः सन्तो मनुष्योपद्रवकरा भूतास्तेषां पालकाः । तत्र केचित् । विशिखासः । विगता शिखा येषान्ते । शिखाशब्दः केशोपलक्षकः । मुण्डितमुण्डा इत्यर्थः । अन्ये कपर्दिनः । जटाजूटयुताः ॥ १३ ॥

ये पथां पथि रक्षिण ऐलबृदा आयुर्युधः । तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसीति ।

ये चेदृशा रुद्रास्तेषामित्युक्तम् । कीदृशाः । यथा लौकिकवैदिकमार्गाणां अधिपतय इति पूर्वऋचोऽनुषङ्गः । तथा पथि रक्षिणः । पथो मार्गास्तानेवान्यानपि रक्षन्ति पालयन्ति ते पथि रक्षिणः । ऐलबृदाः । इलानामन्नानां समूह ऐलं अन्नसमूहः । यद्वा । इला पृथ्वी तस्या इदमैलं अन्नं तद्बिभ्रन्ति ते ऐलभृतः । त एव परोक्षवत्सा ऐलबृदा उच्यन्ते । अन्नैर्जन्तूनां पोषका इत्यर्थः । आयुर्युधः । आयुषा जीवनेन युध्यन्ते । यावज्जीवयुद्धकाराः । यद्वा । आयुर्जीवनं पणीकृत्य युध्यन्ते ते आयुर्यधः ॥१४॥

ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसीति ।

ये रुद्रास्तीर्थानि प्रयागकाश्यादीनि प्रचरन्ति । गच्छन्ति । कीदृशाः । सृकाहस्ताः । सृकैरायुधानि । हस्तेषु येषां ते । निषङ्गिणः । निषङ्गाः खड्गा विद्यन्ते येषां ते । सृकाहस्तत्वेपि निषङ्गित्वोक्तिः । खड्गप्राधान्याय ॥ १५ ॥

येन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसीति ।

ये रुद्रा अन्नेषु भुज्यमानेषु स्थिताः सन्तो जनान् विविध्यन्ति । विशेषेण ताडयन्ति धातुवैषम्यं कृत्वा रोगानुत्पादयन्तीत्यर्थः । तथा पात्रेषु पात्रस्थक्षीरोदकादिषु स्थिताः सन्तः क्षीरादिपानं कुर्वतो जनान्विविध्यन्ति । अन्नोदकभोक्तारो व्याधिभिः पीडनीया इति भावः । तेषामिति पूर्ववत् ॥ १६ ॥

य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे ।
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसीति ॥

ये रुद्रा एतावन्तः एतत्प्रमाणं येषां ते । अतिशयेन बहवो भूयांसः उक्तेभ्योऽति बहवश्च ये रुद्रा दिशो दश वितस्थिरे आश्रिताः । दश दिशो व्याप्य स्थिताः । तेषां धनूंषि अवतन्मः इति पूर्ववत् ॥ १७ ॥

नमोस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः । तेभ्यो दश

प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीची दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नो मृळयन्तु ते नो मृळयन्तु ते नोवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति ।

त्रिलोकस्था रुद्रा उच्यन्ते । दिवि द्युलोके ये रुद्रा वर्तन्ते । येषां च रुद्राणां वर्षं वृष्टिरेव इषवो बाणाः । आयुधस्थानीया वृष्टिः । अतिवृष्ट्यादीतिभिः प्राणिनो घ्नन्ति । तेभ्यो रुद्रेभ्यो नमो नमस्कारोस्तु । तेभ्यो रुद्रेभ्यो दश दशसंख्याकाः प्राचीः प्रागभिमुखा अङ्गुलीः कुर्वे इति शेषः। प्राङ्मुखाञ्जलिकरणे प्राच्यो दशांगुलयो भवन्ति । दक्षिणा । दक्षिणाभिमुखाः दशांगुलीः कुर्वे । प्रतीचीः प्रत्यङ्मुखा दशांगुलीः कुर्वे । उदीचीरुदङ्मुखा दशांगुलीः कुर्वे । ऊर्ध्वा उपरि दशांगुलीः कुर्वे । अञ्जलिं बध्वा सर्वदिक्षु नमस्करोमीत्यर्थः । तेभ्यो रुद्रेभ्यो नमोऽस्तु । अञ्जलिपूर्वं नतिरस्तु । ते रुद्रा नोऽस्मान् मृळयन्तु सुखयन्तु । अवन्तु रक्षन्तु । किं च ते रुद्रा यं पुरुषं द्विषन्तीति शेषः । वयं च यं द्विष्मः । यस्य द्वेषं कुर्मः । च पुनर्यो नरो नोऽस्मान् । द्वेष्टि । तं पुरुषं एषां पूर्वोक्तानां रुद्राणां जम्भे दंष्ट्राकराले मुखे दध्मः स्थापयामः । अस्मद्विषमस्मद्वेष्यं च नरं रुद्राः । पूर्वोक्ता भक्षयन्त्वित्यर्थः । अस्मांश्चावन्तु च ।

नमोस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वा त इषवः । तेभ्यो दश प्राची दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु ते नो मृलयन्तु ते नोवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति ।

ये अन्तरिक्षे रुद्रा वर्तन्ते । तेभ्यो रुद्रेभ्यो नमोस्तु । येषां रुद्राणां वात इषवः । वायुरायुधस्थानीयः । कुवातेनाग्निं विनाश्य वातरोगं चोत्पाद्य जनान् घ्नन्ति । तेभ्योऽन्तरिक्षस्थेभ्यो वातेषुभ्यो रुद्रेभ्यो नमोस्तु शिष्टं व्याख्यातं । नमोस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोअस्तु ते नो मृलयंतु ते नोवंतु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जभे दध्म इति । ये पृथिव्यां रुद्रा वर्तंते । येषां अन्नं इषवः । अन्नमदनीयं वस्तु आयुधम् । अपथ्यान्नभक्षणे कदन्नभक्षणे क्षौर्ये वा भक्ष्ये रोगमुत्पाद्य जनान् घ्नन्ति।तेभ्यः पृथिवीस्थेभ्योन्नायुधेभ्यो रुद्रेभ्यो नमोस्तु । तेस्मान्मृळयंत्वित्यादि पूर्ववत्

एते प्रत्यवरोहमन्त्राः । अथ प्रत्यवरोहान् जुहोतीति व्यवहाराय संज्ञाकरणं ॥

इति सप्तदशेऽध्यायेऽष्टमोऽनुवाकः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये सप्तदशोऽध्यायः ॥

अथाष्टादशोऽध्यायः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

सप्तदशेऽध्याये शतरुद्रीयहोम उक्तः ॥ अष्टादशेऽध्याये चितिपरिषेकादिमन्त्रा उच्यन्ते । कात्यायनः ॥ चित्वा परिषिञ्चत्यग्निं दक्षिणे निकक्षेऽद्रिं कृत्वा इमन्नूर्जमित्यद्रेरग्नेपक्षस्यापरसन्धिः कक्षस्तस्य समीपं निकक्ष । दक्षिणपक्षापरसन्धिसमीप आत्मभागेऽश्मानं निधायोदकुम्भमादायाद्रेरारभ्य सवत्सपुच्छमग्निं प्रदक्षिणं जलधारया समन्तादग्निं सिञ्चतीत्यर्थः ॥ पाठस्तु ॥

अश्मन्नूर्जं पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पतिभ्यो अधिसम्भृतं पयः । तां न इषमूर्जं धत्त मरुतः सꣳ रराणा इति ।

हे मरुतः । तां प्रसिद्धां इषं । अन्नं । ऊर्जं रसं च नोऽस्मभ्यं धत्त दत्त यूयं किंभूताः यूयं सरराणाः । सम्यक् रान्ति ते सरराणाः । सम्यक् दातारः । रा दाने । बहुलं छन्दसीति जुहोत्यादिभ्यः श्लुर्द्वित्वं च शानचि परे । कीदृशां । इषं । ऊर्जं । अश्मन् ॥ अश्मनि पाषाणे पर्वते । विन्ध्यहिमवदादौ शिश्रियाणां । श्रयतीति शिश्रियाणां । श्रयतेः । शानचि जुहोत्यादित्वं । तथा ऊर्जं सारभूतं । बलहेतुं । पर्वाणि विद्यन्ते यस्मिन्स पर्वतः पर्वमरुद्भ्यां तन्प्रत्ययः । अश्मातीत्यश्मा । अन्येभ्योपि दृश्यते इति अश्नातेर्मनिन् । अश्नवति पर्ववति मेघे ऊर्जं जलं शिश्रियाणां । आश्रितां वृष्टिसम्पाद्यामित्यर्थः । तथा अद्भ्यः जलेभ्यः ओषधिभ्यो यवादिभ्योऽश्वत्थादिभ्यः सकाशात् । अधिकं सम्पादितं । गोद्वारेण पयो दुग्धं च शिश्रियाणां गौरयः पीत्वौषधिवनस्पतीन्भक्षयित्वा पयो दोग्धि । तां द्विरूपां मेघोत्थां जलरूपां गोसमुत्थां पयोरूपां चेषमूर्जं ददातीत्यर्थः । मरुतो हि वर्षस्येशत इति श्रुतेः ॥ कात्यायनः ॥ ॥ अश्मस्ते क्षुदित्यद्रौ कुम्भं कृत्वा मयि त ऊर्गित्यादौ चैव द्विरपरं । सेकान्तेऽश्मनि कुम्भं अश्मस्ते क्षुदिति निधाय मयि त इति पुनरादाय पुनर्द्विवारमभिषिञ्चेत्यादित्यर्थः । अश्मस्ते क्षुन्मयि त ऊर्गिति । अश्नातीत्यश्मा । हे अश्मन् ।

सर्वभक्षक अग्ने ते तव क्षुत् । क्षुधा अस्तु यद्वा हविर्वा भोजयत्वात् । कुम्भमादत्ते । मयि ते हे अश्मन् । ते तव ऊर्क् सारभागो मयि अस्त्विति शेषः ॥ कात्यायनः ॥ कुम्भेष्टिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणास्यति यं द्विष्म इति । तं पाषाणं कुम्भे कृत्वा दक्षिणे वेदिश्रोणौ पूर्वामुखस्तिष्ठन् । दक्षिणस्यां दिशि साश्मानं घटंनिरस्यतीत्यर्थः । यं द्विष्मस्तं ते शुगृच्छत्विति । ते कं । वय यं नरं द्विष्मः । अस्मद्द्वेषविषयं तव शोको गच्छतु । कात्यायनः अनपेक्षमित्योदङ् प्राङ् तिष्ठन्नात्मन उपरि मापणान्ते जपती मा म इति । कुम्भनिरसनानन्तरं । अपश्यन्नेत्य दक्षिणवेदिश्रोणिसमीपे ईशाणोभिमुखस्तिष्ठन्नात्मन उपरि हस्तौ प्रसार्य यावत् । स्प्रष्टुं शक्नोति तावत् । स्पृष्टे मा म इतिकंडिकाद्वयं स्वरेण जपतीत्यर्थः । पाठस्तु ॥

इमा मे ऽअग्न ऽइष्टका धेनवः सन्त्वेकाच दश च शतं च शतं च शतं च सहस्रं च सहस्रं चायुतं चायुतं च नियुतं चनियुतं च । अर्बुदं च न्यर्बुदं च समुद्रश्च मध्यंचान्तश्च परार्धश्च परार्धश्च । एतामे अग्न इष्टधेनवः सन्त्वमुत्रामुष्मिँल्लोक इति ॥

हे अग्ने या इष्टकाः पञ्चसु चितिषूपहिता इमा इष्टका मे मह्यं मदर्थं धेनवोऽभिमतफलदोग्ध्र्यः सन्तु त्वत्प्रसादादस्मिँल्लोके इति शेषः । तासां संख्यामाह । एकेत्यादि । अग्नेकादि परार्धपर्यन्तैः शब्दैरुत्तरोत्तरं दशदशगुणिता संख्योच्यते । एका एकत्वं संख्या विशिष्टा सा दशगुणिता दश संख्यामापद्यते । सा दशगुणिता शतं भवति पूर्वसंख्यासहितोत्तरसंख्याग्रहणं आधिक्याय । शतं दशगुणितं सहस्रं भवति । दशगुणितमयुतं भवति । अयुतं दशगुणितं नियुतं भवति । अर्बुदं दशगुणं न्यर्बुदं भवति । न्यर्बुदशब्देन शंकुसंख्या ज्ञेया । एतेषां ग्रहणं अन्तसमुद्रान्तवर्तिना खर्वमहापद्मशंकुसंज्ञानां संख्यानामुपलक्षकं । तेनाब्जं दशगुण खर्वं खर्वं दशगुणं निखर्वं । निखर्वं दशगुण महापद्मं महापद्मं दशगुणं शंकुः । शंकुर्दशगुणः समुद्रः । समुद्रो दशगुणो मध्यं दशगुणमन्तः । अन्तो दशगुणः परार्धः । चकारा इतरेतरसमुच्चयार्थाः । एवमेकाद्यष्टादशसंख्या संज्ञा समिता इष्टका एता हे मे

धेनवः संस्थित पूर्वोक्तस्य निगमनं । एतद्धेतुभवनं कुत्राध्यते तदाह । अमुत्र । अन्यजन्मनि । तथामुष्मिन् लोके स्वर्गे सर्वत्र इष्टदाः संतिस्यर्थः । यद्यपिनियतसंख्ययेष्टकाश्चीयन्ते तथापि मन्त्रसामर्थ्याद्वर्धमाना एकादिपरार्द्धांतसंख्या भवन्तीति भावः ॥ ॥ द्वितीयमन्त्रपाठस्तु ॥

ऋतवस्थ ऋतावृध ऋतुष्ठा स्थ ऋतावृधः । घृतश्च्युतो मधुश्च्युतो विराजो नाम कामदुघा अक्षीयमाणा इति ।

अपि च हेइष्टका यूयं ऋतवः स्थ वसन्ताद्यात्मिका भवथ । ऋतं सत्यं यज्ञं वा वर्द्धयतीति ऋतावृधः । ऋतुषु वसंतादिषु तिष्ठन्त्यः स्थ । भवथा ऋतावृध इति पुनर्वचनमादरार्थः । घृतं श्चोतंती घृतश्च्युतः घृतस्राविण्यः । मधुश्च्युतः । मधु माक्षिकं स्रवन्त्यः एवं गुणविशिष्टा भवथ । ता यूयं विराजो नामविशेषेण राजिता इति विराजः । विराज इति प्रसिद्धा धेनवो भूत्वा लोकान्तरे कामदुघा यद्वस्तु कामयते तत्सर्वस्य दोग्ध्र्यो भवत । तथा अक्षीयमाणाः । क्षयरहिता भवत । कात्यायनः ॥ ॥ मण्डूका वका चेतशिखावर्णी नद्धा कर्षति समुद्रस्येति प्रत्यृचमिति । मण्डूकादीन् दीर्घवंशाग्रे बद्धा तेन समुद्रस्य त्वेत्यादिभिः सप्तभिर्ऋग्भिः प्रतिमन्त्रं चितमग्निं विकृषेत् । यथाऽग्ने विकृषेत् । यथाऽग्नेरुपरि सर्वत्र मण्डूकादिभिः स्पर्शो भवति । तथा दीर्घ वंशाग्रेण कर्षेदित्यर्थः ॥ ॥ तत्र प्रथमः ॥

समुद्रस्य त्वा वकयाग्नेपरिव्ययामसि । पावको ऽअस्मभ्यꣳ शिवो भवेति ।

अवकाशो बालं । हेअग्ने ! त्वा त्वां समुद्रस्यावकया समुद्दनशीलस्य उदकस्य सम्बन्धिना शैवालेन परिव्ययामसि परितः संवरणं कुर्म उपरि भागे सर्वत्र विकर्षाम इत्यर्थः । त्वं चास्मभ्यमस्मदर्थं पावकः । शोधकः शिवः शांतश्च भवः ॥ अथ द्वितीयः ॥ ॥

हिमस्य त्वा जरायुणाग्ने परिव्ययामसि । पावको ऽअस्मभ्यꣳ शिवो भवेति ॥

हेअग्ने ! त्वं हिमस्य शैत्यस्य जरायुणा जरायुवदुत्पत्तिस्थानीयेन शैवालेन शेषं पूर्ववत् ॥ ॥ अथ तृतीयः ॥

उपज्मन्नुपवेतसेऽवतर नदीष्वा । अग्ने पित्तमपामसि

मण्डूकि ताभिरागहि सेमन्नो यज्ञं पावकवर्णं शिवं कृधीति ।

हेअग्ने ! त्वं उपज्मन् इमा पृथिवी तस्यां उपावतर तरुणा-वेतसे वंजुलशाखायां उपावतर । तथा नदीष्वा नदीजलेष्वपि अवतारा अपां पितमसि तेजो मवाते । एवमग्निं सम्बोध्येदानीयं मण्डूकीमाह । हेमण्डूकि ! मण्डूका भेकास्तेषां स्त्री मण्डूकि तत्सबोधनं हेमण्डूकि ! । त्वं ताभिः पूर्वोक्ताभिरद्भिः सह आगहि आगच्छ । सा त्वमिममनुष्ठीयमानं नोस्मदीयं यज्ञं पावकवर्णं अग्निसमानतेजस्कं शिवफलमदत्वेन शांतं कृधि कुरु ॥ अथ चतुर्थः ॥ ॥

अपामिदं न्ययनं समुद्रस्य निवेशनं । अन्यां स्ते अस्मत्तपंतु हेतयः पावको ऽअस्मभ्यं शिवो भवेति ॥

इदं चित्तजिरस्थानं अपां न्ययनं नियमेन माप्तिस्थानं । यागद्वारा सापः माप्यन्ते । अत एवापां बहुलत्वात् समुद्रस्य निवेशनं गृहस्थानीयं तद्रूप हे अग्ने ते त्वदीया हेतयः । अस्मत्तोन्यान्विरोधिनः पुरुषान् तपंतु क्लेशयन्तु । अस्मभ्यमस्मदर्थं पावकः शोधकः शिवः शान्तश्च भव ॥ अथ पञ्चमः ॥

अग्ने पाकरोचिषा मन्द्रया देवजिह्वया । आदेवान्व क्षि यक्षि चेति ॥

हेअग्ने ! पावक शोधक देवद्योतनात्मक रोचिषा दीप्तिमता मन्द्रया जिह्वया वाचा देवानां वक्षि आह्वय यज च ॥ अथ षष्ठी ॥

सनः पवक दीदिवोग्ने देवाँ इहावह । उपयज्ञं हविश्च न इति ॥

हेअग्ने ! पावक शोधक दीदिवः दीप्यमानः अग्ने नोऽस्मदर्थे देवानां इह कर्मण्यावह नोस्माकं इमं यज्ञ हविश्च उप देवसमीपे-मापय ॥ अथ सप्तमः ॥

पावकया यश्चितयंत्या कृत्या क्षामन्नुरुच उषसो न भानुना । तूर्वन्तया मंनेतशस्यन् रण ऽआपो घृणेन ततृपाणो अजर इति ॥

योगिनः पावकया पावयित्र्या चिन्तयन्त्या चेतयित्र्या चित्तं कुर्वाणा या कृपा कल्पनया सामर्थ्येन युक्तः सन् क्षामन् क्षाञ्चि-

भूमौ रुरुचे दीप्तवान् । तत्र दृष्टान्तः । उषसो न भानुना । यथा उषसः संबंधिना प्रकाशेन दीप्यन्ते तद्वत् । किञ्च योऽग्निः एतद्स्य गमनकुशलस्याश्वस्य यामन्निषायकरणे युद्धे तूर्वन् परबलानि हिंसन्निव आघृणेतु सर्वतो दीप्यते खलु सोऽग्निः अजरो जरारहितः । ततृषाणो न तृष्णायुक्तो भवति । यथा लोके शीघ्रगमनस्वभावमश्वं वामहस्तगतेन खलीनेन दृढं नियम्य रणे प्रवर्तमानः पुरुषः परबलानि हिंसनसन्तं त्वरते एवमयमग्निः प्रज्वलति । न कदाचिज्जीर्यति नाप्यसौ तृष्णायुक्तः । किन्तु तृप्त इत्यर्थः । कात्यायनः ॥ ॥ चित्यारोहणं नमस्त इतीति चित्यमग्निमारोहेत् ॥ पाठस्तु ॥

**नमस्ते ह रसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्याँऽस्ते अस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यᳬ शिवो भवेति ॥**

हेऽग्ने ! ते तव रसे रसानां संहर्त्रे शोचिषे शोषणहेतवे तेजसे नमोऽस्तु । किंच ते तव अर्चिषे पदार्थप्रकाशकाय । तेजसे नमोऽस्तु । अन्यानित्यादि पूर्ववत् ॥ कात्यायनः ॥ स्रुवमातृणायां पञ्चगृहीतं जुहोति । नृषदेवेलिति प्रतिमंत्रमिति । स्रुवमातृणायामिष्टकायां पञ्चवारं गृहीतमाज्यं नृषदेवेलित्यादिभिः पञ्चभिर्मन्त्रैः क्रमेण जुहुयात् । पाठस्तु ।

**नृषदेवेलप्सुषदेवेट् बर्हिषदेवेट् वनसदेवट् स्वर्विदेवेट् इति ।**

नृषु मनुष्येषु जाठराग्निरूपेणासीदतीति नृषत् । अप्सु वडवानलरूपेण स्वर्गं विन्दते लभते इति स्वर्वित् ॥ कात्यायनः ॥ कुशैः प्रोक्षति ये देवा इति द्वाभ्यामिति । दधिमधुघृतवत्यां पात्र्यां ये कुशाः समासिक्ताः तैः ये देवा इति द्वाभ्यां मन्त्राभ्यां चित्यग्निप्रोक्षणं कुर्यात् ॥ तत्र प्रथममन्त्रपाठस्तु ॥

**ये देवा देवानां यज्ञिया यज्ञियानाᳬ संवत्सरीणमुप भागमासते । अहुता दोहविषो यज्ञे अस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्येति ।**

द्विविधा देवा हविर्भुज इन्द्रवरुणादयः । शरीरनिर्वाहकाः प्राणापानादयश्च दीप्यतीति व्युत्पत्तिरुभयत्रापि सिध्यति । उभयेऽप्येते यज्ञियाः तत्रेंद्रादयो यज्ञेन पूज्यत्वात् । यज्ञियाः प्राणादयस्तु यज्ञेन पूजनीयत्वाद्यज्ञियाः । एवं सति यज्ञियानां इन्द्रादिना देवतासम्बन्धिनः प्राणरूपाये यज्ञियाः देवाः संवत्सरेण साध्यं चित्यग्निभागं भजनीयं उपासते ये प्राणाद्या अहुतादः हुतं स्वाहाकारेण समर्पितमदंतीति हुतादः इन्द्रादयः तद्विपरीतत्त्वात्प्राणाद्याः अहुतादः । ये तथाविधाः प्राणाद्या देवा अस्मिन्यज्ञे हविषो हवीरूपस्य मधुनो घृतस्य च सामर्थ्याद्दध्नश्च तत्तं भागं स्वयं पिबंतु । मदीयेन स्वाहाकारेणार्पणेन विनास्वयमेव दधिमधुघृतांशं स्वीकुर्वन्त्वित्यर्थः । अथ द्वितीयः ॥

ये देवा देवेष्वधिदेवत्वमायन्येब्रह्मणः पुर एतारो अस्य । येभ्यो न ऋते पवते धाम किंचन न ते दिवो न पृथिव्या अधिस्नुषु ॥ इति ।

ये प्राणा देवेष्विन्द्रादिष्वपि अधिष्ठातृत्वेन देवत्वमायन् प्राप्ताः प्राणैरधिष्ठापिता एवेन्द्रादिविग्रहा व्यवहरंतीत्यर्थः । किंचास्य ब्रह्मणः श्रामयमाणस्याग्नेः परिवृढस्य पुर एतारः पुरतो गंतारो निर्वाहका इत्यर्थः । खलु प्राणैर्विना चीयमानोऽग्निर्निर्वोढुं शक्यते किंच येभ्य ऋते यान्प्राणान्विना किंच न धाम किमपि शरीरं न पवते न शुद्धं भवति । ते प्राणरूपा देवा दिवो न दिवापि न तिष्ठन्ति । किं तर्हि स्नुषु पर्वतसानुसदृशशरीरेष्वेतश्चक्षुरादिगोलकेषु अधि आश्रित्य वर्तन्ते ॥ कात्यायनः ॥ प्राणदा इत्यवरोहतीति चित्यग्नेः सकाशादवरारोहेत् पाठस्तु ।

प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः । अन्यांस्ते अस्मत्तपंतु हेतयः पावको अस्मभ्यं शिवो भवेति ।

यजमानाय प्राणं ददातीति प्राणदा इत्यग्निरभिधीयते । प्राणं सुस्थिरं करोतीत्यर्थः एवमुत्तरत्रापि योज्यं । वर्चो वर्चः । वरिवोधनं । अन्यानित्यादि पूर्ववत् ॥ इत्यष्टादशोध्याये प्रथमोनुवाकः ॥

प्रथमेऽनुवाकेपरिसेचनादिकमुक्तं ॥ अथ द्वितीयेऽनुवाके वैश्वकर्मणे होमात्पूर्वं कर्तव्या या एकाहुतिरस्ति सा वैश्वकर्मण होमस्य प्रथमाहुतिश्चेत्युभयम-

भिधीयते । कात्यायनः । पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचेनेति । पाठस्तु ।

अग्निस्तिग्मेन शोचिषा यासद्विश्वन्न्यत्रिणं । अग्निर्नो वनुते रयिमिति ।

अयं धीयमानोऽग्निस्तिग्मेन शोचिषा तीक्ष्णेन तेजसा अत्रमदनं भक्षणं तदस्यास्तीत्यत्रि तादृशं सर्वं राक्षसादिकं नियासत् । यास च-पक्षेपे । नितरामुपक्षीणं करोतु । किंचायमग्निर्नोऽस्मदर्थं रयिं धनं व-नुते ददातु । कात्यायनः षोडशगृहीतार्यमनुवाकशेषेणेति । षोडशगृही-तस्याज्यस्याज्येन वैश्वकर्मण होमस्य प्रथमाहुतिर्थं इमेत्यादिभिरष्टभिर्ऋग्भि-र्जुहुयात् । तत्र प्रथमः ।

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पि-ता नः । स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ २ऽआ-विवेशेति ।

यः परमेश्वरः विश्वा भुवनानि जुह्वत् प्रलयकाले पृथिव्यादी-निमान् सर्वान् लोकान् स्वात्मन्याहुतिप्रक्षेपवत्संहरन्नृषिरतीन्द्रियद्रष्टा स-र्वज्ञः होता संहाररूपस्य होमस्य कर्ता नोऽस्माकमपि सहर्ता पुनः स्रष्टा वसन् सर्वज्ञो यः परमेश्वरः स्वयमेवासीत् । अत एव सर्वा अप्युपनि-षद एवमाहुः । आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किञ्च नमीषत् सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयमित्याद्याः । स तादृशः परमेश्वरः आशिषा बहु स्यां प्रजायेयेत्येवंरूपया पुनरिच्छया द्र-विणमिच्छमानः धनोपलक्षितं जगद्भोगमपेक्षमाणः प्रथमच्छत्स्वकीयमेकमेवा-द्वितीयमुत्कृष्टं रूपमाच्छादयन् परानभिव्यक्तोपाधिना विवेश जीवरूपेण प्र-विष्टः एतच्च सर्वमुपनिषद्याम्नातं । सोऽकामयत बहुः स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदꣳ सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा तदेवानुप्राविशदिति । एवमन्या अप्युपनिषद उदाहार्याः । अ-थ द्वितीयः ।

किꣳ स्विदासीदधिष्ठानमारंभणं कतमत्स्वित्कथासीत् । यतो भूमिं जनयन्विश्वकर्मा विद्यामौर्णोन्महिना विश्व-चक्षा इति ।

लोके हि घटं चिकीर्षुः कुलालादयो गृहादिकं किञ्चित्स्थानमधि-

ष्टाय मृद्रूपेणारम्भकद्रव्येण चक्रादिरूपैरुपकरणैर्घटं निष्पादयंति । ई-श्वरस्य निरपेक्षत्वात्तत्सर्वमत्राक्षिप्यते । द्यावापृथिव्योरुत्पादनवेलायामी-श्वरस्याधिष्ठानं निवासस्थानं किंस्विदासीत् न किंचिदित्यर्थः । त-था आरम्भनं कतमत्स्विदासीत् । आरभ्यते अनेनेत्यारम्भणमुपादान-कारणं तदपि कतमद्भवेत् । नहि द्यावापृथिव्यौ जनयितुं किंचिदु-पादानं सम्भवति तथा दण्डचक्रादिनिमित्तमपि कथा कथंभूतं किं-प्रकारमासीत् । न किंचित्संभवतीत्यर्थः । विश्वचक्षाः । सर्वद्रष्टा वि-श्वकर्मा यतो यस्मिन् काले भूमिं भूलोकं द्यां द्युलोकं च जनयन्वर्तते तस्मिन् काले महिना स्वमहिम्ना साधनान्तरं विनैव विशेषेण ऊ-र्णोत् सृष्टौ द्यावापृथिव्यावाच्छादितवान् । अनन्यशक्तिरयं परमेश्वर इत्यर्थः ॥ ॥ अथ तृतीयः ॥

विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत वि-श्वतः स्यात् । सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी ज-नयन्देव एक इति ॥

चक्षुरादिभीणनां द्यावापृथिव्योश्चोत्पत्तेरूर्ध्वं विश्वरूपः प-रमेश्वर एवं भासते । कथमिति तदुच्यते । विश्वतश्चक्षुर्विश्वतः सर्वतश्च-रस्य सर्वप्राणात्मकत्वात् यस्य यस्य प्राणिनो ये चक्षुषी तस्य तदुपाधि-कस्य परमेश्वरस्यैवेति सर्वत्रास्य चक्षूंषि सम्पद्यन्ते । एवं मुखहस्तपादे-ष्वपि योजनीयं । स तादृश एको देवो द्यावाभूमी जनयन् । बाहुभ्यां बाहुस्थानीयाभ्यां धर्माधर्माभ्यां निमित्तकारणाभ्यां सन्धमति । धम नि-र्गत्यर्थः । जगत्सर्वं सम्पगज्ञातं मात्र स्वधीनं करोति तथा पतत्रैः पत-नशीलैः अनित्यैः । पञ्चभूतैरुपादानकरणैर्जगत्स्वाधीनं करोति सन्धमति ॥ अथ चतुर्थी ॥

किंस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्ट-तक्षुः । मनीषिणो मनसा पृच्छते दुतयदध्यातिष्ठद् भुवनानि-धारयन्निति ॥

लोको हि सौधप्रासादनिर्माणः कस्मिंश्चिन्महति वने कश्चिन्महान्तं वृक्षं छित्त्वा तक्षणादिना स्तम्भादिकं सम्पादयति । इह तु परमेश्वरमे-

रिता जगत्स्रष्टारो यतो यस्माद्वनाद्यं वृक्षमादाय द्यावापृथिवी निष्टतक्षुः । तक्षणेन द्यावापृथिव्यौ निष्पादितवन्तः । तद्वनं किंस्विद् । किन्नाम स्यात् न किञ्चित्तादृशं सम्भवति । तथा कः स वृक्षः तादृशः प्रौढो वृक्षोऽपि क आसन् कश्चिदसम्भवति । हेमनीषिणो विद्वांसः । मनमास्वकीयेन विचार्य पृच्छत इद सर्वं पृच्छत इत एव किञ्चेश्वरो भुवनानि धारयन् । यदध्यतिष्ठत् । यत्स्थानमधिष्ठितवान् । तदपि स्थानं सर्वतः पृच्छत । एतस्य प्रश्नस्य सर्वस्याप्युत्तरं श्रुत्यन्तरेषु ब्रह्म वनं ब्रह्म स वृक्ष आसीत् । इत्येतस्यामृच्याम्नातं स्वरूपव्यतिरिक्तवनादि निरपेक्षत्वमेवास्योत्तरस्याभिप्रायः । अतोत्रापि किंस्विद्वनमित्याक्षेपपरत्वेनैव याजिन पृच्छतेत्यस्याप्ययमभिप्रायः । भवाद्भः पृष्टोप्यभिज्ञानिरपेक्षत्वमेव वदिष्यतीति । अथ पञ्चमी ।

या ते धामानि परमाणि या च माया मध्यमा विश्वकर्मन्नुते मा । शिक्षा सखिभ्यो हविषि स्वधा वः स्वयंयुजस्व तन्वं वृधान इति ॥

हेविश्वकर्मन् ! ते त्वदीयानि परमाणि धामानि उतापिच या मध्यमापायानि च मध्यमस्थानानि इमानि सर्वाणि स्थानानि सखिभ्यः सखिवति चयेभ्यो यजमानेभ्यो हविषि । हविः प्रदाननिमित्त शिक्षोपदिश हेस्वधावः ! स्वधोपलक्षितहविर्लक्षणान्नवत् विश्वकर्मन् तन्व वृधानः । यजमानशरीरं वर्धमानः । स्वयं यजस्व त्वदनुग्रहमंतरेण कोवान्यो यष्टु शक्त इत्यर्थः । अथ वाचस्पतिमित्याद्यास्तिस्र ऋचोऽष्टमे ध्याये व्याख्याताः ॥

इत्यष्टादशाध्याये द्वितीयोऽनुवाकः ।

द्वितीयेऽनुवाके वैश्वकर्मण होमस्य प्रथमाहुतिरुक्ता ॥ ॥ अथ तृतीये द्वितीयाहुतिरुच्यते ॥ ॥ कात्यायनः ॥ ॥ चक्षुषः पितेत्यपराहुत्यानुवाकेनेति । षोडशगृहीतस्याज्यशेषेण वैश्वकर्मण होमस्य द्वितीयमाहुतिं चक्षुषः पितेत्यष्टभिर्ऋग्भिर्जुहुयादिति शेषः ॥ ॥ तत्र प्रथमा ॥

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने । यदेद ता अदद हंत पूर्व आदिद्द्यावापृथिवी अप्रथेतामिति ॥

चक्षुश्चक्षुरादेः प्राणसमुदायस्य पितोत्पादको धीरो धैर्यवान्विश्वकर्मा मनसा स्वेच्छया घृतं घृतवत्त्वात्प्राणिनामुपभोगसाधनभूते एते द्यावापृथिव्यौ नम्नमाने परस्परानुकूलेन नमनोपेते अजनदुत्पादितवान् । यदेव पूर्वे प्रथमोत्पन्ना अन्ती जननयुक्ताश्चेतावंतश्चक्षुरादिप्राणा अददृहंत दृढा अभवन् । आदित अनंतरमेव द्यावापृथिवी अप्रथेतां द्यावापृथिव्यौ विस्तृते अभूता ॥ ॥ अथ द्वितीया ॥

**विश्वकर्मा विमना आद्विहाया धाता विधाता परमोतदृक् । तेषामिष्टानि समिषामदंति यत्रास सप्तऋषीन्पर एकमाहुरिति ॥**

विश्वविषयाणि कर्माणि सृष्टिस्थितिसंहाररूपाणि कर्माणि यस्यासौ विश्वकर्मा स च विमना विभूतमनाः तेस्य तेषु कर्मसु मन एवमापन्न इत्यर्थः । आत् । अपि च यस्मादेवं तस्मात्सर्वं एव विधाता धाता विहाया इति चोच्यते । विधातोत्पादकः । धाता पोषकः । विशेषेण जहाति परित्यजतीति विहायाः संहर्त्तेत्यर्थः । उतापि च अत एव परमः सर्वेभ्य उत्कृष्टः सम्यक्पश्यतीति सदृक् सर्वज्ञ इत्यर्थः । यत्र यस्मिन्परः परस्मिन्नीश्वरेण सप्तऋषीन् एकमाहुः । य एते मरीच्यत्रिप्रमुखाः सप्त ऋषयो विविधा दृश्यंते सर्वे सृष्टेः प्राक् परमेश्वरेणैकीभूता इति वेदान्तपाणा आहुः । स च परमेश्वरस्तेषां सप्त ऋषिप्रभृतीनामिष्टान्यपेक्षितानि स्थानादीनि इषा स्वेच्छामात्रेण सम्पादयति । तेन च ते महर्षयो मंदंति हृष्यन्ति ॥ अथ तृतीया ॥

**यो नः पिता जनिता यो विधाता धामानि वेदभुवनानि विश्वा । यो देवानां नामधा एक एव तं संप्रश्नं भुवनायंत्यन्येति ॥**

यो विश्वकर्मा नोस्माकं पिता पालयिता न केवलं पालकः किन्तु जनिता उत्पादकोपि । किमनेनास्माकमुत्पादयिताऽतिसंकोचेन यो विधाता सर्वस्य जगतः उत्पादकः । यश्च विश्वकर्मा विश्वा विश्वानि चतुर्दशरूपाणि धामानि वेद जानाति किञ्च यः देवानां नामधाः स्वयमेव सर्वदेवरूपेणाग्नींद्रमित्रादीनि देवतानामानि धारयति । अत एवान्यत्रा-

स्मार्तं । इन्द्रमित्रवरुणमग्निं अद्भुतो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुरिति । अत एवाद्भुतानां देवानां नामानि धारयन्नपि स्वयमेक एवं त विश्वकर्माणं परमेश्वरं अन्या भुवना तस्मादन्यानि सृष्टानि सर्वाणि भुवनानि संप्रश्नो यथा भवति तथा यन्ति । प्रलयकाले एकत्र प्राप्नुवन्ति । एकीभावयुक्ते प्रलय एक ईश्वरः कानि भुवनानीति एवं संप्रश्नः सम्यक्‌प्रश्नं प्रवर्त्तते । विभागाभावेन श्रुत्यनभिज्ञैर्ज्ञातुमशक्यत्वात् ॥ ॥ अथ चतुर्थी ।

तऽआयजन्त द्रविण१ँ समस्मा ऋषयः पूर्वे जरितारो न भूना । असूर्त्ते सूर्त्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानीति ।

पूर्वोदाहृतेन विश्वकर्मणा प्रथमोत्पादिता ये विश्वस्रष्टारः असूर्त्ते असुभिः प्राणैः प्रेरिते जंगमात्मके सूर्त्ते प्राणादिव्यतिरिक्तेन प्रेरिते स्थावरात्मके निषत्ते निषण्णे स्थिते रजसि लोके इमानि भूतानि सर्वान् तान् प्राणिनः समकृण्वन् सम्यगुदपादयन् । ते पूर्वे स्रष्टारः अस्मै सृष्टाय जगते द्रविणं धनरूपं भोग्यजातं समायजन् तं सम्यक् संपादयतः कीदृशास्ते ऋषयः अतीन्द्रियद्रष्टारः सर्वज्ञा इत्यर्थः । भूनाजरितो न भूम्ना स्वकीयेन महत्त्वेन कदाचिदपि जीर्णा नश्वरा न भवन्ति ॥ अथ पञ्चमी ॥

परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति । क१ँ स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त पूर्वे इति ।

हृदयपुण्डरीके यदीश्वरमस्ति तत्तत्त्वं दिवापरः । द्युलोकादपि दूरे तिष्ठति एना पृथिव्या परः अस्याः पृथिव्याः पर अस्याः पृथिव्या अदूरे तिष्ठति देवेभिरसुरैः परः देवेभ्योऽसुरेभ्यश्च दूरे तिष्ठति सकारान्तः परः शब्दो दूरवाची दूरत्वं नामविलक्षणं सर्वजगादिलक्षणत्वात् गुरुशास्त्रविमुखैर्न ज्ञायते इत्यर्थः । किञ्च यत्र यस्मिन्नपि पूर्वे प्रथमोत्पादिताः सर्वे देवाः समपश्यन्त स्वस्थानानि सम्यग्द्रष्टवन्तः । तं क स्विद्गर्भं कं नाम गर्भं आपः प्रथमं दध्रे दध्रिरे आद्यैर्द्भिः पूर्वं धृते गर्भे देवमनुष्यादयः सर्वे प्राणिनो वर्तते इत्येवं शास्त्रप्रसिद्धः सोऽपि गर्भक इति न ज्ञायते यदा

स्थूलोऽप्ययं जगदाधारो न ज्ञायते । तदानीमत्यन्तसूक्ष्मं तत्त्वं न ज्ञायते इति किमु वक्तव्यमित्यभिप्रायः ॥ ॥ अथ षष्ठी ॥

तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छंत विश्वे । अजस्य नाभा अध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुरिति ।

इदानीं गुरुशास्त्रानुशासनोपेतेषु विद्यमानस्तत्त्वनिर्णयोऽभिधीयते । यत्र यस्मिन्ब्रह्माण्डगर्भे विश्वे सर्वेपि देवाः समगच्छन्त सङ्गताः सम्भूय वर्तते । तमिममेव गर्भमापः प्रथमं दध्रे धृतवत्यः । तद्वारेण मकार एव स्पष्टीक्रियते । अजस्य जन्मरहितस्य परमेश्वरस्य नाभा नाभौ नाभिस्थानीयस्वरूपमध्ये एकङ्किचिद्बीजं अध्यर्पितं अधिकत्वेन स्थापितं यस्मिन् बीजं विश्वानि सर्वाण्यपि भुवनानि भूतजातानि तस्थुः । तद्बीजमर्पितं । तथा च स्मर्यते । अपमेव स सर्जादौ तासु वीर्यमवासृजात् । तदण्डमभवद्धैमं सूर्यकोटिसमप्रभमिति ॥ अथ सप्तमी ॥

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्तीति ॥

यो विश्वकर्मा इमा इमानि भूतानि जजानोत्पादितवान् । विश्वकर्माणं न विदाथे न स्पृष्टा हेजीवा यूयं न जानीथ । देवदत्तोहं यज्ञदत्तोहमित्येवं सर्वेऽपि वयमात्मानं विश्वकर्माणं जानीम इति यद्युच्येत तदसत् तर्ह्यहं प्रत्ययागम्यं नैवं रूपं विश्वकर्मणः परमेश्वरस्य तत्त्वं किन्तु युष्माकमहं प्रत्ययगम्यानां जीवानामज्ञानमन्तरमभ्यन्तरं अन्यदहं प्रत्ययगम्यादतिरिक्तं सर्ववेदान्तवेद्यमीश्वरत्वं बभूव भवति विद्यते नैव रूपवत्तदपि कुतो न विदुम इति चेत् नीहारेण आवृता । भवतो नीहारसदृशेनाज्ञानेनावृतत्त्वान्न जानन्ति। यथा नीहारो नात्यन्तसमन्तात् दृष्टेरावरकत्वात् । नात्यन्तं सत् काष्ठपाषाणादि चान्तरेण संवद्धुं अयोग्यत्वात् । एवमज्ञानमपि नात्यन्तमसन् । ईश्वरतत्त्वावरकत्वात् । नापि सत् बोधमात्रनिवर्तत्वात् । दृश्येनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वेपि जीवाः प्रावृता न केवलं प्रावृत्ता न केवलं प्रावृतत्वं किन्तु जल्प्याच देवोहं ममेदं गृहक्षेत्रमित्याद्यनंतजल्पनपराश्च किञ्च असुतृपः । असुषु तृप्यन्तीति असुतृपः । केनापि प्रकारेण प्राप्यान्वा

तानेतेन तृप्यन्ति भवता न तु परमेश्वरतत्त्वं विचारयितुं प्रवर्तन्ते न केवल-मिहलोके भोगमात्रतृप्तिः किन्तु उक्थशासः परलोकेऽपि भोगं सम्पादयितुं नानाविधयज्ञेषु उक्थानि शस्त्राणि शंसतीत्युक्थशासः । तादृशा भूत्वा भवन्तश्चरन्ति ऐहिकामुष्मिकभोगयोः सर्वदा प्रवर्तते । तस्मादज्ञानं मिथ्याज्ञान-पराधीनानां भवतां नास्ति तत्त्वज्ञानमित्यर्थः ॥ अथाऽष्टमी ॥

**विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वोऽअभवद्द्वितीयः । तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रेति ॥**

ब्रह्माण्डमध्यगतानां उत्पत्तिरुच्यते । अण्डमध्ये प्रथमं विश्वकर्मा देवतिर्यगादिविश्वभेदस्य कर्ता सत्यलोकवासी चतुर्मुखो देव अजनिष्टोत्पन्नः । आदित् । अनन्तरमेव तदपेक्षया सगन्धर्वो गो वाचः धारयिता पृथिव्या वा गन्धर्वोऽग्निः । अग्निर्वै गन्धर्व इति श्रुतेः । सद्वितीयः ससहायः । अभवत् । उत्पन्नः । ततोयः पिता पालयिता ओषधीनां जनिता उत्पादकः । तदपेक्षया तृतीयोऽभवत् देवमाया गर्भं ब्रह्माण्डं परमेश्वरः पुरुत्रा व्यदधात् । बहुधा विभक्तं कृतवान् ॥

इत्यष्टादशोऽध्याये तृतीयोऽनुवाकः ॥

तृतीयेऽनुवाके वैश्वकर्मणहोमस्य द्वितीयाहुतिरुक्ता ॥ एतावता वैश्वकर्मण होमः समापितः ॥ अथ चतुर्थेऽनुवाके ब्रह्मणो जप्यं चाऽप्रतिरथाख्यं सूक्तमाम्नायते ॥ तत्र अहवनीयेऽग्नौ प्रणीयमानेऽध्वर्युणा संप्रेषितो ब्रह्मा दक्षिणोत्तरतोऽनुव्रजन् आशुः शिशान इत्येतत्सूक्तं अप्रतिरथाख्यं जपेत् ॥ तथा च कात्यायनः ॥ ब्रह्माऽप्रतिरथं जपतीति संप्रेष्यतीति शेषः संप्रैषसामर्थ्यादेव ब्रह्मा एतत्सूक्तं जपेदित्युक्तं भवति ॥ तत्र प्रथमा ॥

**आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनो निमिष एकवीरः शत९ सेना ऽअजयत्साकमिन्द्र इति ॥**

अयमिन्द्रः परमैश्वर्योपेतोऽग्निः शतं सेनाः शतसंख्याकाः परकीयसेनाः साकमेकप्रयत्नेनैवाजयत् । कीदृश इन्द्रः आशुः शीघ्रगामी शिशानस्तीक्ष्णः । अत्युग्र इत्यर्थः । तत्र दृष्टान्तः ॥ वृषभो न भीमः यथा वृषभोऽभयङ्करः । घनाघनः शत्रूणामतिशयेन घातकः । चर्षणीनां परसेनागतानां

मनुष्याणां क्षोभणः । क्षोभहेतुः । संक्रन्दनः समीचीनं संक्रन्दनं परभयहेतुध्वनिविशेषो यस्यासौ संक्रन्दनः । अनिमिषः कदाचिदपि निमेषं न करोति अत्यन्तसावधान इत्यर्थः । एकवीरः परनैरपेक्ष्येण स्वयमेक एव जेतुं शक्तः शूरः ॥ अथ द्वितीयः ॥

संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णोति ॥

युधो युद्धार्थिनो हे नरा मनुष्या ! इन्द्रेणानुगृहीताः सन्तस्तत्परबलं जयत वशीकुरुत । वशीकृत्य च तत्सहध्वं अभिभवन्तु विनाशयतेत्यर्थः । कीदृशेनेन्द्रेण संक्रन्दनेनानिमिषेण पूर्ववद्व्याख्येयम् । जिष्णुना जयशीलेन युत्कारेण युद्धकारिणा दुश्च्यवनेन च्यावयितुं दुःशक्येन धृष्णुना नीतिरहितेन इषुहस्तेन । बाणाद्यायुधोपेतेन । वृष्णा प्रधानेन वर्षकेण ॥ अथ तृतीयः॥

स इषुहस्तैः सनिषङ्गिभिर्वशी सᳪंस्रष्टा सयुध इन्द्रो गणेन । सᳪंसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्तेति ॥

इषवो हस्तेषु येषां भटाना ते इषुहस्तास्तैः साकं सः इन्द्रो वशी परबलं स्ववशं करोति निषङ्गिणः खड्गहस्तास्तैः साकं स इन्द्रो वशी स्वकीयैर्द्धानुष्कैः खड्गहस्तैश्चोपेतत्वात्परसैन्यं वशीकरोतीत्यर्थः । यद्वा परसैन्यगतैर्द्धानुष्कः खड्गहस्तैः सहितान् परकीयान् सर्वान्वशीकरोति । स इन्द्रो युधं योधगणेन परकीयगट्टनमुद्दिश्य संस्रष्टा सम्यक् मिश्रितो भवति । मिश्रीभूय च ये स्तेन संसृष्टास्तान् सर्वान् जयतीति संसृष्टजित् । सोमपाः यजमानाना यागेषु सोमं पिबति अत एव बाहुशर्द्धी बाहुबलोपेतः उग्रधन्वा उग्रधनुष्कः प्रतिहिताभिरस्तेन धनुषा मेरिताभिरिषुभिरस्ताक्षेप्ता विनाशयितेत्यर्थः ॥ अथ चतुर्थो ॥

बृहस्पते परिदीया रथेन रक्षोहाऽमित्राँ२ऽअपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानामिति ॥

बृहती वाक् तस्याः पालको बृहस्पतिरिन्द्रः । अत एवान्यत्राम्नातम् । वाग्वै बृहती तस्या एष पतिस्तस्माद् बृहस्पतिरिति । व्याकरणकर्तृत्वादिन्द्रस्य वाक्पतित्वम् । तथान्यत्र समाम्नातम् । देवा इन्द्रमब्रुवंस्ताईं नो

वाच व्याकुर्वीति। तथाविध हेइन्द्र! त्वं रथेन परिदीय सर्वतो गच्छ। कीदृश इन्द्रः। रक्षोहा राक्षसाना हता अमित्रान् शत्रूनपबाधमानः। यथा अपनयन्ति तथा बाधमानः सेनाः परकीयाः प्रभञ्जन् प्रकर्षेण भग्नाः कुर्वन् प्रमृणः प्रकर्षेण स हिंसकः। युद्धेन जयन् सर्वत्र विजयमानः। अस्माकमस्मदीयाना स्थानामविता पृथिरक्षको भव ॥ ॥ अथ पंचमी ॥

बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः। अभिर्वारो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोविदिति ॥

हेइन्द्र! त्व जैत्रं जयशील रथमातिष्ठ आरोह। कीदृशस्त्वं बलं परकीयसामर्थ्यं विजानातीति बलविज्ञायः। स्थविरः पुरातनः। शूरेष्वति शूरः। सहस्वान् बलवान् वाजी अन्नवान् सहमानः परेषामभिभविता। उग्रो युद्धेषु क्रूरः। अभितो वीरा शूरभटा यस्यासावभिवीरः अभितः सत्वानः परिचारकाः प्राणिनो यस्यासावभिसत्वा सहसो बलादिवजातः सहोजः बलाधिक इत्यर्थः। गा भूमिं विन्दते लभत इति गोविद ॥ अथ षष्ठी ॥

गोत्रभिदं गोविदं वज्रबाहुं जयंतमज्मं प्रमृणं तमोजसा। इमꣳ सजाता अनुवीरयध्वमिन्द्रꣳ सखायो ऽअनुसꣳरभ्वमिति ॥

हेसजाता' समानजन्मानोऽस्मदीया ज्ञातयो यूयमिममिन्द्रमनुसंरभध्व इन्द्रः पुरतो युद्ध सम्यगारभता कीदृशमिन्द्रं गोत्रभिदं गोत्रान् पर्वतान् भिनत्तीति तदीयपक्षान् छिनत्तीति गोत्रभित। त गा भूमिं विन्दते लभते इति त गोविद। वज्र बाहौ यस्य स वज्रबाहुस्त। उपा भूमि रज्य भूमिराहित्य शत्रूणा यथा भवति तथा विजयत विजयमानं। ओजसा बलेन प्रमृणन्तं प्रकर्षेण हिंसन्तम ॥ अथ सप्तमी ॥

अभिगोत्राणि सहसा गाहमानोदयो वीरः शतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाडयुध्योस्माकꣳ सेना अवतु प्रयुत्सु इति ॥

अयमिंद्रः प्रयुत्सु प्रकृष्टेषु युद्धेष्वस्माकं सेना अवतु रक्षतु कीदृशः इन्द्रः अभि सर्वतोऽवस्थितानि गोत्राणि युद्धक्षेत्राणि सहसा शीघ्र-

गाहमानः प्रविशन् । अदयो दयारहितः । वीरः शूरः । शतमन्युर्बहुधा क्रोधयुक्तः । दुश्च्यवनः च्यावयितुं दुःशक्यः । पृतनाषाट् परकीयसेनानामभिभविता । अयुध्यः केनापि योद्धुमशक्यः ॥ ॥ अथाष्टमी ।

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रमिति ।

याः सेना अस्मदनुग्रहार्थं वैरिषु गच्छन्ति आसां सेनानामिन्द्रो नेता भवतु यो बृहस्पतिर्या च दक्षिणा देवी यश्च यज्ञो यश्च सोम एतेषामेकैकः पुरतः गच्छन्तु याश्चैतत्संबन्धिन्यो देवसेनाः परबलं अभितो भंजयंत्यो जयन्ति तासामग्रं पुरतो मरुतो यन्तु गच्छन्तु । अथ नवमी ।

इन्द्रस्य वृष्णो वरुणस्य राज्ञऽ आदित्यानां मरुताᳬं शर्ध उग्रं । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थादिति ।

वृष्णः कामस्य वर्षणः इन्द्रस्य राज्ञो राज्ञं कुर्वतो वरुणस्य आदित्यानां अदितिपुत्राणां मरुतां शर्धो बलं युद्धेष्वभितः प्रभवितिशेषः । महामनसां युद्धे स्थिरचित्तानां शत्रून् भुवनेभ्यश्च्यावयितुं समर्थानां जयतां विजयमानानां देवानां इन्द्रादीनां घोषशब्दो ध्वनिरुदस्थात् सर्वत उत्थितोऽभूत् ॥ अथ दशमी ।

उद्धर्षय मघवन्नायुधान्युत्सत्वानां मामकानां मनाᳬंसि । उद्वृत्रहन्वाजिनां वाजिना न्युद्रथानां जयतां यन्तु घोषा इति ।

हेमघवन् ! इन्द्र आयुधान्यस्मदीयान्युद्धर्षय परकीयेभ्य उत्कृष्टानि कृत्वा अस्मान्हर्षय । मामकानां मदीयानां सत्वानां प्राणिनां मनांसि उत्कृष्टानि कृत्वा हर्षय । हेवृत्रहन् वैरिघातिन् वाजिनामश्वानां अस्मदीयानां वाजिनां निशि गमनानि उत्कृष्टानि कृत्वा हर्षय जयतां विजयं प्राप्नुवतां रथानामस्मदीयानां घोषाः उर्ध्वं उत्तु महांतो ध्वनय उद्यन्तु ॥ अथैकादशी ॥

अस्माकमिंद्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता ज-

यन्तु । अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अव-
ताहवेष्विति ।

युद्धार्थं परसैन्यगतेषु ध्वजेषु समृतेषु सम्यक् माप्तेषु सत्सु अ-
स्माकमिन्द्रो रक्षितेति शेषः । तदानीमस्माकं या इषवो अस्मदीयैर्मुक्तास्ता
जयन्तु परसैन्यानि वध्यन्तु । अस्माकं वीरा ये शूरा भटा ते उत्तरे
भवन्तु परकीयभटेभ्य उत्कृष्टा भवन्तु । अपि च हेदेवा ! आह्वेषु युद्धेषु
अस्मान् यूयमवत रक्षत ॥ अथ द्वादशी ।

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्तामिति ।

हेअप्वे सर्वव्यापनशीले इन्द्रसेने अमीषां शत्रूणां चित्तं चित्तानि
चेतांसि प्रतिलालयन्ती विमोहमाना त्वं तच्छत्रुसंबंधीनि हृदयान्यपि शो-
कैर्निर्दह भस्मीकुरु तेऽमित्रास्तेपि शत्रवः अन्धेन तमसा तीव्रांधकारेण स-
चेताः संगता भवन्तु । अथ त्रयोदशी ।

अवसृष्टा परापत शरव्ये ब्रह्मसंशिते । गच्छामित्रा-
न्प्रपद्यस्व मामीषां कंचनोच्छिष इति ।

हिंसिका हेतिः शख्या ब्रह्मणा मन्त्रेण संशिता सज्जीकृता
ब्रह्मसंशिता तादृशी । हेशरव्ये ! त्वं अवसृष्टा अस्माभिर्मुक्ता सती परापत
सहसा परसैन्यं पतिता भव । पतित्वा च अमित्रान् शत्रून् गच्छ प्राप्य च
पद्यस्व शत्रूणां शरीरमध्ये प्रवेशं कुरु । प्रविश्य च अमीषां शत्रूणां मध्ये
कंचन पुरुषं मोच्छिषः अवशिष्टं मा कुरु सर्वानपि जहीत्यर्थः ॥ अथ चतुर्दशी ।

प्रेता जयता नर इन्द्रो वः शर्म यच्छतु । उग्रावः सन्तु
बाहवो नाधृष्या यथा सथेति ।

हेनरोऽस्मदीयाः पुरुषाः प्रेत परसैन्यं प्रकर्षेण गच्छत । ततो जयत
विजयं प्राप्नुत । अयमिन्द्रो वः युष्मभ्यं शर्म जयप्रयुक्तं सुखं यच्छतु किञ्च
यथा यूयं अनाधृष्या असथ केनापि तिरस्कार्या भवथ । तथा वः युष्माकं
बाहवो भुजदण्डा उग्रा उद्गूर्णायुधाः सन्तु ॥ ॥ अथ पञ्चदशी ॥

असौ या सेना मरुतः परेषामभ्यैति नः ओजसा स्पर्धमा-

**मा । तांगूहत तमसाऽपव्रतेन यथामीऽ अन्यो अन्यं न जानन्निति ॥**

हेमरुतः ! यूयं परेषां शत्रूणां या मसिद्धा असौ सेना नः अस्मानभ्योति अभिलक्ष्यागच्छति । कीदृशी सेना । ओजसा बलेन स्पर्धमाना मत्स्पर्द्धां कुर्वाणां तां सेनां अपव्रतेन आगतकर्मणा तमसांधकारेण गूहत संवृतामाच्छादितामपलपितां कुरुत । यथा अमी सैनिका अन्योन्यं परस्परं न जानन् । न जानीयुः । तथामूं गूहतेत्यन्वयः ॥ अथ षोडशी ॥

**यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव । तत्र इन्द्रो बृहस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छत्विति ॥**

यत्र यस्मिन् युद्धे बाणाः परैर्मुक्ताः सम्पतंति इतश्चेतश्च सम्मुख पतंति । तत्र दृष्टांतः । कुमारा विशिखा इव यथा शिखारहिताः मुण्डितमस्तका विकीर्णकेशा वा अत्यंतं बालाश्चपलाः सन्त इतश्चेतश्च गच्छंति तद्वत् । ततोऽस्मिन्युद्धे अयमिन्द्रो नोस्मभ्यं शर्म जयमयुक्तं सुख यच्छतु ददातु कीदृश इन्द्रः बृहस्पतिः । तथदुचितमन्त्रज्ञ अदितिरखण्डितशक्तिः । विश्वाहा परकीयमर्वप्राणिघाती । अयमिन्द्रः नोऽस्मभ्यं शर्म यच्छतु ॥ अथ सप्तदशी ॥

**मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानुवस्तां । उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वा नु देवा मदंत्विति ॥**

हेयजमान ! ते तव मर्माणि जीवस्थानानि वर्मणा कवचेन छादयामि आच्छादयामि सोमो राजा अमृतेन मरणनिवारकेण केनापि कवच विशेषेण अनुवस्तां त्वामाछादयतु । तथा वरुणस्ते तुभ्यं उरोर्वरीयः । अन्यदीयाद्धिकादप्यधिकं वर्म कृणोतु जयंतं विजयं माप्नुवन्तं त्वा देवाः अनुमदन्तु । अनुकूला भूत्वा हृष्यंतु ॥

इत्यष्टादशोऽध्याये चतुर्थोऽनुवाकः ॥

चतुर्थेऽनुवाके ब्रह्मणा जप्यमप्रतिरथाख्यं सूक्तमुक्तं ॥ ॥ अथ पञ्चमेऽग्निप्रणयनमुच्यते ॥ कात्यायनः ॥ आर्द्रोदुंबरी घृतोषितास्तिस्र उद्वेनमित्यादधाति मत्यृचमिति । धृताक्तार्द्रास्तिस्र औदुंबरीः समिध उद्वेनमिति तिसृभिर्ऋग्भिरादध्यात् तत्र प्रथमा ॥

, उदेनमुत्तरां नयाग्ने घृतेनाहुत रायस्पोषेण सꣳसृज प्रजया च बहु कृधीति ॥

घृतेन द्रव्येण आहुतः सर्वतोहूयमानाग्ने ! एनं यजमानं सुतरां अत्युत्कृष्टमैश्वर्यं प्रतिउन्नय । उत्कर्षेण प्रापय शीघ्रं प्रापयेत्यर्थः । उत्कृष्टैश्वर्यमेव प्रपंच्यते । रायस्पोषेण धनसमृद्ध्या संसृज संयोजय । किंच । प्रजया च सन्तत्या बहुपुत्रपौत्रादिभिरिति बहु प्राचुर्यापन्नं कृधि कुरु ॥ ॥ अथ द्वितीया ॥

इन्द्रेमं प्रतरां नय सजातानामसद्वशी । समेनं वर्चसा सृज देवानां भागदा असदिति ॥

हेइन्द्र ! परमैश्वर्ययुक्त इमं यजमानं प्रतरां नय । अतिशयेन प्रकृष्टैश्वर्यं प्रापय । तदेव प्रकृष्टत्वं विशदीक्रियते । सजातानां सहोत्पन्नानां ज्ञातीनां वशी असत् । नियमेन समर्थोभवत् । किंच एनं वर्चसा बलेन संसृज । अयं च यजमानो देवानां भागदा असत् । यज्ञेषु भागप्रदो भवतु ॥ ॥ अथ तृतीया ॥

यस्य कुर्मो गृहे हविस्तमग्ने वर्धया त्वं । तस्मै देवा अधिब्रुवन्नयं च ब्रह्मणस्पतिरिति ।

वयं ऋत्विजो यजमानस्य गृहे हविः कुर्मः । हेअग्ने ! त्वं तं यजमानार्थमधिब्रुवन् अयं यजमानः सर्वेभ्योऽधिक इति भवतु । अयं च यजमानो ब्रह्मणस्पतिर्वैदिककर्मणः पालको भवतु ॥ ॥ कात्यायनः नुद्य म्योदुत्वेति अग्निमुपयच्छेत ॥ पाठस्तु ॥

उदु त्वा विश्वेदेवा अग्ने भरंतु चित्तिभिः ।
सनो भव शिवस्त्वꣳ सुप्रतीको विभावसुरिति ॥

अयं मन्त्रस्त्रयोदशेऽध्याये व्याख्यातः ॥

कात्यायनः ॥ आदिशं गच्छन्ति पञ्चदिश इतीति । ऋत्विजः पंच दिशो दैवीरित्येताः पञ्च ऋचो जपंतश्चिताग्निं प्रतिगच्छेयुः । तत्र प्रथमा ॥

पञ्चदिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः । रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधियज्ञो अस्थादिति ।

या इमाः माच्यादयः पञ्चदिशस्ताः मर्वा इमं यज्ञमवंतु कीदृश्यो दिशो देवीरिन्द्रियमदीना देवानां सम्बन्धिन्यः देवीः स्वयमपि देवतारूपाः । अमतिं स्म अस्मदीयां मज्ञां दुर्मतिं दुष्टां पापविषया बुद्धिं च अपबाधमाना विनाशयंत्यः । रायस्पोषे धनसमृद्धौ यज्ञपतिं यजमानमाभजन्तीः मापयन्त्यः । किञ्च रायस्पोषे धनसमृद्धौ अध्यस्थात् अधिकमवतिष्ठतु ॥ ॥ अथ द्वितीया ॥

समिद्धे अग्ना अधिमा महान उक्थपत्र ईड्यो गृभीतः । तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवा इति ।

समिद्धे सम्यक्प्रज्वलिते अग्नौ मणीयमाने सति अधिमा महान् अधिकं पुनः पुनः पूज्यमानः । उक्थपत्रः उक्थानि शास्त्राणि पत्रं वाहनं यस्य सः उक्थपत्रः ईड्यस्तुत्यः यज्ञ एव गृहीतऋत्विग् यजमानैः परिगृहीता भवतीति शेषः । यदा देवा वादीभ्यं परिगृह्य यजंत यजंति ॥ ॥ अथ तृतीयः ॥

दैव्या य धर्त्रे जोष्ट्रे देवश्रीश्रीमणाः शतपयाः । परिगृह्य देवा यज्ञमायं देवा देवेभ्यो अध्वर्यंतो अस्थुरिति ॥

दैव्याय देवानां हिताय धर्त्रे । यागद्वारा जगतो धारयित्रे जोष्ट्रे अस्मदीययजमानस्य हविषः सेवित्रेम ऋत्विजो यज्ञं यजन्तीति शेषः । तदायमग्निरीदृशो भवति । कीदृशो भवति । कीदृश इति तदुच्यते । देवश्रीर्देवान् श्रयन्तीति हविर्यजमानेन सेव्यतइति देवश्रीः । श्रीमणाः श्रयते सेवत इति श्रीर्यजमानस्तस्मिन्ननुग्रहरूपं मनो यस्यासौ श्रीमणाः शतपयाः शतसंख्याकानिपयः प्रभृतीनि हवींषि यस्यासौ शतपयाः तादृशमग्निं परिगृह्य देवा ऋत्विगयज्ञं यजमाना यज्ञमायन्माप्नुवंत्यनुतिष्ठंतीत्यर्थः । किञ्च देवा ऋत्विग्यजमाना देवेभ्यो हविः स्वीकर्तृभ्यः अध्वर्यंतो यागं कर्तुमिच्छन्तः अस्तु तिष्ठन्तु ॥ ॥ अथ चतुर्थी ॥

वीतᳪ हविः शमितᳪ शमिता यजध्यै तुरीयो यज्ञो यत्र हव्यमेति । ततो वाका आशिषो नो जुपन्तामिति ॥

प्रथममध्वर्युणा आश्रावणं तत आग्नीध्रेण प्रत्याश्रावणं ततो यजेत्यध्वर्युः सम्प्रैषः ततो होतुर्वषट्कार इति यज्ञश्चतुर्धा कल्पते । तत्र तुरी-

यश्चतुर्थो यज्ञो यत्र यस्मिन्काले हव्यमेति हविः प्राप्नोति तस्मिन्काले प्र जध्यै यागार्थं शमिता शमिता शमितं मन्त्रैः संस्कृतं हविर्वीतं प्रापितं ततोऽनन्तरं वाका वा यानि वचनानि ऋग्यजुः सामलक्षणानि आशिषश्च अभीष्टस्यार्थस्य आशंसनानि नोऽस्मान् जुषन्तां सेवन्ताम् ॥ अथ पञ्चमी ।

सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ अजस्रं । तस्य पूषा प्रसवे याति विद्वान् सम्पश्यन् विश्वा भुवनानि गोपा इति ॥

दारिद्र्यं हरतीति हरिर्हिरण्यं । हिरण्यवर्णा केशस्थानीया ज्वाला यस्यासौ हरिकेशोऽग्निः स च सूर्यरश्मिः सूर्यरूपश्च भूत्वा सविता प्राणिनां तत्तद्वारेषु प्रेरको ज्योतिर्मण्डलरूपः सन् पुरस्तात्पूर्वस्यां दिशि अजस्रं प्रतिदिनं उदयात् उदेति तस्याग्नेः प्रसवे प्रेरणे सति पूषा पोषको देवः याति आगच्छति कीदृशः पूषा विद्वान् सर्वज्ञः गोपाः गवां रक्षकः । किं कुर्वन् । विश्वा भुवनानि सम्पश्य सर्वान् लोकान्सम्यगवलोकयन् ॥ काश्यपः ॥ पृश्निरश्मानमुपदधाति विमान इति द्वाभ्यां श्वेतपाषाणमुपदध्यात् ॥ ॥ तत्र प्रथमः ॥

विमान एष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षं । स विश्वाचीरभिचष्टे घृताचीरन्तरा पूर्वमपरं च केतुमिति ।

एष इमा विमानो विविधं जगन्निर्माणः सन् दिवो मध्य आस्ते आग्नीध्रस्थानीयस्याकाशस्य मध्ये तिष्ठति । कीदृश इमाः रोदसी द्यावापृथिव्यौ चान्तरिक्षं चापप्रिवान् सर्वतः पूरितवान् । यद्यप्येवं इमा न किञ्चित् जगन्निर्मिमीते नापि लोकं न यज्ञमापूर्य तिष्ठति तथापि परमेश्वरगुणैरस्य स्तूयमानत्वात्कोऽपि विरोधः । स तथा स्तूयमान इमा विश्वाचीः व्यापिनीः दिशः अभिचष्टे सर्वतः प्रकाशयति । तथा घृताची घृतप्राप्तिहेतुभूता धेनूश्चाभिचष्टे तथा अन्तरा ब्रह्माण्डस्य मध्ये पूर्वमपरं च केतुं उदयास्तमयाभ्यां पूर्वापरदिशोऽनवच्छिन्नभूतं सूर्यमभिचष्टे ॥ अथ द्वितीया ॥

उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेश । मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्ताविति ।

अयमश्मा उखा सेक्ता यागद्वारेण फलाभिषेचक इत्यर्थः। समुद्रः बहुफलप्रदत्वात्समुद्रसदृशः। अरुणः पूर्वमन्त्रे सर्वप्रकाशत्वेनोपचरितत्वात्सूर्यसदृश इत्यर्थः। सुपर्णः स्वर्गमत्युद्गमनहेतुत्वात्पक्षिसदृशः। तथाविधोऽश्मा पितुः कर्मपाकस्य पूर्वस्य पूर्वदिग्वर्तिन आहवनीयस्य योनिं कारणभूतमाग्नीध्रमाविवेश प्रविष्टवान्। यदाहवनीय उद्धरेदाग्नीध्राद्धरेदित्याहवनीययोनित्वमाग्नीध्रस्यान्यत्राम्नातम्। अयं पृश्निः श्वेतो वर्णोऽश्मा दिवो मध्ये आग्नीध्रस्थानीयस्याकाशस्य मध्ये निहितः स्थापितः सन् रजसो रञ्जनीयस्य जगत अन्तौ उत्पत्तिप्रलयरूपकोटिद्वयं याति परमेश्वररूपेण पालयति। कात्यायनः। एनमतिक्रमन्ति इन्द्रं विश्वा इतीति। इन्द्रं विश्वा इत्यादिभिश्चतसृभिः ऋग्भिरेनमश्मानमतिक्रमणं कृत्वा गच्छेयुः। तत्र प्रथमः ॥

इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसङ्गिरः। रथीतमः रथीनां वाजानांः सत्पतिं पतिमिति।

अयं मन्त्रस्त्रयोदशेऽध्याये व्याख्यातः ॥ अथ द्वितीया ॥

देवहूर्यज्ञ आचवक्षत्सुम्नहूर्यज्ञ आचवक्षत्। यक्षदग्निर्देवो देवा आचवक्षत् इति ॥

देवानाह्वयतीति देवहूर्यज्ञश्च आचवक्षत्। सुम्नहूः सुम्नस्य प्रजापश्वादिरूपस्य सुखस्याह्वाता यज्ञश्च आचवक्षत्। देवानाह्वयतु। अग्निर्देवो देवतादिगुणयुक्तः देवा यक्षत्। यजतु। आचवक्षत्। आवहतु च। अथ तृतीया ॥

वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत्। अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ २ऽअकरिति ॥

वाजस्यान्नस्य प्रसवः प्रसूतिरुत्पत्तिरभ्यनुज्ञा वा उद्ग्राभेण निग्रहणसामर्थ्येन मा मां यजमानं उदग्रभीत् उच्चं प्रापितवान्। अथापि च इन्द्रः परमैश्वर्ययुक्तोऽग्निर्निग्राभेण निग्रहणसामर्थ्येन सपत्नान् मदीयान्वैरिणः अधरानधः निगृहीतान् करोतु ॥ अथ चतुर्थी ॥

उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्। अधा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यतामिति ॥

देवाः सर्वे ब्रह्मतपोरूपं यज्ञविषयं अवीवृधन् वर्द्धयन्तु उद्ग्राभं

अस्मदीयमुत्कर्षं निग्राभं वैरिणां निःकर्षं वाची वृद्धव वर्धितवन्तः । अथानन्तरं इन्द्राग्नी विषूचीनान् सर्वब्रह्मपरिदृढोद्रा भवतः सर्वतः पालयमानान् मे सपत्नान्मदीयान्वैरिणो व्यस्यतां विनाशयेताम् ॥

इत्यष्टादशोऽध्याये पञ्चमोऽनुवाकः ॥

पञ्चमेऽनुवाके अग्निप्रणयनमुक्तम् ॥ अथ षष्ठे अग्निस्थापनमुच्यते ॥ अथ प्रथमा ॥

**क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः । दिवस्पृष्ठꣳ स्वर्गत्वामिश्रा देवेभिराध्वमिति ॥**

हेऋत्विग्यजमानाःनाकं स्वर्गसाधनमुख्य उखायां पूर्वसम्पादितमग्निं हस्तेषु बिभ्रतो धारयन्तस्तेनाग्निना सह क्रमध्वं चितेरुपरि पादान्विक्षिपन्तः । ततो दिवस्पृष्ठ आकाशस्योपरिभागे वर्तमानस्यः स्वर्गलोकं गत्वा प्राप्य देवेभिर्मिश्रा देवैरेकीभूताः सन्तः आध्वं उपविशत ॥ अथ द्वितीया ॥

**प्राचीमनुप्रदिशं प्रेहि विद्वानग्ने पुरोऽअग्निर्भवेह । विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पद इति ।**

हेअग्ने ! इदानीमानीतवह्ने प्राचीं प्रदिशं प्रागाख्यां प्रकृष्टां दिशं विद्वांस्त्वं अनुप्रेहि अनुक्रमेण प्रकर्षो यथा भवति तथा गच्छ स्वाचाग्नेरिष्टकानिष्पादितस्य वह्नेः इहास्मिन्कर्मणि पुरो अग्निर्भव भागवर्ती वह्निर्भवेत्यर्थः । विश्वा आशाः सर्वा अपि दिशो दीद्यानः प्रकाशयद् । विभाहि त्वमपि विशेषेण प्रकाशस्व ततो नोऽस्मदीया यद्विपदे चतुष्पदे ऊर्जमन्नं धेहि सम्पादय ॥ अथ तृतीया ॥

**पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् । दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहमिति ॥**

अहं यजमानः पृथिव्या उद्गत एतदन्तरिक्षमारोहं आरूढोस्मि तस्मादप्यन्तरिक्षादुद्गतो दिवमारुहं द्युलोकमारूढोस्मि दिवो द्युलोकसम्बन्धी नाकं दुःखरहितो यः प्रदेशस्तस्य पृष्ठादुपरिष्टात् स्वर्ज्योतिः स्वर्गलोकवासिज्योतिर्मण्डलमादित्यरूपमहमगां प्राप्तोस्मि । यद्वा प्राप्स्यामि ॥ अथ चतुर्थी ॥

**स्वर्यन्तो नापेक्षन्त आद्याꣳरोहन्ति रोदसी ।**
**यज्ञं ये विश्वतो धारꣳ सुविद्वाꣳसो वितेनिर इति ॥**

ये यजमानाः सुविद्वांसः सुष्ठु कर्मानुष्ठानप्रकारं जानन्तो विश्वतो धारं सर्वस्य जगतोधारणहेतुं यज्ञं विनं विस्तारेणानुतिष्ठन्ति ते यजमाना द्यावन्तरिक्षं आरोहन्त तथा रोदसी द्यावापृथिव्यावारोहन्ति । ततः स्वर्गनिवासप्रादित्यमण्डलं प्राप्नुवन्तोऽन्यत्किमपि स्थानं नापेक्षन्ते ॥

अथ पञ्चमी ॥

**अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् । इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्तीति ॥**

देवानात्मन इच्छन्तीति देवयन्तो यजमानास्तेषामुपकाराय हेअग्ने ! त्वं प्रथमं प्रेहि पुरतो गच्छ । यतस्त्वं देवानां मनुष्याणां चक्षुःस्थानीयः । लोकेऽपि हि गच्छतः पुरुषः पुरुषस्य दृष्टिः पुरतो याति । इयक्ष्यमाणा यष्टुमिच्छन्तो यजमाना भृगुभिः सजोषा अनुष्ठानपरैर्भृगुनामकैर्मुनिभिः समानप्रियाः सन्तः स्वस्ति क्षेमो यथा भवति तथा स्वर्यन्तु स्वर्गं प्राप्नुवन्तु । कात्यायनः शुक्लवत्सा पयसाऽभिजुहोति कृष्णादोहनेन स्वयमातृण्णामवसिच्यनक्तोषासेतीति । शुक्लवत्साया गोः क्षीरेण स्वयमातृण्णेष्टकां सेचयेत् । नक्तोषामिति द्वाभ्यां मन्त्राभ्यां जुहुयात् । तत्र प्रथममन्त्रपाठस्तु ॥

**नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावाक्षामा रुक्मो अंतर्विभाति देवा अग्निं धारयं द्रविणोदा इति ।**

नक्तं च उषा च नक्तोषा रात्रिंदिवसाविसर्थः । समनसा परस्परमेकमत्युपयुक्ते विरूपे रात्रिः कृष्णा दिवसः शुक्ल इत्येवं विलक्षणरूपे समीची समीचानानुकूले सत्यौ एकं शिशुमग्निरूपं धापयेते यजमानकर्तृकमग्निधारणं सम्पादयतः । द्यावा द्युलोके क्षामा क्षितौ अतस्तदुभयमध्यवर्तिन्यन्तरिक्षे विभाति । रुक्मो रोचमानोऽयमग्निर्विभाति विशेषेण प्रकाशते दिव्यन्ति व्यवहरन्तीति देवाः प्राणाः ते च द्रविणोदाः यागद्वारेण धनरूपं फलं प्रयच्छन्ति तादृशयजमानस्य प्राणा अग्निपेतं धारयन् धृतवन्तः ॥ अथ द्वितीयः ॥ ॥

**अग्ने सहस्राक्ष शतमूर्धञ्छत ते प्राणाः सहस्रं व्यानाः । त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहेति ॥**

शतसहस्रशब्दावपरिमिताभिप्रायौ विश्वतश्चक्षुरित्यादि मन्त्रोक्त-

मूर्तिरूपत्वेनायमग्निः स्तूयते तस्मादक्षिमूर्धप्राणा ध्यानाः अग्ने ते तव सहाः । तथा त्वं साहस्रस्य बहुसहस्रममूहपरिमितस्य रायो धनस्य ईशिषे प्रभुर्भवसि तस्मै ते तादृशाय तुभ्यं वाजायान्नसिध्यर्थं विधेम हविषा परिचरेम । इदं हविः स्वाहाहुतमस्तु । कात्यायनः अग्निं निदधाति सुपर्णोसि आजुह्वानः सुप्रतीक इति द्वाभ्यां मन्त्राभ्यां अग्निं निदध्यात् । तत्र प्रथमः ॥

सुपर्णोसि गरुत्मान्पृष्ठे पृथिव्याः सीद । भासाऽन्तरिक्षमापृण ज्योज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृ॒ꣳहेति ॥

हेअग्ने ! त्वं सपर्णः पक्ष्याकारो गरुत्मान् गरुडसमानोसि । अतः पृथिव्याः पृष्ठे उपरि सीद उपविश । भासा स्वकीयप्रकाशेनान्तरिक्षमापृण सर्वतः पूरय ज्योतिषा स्वकीयेन सामर्थ्येन दिवं द्युलोकं उत्तभान उर्ध्वस्तम्भितं कुरु तथा तेजसा स्वकीयेन सामर्थ्येन दिशः प्राच्यादिका दृꣳह उत्कर्षेण दृढीकुरु । अथ द्वितीयः ॥

आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वयोनिमासीद साधुया । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदतेति ॥

हेअग्ने ! त्वं आजुह्वानः आभिमुख्येन हूयमानः सुप्रतीकः समुखः सन् पुरस्तात्पूर्वस्यां दिशि साधुया साध्यक्रियया ऋत्विग्यजमानैः साधयितुं योग्यया आसीद अधितिष्ठ । हेविश्वेदेवाः ! यूयं यजमानश्च अस्मिन्पुरोवर्तिनि सधस्थे अग्निना सह स्थातुं योग्ये अध्युत्तरस्मिन् अधिकमुत्कृष्टेस्थाने सीदतोपविशत ॥ कात्यायनः । समिदाधानं शमी वैकङ्कत्यौदुम्बर्यस्ताꣳ सवितुरिति । शमीवैकङ्कतौदुम्बराणां सम्बन्धिनीस्तिस्रः समिधस्ताꣳसवितुर्वरेण्यस्येति तिसृभिर्ऋग्भिरादध्यात् ॥ तत्र प्रथमा ॥

ताꣳसवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो अदुहत्प्रपीनाꣳ सहस्रधारां पयसा महीं गामिति ॥

पुरा कदाचित्कण्वाख्यो महर्षिरस्याग्नेर्यां सुमतिं अनुग्रहकारिणीं बुद्धिं अदुहत् दुग्धवान् । तत्र दृष्टान्तः । प्रपीनां प्रभूतः पीनस्तनप्रदेशो यस्याः सा प्रपीना तां सहस्रसंख्याकाः क्षीरधारा यस्याः सा सहस्र

धारा तां पयसा महीं क्षीरेण सम्पूर्णां गां धेनुं यथा लौकिका दुहंति तद्वद्यमग्निः सुमतिं दुग्ध्वा स्वाभिष्टं फलं प्राप्तवान् । वरेण्यस्य सर्वैर्वरणीयस्य सर्वतः मेरकस्याग्नेः सम्बन्धिनीं कण्वेन दुग्धां तां सुमतिं अहमावृणे सर्वतः प्रार्थये । कीदृशीं सुमतिं चित्रां स्वापेक्षितबहुविधफलप्रदानसमर्थामित्यर्थः । विश्वं जन्यमुत्पाद्यं यस्याः सा विश्वजन्या तां जगदुत्पादनसमर्थामित्यर्थः ॥ अथ द्वितीया ॥

विधेम ते परमे जन्मन्नग्ने विधेम स्तोमै स्तोमै रवरे सधस्थे । यस्माद्योनेरुदारिथा यजेतं प्रत्वे हवी॰षि जुहुरे समिद्ध इति ॥

हेश्रीभगवन्नग्ने ! ते त्वदीये परमे उत्कृष्टे जन्मन् जन्मनि उत्पत्तिस्थाने गार्हपत्ये सवितृमण्डले वा विधेम परिचरेम । समिधेति शेषः अस्माभिः सह स्थातुं योग्ये अवरे निकृष्टे भूलोकवर्तिजन्मनि स्तोमैः स्तोमं परिचरेम । यस्माद्योनेरिष्टकाचितिरूपाद्यस्मात्स्थानात् उदारिथ । त्वमुद्गत आविर्भूतोसि तं योनिं यजे पूजयामि समिद्धे सम्यक् प्रज्वलिते ते त्वयि जुहुरे ऋत्विजः प्रकर्षेण जुह्वति ॥ ॥ अथ तृतीयः ॥

प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वा॰ शश्वन्त उपयन्ति वाजाः इति ॥

हेअग्ने ! प्रेद्धः पूर्वमपि प्रकर्षेण दीप्तस्त्वं पुरो नः अस्माकं पुरो देशे अजस्रया निरन्तरया सूर्मीसमानज्वालया दीदिहि पुनरपिदीप्यस्व ज्वलन्ती लोहमयी स्थूणा सूर्म्या । हेयविष्ठ ! युवतमाग्ने त्वां शश्वन्तो निरन्तरभाविनो वाजा अन्नानि उपयन्ति सामीप्येन प्राप्नुवन्ति । कात्यायनः । स्रुवाहुतिं जुहोत्यग्ने तमद्येति प्रत्यृचमितीति । अग्ने तमद्येति द्वाभ्यामृग्भ्यां द्वे स्रुवाहुतीर्जुहुयात् ॥ तत्र प्रथमा ॥

अग्ने तमद्याश्वन्नस्तोमैः क्रतुन्नभद्र॰ हृदिस्पृशं । ऋध्यामात्त ओहैरिति ॥

अयं मंत्रः षोडशेऽध्याये व्याख्यातः ॥ अथ द्वितीयः ॥

चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन्वीतिहोत्रा ऋतावृधः । पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मणे विश्वाहा दाभ्य॰ हविरिति ॥

यथा देवा इहागमन् येन प्रकारेण हविर्भाजो देवा अस्मिन्कर्मण्यागच्छन्ति । तथाहं मनसा मनोगतया भक्त्या घृतेन च बाह्यद्रव्येण चित्तिं जुहोमि देवानां चित्तिं उपाददे प्रसादयामीत्यर्थः । कीदृशा देवा वीतिहोत्रा कमनीयहविषः ऋतावृधो यज्ञस्य वर्धयितारः । तत ऊर्ध्वं भूमनो भूम्नः पृथोर्विश्वस्य सर्वस्य जगतः पत्ये स्वामिने विश्वकर्मणे प्रजापतये विश्वाहा सर्वेष्वप्यहःसु अदाभ्यम् । अनुपहास्यं स्वादुभूतं हविर्जुहोमि । कात्यायनः । पूर्णाहुतिं सप्त त इति तिष्ठन्निति ॥ पाठस्तु ॥

**सप्त ते अग्ने समिधः सप्तजिह्वाः सप्तऋषयः सप्तधाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्तयोनीरापृण स्वघृतेन स्वाहेति ।**

हे अग्ने ! सप्त समिधः समिन्धनाः सप्त सप्त संख्याकाः शीर्षण्याः प्राण्याः सन्ति प्राण्या वै समिध इति श्रुतेः । ज्वालारूपा जिह्वाश्च सप्त तथा चाथर्वणिका आमनन्ति । काली कराली च मनोजवा च विलोहिता या च सधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वाः । तथा च सप्तसंख्याका ऋषयश्च सन्ति । प्रियाणि धामस्थानान्याहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजहिताग्नीध्रियाणि सोमयागे वह्निधारकानि तत्र सप्तसंख्याकानि सन्ति । होत्रा होतृप्रमुखाः मैत्रावरुणः होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाग्नीध्रो छावाकश्चेति । सप्तसंख्याकाः सन्ति यजमाना अपि सप्तधा यजन्ति । अग्निष्टोमोत्यग्निष्टो मनुक्थः षोडश्यतिरात्रोप्तोर्यामो वाजपेयश्चेति सप्तप्रकारास्तादृशस्त्वं सप्तयोनीराहवनीयस्थानानि घृतेन आपृणस्व सर्वतः पूरय । स्वाहाहुतमस्तु ॥ ( इत्यष्टादशोध्याये षष्ठोऽनुवाकः )

षष्ठेऽनुवाके अग्निस्थापनमुक्तम् । सप्तमे तत्र होतव्या मारुताः पुरोडाशा उच्यन्ते ॥ कात्यायनः ॥ मारुतान्जुहोति शुक्रज्योतिरिति प्रतिमन्त्रमिति । शुक्रज्योतिरित्यादिभिर्मन्त्रैर्मारुतपुरोडाशाञ्जुहुयात् ॥ तत्र प्रथमः ॥

**शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मा२ँश्च । शुक्रश्च ऋतपाश्चात्य२ँहा इति ।**

अत्रैकैकस्मिन्मन्त्रे सप्त सप्त मरुत उच्यन्ते । शुक्रं शुद्धं ज्योतिः यस्य स मरुतः शुक्रज्योतिः । चित्रं कमनीयं दर्शनीयं ज्योतिः यस्य स चित्र-

ज्योतिः । सत्यं ब्रह्मलक्षणं ज्योतिर्यस्य स सत्यज्योतिः । ज्योतिस्तेजोऽस्यास्तीति ज्योतिष्मान् । शोचत इति शुक्रः दीप्तिमान् । ऋतं सत्यं पातीत्यृतपाः । अंहः पापमतीत्य वर्तत इत्यंहः हाः । चकारः समुच्चयार्थः । ( अथ द्वितीयः )

**ईदृङ् चान्यादृङ् च सदृङ् च प्रतिसदृङ् च । मितश्च संमितश्च सभरा इति ।**

इमं पुरोडाशं स्वयं संगृह्य पश्यतीतीदृक् । अनेन समदर्शनः । इममिव पश्यतीति वा ईदृक् । अन्योनान्येन च समानदर्शनः । अन्यादृक् । सदृक् समानदर्शनः । प्रतिसदृक् तं तं प्रति समानदर्शनः । मितो मानं माप्तः । सम्यक् परितो मानं माप्तः । संमितः । सह बिभर्त्तीति सभराः ॥ ( अथ तृतीयः )

**ऋतजिच्च सत्यजिच्च सेनाजिच्च सुषेणश्च ।**
**अन्तिमित्रश्च दूरे ऽअमित्रश्च गण इति ॥**

ऋतं जयतीत्यृतजित् । सत्यं यथातथ्यं जयतीति सत्यजित् । शत्रुसेनां जयतीति सेनाजित् । शोभना सेना यस्यासौ सुषेणः । अन्तिके समीपे मित्राणि यस्य सः अन्तिमित्रः । दूरे शत्रवो यस्यासौ दूरेऽमित्रः । गणयतीति गणः ॥ ( अथ चतुर्थः )

**ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च । धर्त्ता च विधर्त्ता च विधारक इति ॥**

ऋतः हविषः स्ववशं माप्तः । सति भवः सत्यः । ध्रुवो वर्धमानः । ध्रुव स्थैर्ये । धरुणो धारकः । धृ धारणे । धारयतीति धर्त्ता । विशेषेण धर्ता विधर्त्ता । विविधं धारयतीति विधारकः ॥ ( अथ पञ्चमः )

**ईदृक्षा स एतादृक्षास ऊषुणः सदृक्षासः प्रतिसदृक्षास एतन । मितासश्च संमितासो नो अद्य सभरासो मरुतो यज्ञे अस्मिन्निति ॥**

ईदृक्षासः ईदृक्प्रकाराः एतादृक्षासः एतादृशाः सदृक्षासः सदृशाः प्रतिसदृक्षासः । प्रतिसदृक्षाः । एवं भूता मरुतः यूयन्नोऽस्माकं अस्मिन्यज्ञे एतन सुष्ठु आगच्छन्ताम् । मितासः ये मानतः परिमिता ते च

सङ्गसमिताः संमिताः । सहभरेणादरेण वर्तत इति समरासः । हेमरुतः एवम्भूता अपि यूयं अद्ये नोऽस्मदीये यज्ञे आगच्छत ॥ ( अथ पष्ठः )

स्वतवाꣳश्च प्रघासी च सान्तपनश्च गृहमेधी च । क्रीडी च शाकी चोज्जेषीति ॥

स्वतवान् स्वाधीनबलयुक्तः प्रघासी प्रकर्षेण पुरोडाशभक्षणशीलः। सन्तपनः सूर्यस्तत्सम्बन्धी सान्तपनः गृहमेधसम्बन्धी गृहमेधी क्रीडी सदा क्रीडनशीलः । शाकी अवश्यकार्यश्चावश्यं शक्त इत्यर्थः । उज्जेषी उत्कृष्टजयशीलः । कात्यायन इन्द्रं दैवीरिति जगतीति ॥

पाठस्तु ॥ इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोभवन्यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् ॥

एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवार्त्मानो भूयासुरिति । दैवीर्विशः देवसम्बन्धिनः प्रजारूपा एते मरुतः इन्द्रमनुवर्त्मानोऽभवन् इन्द्रं स्वामिनमनुसृत्य तदनुसारेण वर्तमाना अभवन् । यथा मरुतः इन्द्रानुसारिणः एवं दैव्यो मानुष्यश्च सर्वाः प्रजा इमं यजमानमनुसृत्य वर्तमाना भवन्तु ॥

इत्यष्टादशाध्याये सप्तमोऽनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये अष्टादशोऽध्यायः ॥१८॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं । अष्टादशाऽध्याये परिषेचनसंस्कारादिमारुतपुरोडाशांता मन्त्रा उक्ताः ॥ अथैकोनविंशे वसोर्धारा होमार्थमन्त्रा उच्यंते । तत्र प्रथमेऽनुवाके वसोर्धारा होमात्पूर्वं यजमानेन वाचयितव्या मन्त्रा उच्यंते । कात्यायनः । इमं स्तनमिति वाचयति चेति अध्वर्युरेतान्मन्त्रान्यजमानं वाचयेत् । स्वयं वा जपेत् । एतैर्मन्त्रैर्वसोर्धारार्थं घृतं स्तूयते तत्र प्रथमपाठः ।

इमᳬ स्तनमूर्जस्वंतं धयापां प्रपीनमग्ने शरीरस्य मध्ये । उत्संजुपस्व शतधारमर्वन्त्समुद्रियᳬ सदन माविशस्वेति ।

हेऽग्ने ! अपां प्रपीनं अप्शब्देनात्र घृतमुच्यते आद्रः घृतैः प्रपीनमन्तःपूरितं ऊर्जस्वंतं विशिष्टरसवन्तं । इमं स्तनं वसोर्धारा औदुंबर्या स्रुचा हूयते तत्र स्तनशब्देन रूप्यते । इमं स्त्रुकुलक्षणं स्तनं तत्पतितां घृतधारां धयाय । कीदृशः शरीरस्य मध्ये लोकानां मध्ये वर्त्तमाना इमे लोकाः शरीरमिति श्रुतेः । किञ्च हे अर्वन् सर्वयज्ञं प्रति गतः हेऽग्ने । शतधारं बहुविधघृतधारायुक्तः उत्संप्रस्त्रवणयुक्तं स्तनं जुपस्व । सेवस्व । किञ्च समुद्रियं । समुद्रसंबन्धिसदनं गृहमाविशस्व । एवं तृप्तः सन् स्वसदनं सेवस्वेत्यर्थः ॥

अथ द्वितीयः ॥ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यमिति ।

अस्याग्नेर्मुखे घृतं दीप्तमाज्यं मिमिक्षे यज्ञार्थं सिंचामि । सिच् सेचन इति धातुः । यतः अस्याग्नेः घृतं योनिरुत्पत्तिस्थानं घृतेन हि मवर्ध्यते । अतः घृतं सर्वव्यत्यः । घृतं घृतेऽ श्रितं सेवमानोसि । तथा घृतमित्राग्नेवधारणो घृतमेव धाम धानं तेजःकरं वा अतः सिञ्चामीति संबन्धः । ततः हेऽग्ने ! अनुष्वधं स्वधोत्पन्नं नाम चरोर्द्विरभिधारणात् । अंतस्योपर्यधश्च घृतं वर्तते । अनुगतान्नं घृतमावहस्वात्मानं देवत्व मापय तेन मादयस्व हृष्टो भव हेवृषभ ! उत्कृष्टाभिमतफलानां वर्षक । अग्ने स्वाहाकारेण हुतं हव्यं हविर्वक्षि वह ।

अथ तृतीयः । समुद्रादूर्मिर्मधुमाँऽ उदारदुपाꣳ शुनासममृतत्वमानः । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिरिति ।

समुद्रात् समुद्रं को भवतीति वा संमोदन्तेऽस्मात् यजमाना इति वा समुद्रोऽग्निः पार्थिवः । अथवा समुद्रवंत्यापोऽस्मादिति व्युत्पत्त्या देवो वैद्युतोग्निस्तस्मादूर्मिः उपर्युपर्युद्भूतो मधुमान् माधुर्योपेतफलसमूह उदारत् । उद्गच्छति । अथवा वैद्युतादूर्मिर्वृष्युत्पादको रसमुद्भूतः । अथवा समुद्रात्समुद्रवणसाधनादादित्यादूर्मिर् रसमुदकलक्षणमुदाहरत् । आदित्याज्जायते वृष्टिरिति श्रुतेः । यद्वा समुद्राद्वृक्तव्युत्पत्त्यांतरिक्षादूर्मिरुदकमुदाहरत् अथवा समुद्रादुक्तलक्षणात् द्रव्यमुधसः सकाशादूर्मिरुज्ज्वलो क्षीररसः । एतद्घृतपक्षेऽपिसमानं । यद्यपि घृतं क्षीराज्जायते तथापि तस्योधस उत्पत्तेरयमुपचर्यते । शिष्टं वाक्यमग्न्यादिपक्षेषु पक्षेष्वपिसमानं । अंशुना दीप्त्यंशेन वामृतत्वं समासुपसमान उपेति पूरणः प्राप्नोति नरः । घृतस्य दीप्तस्य क्षरद्रसस्य रूपस्य गुह्यं नाम गोपनीयं नमनसाधनं यदस्ति तद्ब्रवीमि तद्देवाना जिह्वास्थानीयो भवति । तदेवामृतस्य नाभि वर्धकं भवति । तदुभयं घृतस्य नामेत्यर्थः । एवं सर्वमन्त्रेषु तत्तत्पक्षानुसारेण योज्यं ।

अथ चतुर्थः ॥ वयं नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे धारया मा नमोभिः । उपब्रह्मा शृणवच्छस्यमानं चतुःशृंगो वमीद्गौर एतत् इति ।

वयं यजमाना घृतस्य नाम प्रब्रवामस्तुतास्मिन्यज्ञे नमोभिर्नमस्कारैर्हविर्भिर्धारयाम । ब्रह्मा शृणवत् । उपशृणोतु वैतत्स्तोत्रं ब्रह्मा ऋत्विक्शस्यमानं होत्रा । यथा चतुःशृंगो यज्ञः ऋत्विजोस्य शृङ्गाणि अवमीत् । उद्गिरति । यज्ञपरिणामाभिप्रायमेतत् । गौरगौरवर्णः एतद्घृत ॥

अथ पञ्चमः ॥ चत्वारि शृङ्गा त्रयोऽ अस्य पादा द्वे शीर्षे सप्तहस्तासोऽ अस्य । त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्यां आविवेशेति ॥

चतुःशृंगोवमीदित्युक्ताधुना चतुःशृङ्गं यज्ञरूपभशब्दवाच्यं घृतं वा प्रतिपादयितुमाह । यस्य यज्ञस्य चत्वारि शृङ्गाणि । ब्रह्मोद्गातृ

होत्रध्वर्य्वाख्याग्नेः त्रयः पादाः ऋग्यजुः सामलक्षणाः । द्वे शीर्षे । हवि-र्धानप्रवर्ग्याख्ये सप्त होतारो हस्ता इव व्याक्रियते च त्रिधा .बद्धः । त्रिप्रकारं प्रातःसवनमाध्यंदिनतृतीयसवनैर्बद्धः वृषभो वर्षयिता रोरवीति । रु शब्दे । अत्यन्तं शब्दं करोति । सोयं महादेवः । महान् देवः । महान् देवः ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनामुपजीव्यः । ज्ञानकर्मसमुच्चयकारिणां विदुषां शरीरभूतः सन् मर्त्यान् मनुष्यान् आविवेश । आविशति । अयमेकोर्थः । यद्वा चत्वारो वेदाः शृंगाणि । सवनानि त्रीणि पदाः । प्रायणीयोदयनीये द्वे शीर्षे । सप्तच्छन्दांसि हस्ताः । त्रिधा मन्त्रब्राह्मणकल्पैर्बद्धः । वृषभो वर्षयिता कर्मफलानां वर्षकर्त्ता रोरवीति । अत्यंतं शब्दं करोति । सवनक्रमेण । सोयं महो महता प्रकाशेन युक्तो देवो-दीव्यतीति देवः समस्तयज्ञाद्युपलक्ष्यो हिरण्यगर्भः । मर्त्यान्मरणधर्मयुक्तान् । सर्वप्राणिनः । आविवेश अपेक्षितपुरुषार्थतत्साधनस्वरूपप्रकाशनायाविशतीत्यर्थः । अथवा । शब्दग्रामोभिधेयः । चत्वारि शृङ्गाणि । नामाख्यातोपसर्गनिपाताः प्रथममध्यमोत्तमपुरुषाः त्रयः पादाः । नामाख्यातेस्य द्वे शीर्षे सप्तविभक्तयो हस्ताः । त्रिधा बद्धः । एकवचनद्विवचनबहुवचनानि । वृषभ इवायं मदर्थादन्यानि शास्त्राणि अधः पदीकृत्यरोरवीति यः उक्तगुणः सोयं महादेवो मर्त्यानाविशति । प्रतिपादयति ॥

**अथ षष्ठः ॥ त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविदन् । इन्द्र एक५सूर्य एकं जजान वेनादेक५ स्वधया निष्टतक्षुरिति ॥**

यज्ञपरिणामभूतं यथा घृत तथा हि त्रिधा निहित स्थापितमेषु-लोकेषु । पणिभिरसुरैर्गुह्यमानं गुप्यमानं गविदेवाः घृतं ह्यन्वविदन् । अनुपूर्व्या लब्धवन्तो यद् तस्य घृतस्येन्द्र एक भागं जजान जनयति । तेवा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशति इत्यादिश्रुतेरिन्द्रस्य जनकत्वं दर्शयति । सूर्य एकं भागं जनयति । एते उत्क्रामन्तस्ते दिवमाविशंत इत्यादि श्रुतिः सूर्यस्य जनकत्वं दर्शयति । वेनादग्नेर्यज्ञसाधनभूताद । एकं भागं स्वधयान्नेन आहुतिपरिणामभूतेन निष्टतक्षुः निःकर्षितवन्तो द्विजातयः पुत्रो जायते सलोकपरस्यापीक्षितदुक्तं भवति ॥

**अथ सप्तमः ॥ एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा**

**रिपुणा नावचक्षे। घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम्यक स्रवन्ति सरितो नधेयना अन्तर्हृदा मनसा पूयमानाः। एत अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणो रीषमाणा इति॥**

या एता ऊर्मयो वाचः अर्षति उद्गच्छन्ति हृद्यात् हृदयरूपात् समुद्रात्। श्रद्धायुक्तदेवदेवतायाथात्म्यचिन्तनं सन्तानगर्भात्। निगमनिरुक्तनिघण्टुव्याकरणशिक्षाछन्दोभिः परिपवनस्थानीयैः परिपूरिताः शतव्रजा बहुगतयो बह्वर्थाः। याश्चैता अर्षसो रिपुणा कुतार्किकशत्रुसन्धेन नावचक्षे नापवादितुं शक्यन्ते। ताः घृतस्यैव धाराः देवानां तृप्तिकराः अभिचाकशीमि अहमभिपश्यामि। आगच्छामि वा। हिरण्ययश्च हिरण्ययो वेतसोऽग्निर्मध्ये आसां वाग्व्यक्तीनां विद्यमानः। तं चाभिचाकशीमीति सम्बन्धः। अग्निर्हि वाचामधिष्ठात्री देवता। यद्वा घृतस्य धाराएवोच्यन्ते। या एता अर्षन्ति स्रवन्ति हृद्यात्समुद्रात्। हृदयेन हि संकल्प्य पश्चाद्यजते एवमुच्यते। शतव्रजा बहुगतयः। याश्चैना रिपुणा यज्ञपरिपन्थिना नावचक्षे न द्रष्टुं शक्यन्ते। ताः घृतस्य धाराः पश्यामि यश्चायं हिरण्ययो वेतसो अग्निराहवनीयो मध्ये आसां स्थितस्तं च पश्यामि। याथात्म्येनाहं द्रव्यं देवतां च पश्यामीत्यर्थः। या धेना वाचः सम्यक् स्रवन्ति। धेनेति वाङ्नाम सरितो नद्य इवानवच्छिन्नोदकाः कीदृशाः। अन्तर्व्यवस्थितेन हृदा परिपावनस्थानीयेन मनसा च पूयमानाः विविच्यमानाः शब्ददोषेभ्यः ता अग्निमेव स्तुवन्तीति शेषः। ये चैते अर्षन्ति द्रव्यवंत्यूर्मयो धाराः सन्घाताः घृतस्य स्रुवपरिभ्रष्टाः। मृगा इव क्षिपणो व्याधात्। रीषमाणाः पलायमानाः तेऽप्यग्निं तर्पयन्तीति शेषः। श्रुतयो द्रव्यं च अग्न्यर्थमेवेत्युक्तं भवति॥

**अथाष्टमः॥ सिन्धोरिव प्राध्वने शूघनासो वातप्रमीयः पतयन्ति यह्वाः। घृतस्य धारा अरुषो न वाजी काष्ठाभिन्दन्नूर्मिभिः पिन्वमान इति॥**

या एताः सिन्धोर्नद्य इव प्राध्वने प्रगतोऽध्वा प्राध्वा मधूदकमपातस्तस्मिन् शूघनासः शू इति क्षिप्रनाम हन्तेर्गत्यर्थस्य घ्नतः क्षिप्रगम-

नाः । वातप्रमीयः । मीङ् हिंसायां । वातेन याः प्रमीयन्ते विनश्यन्ति ताः वातप्रमीयः । तरङ्गवीच्यः पतयन्ति स्वार्थे णिच् । प्रतिपतति । पतङ्गाः प्रहृताः । स्रुचो मुखात्परिभ्रष्टाः । घृतधाराः ताश्च पतन्त्यग्निं क इवेत आह । अरुषो न वाजी । नकार उपमार्थः । यः यथा अरुषः अरोचनो वाजी जात्यादिभिरुत्कृष्टो वेगवानश्वः पुनरप्यश्वं विशिनष्टि । काष्ठा भिन्दन् । आक्रांतान् विदारयन् । ऊर्मीभिर्यः काष्ठभेदेनोत्पन्नश्वः स्वेदोदकैः पिन्वमानः । भूमिं सिञ्चन् । अत्रान्यद्भनाति । एवमग्निरप्यद्भनातीति वाक्यार्थः।

अथ नवमः ॥ अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निं । घृतस्य धाराः समिधो न सन्तता जुषाणो हर्यन्ति जातवेदा इति ॥

घृतस्य धाराः अग्निं अभिप्रवन्त । अभिनमन्ति । का इव । समाना । समानमनस्काः । कल्याण्यः । रूपयौवनसम्पन्नाः । स्मयमानाः । स्मिङ् ईषद्धसने । ईषद्धसमानाः । योषाः यथा पतिं अभिमहृा भवति समिधः समिन्धः समिधनास्ता एव धारा अग्निं वसन्त व्याप्नुवन्ति । नसन्ति राप्नोति कर्मा । ताश्च धाराः जुषाणः । सेवमानः जातवेदाः हर्यति कामयते हर्यतिः प्रसादकर्मा । नास्य ग्रहणशक्तिः परिहाणमस्तीति भावः ॥

अथ दशमः । कन्या इव वहतु मे तवाउ अञ्ज्यञ्जाना अभिचाकशीमि। यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभितत्पवते इति ॥

कन्या इव । या एताः कन्या नवपरिणीताः । ता इव वहतु । वोढारं भर्तारं प्रतिप्रत्तवै एतुं गमनाय । उकारोऽनर्थकः । अंजि अजननं अजनाः व्यक्तं कुर्वाणाः योग्यं कुर्वन्ती अभिचाकशीमि । अभिपश्यामि । ताः घृतस्य धाराः यत्र सोमः सूयते अभिषूयते यत्र सौत्रामण्याख्यः यज्ञः स्तायन्तः । अभितत्पवन्ते तत्र तत्रेत्यर्थः । अभितत्पवन्ते । अभिगच्छन्ति यज्ञमहत्वारिताः घृतस्य धाराः इत्यभिप्रायः ॥

अथैकादशः । अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त । इमं यज्ञं नयत देवता नो घृतस्यधारा

मधुमत्पर्वत इति ॥

हेदेवाः ! अभ्यर्षत अभ्यागच्छत । एतां सुष्टुतिं शोभमानां स्तुतिं । एतं च गव्यमाजिं । गोविकारैर्घृतैर्जनितं गव्यं आजिं यज्ञमभ्यागच्छत । अभ्यागत्य च । अस्मासु भद्रा भद्राणि द्रविणानि धत्ता निधत्त । स्थापयतास्मभ्यं देहीत्यर्थः । किञ्च इमं यज्ञं तत्र नयत तत्र देवता देवत्वं नोस्माभिर्यो ·देवलोको जित इत्यर्थः । याश्चेताः घृतस्य धाराः मधुमत्पवंते मधुसंयुक्तं पवन्ते द्रवन्ति ताश्चास्मज्जितं लोकं नयतेत्यनुवर्तते ॥

अथ द्वादशः । धामं ते विश्वं भुवनमधिश्रितमन्तः समुद्रे हृद्यन्तरायुषि अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तत ऊर्मिमिति ॥

आहुतिपरिणामभूतमिदं जगत् ब्रह्मादिस्तंबपर्यन्तं मन्यमान आहाथामन् धामनि विभूत्या ते तव विश्वं सर्वं भुवनं भूतजातं अधिश्रितं स्थितं यच्चान्तः समुद्रे समुद्रस्य मध्ये अस्ति किञ्चित् । यच्च हृदि । अन्तः किञ्चित् । यच्च आयुषि । अन्तः 'किञ्चित्तदपि धामनि तव अधिश्रितमित्यनुवर्तते । यत एवमतस्त्वा ब्रवीमि । अपामनीके मुखे वर्त्तमानो य ऊर्मिः आभृतः । आहृतः । समिथे संग्रामे च पणिभिः सह वर्तमानो य ऊर्मिराहृतः । तदुक्तं त्रिधा हितं पणिभिर्गुह्यमानमिति । तं अश्याम भक्षयाम व्याप्नुयामेति वाः मधुमन्तं रसवन्तं ते तव सम्बन्धिनं ऊर्मिर्घृतं हविः परिणामिनो रसस्य भोक्तारो वयं भवेमेति वा । देवत्वं च वक्रोत्या प्रार्थ्यते ॥

इत्येकोनविंशेऽध्याये प्रथमोऽनुवाकः ।

प्रथमेऽनुवाके यजमानेन वाचितव्या मन्त्रा उक्ताः ॥ वाजश्चइत्यादिभिरष्टभिरनुवाकैर्वसोर्धाराहोमार्थमन्त्रा उच्यन्ते । कात्यायनः । वाजश्च म इत्यष्टभिर्वाकैर्वसोर्धारां जुहुयात् । वाजश्च म इत्यष्टभिरनुवाकैरौदुंबर्या स्रुचा वसोर्द्धारां जुहुयात् । अत्र अथैनमनेकैः कामैरभिषिंचरत्नामित्युपक्रम्य एतया वसोर्धारया आज्येन पञ्चगृहीतानौदुंबर्या स्रुवेत्याद्यंतं तद्देषा बहु धारामतिवसोर्धारा तस्मादेनां वसोर्धारेत्याचक्षते एवं वक्तुं ऋचो इदं च म इदं च मेत्यनेन यानेन च त्वा प्रीणामीत्यादिभिर्ब्राह्मणवाक्यैर्वि-

नियोगविशेषपुरःसरयाता मन्त्राः तदनुसारेण व्याख्यायन्ते ॥

तत्र प्रथमानुवाकः पाठः॥ वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्चमे । धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे । श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे यज्ञेन कल्पन्ताम् । प्राणश्च मेऽपानश्च मे व्यानश्च मे सुश्चमे । चित्तं च मे ऽआधीतं च मे वाक्च मे मनश्च मे । चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्तं ओजश्च मे सहश्च मेआत्मा च मे तनूश्च मे । शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे। परूꣳषि च मे शरीराणि च मे ऽआयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् । ज्यैष्ठ्यं च मे ऽआधिपत्यं च मे मन्युश्च मे भामश्च मे । अमश्च मेम्भश्च जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ।

वाजोन्नं च शब्दो वक्ष्यमाणद्रव्यापेक्षया समुच्चयार्थः । तदन्नं च मे मह्यं देहि । प्रसवश्च मे अन्नदानादिविषयाभ्यनुज्ञानं प्रसवं मे मह्यं देहि । इति यजमानोग्नेः कामान्याचते । इदं च मे देहीति सर्वत्राध्याह्रियते । स च वाजः मे यज्ञेन कल्पन्तामनुष्ठीयमानेन यागेन कल्पन्तामिति कण्डिका तस्य समुदायापेक्षया बहुवचनम् । स्ववाक्यस्थेन कल्पन्तामित्यनेनैवेति केचिद्वदन्तीति केचित् । प्रयतिः प्रकृष्टगमनं प्रयातिः । षिञ् बन्धने । प्रकृष्टं बन्धनं प्रसितिः । धीति रत्नधारणम् । अथवा ध्यै चिन्तायाम् । आत्मसम्प्रसारणादौ कृतेस्य धीति भवति । क्रतुः सङ्कल्पः संस्कारो वा यज्ञो वा । स्वर उदात्तादिलक्षणः श्लोकः श्रुतिः । यद्वा श्लोकयत इति श्लोकः कीर्तिः । श्रावः श्रावयितृत्वसामर्थ्यम् । यद्वा श्रावयति प्रख्यापयतीति श्रावः । देवा मन्त्रा वा श्रावः । प्रख्याप्यमानस्यादरेण श्रवण श्रुतिः । ब्राह्मणं वा ज्योतिर्दीप्तिः । स्वः स्वर्गः । यद्वा आदित्यात्मकं ज्योतिः । एते यज्ञेन कल्पन्ताम् । यज्ञेन अग्निं तर्पयन्तु । अभिषिञ्चन्तु । अनेन च स्वाभिषिञ्चाम्यनेनेत्यस्याश्रुतेरभिप्रायेण व्याख्या । प्राणः पञ्चवृत्तिकः । प्राणः प्राणापानौ मे देहि । मम देहस्थितौ कल्पन्ता व्यान । अपानोदानयोः सम्बन्धिरूपो व्यानः । सुष्ठुपरिथतः । कल्पन्ताम् । असु नपुंसकान्तं पदम् । असु जीवः । प्राणस्य जीवोपा-

धित्वात् । चित्तम् । अन्तःकरणम् । मनोजन्यं ज्ञानं वा । आधीतं स्वाध्यायः । वाक् । वागिन्द्रियम् । मनः सङ्कल्पात्मकं मनः । चक्षुश्च क्षुरिन्द्रियम् । श्रोत्रं श्रवणसाधनमिन्द्रियम् । दक्षं ज्ञानेन्द्रियगतं कौशल्यम् । उत्साहो वा । बलङ्कर्मेन्द्रियगतं सामर्थ्यम् । एतानि यज्ञेन कल्पन्ताम् । ओजो बलहेतुरष्टमोधातुः । सहो वैरिविषय अभिलाषः । आत्मा शास्त्रसिद्धः । परमात्मा । तनूशोभनमंगनिवेशं वपुः । यद्वा तत्र विस्तृतान्यङ्गानि । शर्म सुखम् । शरणं गृहं वा । वर्म शरीररक्षकं कवचादि । अङ्गानि संपूर्णावयवाः । शरीरेषु चत्वारिंत्रिंशतान्यस्थीनि प्रसिद्धानि । परूंषि । अङ्गुल्यादिपर्वाणि । सन्ध्यन्तरालान्यत्र शरीराणि । जीवशरीरयोरवस्थानकाल आयुः जीवनं वा । जरा आयुषो वलितपलितत्वम् । एते पदार्था मदीयेन यज्ञेन कुशला भवन्तु । अनेन यज्ञेनाराधितः श्रीभगवान् यज्ञः अस्मभ्यमेवंविधानि फलानि ददात्वित्यर्थः । ज्यैष्ठ्यं प्रशस्ततमत्वम् । आधिपत्यं स्वामित्वम् । मन्युः कोपभासः पुज्यः । प्रतापो वा । अमश्च । अस्मच्छत्रूणां भङ्गो रोगो वा । अमः रोगः । अंभः शैत्यमाधुर्योपेतं जलम् । जेमा जयसामर्थ्यम् । महिमा महत्वं जयसम्पादितधनादिसम्पत्तिः । वरिमा । वरणीयत्वम् । गुरुतरत्वम् । प्रथिमा । गृहक्षेत्रादिविस्तारः । वर्षिमा पुत्रपौत्रादिशरीरवृद्धिः । द्राघिमा पुत्रपौत्रादिसम्पत्तिविषयदीर्घत्वम् । अविच्छिन्ना सन्ततिरित्यर्थः । दीर्घकालभोगैश्वर्यसम्पत्तिर्वा । वृद्धं धान्याधभिवृद्धिः । वृद्धिः देहस्याभिवृद्धिः एते इमं यज्ञेन कल्पन्ताम् ॥

इत्येकोनविंशेऽध्याये द्वितीयाऽनुवाकः ।

अथ तृतीयानुवाकमाह पाठस्तु ॥

**सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे विश्वं च मे महश्च मे क्रीला च मे मोदश्च मे। जातं च मे जनिष्यमाणं च मे सूक्तं च मे यज्ञेन कल्पन्तां । वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे । सुगं च मे सुपथ्यं च मे ऋद्धं च मे ऋद्धिश्चमे । क्लृप्तिश्च मे मतिश्च मेसुमतिश्च मे यज्ञेन कल्पन्ताम् । यन्ता च मे धर्त्ता च मे क्षेमश्च मे धृतिश्च मे । विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे । सीरं च मेलयश्च सूश्च मे प्रसूश्च मे यज्ञेन**

कल्पन्ताम् । शं च मेमयश्च मे प्रियं च मेनुकामश्च मे । कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे । भद्रं च मे श्रेयश्च मे वसीयश्च मे यज्ञेन कल्पन्ताम् ॥

सत्यं यथार्थभाषित्वम् । श्रद्धा परलोके आस्तीक्यबुद्धिः । जगज्जङ्गमं धनं सुवर्णादिकम् स्थावरादिकम् । महो दीप्तिः । क्रीडा लक्षद्युतादि । मोदस्तज्जातहर्षः । जातं पूर्वसिद्धमपत्यम् । जनिष्यमाणं भविष्यदपत्यम् । सूक्तमृक्समूहः शोभनवचनं वा । सुकृतं शास्त्रतः सुष्ठु कृतं एते यज्ञेन कल्पन्ताम् । वित्तं पूर्वलब्धं ज्ञानं वा । वेद्यमितः परं लब्धव्यम् । ज्ञातव्यं वा भूतं निष्पन्नम् । भविष्यं निष्पाद्यम् । सुगं सुष्ठु गन्तव्यम् । बन्धुपुजनयुक्तग्रामान्तरादिकं सुपथ्यम् । चौरादिरहितमार्गादिद्रव्यं रुद्धम् । अनुष्ठितक्रतुफलं ऋद्धिः । अनुष्ठास्यमानं सत्रफलं क्लृप्तम् । समर्थं स्वकार्यक्षमं द्रव्यं क्लृप्तिः । स्वकीयसामर्थ्यं मतिः । पदार्थमात्रनिश्चयः सुमतिः । एते यज्ञेन कल्पन्ताम् । यन्ता । यम उपरमे । नियन्ता । धृ धारणे । विधर्त्ता । क्षेमः । स्थितस्य परिपालनम् । धृतिर्धारणशक्तिः । संविद्विदनम् । ज्ञायत इति ज्ञात्रम् । सीरं लाङ्गलम् । लयत इति लयः । दोषादेर्नाशो वा सूयत इति सूः । उत्पत्तिः । प्रसवः प्रभुः एते यज्ञेन कल्पन्ताम् । शं शब्दो ऐहिकसुखवाची । मयः शब्द आमुष्मिकसुखवाची । प्रियं प्रीतिकारणं वस्तु । अनुकामोऽनुकूलत्वनिमित्तेन काम्यमानः पदार्थः । कामः शोभनेच्छा । सौमनसो मनः स्वस्थान्तःकरणम् । भग ऐश्वर्यादि षट्सम्पत्तिः । सौभाग्यं वा । द्रविणं धनम् । भद्र कल्याणम् । इह लोकरमणीयम् । श्रेयः परलोकहितम् । वसीयः । निवासहेतुः । अतिशयेन वसुमान्वा गृहादि । यशः कीर्तिः । एते यज्ञेन कल्पन्ताम् ॥

इत्येकोनविंशोऽध्याये तृतीयोऽनुवाकः ॥

अथ चतुर्थानुवाकमाह पाठस्तु ॥

ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे । घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे । कृषिश्च मे वृष्टिश्च मे जैत्रं च मे

औद्भिद्यं च मे यज्ञेन कल्पन्ताम् । ऋतं च मेऽमृतं च मे यक्ष्मं च मेऽनामयश्च मे। जीवातुश्च मे दीर्घायुत्वं च मेऽनामित्रं च मे भयं च मे। सुगं च मे शयनं च मे सूषाश्च मे सुदिनं च मे यज्ञेन कल्पन्तां। रयिश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे। कुयवं च मेऽक्षितं च मेऽन्नं च मे क्षुच्च मे यज्ञेन कल्पन्तां। व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे। मुद्गाश्च मे खल्वाश्च मे प्रियंगवश्च मेऽणवश्च मे। श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ॥

ऊर्क् रसः। सूनृता सत्यवाणी। पयः क्षीरम्। रसः मधुरादि षड्रसः। घृतमाज्यम्। मधु सारघम्। सुबन्धुभिः सह भोजनं सग्धिः। तथा सहपानं सपीतिः। कृषिर्व्यवसायः। वृष्टिर्वर्षणम्। जयसाधनं जैत्रम्। तरुगुल्मादीनामुत्पत्तिरौद्भिद्यम्। एते यज्ञेन कल्पन्ताम्। ऋतं यज्ञादि कर्म। अमृतं तत्फलभूतं। स्वर्गादि। अयक्ष्म राजयक्ष्मादिव्याधिराहित्यं शिरोव्यथाद्यल्पव्याधिमनामयम्। जीवदानसमर्थमौषधं जीवातुः। दीर्घायुत्वम्। बहुकालीनमायुष्यमम्पतिरपमृत्युराहित्यमित्यर्थः। अमित्रः शत्रुः तदभावोऽनमित्रम्। अभय भयराहित्यम्। सुगं शोभनगमनम्। शयनं स्वापः। शय्योपधानं वा। सूषाः स्नानदानसन्ध्यावन्दनादियुक्तः प्रातः कालः। सुदिनं यज्ञदानाध्ययनादियुक्तमुत्कृष्टं दिनम्। एते यज्ञेन कल्पन्ताम्। रयिः सुवर्णम्। रायो मुक्तादयः। पुष्टं पोषणम्। पुष्टिः शरीरपोषः। विभु समर्थम्। प्रभु प्रधानम्। पूर्णं सम्पूर्णम्। उत्तरोत्तराकाङ्क्षया पूर्णतरम्। कुयवं क्षुद्रयुतम्। अक्षितं क्षुद्रहितम्। अन्नं षड्विधम्। अक्षुत् क्षुन्निवृत्तिः। एते यज्ञेन कल्पताम्। व्रीहयः। शाल्यादयः। यवा माषा तिला मुद्गाः प्रसिद्धाः। क्षुद्रमसूराः। प्रियङ्गवः प्रसिद्धः अणवः। क्षुद्रधान्यानि श्यामाकाः। ईषश्यामाः। श्यामाकाः। ग्राम्याः नीवाराः। गोधूमाः प्रसिद्धाः। मसूराश्चणकाः प्रसिद्धाः। एते यज्ञेन कल्पन्ताम् ॥

इत्येकोनविंशोऽध्याये चतुर्थोऽनुवाकः ॥

अथ पञ्चमानुवाकमाह पाठस्तु ॥

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे । सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपु च मे श्यामं च मे लोहं च मे यज्ञेन कल्पन्ताम् । अग्निश्च मेऽ आपश्च मे वीरुधश्च मेऽ ओषधयश्च मे । कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशवऽ आरण्याश्च मे वित्तञ्च मे वित्तिश्च मे भूतं च मे भूतिश्च मे यज्ञेन कल्पन्ताम् । वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मे । अर्थश्च मे यामश्च मे इत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम् ॥

अश्मा पाषाणः । मृत्तिका प्रसिद्धा । गिरयः क्षुद्रपर्वताः । पर्वता मंदरादयः । सिकताः शर्कराः । वनस्पतयः पुष्पराहित्यफलिताः पनसादयः । हिरण्यं सुवर्णम् । अयः काष्णीयसम् । सीसं त्रपु चेति प्रसिद्धानि । श्यामं नीललोहितम् । लोहं कांश्यताम्रादि । एते यज्ञेन कल्पन्ताम् । अग्निः पृथिवीच्छन्नोऽग्निः । आपः वर्षोदकानि । वीरुधः गुल्मानि । ओषधयः फलपाकान्ताः । कृष्टपच्याः भूमेः कर्षणबीजावापादिकर्मभिः फलपाकमापद्यमानाः ओषधयः कृष्टपच्याः । एतद्विपरीताः अकृष्टपच्याः । ग्राम्याः ग्रामे भवाः पशवः ग्राम्या गौरश्वोऽजोऽविः पुरुषो गर्दभः सप्तमोऽश्वतर इत्येते ग्राम्याः । तथारण्या अरण्ये भवा द्विखुरा श्वापदानि हस्तीमर्कट इत्यादयः । वित्तं पूर्वलब्धम् । वित्तिर्भाविलम्भः । भूतमैश्वर्योपेतं पुत्रादिकम् । भूतिः स्वकीयमैश्वर्यादि एते यज्ञेन कल्पन्ताम् । वसुर्निवाससाधनं गवादिकं । वसतिर्निवासाधारो गृहादिकमग्निहोत्राद्यनुष्ठानसामर्थ्यं कर्म । अर्थः प्रयोजनविशेषः । यामः । अहरादिकात्मकः कालो यामः । पुण्यकालः । इत्या । इण गतावित्यस्य स्वरूपम् । इत्या प्राप्या गतिः । परमा गतिः ॥

इत्येकोनविंशोऽध्यायेऽपञ्चमोऽनुवाकः ।

अथ षष्ठानुवाकमाह ॥

तत्रेन्द्रादीन् जुहोति । अर्द्धमिन्द्रा अर्द्धमर्द्धदत्यं पाठस्तु ।

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे । सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे । पूषा च म इ-

न्द्रश्च मे यज्ञेन कल्पन्ताम् । मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे । धाता च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे । मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे यज्ञेन कल्पन्ताम् । पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे समाश्च म इन्द्रश्च मे नक्षत्राणि च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥

अग्निः अग्नेः रूपं । सर्वज्ञोऽग्निः । इदि परमैश्वर्ये इन्द्रः । सोमश्चन्द्रः । उभयसहितो वा सोमः । प्राणिनां प्रसवकर्ता सविता । सरस्वती वाणी । पुष्णातीति पूषा । बृहस्पतिर्देवगुरुः । एते यज्ञेन कल्पन्ताम् । मित्रः सूर्यः । वरुणः प्रचेताः । धाता जगद्धर्ता । सविता त्वष्टा । तक्षु तनूकरण इत्यस्य रूपं त्वष्टा नाम सूर्यः । शत्रुबलस्य कृशीकरणकर्ता । मरुतः एकोनपञ्चाशद्देवताः विश्वे च विश्वेदेवगणाः । एते यज्ञेन कल्पन्ताम् । प्रथनात्पृथिवी अन्तरिक्षं भुवस्थानं । द्यौर्द्युलोकः । समाः संवत्सराः । नक्षत्राणि । अश्विन्यादि सप्तविंशतिः । दिशः पूर्वादयः । एते यज्ञेन कल्पन्तां अग्निश्च म इत्यादितिसृषु कण्डिकासु अष्टादशेन्द्रशब्दाः । इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत इति वेरां धारयत इति वेंद वेद्रवतीति वेदौ रमत इति वेन्द्रभूतानीति वा तद्यदेनं प्राणैः समैन्धस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदं करणादित्याग्रायण इदं दर्शनादित्यौपमन्यव इंदतेरैश्वर्ये कर्मणि इत्येकादशधा इन्द्रशब्दार्थो व्युत्पादितः । अतोत्र दशेन्द्रशब्देषु यथायोग्यतया निर्वचनीयः ।

इत्येकोनविंशोऽध्याये षष्ठोऽनुवाकः ॥

अथसप्तमानुवाकमाह ॥ ॥ सप्तमे ग्रहाणां यज्ञक्रतूनां च होम उच्यते ॥ अथ ग्रहान् जुहोति । ग्रहाः सोमपात्राणि प्रतिकण्डिकां द्वादश अभिहिताः । एवं तिसृषु कण्डिकासु षट्त्रिंशद्ग्रहा उक्ताः । तेषां नामान्युच्यन्ते ॥ मन्त्रपाठस्तु ॥

अꣳशुश्च मे रश्मिश्च मे दाभ्यश्च मेधिपतिश्च मे । उपाꣳशुश्च मेन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च मे । आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मंथी च मे यज्ञेन कल्पन्ताम् ॥

एते प्रसिद्धाः अथ द्वितीयमन्त्रः ॥

आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मे ऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे । सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम् ॥

आग्रायणः । वैश्वदेवः । ध्रुवः । वैश्वानरः । ऐन्द्राग्नः । महावैश्वदेवः । मरुत्वतीयाः । निष्केवल्यः । सावित्रः । सारस्वतः । पात्नीवतः । हारियोजनश्चेति द्वादशग्रहाः प्रसिद्धाः ॥

अथ तृतीयमन्त्रः ॥

स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे । ग्रावाणश्च मेधिषवणे च मे पूतभृच्च म आधवनीयश्च मे । वेदिश्च मे बर्हिश्च मे स्वगाकारश्च मे ऽवभृथश्च मे यज्ञेन कल्पन्ताम् ॥

स्रुचः । चमसाः । वायव्यानि । द्रोणकलशः । ग्रावाणः । अधिषवणे । पूतभृद् । आधवनीयः । वेदिः । स्वगाकारः । अवभृथ इति द्वादश । अत्रापि सोमधारका ग्रहास्त्रिंशत् षट् च यथाकर्यचनोपकारका इति विभागः । गृह्यते सोमो येषु ते ग्रहाः । गृह्यते वा सोम एभिरिति ग्रहा इति । वेदिरुक्तलक्षणः । वर्हिः प्रसिद्धाः स्वगाकारः । स्वमात्मानमागच्छन्तीति स्वगाः । ताः करोति कारयतीति च स्वगाकारः । समाप्तिः । सूक्तवाक इत्यन्ये । अवभृतः प्रसिद्धः । अथैतान्यज्ञक्रतुः जुहोत्यग्निश्च मे धर्मश्च म इति ॥ ॥ तत्पाठस्तु ॥

अग्निश्च मे धर्मश्च मेर्कश्च मे सूर्यश्च मे । प्राणश्च मेश्वश्च मे पृथिवी च मे दितिश्च मे द्यौश्च मेंगुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥

अग्निश्चीयमानोग्निरग्निष्टोमः । धर्मः । प्रवर्ग्यः । अर्को महाव्रतः । सूर्यः सौर्यं चरुमिति प्राणो गवामयनं । अश्वमेधः । प्रसिद्धपृथिवी प्रसिद्धा । अदितिरन्तरिक्षं । सैवादितिः दृष्यादिधात्री । द्यौः द्युलोकः । अंगुलयः प्रसिद्धाः । शक्वरयः । शक्तः । दिशः प्रसिद्धाः । एते यज्ञेन कल्पन्तां ॥

अथ द्वितीयमन्त्रः ॥ ॥ व्रतं च म ऋतवश्च मे संवत्सरश्च मे तपश्च मे । अहोरात्रे उर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥

व्रतं नियमः । ऋतवः । वसन्तादयः । संवत्सरः प्रभवादिः । तपः कृच्छ्रचान्द्रायणादिः । अहोरात्रे पुण्यहेतुत्वेन प्रसिद्धे । उर्वष्ठीवे । उरुत्वेन ष्ठीवनादिदोषरहिते । यद्वा उरु अष्ठीवं युन्यन्ते । उर्वष्ठीवे । बृहद्रथन्तरे सामनी । एते यज्ञेन कल्पतां ॥

इत्येकोनविंशोऽध्याये सप्तमोनुवाकः ॥

अष्टमेऽनुवाके युग्मस्तोमादयो होमा उच्यन्ते ॥ ॥ तत्र प्रथममेकया कण्डिकया युजः स्तोमहोमार्थमन्त्रा उच्यन्ते ॥ ॥ अथायुजस्तोमाँजुहोत्येका च म इति ॥

पाठस्तु एका च मे तिस्रश्च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च म एकविंशतिश्च म एकविंशतिश्च मे त्रयोविंशतिश्च मे त्रयोविंशतिश्च मे । पञ्चविंशतिश्च मे पञ्चविंशतिश्च मे सप्तविंशतिश्च मे सप्तविंशतिश्च मे नवविंशतिश्च मे नवविंशतिश्च म एकत्रिंशच्चम एकत्रिंशच्च मे त्रयस्त्रिंशच्च मे यज्ञेन कल्पन्ताम् ॥

एकामादाय द्वितीयां विहाय तृतीयामादाय चतुर्थीं विहायेत्येवमेव क्रमेण । त्रयस्त्रिंशत्पर्यन्तान् । अयुग्मस्तोमाञ्जुहुयादित्यर्थः । एतद्वै देवाः सर्वान्कामानवाप्नोत्ययुग्भिः स्तोमैः स्वर्गः लोकानां यः स्तोमैरेतद्यजमानः सर्वान्कामानवाप्नोतीति श्रुतेः । अथ चतस्रश्च इत्येकया कण्डिकया युग्मस्तोमाञ्जुहोति । तत्र श्रुतिः । अथ युग्माञ्जुहोति चतस्रश्च इति । एतद्वै छन्दांस्यब्रुवन् यातयामा वा अयातयामा वा युग्भिर्यः स्तोमैः स्वर्गं लोकमवाप्नोतीति श्रुतेः ।

पाठस्तु ॥ ॥ चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे विंशतिश्च मे चतु-

विंशतिश्च मे चतुर्विंशतिश्च मेऽष्टाविंशतिश्च मेऽष्टाविंशतिश्च मे । द्वाविंशच मे द्वात्रिंशच मे षट्त्रिंशच मे चत्वारिंशच मे चत्वारिंशच मे चतुश्चत्वारिंशच्च मे चतुश्चत्वारिंशच्च मे चतुश्चतुत्वारिंशच्च मे चतुश्चत्वारिंशच्च मेऽष्टाचत्वारिंशच्च मे यज्ञेन कल्पन्ताम् ॥

चतस्र इत्येतां संख्यामादाय चतुरुत्तरे त्वष्टांतान् युग्मांस्तोमान् अष्टाचत्वारिंशत्पर्यन्तान् जुहोति । तथा श्रुतिः । पूर्वपूर्वं सुभक्तियथाद्यत्तमुत्तरामुत्तरां शाखासमालम्भनारोहेद् तादृगिति अथ वयांसि जुहोति त्र्यविश्च म इति । पशवो वै वयांसि पशुभिरेवैनमेतदन्नेन प्रीणात्यथो पशुभिरेवैनमेतदन्नेनाभिषिञ्चतीति श्रुतेः ॥ पाठस्तु ॥

त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे । पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे । तुर्यवाट् च मे तुर्यौही च मे यज्ञेन कल्पन्ताम् ॥

अविरिति पशूनां वयोवस्थाभिधानम् । त्रिभिः श्रोणिगुदलक्षणैरङ्गैः स्निग्धकृतमग्निमवतीति त्र्यविः । त्र्यविरिति मेषः । त्र्यवीतिस्त्रीदिसवाट् । द्विवर्षा पशुर्दित्यवाट् दा दाने दाबखण्डने । दानार्हं खण्डनार्हं वा दित्यं वहतीति दित्यवाट् । दित्यौही तत्स्त्री । पञ्चभिरवतीति पञ्चाविः । पञ्चवर्षीयः पशुर्वा पञ्चाविः । तत्स्त्री पञ्चावी । त्रिवत्सः त्रयो वत्सा यस्येति त्रिवत्सवयोवस्थाविहितो वत्सः । तत्स्त्री त्रिवत्सा । तुर्यवाट् । चतुर्थवाट् । तुर्यं चतुर्थं वत्सरं वहतीति । तथा । तत्स्त्री तुर्यौही ॥ अथ द्वितीयमन्त्रः ॥

पष्ठवाट् च मे पष्ठौही च मे मनुचा च मे वशा च मे । ऋषभश्च मे वेहच्च मेऽनड्वांश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम् ॥

पष्ठवाट् युगपार्श्वगामी पृष्ठं वहतीति पृष्ठौही । गर्भिणी गौः । उक्षा सेचनदक्षः बलीवर्दः । वशा वन्ध्या गौः । ऋषभः । प्रसिद्धः । वेहत् । गर्भाभिघातिनी गौः । अनड्वान् । बलीवर्दः । धेनुः प्रसूतिका गौः । एते यज्ञेन कल्पन्ताम् । स्वस्वव्यापारसमर्था भवन्त्वित्यर्थः । एते उपभोगक्षमा भवन्तु ॥

इत्येकोनविंशोऽध्यायेऽष्टमोऽनुवाकः ॥

अथ नवमानुवाके फलपहोमार्था मन्त्रा उच्यन्ते । तत्र प्रथमकण्डिकार्यो नामग्राहहोम उच्यते । अत्र श्रुतिः । अथ नामग्राहं जुहोति वाजाय स्वाहेत्येतद्वै देवाः सर्वान्कामानाप्त्वाथैनैनैव प्रसक्षमप्रीणान्यजमानः सर्वान्कामानाप्त्वाथैनमेव प्रत्यक्षं प्रीणातीति ॥ तत्पाठस्तु ॥

**वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा । वसवे स्वाहाहर्पतये स्वाहा । अह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहाविनꣳशिन ऽआन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा ॥**

वाजायेत्यादि नामान्येव नामग्रहः । वाजायान्नाय स्वाहेति होममन्त्रः । प्रसवाय अभ्यनुज्ञाय । अपिजाय । अप्सु जायत इत्यपिजः । सप्तम्या अलुक् । क्रतुर्यागस्तस्मै । वसवे निवासकर्त्रे अहर्पतये दिनपतये । अह्ने दिवसाय । मुग्धाय । मोहमापन्नाय । मुग्धाय मोहरहिताय । विनाशशीलत्वादि धर्मसम्बन्धिने तथा तच्छीलाय । विनशिने विशेषेण नष्टं शीलं यस्येति विनंशी तस्मै । अन्तस्य अवसानस्य निर्णयस्य सम्बन्धी आन्त्यः । आन्त्ये अयनं यस्यासौ आन्त्यायनः । अन्ते भवाय निर्णीतस्वरूपाय । अन्त्याय । भौवनाय । भुवनसम्बन्धिने । भुवनस्य पतये । अधिपतये प्रजापतये स्वाहेति होमार्थः ॥ अथाभिषेचनं मन्त्रपाठस्तु ॥

**इयं तेनाभिन्नाय यन्तासि यमनः । ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याय ॥**

हेअग्ने चितव इयेराट् । इदं राज्यं यत्र यत्र क्रियन्तेऽग्निष्टोमादयः तदिदं सर्वं त्वदीयं राज्यम् । तस्मिन् त्वमभिषिक्तोसि । कीदृशस्त्वं मित्राय यन्ता । व्यत्ययः । मित्रस्य त्वं नियन्तासि । संयमनः । यमयतीति यमनः । सर्वेषु अग्निष्टोमादिकर्मसु नियमनकर्ता । अत ऊर्जो विशिष्टान्नरसाय त्वामभिषिञ्चामि । तथा वृष्ट्यै । वृष्ट्यर्थम् । तथा प्रजानामाधिपत्याय । वसोर्धारायामभिषिञ्चामीति शेषः । तथा च श्रुतिः । प्रजानां त्वाधिपत्या ये सत्रं वा ऊर्गन्नं वृष्टिरन्नेनैवैनं प्रीणाति । यदेवाहेयं तेनाभिन्नाय यन्तासि यमनः । ऊर्जे त्वा वृष्ट्यै त्वा प्रजाना त्वाधिपत्यायेति । इदं तेराज्यमभिषिक्तोसीत्येतस्मिन्नन्नस्य त्वं यन्तासि श्रुतेः । अथ कल्पा जुहोति

आयुर्यज्ञेन कल्पतामिति ॥ पाठस्तु ॥

आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पता॰ श्रोत्रं यज्ञेन कल्पताम्। वाग्यज्ञेन कल्पतां मनो यज्ञेन कल्पतामात्मा यज्ञेन कल्पताम्। ब्रह्म यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतां ज्योतिर्यज्ञेन कल्पता॰ स्वर्यज्ञेन कल्पताम् ॥

आयुर्जीवनकालः। यज्ञेन निमित्तभूतेन कल्पतां साध्यतां तथा प्राणादयः प्रसिद्धाः तत्र प्राणादीनां स्थितिरुत्पत्तिश्च मनुष्याणां पुण्यपापाभ्यां भवति। तस्माद्यज्ञेन वेदविहितेन केवलपुण्येन राजसादिभावशून्येन प्राणादयः कल्पन्तामिति प्रार्थना। आत्मा बुद्धिः पृष्ठं नाकपृष्ठं ब्रह्म वेदः। यज्ञः श्रीभगवत्पूजादिलक्षणः। ज्योतिर्ब्रह्मज्योतिः। स्वः सुखम्। एते यज्ञेन कल्पन्तामिति सम्बन्धः। वसोर्धारयाग्निमभिषिञ्चति यजमानं आत्मानमेवाभिषिञ्चतीति ॥ मन्त्रपाठस्तु ॥

स्तोमश्च यजुश्च ऋक्च साम च बृहच्च रथन्तरं च। स्वर्देवाः ऽअगन्माऽमृता ऽअभूम प्रजापतये प्रजा अभूवमवेट् स्वाहा ॥

स्तोमः स्तुतिः यजुः प्रश्लिष्टपठितं यजुः। नियतपादबद्धा ऋक्। गीतिप्रधानं साम। बृहत् बृहत्साम। रथन्तरं रथन्तरं साम। हेदेवाः। स्वर्गं अगन्म। स्वर्गसुखं प्राप्ताः। गत्वा च अमृताः। अमर्त्याः अभूम। देवान् गत्वा पुनः प्रजापतेः हिरण्यगर्भस्य प्रजा अभूम। भवेमेति प्रार्थना। वेट् स्वाहेति होमार्थः। वेट् स्वाहेति वषट्कारो हैव परोक्षं वेट्कारो वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योन्नं प्रदीयत इति श्रुतिः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये एकोनविंशोऽध्यायः ॥

# अथ काण्वसंहिता भाष्ये २० अध्यायः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

एकोनविंशेऽध्याये वसोर्धारादिमन्त्राः उक्ताः । अथ विंशेऽध्याये वाजप्रसवादिमन्त्रा उच्यन्ते कात्यायनः वाजप्रसवीयं जुहोति सप्तभिर्ऋग्भिरिति।

पाठस्तु वाजस्य तु । व्याख्यातोयं मन्त्रः ॥ ॥ अथ द्वितीयः ।

**विश्वे अद्य मरुतो विश्वऽऊती विश्वे भवन्त्वग्नयः समिद्धाः । विश्वे नो देवा ऽअवसागमन्तु विश्वमस्तु द्रविणं वाजो अस्मे इति ॥**

विश्वे सर्वे मरुतः अद्यास्मिन्नहनि आगमन्त्वित्यनुषङ्गः । विश्व ऊती । विश्व इतिसर्वनाम सामान्यदेवतागणप्रतिपादिजनकम् । अतस्त निराकाङ्क्षीकरणाय विशिष्टो देवगण इहाद्याह्रियते विश्वे च देवगणाः । वसवो रुद्रा आदित्याश्चाद्य ऊती ऊत्या अवनेन तर्पणेन निमित्तभूतेन आगमन्तु । तदागमनेन च । विश्वे अग्नयो गार्हपत्यप्रभृतयः । समिद्धाः सम्यक् दीप्ता भवन्तु । विश्वे देवाश्च नोऽस्माकं अवसा अन्नेन हविर्लक्षणेन निमित्तभूतेन आगमन्तु । आगच्छन्तु । तेषां च तुष्टया विश्वं सर्वं अस्तु द्रविणं भूमिहिरण्यादिधन वाजश्चान्नं । अस्माकमस्तु । अन्यथा वा सम्बन्धः । विश्वमरुतः अद्यागमन्तु । विश्वे च देवगणा ऊत्या निमित्तभूतया आगमन्तु । विश्वे च नो देवा अवसा निमित्तभूतेनागमन्तु । तदागमनेन च विश्वे भवन्तु । अग्नयः समिद्धाः होमार्थं ह्यग्नयः प्रज्वाल्यन्तो ततो यागोत्तरकालं विश्वमस्तु । द्रविणं वाजो अस्मे तुल्यम् ॥

अथ तृतीयः ॥ **वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः । वाजो नो विश्वे देवैर्धनसातां इहावत्विति ॥**

वाजोन्नं नोऽस्माकं सप्त प्रदिशः प्रकृष्टा दिशः सप्तदिशां चतस्रं अधश्चोर्ध्वं च मध्य चेति तिस्रो वा शब्दः समुच्चयार्थः । परावतः । परावः-

च्छन्दो दूरवचनः महर्जनः तपः सत्यमित्येते लोका उच्यन्ते । ते हि त्रिलोकानतीत्य वर्तते । त एताः प्रदिशः अस्माकं वाजः अस्त्विति शेषः । अस्माकमन्नसाधका भवन्त्विति शेषः । दिशः वाजः अन्नं पूरयास्त्विति वा । एवं पूरितो विश्वेदेवैः सहितो वाजं धनसातौ धनप्रद भोजनकाले मासि इह यज्ञे लोके वा नः अस्माकं अवतु । पालयतु ॥

अथ चतुर्थः ॥ वाजो नो अद्य प्रसुवाति दानं वाजो देवाँ ऽऋतुभिः कल्पयाति । वाजो हि मा सर्ववीरं चकार सर्वा आशा वाजपतिर्भवेयमिति ॥

वाजो नोऽस्माकं अद्य । प्रसुवाति अन्नादिदानमभ्यनुजानातु । ऋतुभिः कालैश्च सहदेवान्वाजं कल्पयाति । यथास्थानं कल्पयतु । वाजो हि माहिशब्दः समुच्चयार्थः । वाजश्च मां सर्वं वीरं सर्वैरीरणीयं सर्वेभ्यः श्रेष्ठं वाजं जानातु । जनयतु वा । ततो विश्वा सर्वाः आशा दिशः वांछाया वाजपतिः सन् । भवेयमित्याशीः ॥

अथ पञ्चमः ॥ वाजः पुरस्तादुत मध्यतो नो वाजो देवान्हविषा वर्धयाति । वाजो हि मा सर्ववीरं चकार विश्वं । आशा वाजपतिर्जयेयमिति ॥

वाजः पुरस्तात् । अस्त्विति वाक्यशेषः । उतापि च मध्यतो नोऽस्माकं भवतु वाजश्च देवान् हविषा वर्धयाति । वर्धयतु अस्माकं वाजश्च मा सर्ववीरं चकार करोतु । ततः सर्वा आशा दिशः वाजपतिः सन् । अहं जयेयमिति दिग्रूपतया व्यापकता प्रार्थ्यते ॥

अथ षष्ठः । संमा सृजामि पयसा पृथिव्याः स मा सृजाम्यद्भिरोषधीभिः । सोहं वाजꣳ सनेयमग्न इति ॥

सोहं वाजमिति तच्छन्दयोगाद्यहोरात्राध्याहारः योहं सृजामि च मा मां आत्मानं पयसा रसेन पृथिव्याः संबन्धिना । संसृष्टपयः प्रसृतिशिरः । वाजं सनेयं सम्भजेयं त्वत्प्रसादात् हे अग्ने । यद्वा अग्निरेवोच्यते तस्मदादेशादग्दस्य त्वा शब्दं कृत्वा । युक्तं न स्मेद् । तद्याख्यातम् । योहं हे अग्ने । संसृजामि त्वां पयसा पृथिव्याः संपर्गश्च होमाभिप्रायः । शिष्टं समानं ।

अथ सप्तमः ॥ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तारिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यमिति ॥

अग्निरुच्यते हविर्वा । हेश्रीभगवन्नग्ने ! पृथिव्यां यत्पयः क्षीरादि-जातं धाः धेहि । ओषधीषु यत्पयः मधुरादिरसं तद्धेहि । दिवि द्युलोके य-त्पयः । अमृतलक्षण तद्धेहि । अन्तरिक्षे यत्पयः हविः । परिणामलक्षण तद्धे-हि । अतस्त्वामग्निं प्रार्थये । पयस्वतीरत्र व्यत्ययः । मह्य दिशः प्रदिशश्च पयस्वत्यः । रसवत्यः सन्तु भवन्तु । कात्यायनः । अथैनं दक्षिणबाहुमनुपर्या-वृत्य यजमानमभिषिञ्चति । देवस्य त्वेति व्याख्यातो मन्त्रः सरस्वत्यै व्यत्यय । सरस्वत्या वाच यन्तुः नियन्तुः अग्नेः यन्त्रे स्वयमनेन तदाज्ञया साम्राज्येन निमित्तभूतेन सविता प्रसूतोह कृष्णाजिनोपविष्ट यजमानम-भिषिञ्चामि ॥

इतिविंशोऽध्याये प्रथमोऽनुवाकः ॥

प्रथमे वाजप्रसवीयहोम मन्त्रा उक्ताः द्वितीये राष्ट्रभृद्धोमादिमन्त्रा उच्यन्ते ॥ कात्यायनः । अथ राष्ट्रभृतो जुहोति द्वादशगृहीतेनाज्येन ता द्वादश आहुतयो भवन्तु । द्वादशपर्यूपि स नो भुवनस्य पत इत्येतस्याः । माहुतापाडित्यादीनि ॥

तत्र प्रथममन्त्रपाठस्तु । ऋताषाडृतधामाग्निर्गन्धर्वः । तस्यौ-षधयोऽप्सरसो मुदो नाम । स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वा-हावाट् ताभ्यः स्वाहेति ॥

अग्निरुच्यते । ऋत सत्य ब्रह्मलक्षण महत्तेजस्तत्सहते इत्यृताषाट् दीर्घश्छान्दसः । ऋतधामा सत्य धाम स्थान यस्य स तथोक्तोऽग्निर्गन्धर्वः । गन्ध कामयत इति । तस्य चाग्नेर्गन्धर्वस्य औषधयोऽप्सरसः । तासां च मुदः नाम ओषधीभिरिदं सर्वं मोदत इति मुदः सोऽग्निर्गन्धर्वः नोऽस्माकं इदं ब्रह्म ब्राह्मणजातिर्ब्राह्मण्य च । क्षतात्रायत इति क्षत्रं । तदुभय पातु रक्षतु । तस्मै स्वाहावाट् सुहुत हविरस्तु । वषट्कारेण ताभ्यश्चौषधीभ्यः स्वाहा ।

अथ द्वितीयमन्त्रः ।

संहितो विश्वसामा सूर्यो गन्धर्वः । तस्य मरीचयोऽप्स-

रस आयुवो नाम । स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहावाट् ताभ्यः स्वाहेति ॥

यः सूर्यः संहितः । अहोरात्रे सन्दधातीति संहितः । एष ह्यहोरात्रे सन्दधातीति श्रुतेः । स एव विश्वसामानि यस्य सः साम सान्त्वप्रयोग इति च एष एव सर्वसामेति श्रुतेः । तस्याप्सरसः । मरीचयः मरीचयस्तेजसस्त्रसरेणवः । तासामायुवो नाम । आयुवो नामैत्रायुवाना इव मरीचयः प्लवन्त इति श्रुतेः । यु मिश्रणे । आमिश्रयन्त इत्यर्थः । तुल्यमन्यत् ।

अथ तृतीयः ॥ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः । तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम । स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहावाट् ताभ्यः स्वाहेति ॥

यः सुषुम्णः सूर्यप्रियः सूर्यरश्मिः सूर्यस्यैव हि चन्द्रमसो रश्मयः स चन्द्रमा गन्धर्वः सुषुम्ण इति सुयज्ञ इति होतिवत् । सूर्यरश्मिरिति चन्द्रमसो रश्मयश्चन्द्रमा गन्धर्व इति श्रुतेः । तस्य नक्षत्राण्यप्सरसः । तासां नाम भेकुरयः । भाः हि नक्षत्राणि कुर्वन्तीति भेकुरयो नक्षत्राणि । तुल्यमन्यत् ॥

अथ चतुर्थः ।

इषिरो विश्वव्यचा वातो गन्धर्वः । तस्यापो अप्सरस ऊर्जो नाम स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहावाट् ताभ्यः स्वाहेति ॥

य इषिरः क्षिप्रः । इषि गत्यनुप्रगतौ । विश्वव्यचाः सर्वतो गमनशीलः । वातो वायुः स एव गन्धर्वः । तस्य वातस्य आपः । अप्सरसस्त्रियः । ऊर्जाः । अन्नरसः नाम । स्पष्टमन्यत् ॥

अथ पञ्चमः ॥

भुज्युः सुपर्णो यज्ञो गन्धर्वः । तस्य दक्षिणा अप्सरसस्तावा नाम । स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहावाट् ताभ्यः स्वाहेति ॥

यो यज्ञो भुज्युः । यज्ञो हि सर्वाणि भूतानि भुनक्तीति श्रुतेः । सु-

पर्णः शोभनपतनः स एव गन्धर्वस्तस्य दक्षिणा अप्सरसः । दक्षयन्तीति दक्षिणास्तासां स्तावा नाम ताभ्यः सूयन्त इति स्तावाः स्तुत्याः । दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञस्तुवत्यथो वै यश्च दक्षिणां ददाति स्तुत एव स इति श्रुतेः । तुल्यमन्यत् ॥

प्रजापतिर्विश्वकर्मा मनो गन्धर्वः । तस्य ऋक्सामान्यप्सरस एष्टयो नाम । स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहावाट् ताभ्यः स्वाहेति ॥

यः प्रजापतिर्विश्वकर्मा । विश्वकर्ता । प्रजापतिर्वै विश्वकर्मा स हीदं सर्वमकरोदिति श्रुतेः । स नो गन्धर्वः । मनोलक्षणो गन्धर्वः । तस्य ऋक्सामानि अप्सरसः । एष्टयो नाम । ऋक्सामानि वा एष्टयः ऋक्सामैर्ह्याशासत इति नोऽस्त्विदं नोऽस्तीति श्रुतेः तुल्यमन्यत् ॥ ॥ कात्यायनः ॥ ॥ रथशिरसि जुहोति स नो भुवनस्य पत इति ॥

पाठस्तु ॥ स नो भुवनस्य पते प्रजापते यस्य त उपरि गृहा यस्य वेह । अस्मै ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहेति ॥

हे भुवनस्य पते प्रजापते । यस्य ते तव उपरि अमुष्मिँल्लोके गृहाः सन्ति प्रजापतिः । अस्मै ब्रह्मणे ॥ अस्मै क्षत्राय महि महत् । शर्म शरणं यच्छ प्रयच्छ देहि । स्वाहेति होमार्थः ॥ कात्यायनः ॥ वातहोमाञ्जुहोति समुद्रोसीति ॥

पाठस्तु । समुद्रोसि नभस्वानार्द्रदानुः शम्भूर्मयोभूरभि मा वाहि स्वाहा । मारुतोसि मरुतां गणः शम्भूर्मयोभूरभि वाहि स्वाहा अवस्यूरसि दुवस्वाञ्छम्भूर्मयोभूरभि मा वाहि स्वाहेति ॥

लोकत्रयस्य वायु लोकद्वारेण स्तुवन्ति । हे वायो ! यस्त्वं समुद्रः समुन्दनोसि नभस्वान् इवनभ इति नक्षत्राण्युच्यन्ते । तानि हि नितरां भाति तैः सयुक्तो नभस्वान् । आर्द्रदानुश्च वृक्षादिना आर्द्रं ददाती आर्द्रदानुः । शम्भावयतीति शम्भु । मयः । सुखं भावयतीति मयोभूः । एवम्भूतस्त्वं हे वायो मा अभिवाहि । आभिमुख्येन यज्ञफलं प्रापय मा मा ।

स्वाहा होमार्थः । मारुतोसि यस्त्वं मारुतः मारुतः पुरो वातप्रभृतीनां वातानां प्रकृतिभूतोसि । अन्तरिक्षलोके सर्तीति वा । मरुतां शुक्रज्योतिःप्रभृतीनां गणोसि तं त्वा ब्रवीमि । शम्भूश्च मयोभूश्च भूत्वा अभिमाहि । स्वाहेत्युक्तार्थं । हेवापो यस्त्वं अवस्यूः । अवनं तर्पणं वावयस्यति । सीव्यतीत्यवस्युः । यद्वा आवसः अन्नन्तदिछतीति ।. क्यचीकृते औणादिके उमत्पये च कृते अवस्युरिति च भवति । अन्नं कामयमानः दुवस्वान् दुहस्व इति हविर्नाम । तद्वान् हविष्वान् । अन्यत्समानं । कात्यायनः ॥ रुङ्मतीः जुहोति यास्त इति तिसृभिरिति यास्त इति या वो इति द्वौ मंत्रौ चतुर्दशाध्याये व्याख्यातौ ॥

तृतीयस्य मन्त्रपाठस्तु ॥ रुचन्नो धेहि ब्राह्मणेषु रुचꣳ राजसु नस्कृधि । रुचं विश्येषु शूद्रेषु मयिधेहि रुचा रुचामिति ॥

हे भगवन्नग्ने । नः अस्माकं ये ब्राह्मणास्तेषु रुचं । दीप्तिं धेहि स्थापय । राजसु क्षत्रियेषु नः अस्माकं सम्बन्धिषु कृधि कुरु । विश्येषु वैश्येषु अस्मत्परिगृहीतेषु शूद्रेषु च कृधि अपि च धेहि । रुचा दीप्त्या सह रुचं दीप्तिं अमृतत्वं वा । अनुरक्तधर्माणां यथा वय दीप्ता भवेम । तथा कुर्वीत्याशयः यद्वा ब्राह्मणप्रभृतिषु या रुक् तामस्मभ्यं धेहि देहि सर्वथा । किं बहूत्त्यामप्येव धेहि । रुचा ज्ञानेन रूपं अमृततामिति । कात्यायनः । अथ वारुणं जुहोति तत्वायामीति ॥ पाठस्तु ॥

तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेलमानो वरुणेह बोध्युरुशꣳ समान ऽआयुः प्रमोषीरिति ॥

हेश्रीभगवन् वरुण! यत्प्रयोजनमुद्दिश्य त्वा त्वां यामि ब्रह्मणा वेदेन वंदमानः नमस्कारं कुर्वाणः । यद्वा वन्दमानः स्तुतिं कुर्वाणोहं त्वां यामि शरणं व्रजामि । सदा हेलं देवापराधं नमः कुर्वाणोयं यजमानो हविर्भिरभ्युद्यतैर्हविर्भिः । तत् तदेव प्रयोजनं आशास्ते प्रार्थयते । हेवरुण इह बोधि तत्प्रयोजनं यज्ञसमाप्तिलक्षणं बुध्यस्व । हे उरुशꣳस हेवहुस्तुत । नः आयुषोऽवखण्डनं मा कुरुष्व । कात्यायनः ॥ अथार्काश्वमेधयोः सन्ततिर्जुहोति । स्वर्णघर्म इति ॥ पाठस्तु ॥

स्वर्णघर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः स्वाहा ।
स्वर्णज्योतिः स्वाहा स्वर्णसूर्यः स्वाहेति ॥

अत्र श्रुतिः । अयं वाकोंऽग्निः अर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानेवास्तां तौ देवा एताभिराहुतिभिः समदधुरित्यादि श्रुतेः । स्वर्णघर्मःस्वरिव असावादित्यो घर्मः अतस्तमादित्यमग्नौ स्वाहा जुहोति प्रतिष्ठापयति । स्वरिव योऽर्कोऽग्निमादित्ये जुहोति स्थापयति स्वरिव असावादित्यः शुक्रः तं पुनरमुत्र दधाति । तं शुक्रं पुनरग्नौ दधामि स्थापयामि । स्वरिव योऽग्नि-ज्योतिस्तमग्निं इहादित्ये जुहोमि स्थापयामि । स्वरिव असौ आदित्यः सूर्यस्तमग्नौ जुहोमि एवं पञ्चचितिकोयमग्निः स्तूयते । पञ्चैता आहुतीर्जुहोति । पञ्चचितिकोऽग्निरिति श्रुतेः । यद्वा स्वर्णार्कस्वाहेत्येतानि अग्नेरेव पञ्चनामानि अस्यैवैतान्यग्नेर्नामानीति श्रुतेः ॥

इति विंशोऽध्याये द्वितीयोऽनुवाकः ॥

द्वितीये राष्ट्रभृदादि होममन्त्रा उक्ताः ॥ तृतीये प्रातरनुवाकादि होममन्त्रा उच्यन्ते । कात्यायनः ॥ प्रातरनुकमुपाकरिष्यन् अग्निं युनज्मीति तिसृभिरिति ॥ तत्रप्रथममन्त्रपाठस्तु ॥

अग्निं युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णं वयसा बृहन्तम् । तेन वयं गमेम ब्रध्नस्य विष्टपꣳ स्वो रुहाणा अधिनाकमुत्तममिति ॥

दिवि भवं सुपर्णं शोभनपतनम् । वयसा अन्नेन हविर्लक्षणेन धूमेन च बृहन्तं महान्तम् । तमग्निं शवसा बलेन घृतेन युनज्मि युक्तं करोमि तेन युक्तेनाग्निना वयं ब्रध्नस्य सूर्यस्य विष्टपं विगततापं सर्वद्वन्द्वोपलक्षणं सर्वतापरहितं सौरं पदं गमेम गच्छेम अतोप्यधिकं स्वर्लोकं रुहाणाः । आरोहन्तः नाकं उत्तमं सर्वेभ्यः गमेमेत्यनुवर्तते । यत्र गता न कथञ्चन अकं असुखं न प्राप्नुवन्ति । स नाकलोकः ॥ अथ द्वितीयः ॥

इमौ ते पक्षा अजरौ पतत्रिणौ याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्ने । ताभ्यां पतेम सुकृता मुलोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः इति ॥

हेश्रीभगवन्नग्ने ते पतत्रिणः उत्पतनशीलस्य तव इमौ पत्रौ प्रतीयमानौ प्रसिद्धौ। अजरौ जरारहितौ पक्षाविशिष्टगमनसाधनभूतौ यौ काविति याभ्यां पक्षाभ्यां त्वं रक्षांसि राक्षसान् श्रेयसः परिपन्थिनः पाप्मनश्च अपहंसि विनाशयसि। ताभ्यां पक्षाभ्यां सुकृता सुलोकं पतेम गच्छेम। अपि च अस्मदधिकपुण्यकारिणामपि लोकं गच्छेम। लोकं विशिनष्टि। यत्र ऋषयो मन्त्राणां द्रष्टारः। प्रथमजाः। पूर्वजाताः पुण्याः पुरातनाः। विश्वसृजः। यत्र स्थानं जग्मुः गतास्तत्र पतेमेति सम्बन्धः॥ अथ तृतीयः॥

इन्दुं दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः। महान्त्सधस्थे ध्रुव आनिषत्तो नमस्ते अस्तु मा माहिंसीरिति॥

हेअग्ने यस्त्वमिन्दुः। इदि परमैश्वर्ये। परमेश्वरः उदि क्लेदने। उन्देरिदेरिति उन्दतीति इन्दुः इन्दनो वा। दक्षः उत्साहवान्। श्येनः शंसनीयगतिः। ऋतावान्। यज्ञवान् सत्यवान्। उदकवान्। हिरण्यपक्षः। अमृतपक्षः। भुरण्युः भरणशीलः महाप्रभावतः श्रेष्ठः। सधस्थे ब्रह्मणा सह निभक्तस्थाने ध्रुवः स्थिर आनिषत्तः। आनिषण्णः। एवंविधो योगिनस्तस्मै ते तुभ्यं नमोऽस्तु मा माहिंसीः मां मा हिंसां कुरु॥ कात्यायनः॥ अग्न्यानामादिं प्रयुञ्जानं दिवो मूर्द्धेति द्वाभ्यामिति॥ तत्र प्रथममन्त्रपाठस्तु॥

दिवो मूर्द्धासि पृथिव्या नाभिरूर्गपामोषधीनाम्। विश्वायुः शर्म सप्रथा नमस्पथ इति॥

हेभगवन्नग्ने। यस्त्वं दिवः द्युलोकस्य मूर्द्धासि। उत्तमाङ्गमसि। पृथिव्याः नानागुणविशिष्टायाः नाभिः नहनमसि अपामर्क। सर्वरसभूतमपां रसः सारोऽसि। विश्वायुः सर्वप्राणिनामायुः। जीवनं च त्वमसि। सप्रथाः सर्वतः प्रथिरूपः विस्तीर्णोऽसि। अतः पथा मार्गाय देवयानाख्यमार्गभूताय तुभ्यं नमः॥ अथ द्वितीयः॥

विश्वस्य मूर्द्धन्नधितिष्ठसि श्रितः समुद्रे ते हृदयम् वायुरयो दत्तोदधिं भित। दिवस्पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्या वेति॥

हेअग्ने यस्त्वमग्रं विश्वस्य सर्वस्य प्राणिजातस्य मूर्द्धिन अधि उपरि

निष्ठसि । श्रितः आश्रितः बुद्धिः सुषुम्णां वा नाडीम् । यस्य च समुद्रे समुन्दने अन्तरिक्षे ते तव हृदये । अप्सु चायुर्जीवनं तं त्वां याचे । अपो दत्त आपो देहीति बहुवचनव्यत्ययः । एकोह्यग्निरिह देवता नो बहुत्वं पूजार्थम् । उदधिं भिन्त । उदस्योदादेशः । उदा धीयन्ते यस्मिन्मेघे स उदधिः । तमुदधिं दृष्ट्यर्थं भिन्धि । विदारय । हेअग्ने ततो मेघविदारणां निमित्तात् । दिवः सम्बन्धिनः पर्जन्यात् । दृष्ट्यभिमानो देवात् । ततोऽन्तरिक्षान्मेघस्थानविशेषात् । पृथिव्याः पृथिव्यै वृष्टिं देहि । तद्वृष्ट्या नोऽस्मान् । अथ पालय कात्यायनः अध्वर्युर्यजमानविषयमाशिषं करोति । इष्टो यज्ञ इति द्वाभ्यामिति ॥ मन्त्रपाठस्तु ॥

इष्टो यज्ञो भृगुभिराशीर्दा वसुभिः । तस्य न इष्टस्य प्रीतस्य द्रविणेहा गमेरिति ॥

यस्यास्य सुवर्णो दानस्य यजमानस्य इष्टः सम्पादितो यज्ञः भृगुभिः भृगुप्रमुखैर्ब्राह्मणैः । आशीर्दाः । वसुप्रभृतिभिर्देवताविशेषैः आशिषं दाता च कृताः । तस्यास्य यजमानस्य नः इष्टस्य अस्माकमभिमतस्य प्रीतस्य चास्मान्प्रति प्रीतः स्निग्ध उच्यते । याज्ययाजनयोः स्नेहख्यापनपरवाक्यमिदं मुक्त्वाथेदानीं द्रविणमाह । त्वं अपि हेद्रविण इह यजमाने आगमेः । आगमनं कुर्याः । यजमान प्रति शीघ्रमागच्छ । यद्वा भृगुभिः आचार्यैर्ब्राह्मणैरिष्टो यो यज्ञो वसुभिर्देवैराशीर्दाः । कृतः अत्र विभक्तिव्यत्ययः । पराद्धर्चः स यज्ञोस्माकमिष्टश्च प्रीतश्च द्रविणमिहानयत्विति ॥

अथ द्वितीयः इष्टो अग्निराहुतः पिपर्तुतइष्ट हविः स्वगेदं देवेभ्यो नम इति । कृतैर्यागैरग्निरिष्टः आहुतश्च पूर्वा । अस्माभिराहुतश्चेष्टं हविः स्नेष्टं नः अस्माद्दत्तं । समिष्टयजुर्लक्षणं हविः पिपर्तु हविषः परिपूरणं करोतु । किञ्च । स्वगेदं अत्र व्यत्ययः । इदं हविः स्वगाः स्वान् स्वकीयान् हविः सम्बन्धिनो गच्छतीति स्वगास्वगं भवत्विति शेषः । सर्वतन्तुष्टयर्थं नमस्करोति । देवेभ्यो नम इति । यद्वा नम इत्यन्ननाम । देवेभ्य इदमन्नं स्वगं भवत्विति ।

इति विंशोध्याये तृतीयोनुवाकः ॥

तृतीये प्रातरनुवाकादिर्मन्त्रा उक्ता चतुर्थेऽनुवाके सुबाहु-पादिमंत्रा

जुहुयात् कात्यायनः इष्टौ विश्वं वैश्वकर्मणाभिजुहोति । यदाऽकूतादिति त-ृभिर्मन्त्रैः स्रुवाहुतीर्जुहुयात ॥

तत्र प्रथममन्त्रपाठस्तु ॥ यदाऽकूतात्समसुस्रोद्धृदो वा मनसो वा सम्भृतं चक्षुषोः । तदनुप्रेतसुकृतामुलोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणा इति ।

यत्कर्म आकूताद । आकूतो नाम मान्मनसः मद्धेतरात्मनो धर्मो मनःप्रवृत्तिहेतुराकूतः । तस्मात्सुभृतं सुकृतं सूक्ष्मरूपं संचितं यत् सुस्रोत । समस्रवत् । प्रजापतेर्हृदो बुद्धेश्च । मनसो वा हृदयावच्छिन्नान्मनसः सकाशात् चक्षुषो सौर्याद्युपासनावलाद्वा चक्षुरुपलक्षितस्थानाद्वा यत्संभृतं समसुस्रोत् । निःसृतं भवति । फलप्रारम्भार्थं यत्सूक्ष्मरूपं कर्म निःसृतं तदनुसुकृतां सत्कर्मकारिणां नु अपि लोकं लोक्यते भुज्यत इति लोकः तं लोकं प्रेत गच्छत । यत्र यत्स्थाने ऋषयः स्वार्थकुशलाः जग्मुः । प्रथमजाः विश्वसृजः । पुराणाः । देवाश्चापि निवसन्ति । तं लोकं गच्छत । यत्र यत्स्थाने ऋषयः स्वार्थकुशलाः जग्मुः । प्रथमजाः । विश्वसृजः पुराणाः देवाश्चापि निवसन्ति । तं लोकं गच्छतेति सम्बन्धः ॥

अथ द्वितीयः । एतꣳ सधस्थं परि ते ददामि यमावहाच्छेवधिं जातवेदाः । अन्वागन्ता यज्ञपतिर्वो अत्रतꣳस्म जानीत परमे व्योमन् इति ।

हेसधस्थ ! समानस्थानदेवानां समानं स्वर्गं एतं यजमानं परि ते ददामि । ते तुभ्यं परिददामि । परिदानं रक्षणार्थं । जातवेदाः सर्वज्ञोऽग्निः यं च यजमानं शेवधिं देवानां निधिं कोशस्थानीयं आवहत् । आनयेत् । तं यजमानं तुभ्यं ददामि । यद्वा आहुतिपरिणामभूतमग्न्यनुगृहीतं सकृन्मात्रं वा परिददामि । यत्र यज्ञपतिविष्णुर्यज्ञफलमदातृत्वेन प्रकृतं यजमाने अत्र वः युष्मान् अत्रस्थाश्च अन्वागन्ता तं श्रीभगवंतं अन्वागन्तारं परमे उत्कृष्टे व्योमन् व्योमनि । परिपूर्णे सत्वरूपे एवं स्थितं देवाः यूयं जानीत सर्वान्तर्यामित्वाचेति ॥

अथ तृतीयः ॥ एतं जानीथ परमे व्योम देवाः सधस्था

**विदरूपमस्य यदा गच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणवथा वि- रस्मा इति ॥**

हे सधस्थाः समानस्थाना देवाः । परमे उत्कृष्टतमे व्योमनि स्थितमेनं यजमानं जानीथ किञ्च यतोऽस्य यजमानस्य रूपं विदं अत्र व्यत्ययः । विदाथ जानीथ । अतो युष्माभिर्विदितरूपो यजमानो देवयानैः पथि मार्गे यदा आस्माद् । मार्ग एव देवतावहुत्वाभिप्रायेन बहुवचनं । प्रदागच्छेद् । तदा इष्टापूर्ते कृणवथ । अस्मै यजमानाय । इष्टं यागादि पूर्तं तडागादि । ते द्वे आविः कृणवथ । आविर्भूतफले कृणवथा । इष्टापूर्तफलाभिव्यक्तिं कुरुतेत्यर्थः ।

चतुर्थपञ्चममन्त्रौ षोडशेऽध्याये व्याख्यातौ ।

अथ षष्ठः ॥ **॥ प्रस्तरेण परिधिना स्रुचावेद्या च बर्हिषा । ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तव इति ॥**

हे श्रीभगवन्नग्ने प्रस्तरेण परिधिना सीमत्परिधिना स्रुचा वेद्या च बर्हिषा । ऋगादिभिर्मन्त्रैस्तदभिमानी देवतारूपैश्च सह नः अस्मदीयमिमं यज्ञं स्वः स्वर्गं नय । देवेषु गंतवे देवान्प्रतिगमनाय । यज्ञे हि गते यजमानो गत एव । स हि तस्य शरीरमित्यभिप्रायः ।

अथ सप्तमः ॥ **यद्दत्तं यत्परादानं यत्पूर्तं याश्च दक्षिणाः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधदिति ।**

यद्दत्तं भार्यापुत्रजामात्रादिभ्यः । यत्परादानं दीनान्धकृपणादिभ्यः । दयया यत्परेभ्यः दानं कृतं यत्पूर्तं स्मृतिविहितं । ब्राह्मणभोजनादि । याश्च दक्षिणाः । यज्ञान्तर्गताः । तत्सर्वं अग्निर्वैश्वकर्मणः विश्वकर्मैव वैश्वकर्मणः । स्वार्थे तद्धितः । अग्निः स्वर्देवेषु स्वर्गलोकस्य देवे मध्ये च नः अस्माकं भागार्थं दधत् दधातु स्थापयतु ।

अथाष्टमः ॥

**यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधदिति ॥**

यत्र यस्मिन् देवे मधोः मधुनः घृतस्यच सोमादीना च या अनपेताः अनुपक्षीणाः । अनवच्छिन्नाश्च धाराः संति तत्र । ताभिः सर्वाभिः धा-

राभिः वेश्वकर्मणोऽग्निः स्वः देवेषु मध्ये नः अस्माकं दधत् दधातु पोषयतु । कात्यायनः ॥ चित्याग्निमुपतिष्ठते ये अग्नय इति ॥

पाठस्तु ॥ ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि । तेषामसि त्वमुत्तमः प्र नो जीवातवे सुवेति ।

हेयज्ञ ! ये अग्नयः पाञ्चजन्याः । अस्यां पृथिव्यामुपरि ये अवस्थिता पञ्चचितिका अग्नयः । ये के च अग्नयः पञ्चचितिका इति श्रुतेः । तेषामग्नीनां त्वमुत्तमोसि निर्मथ्यामिस्त्वमुत्तमोऽसि । अतस्त्वां प्रार्थयामः । जीवातवे जीवयतुः । जीवयतीति जीवातुः । तस्मै बहुकालजीवनार्थं नः अस्मान् । सुव । एवमस्त्वित्यनुजानीहि ॥

इति विंशोऽध्याये चतुर्थोऽनुवाकः ।

चतुर्थे स्रुवादि होममंत्रा उक्ताः ॥ पञ्चमे चित्यग्न्युपस्थापनादि मन्त्रा उच्यन्ते कात्यायनः चित्याग्निमुपतिष्ठते वार्त्रहत्यायेति । वार्त्रहत्यादिदशभिर्मन्त्रैरग्नेरुपस्थानं कुर्यात् ॥

तत्र प्रथममन्त्रः । वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वा वर्तयामसीति ।

हेइन्द्र ! त्वा त्वां आवर्तयामसि इकारश्छान्दसः । आवर्तयामः । किमर्थं । शवसे शव इति बलनाम । कीदृशाय वार्त्रहत्याय । वृत्रो येन हन्यते तद्वार्त्रघ्न हन्यं पृतनाषाह्याय च । सहतिरभिभवार्थः । पृतनां सेनां सहते अभिभवतीति पृतनासहः । तत्र साधुः पृतनासाह्यः च्छान्दसं पत्वं । आवर्तनं वृत्रजयार्थं परिभ्रमणं तत्कारयामः ॥

अथ द्वितीयः ॥ ॥ सह दानुं पुरुहूत क्षियन्त महस्तमिन्द्र सम्पिणक्कुणारुं वर्धमानं पियारुपादमिन्द्र तवसा जघंथेति ।

हेपुरुहूत । पुरुभिर्बहुभिर्हूयत आहूतइति पुरुहूतः । हे इन्द्र ! सहदानुं सहसो बलस्य च दातारं स एकीभूय युद्धं ददातीति सहदानुः । तं सहदानुं । क्षियन्त निवसंतं आक्रमभि इन्द्र त्वामभिमुखीकृत्य युद्धार्थं स्थितं । वृत्रं अहस्तं कृत्वा वज्रेण हस्तं छित्वा अहस्तं वृत्रं निर्जित । कुणंतं दुर्वचोभिधायिनं । कुणारुं । सम्पिणक् । सम्पिण्ड । सम्यक् पीडय एवमपि व-

धमानं । पिपारुं । पिपातिर्हिंसाकर्म देवानां हिंसितारं । हेइन्द्र एवम्विधं वृत्रं अपादं कृत्वा गमनासमर्थं कृत्वा । तवसा बलेन जघंथ । जहि हन ।

अथ तृतीयः ॥ विन इन्द्र मधो जही नीचायच्छ पृतन्यतः । यो अस्मां अभिदा सत्यधरं गमया तम इति ॥

आर्षमन्त्रो व्याख्यातः ॥

अथ चतुर्थः । मृगो न भीमः कुचरो गिरिष्ठाः य एव न आजगन्था परस्या । सृक᳭संशाय पविमिन्द्रन्तिग्मं विशत्रून्ता ह्विवि मृधो नुदस्वेति ॥

मृगो न मृग इव भीमः । तत्र हेतुः । व्याघ्रो वा सिंहो वा । भीमो भीषणः । कुचरः । कुत्सिताचारी हिंस्रः प्राणिवधजीवनः गिरिष्ठा पर्वताश्रयः । स यथा कांश्चित्प्राणिविशेषान् हंति तैश्चानभिभूयमानः । एवं त्वं परस्याः पृथिव्याः परानतः परावत इति दूरनाम । दूरदूरतरप्रादेशादाहूयमान इव आजगन्थ । आगत्य च शृणु । यत्प्रार्थ्यतेस्माभिः सृकं वज्रं । सृपन्ति हिनस्तीति सृकं हिंसासाधनं सृक᳭शायशो तनुकरणे । निशितधारं कृत्वा । पविं शतधारं तदपि तिग्मं अतितीक्ष्णं । वज्रं गृहीत्वा हेइन्द्र शत्रून् विनाहि वधार्थोपिधातुः । विनाशय हनल् अथगतिष्ठायामिति वा । अप्रतिष्ठान्वागच्छतु । प्रधानभूतान् शत्रून् हत्वा अवशिष्टान् क्षीणान् मृधः रणमण्डलात् । विनुदस्व प्रेरय । अपुनरागमनाय ।

अथ पञ्चमः ॥ वैश्वानरो न ऊतय आप्रयातु परावतः । अग्निर्नः सुष्टुतीरुपेति ।

वैश्वानरोग्निः नोस्माकं ऊतये अवनाय तर्पणाय आप्रयातु । आगच्छतु । परावतः दूरदूरतः प्रदेशात् किञ्च नोस्माकं सुष्टुतीरुप शोभनास्तुतीनुपश्रोतुं आयात्विति सम्बन्धः ।

अथ षष्ठः । पृष्टो दिविपृष्टो अग्निः पृथिव्यां पृष्टो विश्वाऽओषधीराविवेशा । वैश्वानरः सहसा पृष्टोऽग्निः स नो दिवासरिषस्पातुनक्तमिति ।

यो अग्निर्वैश्वानरः दिवि द्युमंडले मुमुक्षुभिः कोयमिति पृष्टः तत्र हेतुं श्रूयते । यमेनमादित्ये पुरुषं वेदयन्ते स इन्द्रः प्रजापतिः स

इन्द्रः प्रजापतिः स ब्रह्मेति । यश्च वैश्वानरोऽग्निर्विद्युदात्मना मध्येऽपि स्थितः । पृथिव्यामन्तरिक्षलोके पृथिवीत्यन्तरिक्षनामसु पठितं । उदकादिभिः कोयं किंनाम । यमिति पृष्टः । यश्च वैश्वानरः अस्मिन्लोके । व्यवस्थितः पृष्टः अग्निहोत्रप्रभृतिभिर्म्लेच्छपर्यन्तैः कोजनैः कोपतापप्रकाशादिभिर्विश्वा ओषधीराविवेश आविष्टः यश्चाग्निः सहसा बलेनाध्वर्युयागे मथ्यमानः कोयमिति दिदृक्षुभिः पृष्टः । स नः सोस्मान्दिवो नक्तं रात्रौ अस्मान्पातु रक्षतु । रिषः रिषति हिंसाकर्मा । हिंसाव्यापाराद । नः दिवानक्तं सन्ततं अनवच्छिन्नं निरन्तरं पाहि साक्षीरिति ॥

अथ सप्तमः । अश्याम तं काममग्ने तवातोऽ अश्याम रयिः रयिवः सुवीरं । अश्याम वाजमभि वाजयंतोऽश्याम द्युम्नमजराजरं त इति ।

हेश्रीभगवन्नग्ने ! वयं यं कामं कामयामहे तं तं कामं अश्याम त्वत्प्रसादात्प्राप्स्याम । तवेति व्यत्ययः । तव हूसा अवनेन पालनेन । रयिं धनमश्याम । हेरयिवः । धनवत्सुवीरं सुपुत्रं अश्याम ते त्वत्प्रसादाद्वाजं अन्नं वाजतिरर्चतिकर्मा । अभिवाजयन्तः वाजमभ्यर्चयन्तो वयं वाजमश्याम । हेश्रीभगवन्नग्ने ! हेअजर ! जरारहित अजरं जराशून्यं द्युम्नं यशः त्वत्प्रसादाज्जरारहितां कीर्त्तिं अश्याम ।

अथाष्टमः । वयं ते अद्य ररिमा हि काममुत्तानहस्त नमसोपसद्य । यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्न इति ।

हेश्रीभगवन्नग्ने ! अद्य अस्मिन् अहनि हि यस्मात्ते तुभ्यं कामं त्वदपेक्षितं हविः ररिम । दत्तवतः । कथमिति । उत्तानहस्ताः पूरणे विस्तृतपाण्यंगुलयः । अबद्धमुष्टिकाः सन्तः कृतांजलयो वा । नमसा प्रणिपातेन उपसद्य । उपगङ्म्य । यजिष्ठेन । यजननिष्ठेन । श्रद्धायुक्तेन मनसा । तुभ्यं कामं हविः ररिमेति सम्बन्धः । हेश्रीभगवन् ! त्वमधिदेवान् यक्षि यजसि । देवानां स्वं स्वं भागं प्रयच्छेत्यर्थः । हेअग्ने ! विप्र प्रा पूरणे । इष्टापूर्तिः करः त्वं मन्मना मन्मनांसि अस्माकं मनांसि । अस्रेधता । मनोनिपन्ता भव ।

अथ नवमः ॥

धामछदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः । सचेतसो विश्वदेवा यज्ञं प्रावन्तु नः शुभ इति ।

धामशब्दोऽत्र स्थानवचनः । धामानि स्थामानि ऊनानि छादय पूरयति अतिरिक्तानि च यः समीकरोति स धामछत् अग्निः । सर्वज्ञः । इन्द्रः परमैश्वर्ययुक्तः ब्रह्मा चतुर्मुखः । देवो देवनादिगुणयुक्तः । बृहस्पतिर्देवगुरुः । सचेतसः समनस्काः । ज्ञानसपन्नाः । विश्वे सर्वे देवाः नोऽस्माकं यज्ञ भूमेः शोभनात्मके श्रीभगवद्विपये स्थितं यज्ञं प्रकर्षेण अवन्तु । सफलं कुर्वन्तु । यद्वा अन्यूनातिरिक्तं कुर्वन्तु । नोऽस्माकं शुभे स्विष्टे च स्थाने स्थापयतु ।

अथ दशमः ॥ त्वं यविष्ठदाशुषो नॄः पाहि शृणुधी गिरः । रक्षा तोकमु तन्मनेति ।

अयं मन्त्रश्चतुर्दशेऽध्याये व्याख्यातः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति विंशेऽध्याये पञ्चमोऽनुवाकः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे शुक्लयजुःकाण्वसंहिताभाष्ये विंशोऽध्यायः समाप्तिमगमत् ॥